Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**

First Published 1860
Reprint - 1992

*Printed at*

**Efficient Offset Printers**
215, Shahzada Bagh Indl Complex
Phase-II, Phone 533736 533762
Delhi 110035

श्री.

# शब्दार्थचिन्तामणि.

( :—— |*| —— * )

श्रीमत्सज्जनसिंहवीर धर्माभि समुद्रित पूर्तिं भाक् श्रीमत्सूर्यसुधान्व

वाय प्रतह श्रीसच्चिदेशदयं कीर्तिं गायतिगापयत्यखिलसत्कार्येषु

कर्तुं क्रियाशब्दाना निधिश्च यौविजयतैशब्दार्थचिन्तामणि

भवतु सुखार्थं सतत संस्कृत विद्यैक रसिकानाम् ।

कोशो गीर्वाण गिरश्चिन्तामणि रिवसमस्तशब्दार्थं ॥

श्री सुखानन्द नाथेन रचितो मुद्रित पुरे ॥

उदये कविराज श्री श्यामल प्रेरणावशात् ॥१॥

*—|**+—*

चतुर्थभागीयवर्गादि :

श्रीमन्महाराजाधिराज रविकुलावतंस महीमहेन्द्र यादवाय कुलकमल

दिवाकरमेदपाटदेशेश श्री१०८ श्रीसज्जनभूपशिरोमण्याज्ञया कविराज

राजप्रेरणयो मुद्रणारब्ध, श्रीमत्सज्जन सिंहासनाधिरूढसर्वाधि

कार सम्पन्न श्री १ ० ८ श्री फतहसिंह महीप मुकुटेन

द्विचतुर्नवचन्द्रमिते १९४२ वैक्रमेब्देराजधान्युदयपुरे

श्रीसज्जन यन्त्रालये वाजपेय यवशीधरप्रबन्धत श्रीमे

दपाटेश्वरकोशधनव्ययत पूर्णतानीत

—++—

श्रीमद्देवकिगोविजयते







य । पुं॰ वायौ ॥ यवने । गन्तरि ॥ यशसि । योगे ॥ याने ॥ सर्वनाम यदर्थे । यकारे ॥ आदिलघौ । ऽऽ ॥

यकृत् । न॰ कुक्षेर्दक्षिणभागस्थमांसखण्डे । कालखण्डे ॥ अधोदक्षिणतश्चापि हृदयाद्यकृतस्थिति । तत्तु रञ्जकपित्तस्य स्थानशोणितजमतम् । रोगविशेषे ॥ यथा । प्लीहामयस्य हेत्वादि समस्तं यकृदामये । किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयो ॥ यमनम् । यम उपरमे । सम्पदादित्वात् क्विप् । गमादीनामिति मलोपः । आगमानित्यत्वान्न तुक । य॰ संयम॰ कृन्तति । कृतौ । क्विप् । तुक् ॥

यकृदात्मिका । स्त्री॰ परोष्ण्याम् ॥ तैलपायिकायाम् ॥

यकृद्वैरी । पुं॰ प्लीहघ्ने । रोहितकवृक्षे ॥

कुबेरे ॥ यक्षसद्मनि ॥ त्रि॰ पूज्ये ॥ यक्ष्यते॰ पूज्यते । यक्ष पूजायाम् । अकर्तरि च कारके संज्ञायामिति॰ कर्मणि घञ् । पुंसीति घो वा ॥ यद्वा । ईं लक्ष्मीमक्ष्णोति व्याप्नोति । अक्षू व्याप्तौ । कर्मण्यण् ॥ यद्वा । इः कामस्तस्यैवाक्षिणी अस्य । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥

यक्षकर्दमः । पुं॰ कर्पूराद्यैः समे कृतेऽनुलेपनविशेषे ॥ यथा । कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च । एकीकृत्यमिदं सर्वं यक्षकर्दम उच्यते ॥ अपि च । कुङ्कुमागुरुकस्तूरीकर्पूरचन्दनं तथा । महासुगन्धमित्युक्तं नाम तो यक्षकर्दमः ॥ यक्षप्रिलकर्दमः ॥

यक्षतरुः । पुं॰ वटवृक्षः ॥

यक्षधूपः । पुं॰ अराले । सर्जरसे । रालइतिख्याते ॥ यक्षान्॰ धूपायति । धूपसन्तापे । आयादयआर्द्ध

रसे । श्रीवासे । सरलद्रवे । तत्पर्य्यायैस्तु । दे० । भाषा० ॥

यक्षरसः । पुं० मध्वासवे । पुष्पमध्वे यक्षप्रियोरसः ॥

यक्षराट् । पुं० गुह्यकेश्वरे । कुबेरे ॥ यक्षेषुराजते । राजृ० । सत्सूद्विषेति क्विप् ॥ मखानांरक्षकत्वरे ॥

यक्षराजः । पुं० कुबेरे ॥ यक्षाणां राजा । राजाहः सखिभ्यष्टच् ॥

यक्षराट्पुरी । स्त्री० अलकायाम् ॥

यक्षरात्रि । स्त्री० दीपान्वितायाम् । यक्षाणांरात्रि ॥

यक्षाधिप । पुं० कुबेरे ॥

यक्षसाधनम् । न० यक्षोपासनायाम् ॥

यक्षामलकम् । न० पिण्डखर्जूरफले ।

यक्षवासः । पुं० वटवृक्षे ॥

यक्षिणी । स्त्री० अलकायाम् ॥ यक्षा सन्तियस्याम् । इनि । ङीप् ॥ कुबेरपत्न्याम् ॥ यक्षभार्यायाम् ।

यक्षी । स्त्री० कुबेरपत्न्याम् ॥

यक्षोदुम्बरकम् । न० अश्वत्थफले ।

यक्ष्म । पुं० रोगराजे ॥ यक्षते यक्ष० । आर्त्तिस्तुसुविति मन् ॥

यक्ष्मघ्नी । स्त्री० द्राक्षायाम् ॥

यक्ष्मा । पुं० रोगराजि । राजयक्ष्मणि । क्षये । शोषे ॥ अस्यनिदानन्तु । वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायतेयक्ष्मा गदोहेतुचतुष्टयात ॥ देहोव्याधिम तायक्ष्माकृव्याधेर्यस्मिनयक्ष्यते । स च क्षयप्रोच्यतेवैद्यैः क्षयरोगसंभार है ॥ यक्षते० यक्ष्यरोग । यक्ष० मनिन् ॥

यक्ष्मी । त्रि० क्षयरोगिणि ॥

यक्ष्य । त्रि० पूज्ये ॥

यजत् । न० यागकर्त्तरि । यजति । यज० । शतृ० ॥

यजत । पुं० ऋत्विजि ॥ यजति । यज० । भृमृदृशियजिपर्वीत्यादिनाऽतच् ॥ यजत० यष्टव्यइतिवेदभाष्यम् ॥

यजति । पुं० यागे ॥

यजत्र । पुं० अग्निहोत्रे ॥ यजत्रोऽस्य देवाः । यज० । अमिनक्षियजिवधिपतिभ्योऽत्रन ॥ यजनीये ॥

यजनम् । न० समन्त्रकहवि:प्रक्षेपणादिक्रियायाम् । यागे ॥ अस्यलक्षणं यथा । पशुव्रीह्यपुरोडाशसोमौषधिचरुप्रभृतिभिर्हविर्भि: खदिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृतिभि: समिद्भि: स्रुक्स्रुवेडापात्रसुसलवज्रुठारखनित्रयूपदारुदर्भचर्मग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैर्द्दृगाह्वोत्रध्वर्युब्रह्मादिभिर्ऋत्विग्भि: काम्यनैमित्तिकानांपक्षादिपूर्वकाणांयथोक्तदक्षिणानां समापनंयजनम् । इतिश्राद्धविवेकप्रस्तुतव्यवचनम् ॥

यजनकर्त्ता । पु॰ यजनव्यापारवति॰ ऋत्विजि । श्रीघ्रादित्वादिनि ॥

यजमान । पु॰ अध्वरे॰ यादृष्टरि । तिमिन्न । यष्टरि ॥ यजते । यज- देवपूजासङ्गतिकरणदानेषु । पूज् यजो शानच् । मानच्या । चाभे मुक् ॥

यजाक । त्रि॰ दानकर्त्तरि ॥

यजि । पुं॰ यागकर्त्तरि । यजमा- ने ॥ यजते । यज॰ । सर्वधातुभ्य- इन् ॥

यजुर्वेद । पुं॰ नवाधिकशतशाखा त्मकेयथा । इषे त्वोर्जेत्वाग्निमीळ्य ओमानादिपूरुष ऋग्भ्योमिति ॥ शुक्लाधिपवेदविशेष ॥ आध्वर्यवय जुर्भिस्त्वादृग्भिर्होत्रं द्विजोत्त- मा । औद्गात्रं सामभिस्तद्ब्रह्मत्व चाप्यथर्वभि ॥

यजुर्वेदाधिप । पु॰ भृगौ । शुक्रे ॥

यजु । न॰ वेदविशेषे । गीतिरहि- ताऽनियताक्षरपादवेदभागे ॥ इज्य तेऽनेन । यज॰ । अर्त्तिपृवपियजि- तनिधनितपिभ्योनिदित्युसि ॥

यज्ञः । पुं॰ आत्मनि । नारायणे । विष्णौ ॥ हुताशने ॥ सवे । अध्व- रे । यागे सप्ततन्तौ । मुखे । क्रतौ । विताने ॥ दृषिपादौ आख्य सुमपक्षौ ॥ अयूपे ॥ अग्निष्टोमा- दौ । अग्निहोत्रदर्शपौर्णमासादौ



श्रौतयागे ॥ स्मार्त्ते वैश्वदेवादौ । महायज्ञत्वेनश्रुतिस्मृतिप्रसिद्धे । देवयज्ञ पितृयज्ञ भूतयज्ञ मनु ष्ययज्ञइतिचतुर्विधेस्मार्त्तयज्ञे ॥ अध्यापनादिपञ्चविधमहायज्ञे ॥ य था । अध्यापन ब्रह्मयज्ञ पितृयज्ञ स्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोतिथिपूजनमिति ॥ यज्ञ- व्याख्यास्यामोद्रव्य देवतात्यागइति कल्पकारैर्देवतोद्देशेनद्रव्यत्यागोय ज्ञइतिनिरुक्त । सचयजतिनाजु होतिनाचोदितत्वेन॰ यागोहोमश्चे तिद्विविधः । उत्तिष्ठहोमावषट्का रप्रयोगान्तायाज्यापुरोनुवाक्यान्ता यजतय । उपविष्टहोमा । स्वाहा- कारप्रयोगान्तायाज्यापुरोनुवाक्यर हिताजुहोतयइतिकल्पकारैर्व्याख्या ताः ॥ अग्निहोत्रदर्शपूर्णमास- चातुर्मास्यपशुबधज्योतिष्टोमादि । सचद्विविध । काम्योनित्यश्च ॥ अ दृष्टार्थे । स्वाश्रमोचितधर्मे॰ अती न्द्रिये ॥ समाध्यवस्थायांसर्वेन्द्रि- यवृत्तिनिरोध श्रोत्रादीनीन्द्रिया- ण्यन्ये॰ जुह्वतीत्युक्तत्वात्सएकोयज्ञ । व्युत्थानावस्थायांरागद्वेषराहित्ये नविषयभोगोय : सोऽपरोयज्ञ : शब्दादीन्विषयानन्येइन्द्रियाग्नि षुजुह्वतीत्युक्तत्वात् ॥ अन्येव्यु त्थितावस्था : श्रोत्रादिभिरविरुद्ध

विषयग्रहण स्पृहाशून्यत्वे नानन्य-
साधारण कुर्वन्ति॰सएकैषाहीम
॥ सर्ववैदिकश्रेय : साधनरूपे ॥
यज्ञ सात्त्विकादिभेदेनत्रिविध ।
यथा । अफलाकाङ्क्षिभिर्यज्ञो वि
धिदृष्टोयइज्यते । यष्टव्यमेवेति-
मन . समाधायससात्त्विक ॥
अभिसन्धायतुफल दम्भार्थमपिचैव
यत् । इज्यतेभरतश्रेष्ठतंयज्ञंविद्धि
राजसम् ॥ विधिहीनमसृष्टान्न
मन्त्रहीनमदक्षिणम् । श्रद्धाविरहि
तयज्ञंतामसपरिचक्षते ॥ सचा
नेकविधोयथा । द्रव्ययज्ञास्तपो
यज्ञायोगयज्ञास्तथापरे । स्वाध्याय
ज्ञानयज्ञाश्चयतय : संशितव्रता: ॥
यज्ञानांजपयज्ञोस्मीतिभगवतोविभू
तिस्वरूपोजपयज्ञ ॥ अप्येवेतुस
सिद्ध्येद्ब्राह्मणोनात्रसंशय. । कुर्याद
न्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥
इज्यते॰ अनेनवा॰ अत्रवा । यज
याचेतिनङ् ॥ वर्णानांस्वधर्मयज्ञा
यथा । आरम्भयज्ञा · क्षत्रा · स्तुर्ह
विर्यज्ञाविश स्मृता. । परिचार
यज्ञाश्शूद्रास्तुजपयज्ञास्तुब्राह्मणा-
इति ॥ यजनीये । पूज्ये ॥
यज्ञकृत् । पु॰ यागकर्त्तरि ॥ यज्ञ
करोति । क्विप् तुक् ॥
यज्ञपशु : । पुं॰ घोटके ॥ छागे ॥
यज्ञपुरुष : । पुं॰ विष्णौ ॥ यज्ञधारा

द्दे ॥
यज्ञभाजनम् । । न॰ यागपात्रे ॥
यज्ञभूषण । पुं॰ श्वेतदर्भे
यज्ञयोग्य । पुं॰ उदुम्बरवृक्षे ॥ त्रि॰
यागार्हे ॥
यज्ञवल्ली । स्त्री॰ सोमलतायाम् ॥
यज्ञवाट । पुं॰ यागस्थाने ॥
यज्ञवित् । पुं॰ यज्ञानाञ्ज्ञातरि ॥
यज्ञानाकर्त्तरि ॥ तेचवेधायनाद
य · । तेहिज्योतिष्टोमादयोयज्ञाव
स्तुभूताभवन्तीतिमन्यते॰ तन्नतेषां
भ्रान्तिमात्रम् । यज्ञ व्याख्यास्यामो
द्रव्य देवतात्यागइति । अथैकैक
स्मिन्॰ यज्ञविज्ञानाभावात्॰ स
मुदायञ्चावस्तुत्वात् ॥ यज्ञान्वे-
त्ति॰ जानाति॰ विन्दतिलभतेवा
। विद्॰ । विद्लृ॰ । क्विप् ॥
यज्ञवृक्ष । पुं॰ विकङ्कते । सुवाव
र्धे ॥ वटीवृक्षे ॥
यज्ञशाला । स्त्री॰ देवयजने ॥
यज्ञशिष्टाशी । पु॰ वैश्वदेवादियज्ञा
वशिष्टामृतभोजिनि ।
यज्ञशेष : । पुं॰ होमावशिष्टाज्यपुरो
डाशादौ ॥
यज्ञश्रेष्ठा । स्त्री॰ सोमवल्ल्याम् ॥
यज्ञसार । पुं॰ यज्ञोदुम्बरे ॥
यज्ञसूत्रम् । न॰ उपवीते । यज्ञोप
वीते ॥ अस्यप्रमाणयथा ॥ ऊर्ध्वंतु
त्रिवृतंसूत्र सधवानिर्मितंमने . ।

तस्य त्रयमधोवृत्तं यज्ञसूत्रविदुर्बुधाः । त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसंमितम् ॥ शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥ यजुर्विदां नाभिमितं सामगानामयं विधिः । वामस्कन्धेन विधृतं यज्ञसूत्रं फलप्रदम् ॥ इति कालिकापुराणे ४ अध्यायः यज्ञस्य सूत्रम् । यज्ञार्थं कृतं सूत्रं वा । शाकपार्थिववादि ॥

यज्ञसेन । पु० द्रुपदे ॥

यज्ञस्थानम् । न० यज्ञवाटे ॥

यज्ञाङ्ग । पु० क्षीरदुग्धवृक्षे । उदुम्बरे ॥ यज्ञमिति । अगगतौ । कर्मण्यण् ॥ खदिरवृक्षे ॥ ब्राह्मणयष्टिकायाम् ॥ वराहमूर्त्तौ । यज्ञाश्च कान्यस्य ॥ यज्ञवराहस्याङ्गान्युक्तानि हरिवंशे । वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः । अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः । आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ॥ धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्क्रियः प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः उद्गात्रान्त्रो होमलिङ्गः फलबीजमहौषधिः । वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥ वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः ॥ नानाछन्दोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः इति ॥ न० प्रयाजादौ ॥ यज्ञे हि द्विविधमङ्गं जातं भवति । सिद्धरूपं साध्यरूपञ्च । तत्र सिद्धरूपं जातिद्रव्यसङ्ख्यादि साध्यरूपन्तु क्रियैव । तच्च द्विविधम् । सन्निपत्योपकारकमारादुपकारकञ्च । तत्र द्रव्यादिसंस्कारकत्वेन विधीयमानयागस्वरूपान्तर्भूतकर्म सन्निपत्योपकारकम् । व्रीहीनवहन्यात् व्रीहीन् प्रोक्षति इत्येवं विहितावघातप्रोक्षणादि । तद्विपरीतञ्च फलजननसामर्थ्यजनकत्वादिना यागोपेक्षितकर्म आरादुपकारकम् ॥

यज्ञाङ्गा । स्त्री० सोमवल्ल्याम् ॥

यज्ञान्त । पु० अवभृथे । यागशेषे ॥

यज्ञायज्ञीयम् । न० सामविशेषे ॥ यज्ञायज्ञापदयुक्तं साम० यज्ञायज्ञीयम्० इति व्याख्यातारः । यज्ञायज्ञाशब्दोऽस्मिन्नस्ति । मतौ छः सूक्तसाम्नोरिति छः ॥

यज्ञायुधम् । न० स्फ्यकपालादिद्रव्येषु । तानि यथा । स्फ्यश्च कपालानि चाग्निहोत्रहवणी च सूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च

यज्ञोपलाचेतानिवेद्ययज्ञायुधानी
तिदर्शपूर्णमासयो श्रुतानि ॥
यज्ञायुधी । पुं० यजमाने ॥
यज्ञारि । पुं० शिवे ॥ राक्षसे ॥
यज्ञिय । पुं० किंशुकद्रुमे । पलाशवृक्षे
द्वापरयुगे ॥ त्रि० यज्ञकर्मार्हे । य-
ज्ञानांपात्रे । क्रतुक्रियासम्पादनयो
ग्ये द्विजद्रव्यादौ ॥ यज्ञमर्हति ।
यज्ञर्त्विग्भ्यामित्यत्र० तत्कर्मार्ह-
त्युपसङ्ख्यानात्० घ ॥ यज-
नीये ॥
यज्ञियदेश । पु० यागकरणोपयुक्त-
कुरुपञ्चालादौ । कृष्णसारस्तुचर
तिमृगोयत्रस्वभावत । सज्ञेयोय-
ज्ञियोदेशोम्लेच्छदेशस्त्वतःपरः ॥
यज्ञियश्चासौदेशश्च ॥
यज्ञियशाला । स्त्री० यज्ञार्थशालाया-
म् ॥ यागमण्डपे ॥
यज्ञीय । पुं० उदुम्बरवृक्षे ॥ त्रि०
यागसम्बन्धिनि ॥
यज्ञीयब्रह्मपादपः । पु० विकङ्कतवृ
क्षे ।
यज्ञेश्वरः । पुं० शिवे ॥ विष्णौ ॥
यज्ञेष्टम् । न० दीर्घरोहिषकतृणे ।
यज्ञोदुम्बर । पु० उदुम्बरे । जन्तु
फले ॥
यज्ञोपवीतम् । न० यज्ञसूत्रे । यज्ञा
र्थंधृतमुपवीतम् । श्राद्धपार्थिवा-
दि । [illegible]उपवीतमवा । यज्ञस्य

श्रौतस्यस्मार्तस्यचविविधस्यद्रव्यत
पोयोगस्साध्ययज्ञानादेरूपसामी-
प्येनविशेषेणनित्यसयोगेन० इतं
प्राप्तंवेत्यर्थः ॥ ब्राह्मणेनयदादेवा
च्छिन्नयज्ञोपवीतकम् । मनस्ता
पेनशुद्धिः स्यादापस्तम्बोऽब्रवीत्
मुनि ॥
यज्यु । पुं० यजुर्वेदविदि । अध्वर्यौ
॥ यजति । यज । यजिमनीति-
युच् ।
यज्वा । पु० वेदविधानत । कृतया
गे । इष्टवान्० यजतेस्मवा । यज
देवपूजासङ्गतिकरणदानेषु । सुय-
जोर्ङ्वनिप् ।
यज्वनाम्पति पुं० चन्द्रे ॥
यत् । अ० हेतौ । पश्चाचयद्० अव्य
यम् ॥
यत् । त्रि० यदर्थे । गच्छति । एति ।
इणगतौ । शतृप्रत्यय ॥ यच्छब्दे
नोच्यतेयोऽर्थस्तच्छब्दस्तस्यवाचक ॥
यतम् । न० हस्तिप्रेरणाय० पादाघा
ते ॥ पादकर्मयतप्रोक्तं यातमङ्कुशवार
णम् । त्रि० सयते । नियते ॥
यतचेता । त्रि० सयतचित्ते ॥ यतं
चेतोयस्य ॥
यतन् । त्रि० प्रयत्नवति ॥ यथा । ना
हंनमामिदेवान्देवानतीत्यनसेवते-
देवः । नतदनुकरोतिविधानतस्मै
यतनेनमोनमोभद्रम् । इतिपूज्य

पादानामार्थ्या ।। अहंदेवान्नमामि० ननमस्करोमि०येदेवानतीत्य० अतिक्रम्यस्थित . सदेवोदेवान्नसेवते०तदनुतदनन्तर विधानंविध्युक्तं कर्मनकरोति० तस्मै सर्वात्मभूताय यततेप्रयत्नवतेमह्य नमोनमइत्यादरार्थेद्विरुक्ति ' ।।

यतम ' । त्रि० वहूनामध्ये निर्धारिते० एकस्मिन् ॥ वावहूनाजातिपरिप्रश्नेडतमच् ॥

यतमान ' । त्रि० व्याप्रियमाणे । प्रयतमाने ॥ यतीप्रयत्ने । शानच । मुक् ॥ प्रार्थयमाने ॥

यतमानसञ्ज्ञा । स्त्री० वैराग्यविशेषे ॥ यथा । रागाद्य कषायाश्चित्तवर्त्तिन तैरिन्द्रियाणियथास्वविषयेषु प्रवर्त्त्यन्ते ०तन्माप्रवर्त्तिषतविषयेष्विन्द्रियाणीति०तत्परिपाचनायआरम्भ प्रयत्नोयतमानसञ्ज्ञावैराग्यम् ॥ अत्रजगतिकिंसारकिमसारमितिगुरुशास्त्राभ्याञ्ज्ञास्यामीत्यु-द्योगे ॥

यतर : । त्रि० द्वयोर्मध्येनिर्द्धारिते०एकस्मिन् ॥

यत ' । अ० यदर्थे ॥ इति ॥ यस्मात् । पञ्चम्यास्तसिल् । त्यदाद्यत्वम् ॥

यतात्मा । त्रि० सयतचित्त ॥ संयतशरीरेन्द्रियादिसङ्घाते ॥ निदिध्यासनपरिपाकेणपरमात्मन्येवैकाग्रचित्ते ॥

यति . । पुं० यतिनि । निर्जितेन्द्रियव्यूहे ॥ कुटीचरवहूदकहंसपरमहंसेषु सन्यासिषु ॥ विदितात्मनि०अवधूते ॥ यत्नशीले । मुनौ ॥ यतते । यतीप्रयत्ने । सर्वधातुभ्यइन ॥ नहुषस्याग्रजोज्येष्ठापत्ये ॥ निकारे ॥

यति . । स्त्री० विरतौ । पाठविच्छेदे । द्रुतमध्यविलम्बितरूपायांपरिपाट्याम् ॥ विधवायाम ॥ यमेस्त्रियाक्तिन् । मलोप : ॥ रागे ॥ सख्यौ ॥ वाद्याङ्गप्रबन्धविशेषे ॥

यतिचान्द्रायणम् । न० व्रतविशेषे ॥ यथा । अष्टावष्टौसमश्नीय त्पिण्डान्मध्यन्दिनेस्थिते । नियत. पाऽविष्यश्नीयतिचान्द्रायणंचरन् ॥ इति मनु . । यतिचान्द्रायणेपादोनधेनुचतुष्टयतदशक्तौसपादैकादशकार्षापणाइतिप्रायश्चित्तविवेक : ॥

यती । पुं० यती । निर्जितेन्द्रियग्रामे ॥ यमनम् । यमउपरमे । भावेक्ति ' । मलोप : । यतमुपरमणमस्त्यनिस्य वायस्य । अतइनिठनावितीनि । बशिष्ठादौ ।।

यतिनी । स्त्री० विधवायां ।।

यतिपात्रम् । न० अलाब्वादिपात्रे ॥ अलाबु दारुपात्रञ्चमृण्मयवैदलंतथा

। एतानियतिपात्राणिमनु स्वाय स्भुवोऽब्रवीत् ।

यतिमैथुनम् न० स्वच्छन्दरते यतिगोप्यरतौ ।

यती । स्त्री० गच्छन्त्याम् ॥ यथा यत रि० ङीप् ॥ विधवायाम् ॥

यतुका । स्त्री० }
यतूका । स्त्री० } वृक्षविशेषे ।

यत्त: । त्रि० यत्नवति ॥

यत्न । पुं० प्रयत्ने ॥ उत्साहे । उद्योगे । यतनम् ० यत्यतेऽनेनात्र वा । यतो० । यजयाचयतेतिनङ् ॥ रूपादिचतुर्विंशतिगुणान्तर्गतगुणविशेषे ॥ सच त्रिविध । प्रवृत्ति . निवृत्ति . जीवनयोनिरूढ़ेति ॥

यत्नवान् । त्रि० प्रयत्नविशिष्टे । यत्नमन्तरेणनकिञ्चित्सिध्यतीतिएवज्ञात्वा-यत्नतत्परे ॥ यत्नोस्त्यस्य । मतुप् ॥

यत्र । अ० अनवक्लृप्तौ ॥ अमर्षे । गर्हायाम् ॥ आश्चर्ये यस्मिन् . सप्तम्यास्त्रल् ।

यथा । अ० तुल्यार्थे माने । प्रशसायाम् ॥ निदर्शने दृष्टान्ते ॥ निर्देशे ॥ हेतूपपत्तौ ॥ योग्यतायाम् ॥ वीप्सायाम ॥ पदार्थानतिवृत्तौ ॥ येनप्रकारेण । प्रकारवचने थाल् ॥ विभक्तित्वात् ० अदादात्वम् ।

यथाकथञ्चित् । अ० येनकेनप्रकारेणेत्यर्थ ॥ यथाच० कथञ्चिच्च ॥

यथाकथाच । अ० अनादरे ।

यथाकामी । त्रि० स्वेच्छाचारिणि । स्वतन्त्रे । स्वरुचौ । स्वच्छन्दे । स्वैरिणि । निरंकुशे ॥

यथाकालम् । अ० विहितकाले ॥

यथाक्रमम् । अ० क्रमानुरूपे परिपाट्याम् । मूलावधिक्रमे ॥ क्रममनतिक्रम्यवर्ततइत्यर्थ पदार्थानतिवृत्तावव्ययीभावेव्ययम् ॥

यथाजात । त्रि० मूर्खे ॥ आतजन्मकालविशेषमनतिक्रम्यवर्तते । पदार्थानतिवृत्तावव्ययीभाव । तदस्यास्ति । अर्शआद्यच् ॥ नीचे ॥

यथाजातरूपधर: । त्रि० दिगम्बरे ॥ परमहंसे ॥ यथा । यादृशजातमात्रस्वरूपधारयतीतितथा ॥

यथातथम् । अ० न० यथावर्ततेतथेत्यर्थे ॥ यथार्थे । सत्यार्थे ॥ सत्यमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव, यथाशब्दस्तथाशब्दोवासत्यार्थे । यथार्थेव्ययीभावोवा । सनपुंसकमितिनपुंसकत्वम् । ह्रस्वोनपुंसक इतिह्रस्वत्वम् ॥

यथापूर्वम् । अ० पूर्वदिग्देशकालानुरूपे ॥ यथा । अक्षतायाप्रतिष्ठायां प्राणानाप्रतिमासुच यथापूर्वतथाभाव स्वर्वादीनांनविष्णुता ।

यथामुखम् । अ॰ प्रतिबिम्बे ॥ मुखस्य सदृशम्॰ यथामुखम् । निपातनाद व्ययीभाव : । पदार्थानतिवृत्तौयथा शब्दोवा ॥

यथामुखीन । त्रि॰ मुखप्रतिबिम्बा श्रये । दर्पणे ॥ यथामुखंदर्शन . यथामुखसम्मुखस्यदर्शन : स्र्वृतिख ' ॥

यथायथम् । अ॰ यथार्थे ॥ अनतिलङ्घनेनेत्यर्थे ॥

यथायथम् । न॰ यथास्वमित्यर्थे ॥ यथास्वेर्थे॰ यथाशब्दस्यद्वित्वं नपुंसकत्वञ्चनिपात्यते॰ यथास्वेयथायथमितिसूत्रेण ॥ योयमात्मा॰ यश्चात्मीय॰ तद्यथास्वम् । आत्मनि ज्ञाता सर्वपदार्थायथायथम्॰ यथास्वभावमित्यर्थ ॥ आत्मीये । सर्वेषामुयथायथम् । यदात्मीयमित्यर्थं . ॥

यथायोग्यम् । अ॰ यथोचिते ॥

यथार्थम् । अ॰ सत्यार्थे ॥ अर्थमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव ' ॥

यथार्थं । त्रि॰ युक्ते ॥

यथार्थानुभाव . । पुं॰ तद्वतितत्प्रकाराऽनुभवे ॥ सएवप्रमेत्युच्यते । यथार्थानुभवश्चतुर्विधः । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपिचतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

यथार्हम् । अ॰ यथायोग्यं ॥

यथार्हवर्ण । पु॰ चरे । प्रणिधौ ॥ अर्हति । अर्ह॰ । अच् योग्योर्हो यथार्हवर्णोरूपमस्य ॥

यथाविधि । अ॰ यथा शास्त्रोचितमित्यर्थे ॥ यथाविधानमित्यर्थे ॥

यथावृत्त । त्रि॰ यथाचारे ॥

यथाशक्ति । अ॰ साध्यानुसारे ॥ शक्तिमनतिक्रम्य । यथार्थेपदार्थानतिवृत्तावव्ययीभाव । अव्ययीभावश्चेत्यव्ययत्वम् ॥

यथाशास्त्रम् । अ॰ शास्त्रसम्मते ॥ शास्त्रमनतिक्रम्य । यथार्थेऽव्ययीभाव ॥

यथास्थित : । त्रि॰ सत्ये ॥

यथास्वम् । अ॰ यथार्थे ॥ यथायथमित्यर्थे । स्वात्मीये ॥ यथास्वमिति वीप्सायामव्ययीभाव. । योयआत्मा यद्यच्चात्मीयतद्यथास्वमित्युच्यते ॥

यथेप्सितम् । अ॰ कामम् । प्रकाममित्यर्थे ॥ इष्टानतिक्रमे । निकामे ॥ आप्तुमिष्टम् । आप्लृव्याप्तौ । सन् । क्त । आप्ज्ञप्यृधामीत् । अव्ययविभक्तीत्यव्ययीभाव : ॥

यथेष्टम् । न॰ इष्टमनतिक्रम्यस्थिते ॥

यथेष्टचारी । पुं॰ पक्षिणि ॥

यथेष्टाचरण । त्रि॰ यथेष्टाचारिणि ॥ यथा । क्रियाहीनस्यमूर्खस्यमहारोगिणएवच । यथेष्टाचरणस्याहु-

संरयान्नमयीचकम् ॥

यथेष्टाचारी । त्रि॰ स्वेच्छाचारिणि ॥ यथेष्टमाचरितुशीलमस्य । णिनि ॥

यथोक्तकारी । त्रि॰ काम्यनिषिद्धवर्ज्जनपुरस्सरनित्याद्यनुष्ठानकर्त्तरि ईश्वरप्रीतौ ॥ यथाज्ञाकारिणि ॥

यथोचित ॰ । त्रि॰ यथायोग्ये । यथाप्राप्ते ॥

यथोत्तरम् । अ॰ उत्तरमुत्तरप्रतीत्यर्थे ॥

यथोदितम् । न॰ यथोक्ते ॥

यथोपजोषम् । अ॰ यथासुखमित्यर्थे ॥

यद् । अ॰ हेतौ ॥ यच्छति । यम॰ । क्विप । अनुदात्तोपदेशे त्यनुनासिकलोप : ॥ यदर्थे ॥

यत्॰द् । त्रि॰ यदर्थे ॥ बुद्धिस्थत्वोपलक्षितधर्म्मावच्छिन्ने । सं॰ श्रुतिभाषा ॥ यत्तदोर्नित्यसम्बन्ध ॰ यच्छब्देनोच्यतेयोर्थं तच्छब्दस्तस्यवाचक :॥ अपिच । तच्छब्देनतु यच्छब्दोबोद्धव्य ॰ सततंबुधै : । उदाहृतेतुयच्छब्देतच्छब्द : स्यादुदाहृत ॥ यजेत्यजितनियजिभ्यो डिद्वित्यदि : ॥

यदा । अ॰ यस्मिन्काले ॥ यथा । यदायदासतांहानिर्वेदमार्गानुसारिणाम् । तदातदाकलिर्बृद्धिरनुमेयाविचक्षणै : ॥ सर्वैकान्यत्यादिना॰ दा ॥

यदि । अ॰ पक्षान्तरे ॥ सम्भावनायाम् । चेदर्थे । असन्देहेसन्देहवचने ॥ यदिवेदा . प्रमाणस्यु । वेदा प्रमाण हिचेत्युक्त्यादिर्यथा- ॥ यतनम् । यती॰ । क्विन् । पृषोदरादित्वात्तलक्षद ॰ ॥

यदीय ॰ । त्रि॰ यत्सम्बन्धिनि ॥

यदु । पुं॰ देवयान्याययातेर्जातेज्येष्ठपुत्रे ॥ दशार्हदेशे ॥ तद्देशवासिनि॰ यदव : ॥

यदुतुङ्गम् । न॰ तीर्थविशेषे ॥

यदुदेव . । पुं॰ वसुदेवे ॥

यदुनाथ : । पुं॰ श्रीकृष्णे ॥

यदुपति : । पुं॰ श्रीकृष्णे ॥ यदूनांपति ॥

यदुवंश : । पुं॰ यदोसन्ताने ।

यदृच्छा । स्त्री॰ स्वातन्त्र्ये । स्वैरितायाम् ॥ स्वारसिक्यामिच्छायाम् । शास्त्रानुमतप्रयत्नव्यतिरेके । ऋच्छनमृच्छा । ऋच्छगत्यादौ । गुरोश्च । याऋच्छा । विशेषणमिति समास : ॥ सहसार्थे । निर्निमित्ते ॥ यथायदृच्छाशब्द । अयमतप्रवृत्ति निमित्तमनपेक्ष्यय . शब्द : प्रयोक्त्रभिप्रायेणप्रवर्त्ततेसयदृच्छाशब्दोडित्यादिरिति ॥ दैवगतौ ॥

यदृच्छालाभ ॰ । पुं॰ अप्रार्थितोपस्थितेलाभे ॥

यदृच्छालाभसन्तुष्ट । पुं० तत्त्वज्ञे ॥ शास्त्रानुमतप्रयत्नव्यतिरेकात् ० यदृच्छा० तयैवयोलाभोऽन्नाच्छादनादे शास्त्रानुमतश्च० सयदृच्छालाभ . तेनसन्तुष्ट ' ० तदधिकतृष्णारहित' ॥ यतयोभिक्षार्थंग्रामप्रविशन्तीतिशास्त्रानुमतस्तु प्रयत्न कर्त्तव्य एव ॥

यद्भविष्य . । त्रि० मूर्खे ॥ दैष्टिके ॥ यद्भविष्योविनश्यति ॥

यद्यपि । अ० अवधारणे ॥ अप्यर्थे ॥

यद्युवा । अ० यदि ॥

यद्वत् । अ० प्रश्ने ॥ वितर्के ॥

यद्वा । अ० पक्षान्तरे ॥

यन्ता । पुं० मेठे । हस्तिपके ॥ सूते ॥ सारथौ ॥ यच्छति । यम० । तृच् ॥

यन्त्रम् । न० देवाद्यधिष्ठाने ॥ पात्रभेदे ॥ नियन्त्रणे । जन्द्रा० ताला इ० भा० ॥ बन्धने ॥ मृगबन्धनविशेषे ॥ यच्छति । यम० । गुधृवीपचियमीतिष्ट्रन् . । यन्त्र्यतेनियम्यते० निगृह्णाति० असाधून्०बाधते० असाधून्० अनुगृह्णाति साधून् इतिचयन्त्रमितिपतुर्वरनीलकण्ठः ॥ तोप० अगमद्भृत्यादिभाषाप्रसिद्धेमहत्यन्त्रियन्त्रे ॥ बन्दूकइतिप्रथितेसीसगुलिकोत्क्षेपणार्थेलघ्वन्त्रियन्त्रे ॥ इतिमहाभारतटीकायानीलकण्ठः ॥ बाद्ये ॥ यथा । यन्त्रस्यगुणदोषौनविचार्यौ मधुसूदन । अहंयन्त्रं भवान्यन्त्री ममदोषानमेगुणा ॥ दारुयन्त्रादौ ॥ बाल० इ० भा० ॥ यथा । ईश्वरः सर्वभूतानांहृद्देशेऽर्जुनतिष्ठति । भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ॥ औषधस्यचपाकार्थं यानियन्त्राणिसन्तिहि । तानिभावप्रकाशादौद्रष्टव्यानिमनीषिभि ' ॥ तत्रकेषांचिन्नामानि लिख्यन्ते । जलकच्छपपाताल दोलाभूधरबालुका . । वकाद्यायन्त्रभेदा स्युर्वच्य भाद्यास्मूषिका इतिशब्दचन्द्रिका॥

यन्त्रकम् । न० यन्त्रकाष्ठे । कुन्द० इ० गौ० दे० भा० प्रसिद्धे ॥ यन्त्र्यते काष्ठमनेन । यम० पूर्ववत्च । स्वार्थेकः ॥

यन्त्रगृहम् । न० तैलशालायाम् ॥ यन्त्राणांस्थाने ॥

यन्त्रगोल . । पुं० मटरइतिप्रसिद्धे कलाये ॥

यन्त्रणम् । न० रक्षणे ॥ बन्धने ॥ नियमने ॥

यन्त्रणा । स्त्री० पीडायाम् ॥

यन्त्रपेषणी । स्त्री० पेषणार्थंयन्त्रे । जाता० चाकी० इतिभाषाप्रसिद्धे ॥

यन्त्रिका । स्त्री० पत्न्याः कनिष्ठभ

गिन्याम् ॥ यथा । कनिष्ठाश्याक्षि काष्ठालोयन्त्रिका कीलि कुम्भिकीति षट् मचन्द्र ॥

यन्त्रित । त्रि॰ यन्त्रिते । बद्धे । नियमिते । वशीकृते ।

यन्त्री । त्रि॰ यन्त्रवति ॥ अस्त्यर्थे॰ इनि ॥

यन्मूल: । त्रि॰ यदाश्रयभूते । यत्सत्तातिरिक्तसत्ताशून्ये ।

यम: । पु॰ दक्षिणाशापतौ । शमने । काले । धर्मराजे । पितृपतौ । समवर्त्तिनि । यम स यमतामस्तम् । स यमताधर्माधर्मफलदाता॰ नियन्तानुग्रहकुर्वतामध्ये॰ यमोवैवस्वतोभगवद्विभूति ॥ अस्यानुशासनयथा । कैवल्ये जगद्धाममनन्तसमुपाश्रिता । भवद्भिः परिहार्या स्तेषामा स्तौष्ठस्थिति ॥ नमः कृष्णाऽच्युतानन्तवासुदेवेत्युदीरितम् । यैर्भावभाविते दूरात्तास्ते चत्वाच्या सुदूरतद्वृतिर्वाक्यपुराणम् ॥ सर्वेषां स यमनात्यम यच्छति॰ उपरमयतिप्रारब्धे चीर्णे प्राणं वियोजयतिइतियम ॥ आदित्ये । शनौ काके । ध्वाङ्क्षे ॥ स यमे ॥ शरीरसाधनापेक्षनित्यकर्म त्रि । उपावान्तरनिरपेक्षशरीरमात्रेणसाध्य नित्य यावज्जीवमवश्यकार्य यत्कर्म॰ च हिंसादि॰ तद्यमइत्यर्थ: । अहिंसासत्यवचनब्रह्मचर्यमकल्कता । अस्तेयमितिपञ्चैतेयमाबेपरिकीर्त्तिता ॥ निषिद्धानाचरणे । इन्द्रियाणांविषयेभ्योनिवारणे ॥ यमान्सेवेतसततं ननित्य नियमान्बुध । यमानपतत्यकुर्वाणोनियमान्केवलान्भजन् ॥ अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाइतिपातञ्जलसूत्रम ॥ सर्वं ब्रह्मेतिविज्ञानादिन्द्रियग्रामसयम । यमोयमितिसम्प्रोक्तोऽभ्यसनीयोमुहुर्मुहु ॥ यम यति । यमउपरमे । धिञ्जन्तादच् यच्छति॰ अनेनवा॰ यमनवा । यम॰ । पचाद्यच्॰यम । समुपनिविषुचेत्यप्॰ वा ॥ उपरमे । उपरति भावे ॥ ब्रह्मचर्यादिदशसु ॥ यथा । ब्रह्मचर्यंदयाक्षान्तिर्ध्यानसत्यमकल्कता । अहिंसास्तेयमाधुर्येयमास्तियमा: स्मृता: ॥

यमौ । पु॰ द्विवचनान्त . ॰॰ एकयोऽश्यानकुलसहदेवयो . ॥

यमौ । त्रि॰ यमजे ॥ बीजेन्त्रवायुनाभिन्नेद्वौजीवौकुक्षिमागतौ । यमावित्यभिधीयेतेधर्मेतरपुर: सरौ ॥ धर्मस्तदितरोऽधर्म . ॰तौपुर . सरौययो . । तेनयमौधर्मादधर्माच्चभवत इत्यर्थ: ॥ तयोर्ज्येष्ठत्वनिरूपणयथा । यद्विर्वर्त्तिसुषारित्याद्यम कथा । दृढहन्मत । वक्ष्यमाणम

यमयो. र्यग्निप्रथमसुत्वम् ॥ जन्मा न. पितरश्चैवतस्मिन्ज्येष्ठप्रतिष्ठितम् ॥ जन्मप्राथम्यात्. ज्येष्ठयमयो. नतुनिषेकप्राथम्यात्. जन्मप्राथम्यसन्देहेसुखदर्शनप्राथम्यात्। द्रष्टुश्चाहतत्वम् ॥

यमक. । पु. सयमे । व्रते ॥ न. श ब्दालङ्कारे । तल्लक्षणंयथा । अर्थेस त्यर्थभिन्नानावर्णानांसाघुन : श्रुति । यमकपादतद्भागवृत्तितत्यात्यैकताम् ॥ वर्णवृत्तविशेषे । यथा । नगणमनुहिलघुकुरु । फणिभणित यमकमिति । यथा । विषमतरविष मधर । प्रहरमपिनविरमपि ॥ त्रि. यमजे ॥

यमकालिन्दी । स्त्री. सञ्ज्ञायाम् । सूर्यपत्न्याम् ॥

यमकीट. । पुं. कीटविशेषे । घुघुरे ॥

यमकोटि. । स्त्री. पुरीविशेष । सा भद्राश्ववर्षस्वनिरक्षदेशेलङ्कायाः पूर्वेपृथिव्याश्चतुर्थेभागेवर्त्तते ॥ यथा । लङ्काकुमध्येयमकोटिरस्याः प्राक् पश्चिमेरोमकपत्तनञ्च । अध स्तत : सिद्धपुरंसुमेरु : सौम्येऽथ याम्येवडवानलश्च ॥ कुवृत्तपादान्तरितानितानिस्थानानिषड्गोलविदोवदन्ति इति ॥

यमघण्ट : । पुं. ज्योतिषयोगविशेषे ॥ यथा । रवौमघाचन्द्रदिनेविशाखा चार्द्राकुजेचन्द्रसुतेचमूला । जीवेऽनलर्क्षंभृगुजेविधिश्चहस्ताऽर्कजेस्या- द्यमघण्टयोग : ॥

यमज : । त्रि. समकालीनैकगर्भजा- तसन्तानद्वये ॥

यमदग्नि: पुं. ऋचीकमुनिपुत्रे । परशुरामपितरिमुनिविशेषे ॥

यमदूतक : । पुं. कृतान्तचरे ॥ काके ॥

यमदूतक : । पुं. वायसे ॥ यमश्चरे ॥

यमदूतिका । स्त्री. अम्लिकायाम् । तिन्तिडीवृक्षे ॥ विशेषत. क्षारभूमौप्राप्यदायमदूतिका ॥

यमदेवता । स्त्री. भरणीनक्षत्रे ॥

यमद्रुम : । पुं. शाल्मलिवृक्षे ॥

यमद्वितीया। स्त्री. कार्त्तिकशुक्लद्वितीयायाम् ।

यमधार . । पुं. पार्श्वद्वयधारयुक्तास्त्रविशेषोद्विधाराखाण्डा. इ. भा. ॥

यमन : । पुं. यमे ॥ न. बन्धने ॥ उपरतौ ॥

यमनिका । स्त्री. जवनिकायाम् । व्यवधायकवाससि । तिरस्करिण्याम् ॥ यमयति । यम. । ल्युट् । स्वार्थेकन् ॥

यमपत्नी । स्त्री. धूमोर्णायाम् विजयायाम् ॥

यमप्रिय : । पुं॰ वटवृक्षे ॥
यमभगिनी । स्त्री॰ यमुनायाम् ॥
यमभट : । पुं॰ यमदूते ॥ परेयमभटाः शठाः । कपटविग्रहैर्भृकुटानिवेदयतवीवचसवनचाधिकारीमयि । पहन्तुमिवसुन्दरीचरणचारुपङ्केरुहस्खलन्मधुसुधासवसमपिवमृगानीतरे ॥
यमराट् । पुं॰ यमने । यमे ॥ यमेनसयमेनराजते । राज॰ । क्विप् ॥
यमराज : । पुं॰ यमे ॥
यमलम् । न॰ युग्मे । युगले ॥ द्वित्विते ॥
यमलपत्रक : । पुं॰ अश्मन्तकवृक्षे ॥ कोविदारवृक्षे ॥
यमलार्जुनका । पुं॰ श्रीकृष्णे ॥
यमली । स्त्री॰ चोटीद्वये । शाटीद्वये ।
यमलिखक : । पुं॰ चित्रगुप्ते ॥ यमस्यलेखक : ॥
यमवान् । त्रि॰ संयमिनि ॥
यमवाहन : । पुं॰ महिषे ॥
यमव्रतम् । न॰ पृथ्वीपतेर्धर्मविशेषे ॥ यथा । यथायमः प्रियद्वेष्यौप्राप्तकालेनियच्छति तथाराज्ञानियन्तव्या : प्रजास्तद्धियमव्रतम् ॥
यमस्वसा । स्त्री॰ यमुनायाम् । कालिन्द्याम् ॥ दुर्गायाम् ॥ यमस्यस्वसा ॥
यमानिका । स्त्री॰ यवसोद्भायाम् ॥ ब्रह्मदर्भायाम् ॥ यमेनयमिति । यम॰ ण्वुल् ॥
यमानी । स्त्री॰ यमानिकायाम ॥
यमान्तक : । पुं॰ शिवे ॥ यमस्यान्तक : ॥
यमी । त्रि॰ संयमविशिष्टे ॥ यमवति
यमी । स्त्री॰ यमुनायाम् ॥
यमुना । स्त्री॰ कालिन्द्याम् । सूर्यतनयायाम् । यमजस्वसरि ॥ यच्छति । यमउपरमे । अजियमिशीङ्भ्यश्च उनन् ॥ दुर्गायाम् ॥ यथोक्तं देवीपुराणे । सङ्गमाद्यमनाद्गालोकेदेवीविभाव्यते । यमस्यभगिनीयातायमुनातेनसामतेति ॥
यमुनाजनक : । पुं॰ सूर्ये ॥
यमुनाप्रभव : । पुं॰ तीर्थविशेषे ॥
यमुनाभित्॰ द् । पुं॰ बलभद्रे ॥
यमुनाभ्राता । पुं॰ कृतान्ते । यमने । यमे । यमुनाया : भ्राता ॥
यमेरुका । स्त्री॰ दण्डढक्कायाम् ॥
ययाति : । पुं॰ नहुषात्मजे पुराणप्रसिद्धेनृपतिनाहुषी ॥ यस्यायश्लोक : । यत्पृथिव्यांव्रीहियवंहिरण्यंपशव : स्त्रिय : । नदुह्यन्तिमन : प्रीतिं पुंस : कामहतस्यमे ॥
ययातिपतनम् । न॰ भौमतीर्थविशेषे ॥
ययो : । पुं॰ महादेवे । मोक्षमार्गे ॥ याच्यनेनया॰ । याया : किदूर्द्वे

यवजोद्भवम् । न० तवचीरे ॥
यवतिक्ता । स्त्री० लताप्रभेदे । महातिक्तायाम् । दृढपादविसर्पिण्याम् । सूक्ष्मपुष्पायाम् ॥
यवतैलम् । न० यवचूर्णादियुक्तपक्वतैलविशेषे ॥ यथा । यवचूर्णार्द्धकुडवमञ्जिष्ठार्द्धपलेनतु । तैलप्रस्थमतस्तु याँकाञ्जिकेसाधितोजयेत् ॥ ज्वरदाहमसूरोगमङ्गानाञ्चाप्रहर्षणम् ॥
यवद्वीप । पु० सप्तखण्डात्मके० जम्बूद्वीपविशेषे ॥
यवन । पु० देशविशेषे ॥ वेगाधिकाश्वे ॥ गोधूमे ॥ गर्जरदर्भे ॥ तुरुष्के ॥ सुदाम्न. पितरिनृपान्तरे ॥ जातिविशेषे । यथाते:पुत्रस्तुर्वसोर्वंशे ॥ यथोक्त माल्ये । यदोस्तुजातायदवस्तुर्वसोर्यवना सुता । द्रुह्योस्तुतनयाभोजाअनोस्तुम्लेच्छजातय ॥ पुरोस्तुपौरवोवंशोयत्रजातोसिपार्थिवद्भुति ॥ मुनिविशेषे ॥ यथा । जातंदिनदूषयतेवसिष्ठश्चाष्टौचगर्गीयवनोदशाहम् । जन्माख्यमासकिलभागुरिश्च चौरेविवाहेपिचकर्णवेधे ॥ त्रि० वेगिनि ॥
यवनद्विष्टः । पु० गुग्गुलौ ॥
यवनप्रियम् । न० मरिचे ॥
यवनाचार्य्यः । पु० ज्योतिःशास्त्रकर्त्तरिमुनिविशेषे ॥
यवनानी । स्त्री० यवनानांलिप्याम् ॥ इन्द्रवरुणेत्यादिना० नुगागमोङीष् च ॥
यवनारि । पु० श्रीकृष्णे ॥
यवनाल । पु० देवधान्ये । जूर्णावृये । बीजपुष्पिकायाम् । ज्वार० बाजरा० इ० भा० ।
यवनालज । पु० यवक्षारे ।
यवनिका । स्त्री० जवनिकायाम् ।
यवनी । स्त्री० यवनस्त्रियाम् ॥ यवनस्यस्त्रीजातेरितिङीष् ।
यवनेष्ट । पु० लशुने ॥ राजपलाण्डौ ॥ निम्बे ॥ पलाण्डौ ॥ न० सीसके ॥ मरीचे ॥ शलजमे । सलगम० इ० भा० प्र० ॥
यवनेष्टा । स्त्री० खर्जूर्याम् ॥
यवफलः । पु० वेणौत्वक्सारे ॥ यवइवफलान्यस्या ॥ मांस्याम् ॥ कुटजे ॥ प्रलम्बे ॥
यवमध्यम् । न० चान्द्रायणप्रभेदे ॥
यवमय । त्रि० यवस्यविकारे ॥ यसंज्ञायामितिमयट ॥
यवलास । पु० यवक्षारे ॥
यवशाकम् । न० वास्तुकशाके । बथुआ० इ० भा० प्र० ॥ प्रायशोयवमध्येस्याधवशाकमिदंततः ॥
यवशूकः । पु० )
यवशूकजः । पु० )यवक्षारे ॥
यवसम् । न० घासे . गवादादनीयतृणे

॥ यौति॰ यूयतेवा । युमिश्र णे ऽ मिश्रणे च । कटियुभ्यांचिदित्यस च् । संज्ञापूर्वकत्वान्नवृद्धिः ॥

यवसुरम् । न॰ यवजातसुरायाम ॥

यवागूः । स्त्री॰ यवद्रव्यविशेषे ॥ ष ड्गुणजलपक्कघनद्रवद्रव्यविशेषे । श्राणायाम् ॥ यथा । यवागू षड् गुणे तोयेसंसिद्धाघनसिक्थिका । पृथग्द्रव्यैस्तुविरचे : सयुक्ताज्वरि- णे हिता ॥ यवागूर्दीपनीलघ्वीछ्र ग्राहिणीवस्तिशोधनी ॥ श्रमग्लानिह रीपथ्याज्वरेचैवातिसारके ॥ यौ ति॰ यूयतेवा यु॰ । स्युवंचिभ्यो ऽन्युजागूजक्नु चक्त्यागूच् ॥

यवाग्रज । पुं॰ यवक्षारे । यवाग्रा ज्जायतेस्म । जनी॰ । पञ्चम्यामि तिड ॥

यवान् । त्रि॰ वेगिनि ॥

यवानिका । स्त्री॰ ब्रह्मदर्भायाम् । श्रजवायन॰इ॰भा॰ । यवान्याम् ॥ दुष्टोयवः । इन्द्रवरुणेति॰ ङीषा नुकौ । कुत्साथे॰ स्वार्थेवाकन् ॥

यवानी । स्त्री॰ यमान्यामोषधौ । य वानिकायाम् ॥ अस्यानामानिगु णाश्च । यवानिकोग्रगन्धाचब्रह्मदर्भा श्रजमोदिका । सैवोक्तादीप्यकोदीप्य तथाखाद्यवसाह्वया ॥ यवानोपाच नीरुच्यातीक्ष्णोष्णाकटुकालघुः । दीपनीचतथातिक्तापित्तलाशुक्रशूल हृत् ॥ वातश्लेष्मोदरानाहगुल्मप्लो हकृमिप्रणुत् ॥ दुष्टोयवइत्यर्थे॰ इ न्द्रवरुणेतिसूत्रस्थयवाद्दोषइतिवा र्त्तिकात्॰ यवशब्दस्यानुगागमस्त तोङीष्च । श्रयमेवाशयोभ्रमेषीयदुत यवत्वजातिरथाचैदितद्दोषाख्यत्वानुक्त- तिरिति ॥

यवानीशाकम् । न॰ यवान्याः शाके ॥ यवानीशाकमाग्नेयंरुच्यवातक फप्रणुत् । उष्णंकटुचतिक्तञ्चपित्त लंलघुशूलहृत् ॥

यवापत्यम् । न॰ यवक्षारे ॥

यवाम्लजम् । न॰ सौवीरके ॥

यवासः । पुं॰ यासे । दुरालभायाम् । रोदन्याम् । दुरालभायाम् । जवा सा॰ इ॰ भा॰ ॥ खदिरे ॥ यौति । यु॰ घटतान्यञ्जोति॰ श्रासः ॥

यवासकः । पुं॰ यवासे ॥ स्वार्थेकः ॥

यवासशर्करा । स्त्री॰ यवासरसघटित शर्करायाम् । सुधामोदके । तव- राजे ॥

यवासा । स्त्री॰ गुण्डासनोतृणे ॥

यवाह्वः । पुं॰ यवक्षारे ॥

यविष्ठः । त्रि॰ कनिष्ठे ॥ श्रयमेषा मतिशयेनयुवा । अतिशायनइती- ष्ठन् । स्थूलदूरेति॰ यणादिलोप गुणौ ॥

यवीयान् । त्रि॰ श्रतितरुणे ॥ कनि ष्ठे ॥ श्रयमनयोरतिशयेनयुवा ।

सातङ्कृतिश्च : ॥

यशोधन : । त्रि॰ स्वयशोरक्षकैर्य शोधनानांश्रियशोगरीय : ॥

यशोधरेय : । पुं॰ बाहुले । शाक्यमुनेः पुत्रे ॥

यशोवती । स्त्री॰ मेरोश्चक्रपाटाख्योर्द्ध मेखलायामीशानदिशि॰ईशानपुर्याम् ॥ यथोक्तं श्रीमृगेन्द्रसंहितायाम् । ज्वलल्ललाटदृग्दग्धस्मरस्तृणु यशोभृत । पुरीयशोवतीसर्वरत्नसारुद्रसेविता ॥ ज्वलल्ललाटतोयेना सग्दग्धीकामकालीयेन॰यतएवत थाविधसकलजगद्वैरिविनाशात्॰ यशोभृतईशाननाथस्यसर्वरत्ननिर्मिताऽरुद्रैः सेविताच॰यशोवतीनाम पुरीत्यर्थः ॥ (*)

यष्टव्य : । त्रि॰ यज्ञेषु यजनीये ॥

यष्टि : । पुं॰ ध्वजदण्डे ॥ पुं॰स्त्री॰ हारलतायाम् ॥ भार्ग्याम् ॥ मधुयष्ट्याम् ॥ शस्त्रभेदे । दण्डे । लगुडे ॥ तन्तौ ॥ यजेः क्तिन्॰ तिज्वा ॥

यष्टिक : । पुं॰ जलकुक्कुटे ॥ दण्डे ॥

यष्टिका । स्त्री॰ मीनगोधिकायाम् । वाप्याम् ॥ लगुडे । यष्ट्याम् । लाठी॰इ॰भा॰ ॥ हारभेदे ॥ मधुयष्ट्याम् ॥ स्वार्थेकः । ह्रस्वः ॥

यष्टिपर : । पुं॰ लगुडपाणिनि । यष्टिधारके । छडीबरदार॰इ॰भा॰ । लठैत॰इतिच ॥

यष्टिमधु । न॰ यष्टिमधुकायाम् ॥

यष्टिमधुका । स्त्री॰ क्लीतकी । मधुयष्टिकायाम् । मुलहठी॰इतिख्यातौषधौ ॥ यष्टिः मध्विवास्याः । कप् ॥

यष्टिहेतिक । त्रि॰ याष्टीके । लठैत॰इ॰भा॰ । यष्टिर्हेतिर्यस्य ॥

यष्टी । स्त्री॰ यष्टिमधुनि ॥ यष्टीहिमागुरुः स्वादीचक्षुष्याबलवर्णकृत् । सुस्निग्धाशुक्रलाकेश्यास्वर्यापित्तानिलास्रजित् ॥ व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा ॥ वह्वादित्वात्पक्षे ङीष् ॥

यष्टीकम् । न॰ यष्टिमधुनि ॥

यष्टीपुष्प : । पुं॰ पुत्रजीववृक्षे ॥

यष्टीमधु । न॰ ) यष्टीमधुकम् । न॰ } यष्ट्याम् । मधु- यष्टीमधूकम् । न॰ ) यष्टिकायाम् ॥

यष्टा । पुं॰ यजमाने । यागकर्त्तरि ॥ यजते । यजदेवपूजासङ्गतिकरणदानेषु । तृच् ॥

यष्ट्याह्वयम् । न॰ मधुयष्ट्याम् ॥

यसदम् । न॰ रङ्गसदृशे । रीतिकेतीजस्तइतिभाषा ॥ यसदतुवरतिक्तं शीतलंकफपित्तहृत् । चक्षुष्यपरममेहान्पाण्डुश्वासञ्चनाशयेत् ॥

यस्क : । पुं॰ मुनिविशेषे ।

यह्व : । त्रि॰ महति । याल्यनेन ।

याग : | याचनक :

या० । शिवयज्ञजिह्वे लि० यन्०धा तोर्ड्खोऽनुगागमश्च ॥ अन्येतु०यज मेर्जकारस्यकारोनिपात्यतद्वत्याहु ॥ यजमाने ॥

या । स्त्री० याचायाम् ॥ आसौ ॥ धू सिनि ॥ त्यागे ॥ वारणे ॥ येगे ॥ स मञ्चायाम् ॥ याने । यानम् । यो० सम्प्रदाहित्वात्क्षिप ॥

याच : । पु० देवसर्गविशेषे ॥

याग । पु० देवतोद्देशेनद्रव्यत्यागे । यज्ञे ॥ तत्रश्रौताग्निकृत्यवर्णियज्ञा । सप्त यथा । अन्याधानम् ० तदेवाग्निहो त्रम् । १ । दर्शपौर्णमासौ । २ । पिण्डपितृयज्ञ । ३ । आग्रयणम् । ४ । चातुर्मास्य । ५ । निरूढ पशुबन्ध । ६ । सौत्रामणि । ७ । गार्ह्याग्निकृत्यपाकयज्ञा । सप्तय था । औपासनम । १ । वैश्वदेव । २ । स्थालीपाक । ३ आग्रयण म् । ४ । सर्पबलि । ५ । ईशान बलि । ६ । अष्टकान्वष्टका । ७ श्रौताग्निसप्तसंस्थायथा । सोमया ग ० सप्तवाग्निष्टोम : । १ । अत्य ग्निष्टोम : । २ । उक्थ्य । ३ । षोडशी । ४ । वाजपेय । ५ । स द्विविध ० सत्या० कुतु च । अतिरा त्र । ६ । अप्तुर्याम । ७ उत्त रक्रमतोऽश्ववीयथा । महाव्रतम् । १ । सर्वतोमुखम् । २ । राजसूय । ३ । पौण्डरीकम् । ४ । अभि जित् । ५ । विश्वजित् ६ । अश्व मेध । ७ । बृहस्पतिसव : । ८ । आङ्गिरस । ९ । इमनान्यष्टादश । १० । इत्यादिश्रौतसूत्रम ॥ गन्धादिनादेवपूजायाम् ॥ गन्ध पुष्पादिनादेवपूजायागोभिधीयते ॥ इज्यतेऽनेनाचता । यजदेवपूजास ङ्गतिकरणदानेषु । घञ् ॥ यजनवा । भाववचनाश्चेतिभावेघञ ॥

यागमण्डप । पुं० न० यजनगृहे ॥ या गायमण्डप ॥

याचक । त्रि० वनीयकि । याचनकी । मार्गणे । अर्थिनि । याञ्चाकर्तरि ॥ याचति । टुयाचृयाञ्चायाम् । ण्वुल्तृचाविति ण्वुल् ॥ तृणादपिल घुस्तूलस्तूलादपिचयाचक । वायु नाकिन्ननीतोऽसौकिस्वित्प्रार्थनश ङ्कया ॥ जगत्पतिर्हियाचित्वाविष्णु र्वामनतागत । कोन्योऽधिकतरस्त स्येयोर्थीयातिभलाघवम् ॥

याचन् । त्रि० याचकि ॥ याचति । टु याचृ० । शट शट ॥ मुखभङ्गस्वरोदी नीगात्रस्वेदोमहद्भयम् । मरणे यानि चिह्नानितानिचिह्नानियाचत ॥

याचनम् । न० याञ्चायाम ॥ याचे र्भावेल्युट ॥

याचनक । त्रि० याचकी ॥ याचति टुयाचृ० । ण्वु : । स्वार्थेकन ॥

याचना । स्त्री॰ याञ्चायाम् ।। याचे ण्यु रादिश्यन्तात्॰ ण्यासश्रन्थोयुच । टाप् ।।

याचमान : । त्रि॰ याचके ॥ यथा । मवीनदीनभावस्य याचमानस्यमा निन । वचोजीवितयोरासीत्पुरो नि. सरणेरण : ॥ इतिवररु चि . ॥

याचित । त्रि॰ प्रार्थिते । टुयाचृ॰ । क्त : । न॰ याचनवृत्तौ । मृते । मृतन्तुयाचित प्रोक्तमितिमनु :॥

याचितकम् । न॰ याञ्चालब्धे ॥ या चितेननिर्वृत्तम् । अपमित्ययाचि ताभ्याङ्ककनाविति कन् ॥ प्रत्य र्पणीयत्वेनयाञ्चयायत्प्राप्तमलङ्का रादिवस्तुतत्याचितकम् । कार्या नन्तर वस्तुस्वामीयत्पुनर्गृह्णाति॰ तदित्यर्थ : । मगनीको॰ इ॰ भा॰ ॥

याचिष्णु : । त्रि॰ याचके ॥

याच्यम् । त्रि॰ याचितुंयोग्ये ॥ टुया चृ॰ । ऋहलोर्ण्यत् । यजयाचेति कुत्वनिषेध :॥

याञ्चा । स्त्री॰ याचने । अभिशस्तौ । याचनायाम् । अर्थनायाम् । भि क्षायाम् । अर्दनायाम् । मांगना इ॰ भा॰ ॥ याचनम् । टुयाचृ॰ । यजयाचेतिनङ् ॥

याज : । पुं॰ वाजे । प्रसादने । अन्ने । भक्ते ॥

याजक : । पुं॰ याज्ञिके ॥ राजकुञ्ज रे ॥ ऋत्विजि ॥ यथा । आग्नीध्रा याधनैर्यार्ऋत्विजोयाजकास्तेइ त्यमर । यजमानेनधनैर्वार्या : धनानिदत्वा॰इष्टसम्पादनार्थन्निय न्तेप्रार्थ्यन्तेयेआग्नीध्रप्रभृतयस्ते ऋ त्विजोयाजकाश्चकथ्यन्ते ॥ बहुया जकग्रामयाजकयोर्निन्दायथा । अ ब्राह्मणास्तुषट्प्रोक्ताऋषिभिस्तत्व दर्शिभि : । आद्योराजभृतस्तेषां द्वितीय · क्रयविक्रयी ॥ तृतीयो बहुयाज्य : स्याच्चतुर्थोग्रामयाज क : । पञ्चमस्तुभृतस्तेषांग्रामस्यन गरस्यच ॥ अनादिश्याद्य. पूर्वां सादिश्याद्यैवपश्चिमाम् । नोपा सीतद्विज: सन् ध्यांसषष्ठोऽब्राह्मण : स्मृत :॥ यजति । यज॰ । ण्वु ल् ॥ पुरोहिते ॥

याजनम् । न॰ ब्राह्मणस्यकर्मविशेषे । यागक्रियाकारणायाम् । यागकरा वणा इ॰ भा॰ ॥ अविदित्वातुय : कुर्याद्याजनाध्यापनंजपम् । होम मन्त्रजलादीनितस्याल्पंफलंभवे दितियाज्ञवल्क्य · ।

याजमानम् । न॰ यजमानस्यभावक मंणो : ॥ युवादित्वादण् ॥

याजि : । पुं॰ यष्टरि ॥ यागकर्त रि ॥ यागे ॥ यजति । यज॰ । ब-

सिवपियजिराजीत्यादिना•डुन् ॥ प्रार्थनायाम् ॥

याजुष । त्रि• यजुर्वेदसम्बन्धिनि ॥

याज्ञवल्क्य । पुं• यजुःशाखाविशेषस्य प्रवर्त्तके•मुनिविशेषे । ब्रह्मराते । योगेशे । योगीश्वरे ॥ यज्ञवल्क' वक्ता•यज्ञवल्कः । यज्ञवल्कस्यमेदापत्यम् । गर्गादिभ्योयञ् ॥

याज्ञसेनी । स्त्री• द्रौपद्याम् ॥ याज्ञसेनस्यापत्यं स्त्री । अण । ङीप् ॥

याज्ञिक : । पुं• याजके । आध्वर्यवादियज्ञकर्मकुशले ॥ यज्ञकाण्डद्रष्टरिह्वषीयज्ञमधीते•वेत्तिवा । क्रतूक्थादेतिठक् ॥ कुशे । रक्तखदिरे । पलाशे अश्वत्थे ॥

याज्ञिक्यम् । न• याज्ञिकानां•धर्मे•आम्नायेच । छन्दोगौक्थिकेति•ञ्य : ॥

याज्य: । त्रि• याजनीये । यजमाने । यष्टुंयोग्य : । यज• । ऋहलोर्ण्यत् । यजयाचेतिकुत्वनिषेध : । याजयितुंयोग्योवा ॥ न• यागलब्धधनादौ ।

याज्या । स्त्री• यज्ञाङ्गसाधने । होतृपाठ्यायामृचि ॥ इज्यतेऽनया । यज• । ऋहलोर्ण्यत् । यजयाचरुचप्रवचर्चश्चेतिकुत्वाभाव : ।

यात : । त्रि• गते ॥ यत्प्रापणे । क्त : ॥ न• अङ्कुशवारणे ॥ पादकर्मयत प्रोक्तंयातमङ्कुशवारणमितिहलायुध : ॥

यातना । स्त्री• प्रगाढायांवेदनायाम् । कारणायाम् । तीव्रवेदनायाम ॥ यतनिकारोपस्कारयो : । ण्यन्ताद् आसश्रन्थोतियुच् ।

यातयाम । त्रि• जीर्णे । पक्वे सतिप्रहरादिव्यवहिते•चोदनादौ•भोज्य प्राप्ते ॥ यथा । 'यातयामं गतरसं पूतिपर्य्युषितञ्चयदिति ॥ यातोगतोयामउपभोगकालोयस्य । परिभुक्तोज्झिते । भुक्तात्मुज्झिते ॥ यथा । दर्भा : कृष्णाजिन मन्त्रा ब्राह्मणाहविरग्नय : । अयातयामान्येतानिनियोज्यानिपुन : पुन : ॥

यातायातम् । न• गमनागमने ॥

यातु । न• राक्षसे ॥ पुं• काले । याति । या• । कमिमनिजनिगाभायाहिभ्यश्चेतितु : । अध्वगादि । त्रि•गन्तरि । पथिके ॥

यातुघ्न । पुं• गुग्गुलौ ॥

यातुधान : । पुं• राक्षसे । यातूनिरक्षांसिदधाति•पुष्णाति•खलातिपीडकत्वात् । डुधाञ्• । बहुलमन्यत्रापीतियुच् । ल्युट्वाल्युडिति

याता । पुं• सारथ्यादौ । स्त्री• प

याम्यांपञ्चकदासभं शुक्रदिने चत्व
रीदश्यपि । पुष्योरोहिणिकारवि-
भं गुरुजीषष्ठीमनुः पश्चिमे•सौम्ये
विल्कुजभानवीयमकरौदिग्वैदिती
यातिथि•रितिकश्चित् ॥

याथातथ्यम् । न• यथातथभावे ॥ ब्रा
ह्मणादित्वात्ष्यञ् ॥ यथातथा ॥
स्वार्थे ष्यञ् ॥

याथार्थ्यम् । न• सत्यार्थतायाम् ।
वास्तवार्थे ॥ यथा चतुरग्रहण्य-
तोजन्मनिरीक्षणश्चतहिय . । खप-
तोनागरूकस्ययाथार्थ्यं वेदकस्तवे-
तिमुरे • कृताविष्णो : स्तुतिः ।
कोविदकोविति । विदोलटोवेतिण-
लादेशः ॥

याद पतिः । पुं• समुद्रे ॥ वरु
णे ॥ यादसांपतिः ॥

याददीशः । पुं• समुद्रे ॥

यादव. । पुं• केशवे । श्रीकृष्णे त्र-
यी ॥ न• गोमहिष्यादौ । याद
बन्धने ॥ यदोरपत्यम् । अण् ॥
यदूनामिदम् । तस्येदमित्यण् ॥

यादवी । स्त्री• दुर्गायाम् ॥ यदूना
मियम् । अण् ॥

यादः । न• जलजन्तौ ॥ यातिवेगेन
। या• । असुन् बाहुलकात्•
दुक् ॥ यद्वा•ं याति । क्विप् । या
मतिरिति• । असुन् । यादस्यतिवा
। दसुउपक्षये । क्विप

यादसांनाथः । पुं• वरुणे ॥

यादसांपतिः । पुं• समुद्रे ॥ वरुणे
॥ तत्पुरुषेकृतीत्यलुक् ॥

यादृशः । त्रि• यादृशि । जैसा• हू•
भा• ॥ यद्वदृश्यते• यमिवपश्य
तिवा । दृशिर• । त्यदादिष्विच्च
कञोपिवाच्यइतिक्सः । आसर्वनाम्न
। इत्येवेतिदीर्घः ॥

यादृच्छिकः । त्रि• यदृच्छयाप्राप्ते ।
स्वप्रयोजनसङ्कल्पशून्ये ॥

यादृक् । त्रि• यथाविधे । यादृशी ॥
यमिवपश्यति• यद्वायदृश्यते ।
दृशिर्• । त्यदादिषुदृशइतिक्विन्
। आसर्वनाम्नइत्यात्वम् ॥

यादृशः । त्रि• यादृशि ॥ त्यदादिषु
दृशोनालोचनेकञ्चेतिकञ् । पू
र्ववद्वियद्दादिकम् ॥

यादोनाथः । पुं• समुद्रे ॥

यादोनिवासः । न• जले ॥

यानम् । न• युग्ये । पत्रे । रथादिवाह
ने ॥ गतौ ॥ शत्रोरास्कन्दने । वि-
जिगीषोररिम्प्रति यात्रायाम् ॥
यथा । परस्यव्यसनंज्ञात्वास्वस्यवृद्धिं
निरीक्ष्य च । रात्रायामनुकार्यं च
मित्याहुर्नयकोविदाः । यात्यनेन
। या• ल्युट् ॥ यान्त्यनेनवा ।
करणे तिल्युट् ॥

यानपात्रम् । न• नित्यद्यानविशे-
षे । वहित्रके । वोहित्थे । वहने ।

पोते । जङ्घालङ्घतिसागान्यजगभा घाप्रसिद्धे । समुद्रयाने ॥

यानपात्रकम् । न० यानपात्रे ॥

यानमुखम् । न० रथादे पुरोभागे । धुरि । वोढुबन्धनस्थाने ॥ यानस्य मुखम्० पुरोभाग ॥

यापकम् । त्रि० प्रापके ॥

यापनम् । न० वर्त्तने ॥ कालक्षेपे ॥ निरसने । निरासे ॥ यातेर्ण्यन्ता ल्ल्युट् । अर्तिह्रीव्लीत्यादिनापुगाग म . ॥

यापित । त्रि० अपसारिते ॥ प्रस्था पिते ॥

यापा । स्त्री० जटायाम ॥

याप्य : । त्रि० यापनीये ॥ क्षेपणीय कालादौ ॥ निन्दिते । गर्हिते ॥ याप्यतेस्म । या० । ण्यन्तात् । अचोयत् ॥ क्षाचित्के ॥ व्याधिविशे षे ॥ यथा । साध्यायाप्याश्चसाध्याश्च व्याधयस्त्रिविधा . स्मृता । सुखसाध्य कष्टसाध्यो द्विविध साध्यउच्यते ॥ यापनीयस्तुतंविद्यात् क्रियाधारयतेहिताम् । क्रियायान्तु निवृत्तायासद्योयस्तुविनश्यति ॥ प्राप्ताक्रियाधारयतिसुखिनयाप्यमा तुरम् । प्रपतिष्यदिवागारस्तम्भोय त्नेनयोजित . ॥ साध्यायाप्यत्वमा यान्तियाप्याश्चासाध्यतांतथा । घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियाव

ताम ॥ अक्रियावतांचिकित्सारहि तानाम् ॥

याप्ययानम् । न० शिबिकायाम् । पाल की० हू० भा० । मञ्चापाछा० हू० गी० दे० भा० ॥ याप्यैरधमैर्यान म् । याप्यस्याधमस्ययानम् ॥

याभ . । पुं० न० मैथुने ॥

याम । पुं० दिवसस्य० रात्रेश्च० चतुर्थभागैकभागे । प्रहरे ॥ याति । या० । अर्तिस्तुसुहुस्रुलिमन् ॥ संय मे ॥ उपरतिमात्रे । यमे ॥ यमनम् । यम . समुपनिविषुचेतिपक्षेघञ् ।

यामकौ । पुं० २ पुनर्वस्वो . ॥

यामघोषा । पुं० कुक्कुटे ॥ यामेघोषो स्य ॥

यामघोषा । स्त्री० यन्त्रविशेषे । याम नाल्याम् । घट्याम् । घडी० हू० भा० ॥

यामतूर्य्यं । प्रहरावसानसूचकेवाद् नीययन्त्रे ॥ यामस्यतूर्य्यं ॥

यामदग्न्य । पुं० परशुरामे ॥

यामनादी । पुं० कुक्कुटे ॥

यामनाली । स्त्री० नाल्याम् । यामघो षायाम् ॥

यामनेमि . । पुं० शचीपतौ । इन्द्रे ॥

यामलम् । न० युगले ॥ तन्त्रशास्त्रवि शेषे ॥ तल्लक्षणयथा । सृष्टिश्चज्यो तिषाख्याननित्यकृत्य प्रदीपनम् । क्रमसूत्रंवर्णभेदोजातिभेदस्तथैवच

। युगधर्मेषुसङ्ख्यातो यामलस्याष्टलक्षणम् ॥ ततषड्विधम् यथा आदिब्रह्मविष्णुरुद्रगणेशादित्यभेदतः । षड्विध यामलप्रोक्तंशाराशोमन्नमम्मतम् ॥ तयाहि ॥ यामला षट्चसङ्ख्याता लक्षादावादियामले । द्वाविंशञ्चसहस्राणिचयस्मिंश्छन्दानिच ॥ द्वितीयेत्रस्य सर्व्वं तु द्वात्रिंशतिसङ्ख्यया । सहस्राणिश्तान्यश्तान्येवकथितानिच ॥ २ ॥ तावत्सङ्ख्यासहस्राणिशतानिपरिसङ्ख्यया । विंशतिश्चतथासंख्याश्लोकानिविष्णुयामले । ३ ॥ कालसङ्ख्यासहस्राणिवेदसङ्ख्याशतानिच । पञ्चाशच्चतथा श्लोका कनिष्टे रुद्रयामले ॥ ४ ॥ नवश्लोकसहस्राणि त्रयोदशशतानिच । द्वाविंशतिस्तथाश्लोका गणेशयामलेऽप्यभे ॥ ५ ॥ रविसङ्ख्यासहस्राणि आदित्याख्येतुयामले ॥ ६ ॥

यामती । स्त्री॰ रात्रौ ॥

यामाता । पुं॰ जामातरि ॥

यामार्द्धम् । न॰ प्रहरार्द्धे ।

यामि॰ । स्त्री॰ स्वसरि । भगिन्याम् ॥ कुलस्त्रियाम् ॥ याति । या॰ । बाहुलकान्मिः ॥ आस्याम ॥ रात्रौ ॥

यामिकभटः । पुं॰ प्रहरिके । चौकीदार॰ इतिभाषा ॥

यामित्रम् । न॰ लग्नात्सप्तमेभवने ॥

यामित्रवेध । पुं॰ विवाहादौवर्ज्जनीयेवेधविशेषे ॥ यथा । लग्नाच्छुभाश्च . क्रूरा सौम्याश्चसप्तमेयदि । तदायामित्रवेधः स्याद्विवाहतश्च वर्जयेत् ॥ मुहूर्तचिन्तामणौतु । लग्नाच्चन्द्राम्मदनभवनगेखेटेनस्यादिहपरिणयनम् । किंवावाणाशुग ५५ मितलवगेयामित्रस्यादशुभकरमिदम् ॥ किवेति । यदाधिष्ठितराशेर्नवमांशमारभ्य॰ वाणाशुग५५मितलवगे॰ पञ्चपञ्चाशन्मितनवांशगे चन्द्रे लग्नेवायामित्र सूक्ष्म स्यात् । यथा । मेषे पञ्चमनवांशेभौमोस्ति॰ तत्र तुलायापञ्चमनवमांशस्थचन्द्रोनिषिद्ध । अन्येष्टौनवांशास्तुलायांशुभाः एवंविधसूक्ष्मयामित्रमशुभकरस्यादिति । विशेषमाह गुरुः । चन्द्रात्सप्तमराशिस्थास्त्याज्या सूर्यादयोग्रहाः ॥ हानिदावलवन्तश्चेद्बलहीनानतादृशाः ॥

यामिनी । स्त्री॰ रात्रौ ॥ भीतिहेतुत्वाद्विन्दितायामावस्था : । इन्यूपताप॰ शादितिनिदेशयामिनिः । ङीप् ॥ हरिद्रायाम् ॥

यामिनीपतिः पुं॰ चन्द्रमसि ॥ यामिन्या पतिः ॥ कर्पूरे ॥

यामी । स्त्री॰ आस्याम् ॥ यमसम्बन्धिन्याम् ॥ दक्षिणदिशि ॥

यामुनम् । न॰ चक्षुष्ये । सौवीराञ्जने ॥ यमुनायाभवम् । अण् ॥ यद्वा । यमुनायाइदम्॰तद्देश्यामत्वात् ॥ देशविशेषे ॥ कुल्याकारेप्रस्तरे ॥ यमुनाजले ॥ यथा । त्रिभि सारस्वतोयमन्नभिस्त्वथयामुनम् । नार्मदश्चभिर्मासैर्गाङ्गश्चर्श्वैयजीर्यति ॥ त्रि॰ यमुनातीरवासिनि ॥ यमुनासम्बन्धिनि ॥

यामुनेष्टकम् । न॰ सीसके ॥

यामेय । पु॰ भागिनेये ॥

याम्य । पुं॰ अगस्त्यमुनौ ॥ चन्दने ॥ यमस्यायम् । यमाच्चेतिण्य ॥ न॰ भरणीनक्षत्रे ॥

याम्या । स्त्री॰ अवाच्याम् । दक्षिणस्यादिशि ॥ भरणीनक्षत्रे ॥

याम्यायनम् । न॰ दक्षिणायने । याम्यायनेहरौसुप्ते सर्वकर्माणिवर्जयेत् ॥ याम्यमयनम् ॥

याम्योद्भूत । पु॰ श्रीतालवृक्षे ॥

यायजूक । पुं॰ इज्याशीले । भूयोभूयोयागकर्त्तरि ॥ पुनःपुनर्भृशंवायजते । यजदेवपूजादौ । क्रियासमभिहारे॰इतियङ् । यजजपदशायङइत्यूक ॥

यायावर । पु॰ अश्वमेधीयाश्वे ॥ जरत्कारुमुनौ त्रि॰ अश्वत्थमनशीले ॥ पुनःपुनरतिशयेनयाति॰तच्छील । या॰ । यश्चयङइतियाते

यैङन्ताद्वरच् ॥

याथी । पु॰ वैरिणमुद्दिश्यजिगमिषौ राज्ञि ॥ याति । या॰ । यश्चादिभ्याणिनि । आतोयुक्॥विनश्वरे ॥

याव । पु॰ अलक्ते । लाक्षारसे ॥ यौति॰यूयतेवा । यु॰ । अच्॰ऋदोरप् । यवएव । प्रज्ञाद्यण् ॥ पाकप्रभेदे ॥

यावक । पु॰ कुल्माषे अलक्तके । यौति । यु॰ । कृञादिभ्योवुन् । ततः प्रज्ञाद्यण् ॥ यद्वा । यवस्य विकार । अण् । यवादिभ्यकइतिस्वार्थेकन् ॥ यावान्ने ॥

यावज्जीवम् । न॰ यावदायुषि । जीवनपर्यन्ते ॥

यावत् । अ॰ कार्त्स्न्ये ॥ अवधारणे ॥ प्रशसायाम् । परिच्छेदे ॥ माने ॥ अधिकारे ॥ सम्भ्रमे ॥ पक्षान्तरे ॥ अवधौ ॥ यत्परिमाणमस्य । तदिताइतिःहुअवचनेनान्वेऽनुज्ञापित ह्रितासापिता । तेन॰डावतु ॥

यावान् । त्रि॰ परिमाणविशेषे । जितना॰इतिभा॰ ॥ यत्परिमाणमस्य । यत्तदेतेभ्य परिमाणेवतुप । आसर्वजाम्नइत्यात्वम् ॥

यावतिथ । त्रि॰ यावतापूरणे ॥ तस्यपूरणेडट् । वतोरिथुक् ॥

यावदर्थं । त्रि॰ देहनिर्वाहाधिकस्य ह्यग्रहे ॥ यावदर्थंसेवार्थोयस्य । स

ध्ममपद्लोपीसमास । यावताय
धीदिर्ष्निर्वाहोयेन॰इत्यवा ॥
यावन । सिल्हके । नागौरीगं दृदूति
प्रसिद्धिधूपे ॥ यवनदेशेभव । तत्र
भवइत्यण् ॥ याव्यलेवा । योतेर्ख्यं
न्तल्य्युट्। जुवार॰योनूहरोइति
ख्यातेधान्यप्रभेदे ॥ यावनोलोहि
त : स्वादुर्लोहित ' श्लेष्मपित्तजि
त् । अवृष्यस्तुवरोरूच क्लेदकृत्क
थितोलघु ' ॥
यावनाल । पुं॰ धान्यभेदे । वत्तत
ण्डुले। दीर्घनाले । दीर्घशरे । चेचे
चौ । इक्षुपत्रके । यावने । जुवार॰
इ॰भा॰ ॥
यावनालशर : । पुं॰ शरविशेषे । न
दीजे । दृढत्वचि । वारिसम्भवे । ख
रपत्रे । जोन्हुरली॰इतिभाषा ॥
यावनाली । स्त्री॰ यावनालशर्करायाम्
। हिमोत्पन्नायाम् । हिमशर्क
रायाम् ॥
यावशूक । पुं॰ यवक्षारे ॥ इतिरत्न
माला ॥
यावस । पु॰ न॰घासे ॥ तृणसङ्घा
ते ॥ यूयते । यु॰ । वसियुभ्याणि
द्व्यासच् ॥
याव्य । त्रि॰ मिश्रणीये ॥
याशोधरेय . । शाक्यमुनिपुत्रे ॥
याष्टीक : । त्रि॰ यष्ट्यायोधिनि । य-
ष्टिहेतिके ॥ यष्टि ' प्रहरणमस्य ।
शक्तियष्ट्योरीकक् । स्त्रियांङीपि॰
याष्टीकी ॥
यास : । पुं॰ दुरालभायाम् । यवासे ॥
यास स्वादु सरस्तिक्तस्तुवर ' शी
तलोलघु ' । कफमेदोमदभ्रान्ति
पित्तासृक्कुष्ठकासनुत् ॥ तृष्णाविसर्प
वातास्रवमिज्वरहर स्मृत : । य
वासस्यगुणैस्तुल्या बुधैरुक्तादुराल
भा ॥ यसनम् । यसुप्रयत्ने । भावे
घञ् ॥ यासोस्त्यस्य । अर्श आद्यच्
॥ याति । बाहुलकादसच्
यासा । स्त्री॰ मदनशलाकापक्षिणि
यासापद्मम् । न॰ विकसितोत्पले ॥
सद्योविकसितपद्म यासापद्म प्रचक्ष
ते ॥
यास्क ' । पुं॰ मुनिविशेषे ॥ यस्क-
स्यापत्यम् । शिवादिभ्योण् । बहु
त्वे॰ यस्का : ॥
यियक्षमाण : । त्रि॰ यष्टुमिच्छति ॥
यजतेः सन्नन्ताच्छट शानच् ॥
यियक्षु : । त्रि॰ यष्टुमिच्छौ ॥ यजे .
सन्नन्तादुप्रत्यय . ॥
यियासन् । त्रि॰ यातुमिच्छति ॥ या
तेसन्नन्ताच्छट : शत्रादेश : ॥
यियासित . । त्रि॰ जिगमिषिते । या
तुमिष्टे ॥ याते : सन्नन्तात्कर्मणि
क्त ' ॥
यियासु : । त्रि॰ यातुमिच्छौ ॥ या-
ते : सन्नन्तादुप्रत्यय : ॥

युक्तम् । न॰ हस्तचतुष्टये ॥ त्रि॰ युक्ते । अपृथगभूते । मिलिते ॥ औपयिके । न्यायगतद्रव्ये ॥ युक्तिसिद्धे । यथार्थे ॥ स्थिते ॥ नियुक्ते ॥ अवहिते । अप्रमत्ते । निरुद्धोतममसि । समाहितचित्ते । ईश्वरार्थेवैतानिककर्माणिनममफलायेत्थेवमभिप्रायवति ॥ परिमिते ॥ पुं॰ अभ्यस्तयोगे ॥ यथा । योगीतुद्विविध प्रोक्तोयुक्तयुञ्जानभेदत । युक्तस्यसर्वदाभानचिन्तासहकृतोपर ॥ युज्यतेस्म । युजिर्योगे क्त ॥

युक्तदण्ड । पु॰ यथापराधदण्डे॰न्रुपे ॥ उद्वेजयतितीक्ष्णेनमृदुनापरिभूयते । दण्डेनन्रुपतिस्तस्माद्युक्तदण्ड प्रशस्यते ॥

युक्तरसा । स्त्री॰ रास्नायाम् । काटाश्राम् इलो॰इ॰गौ॰दे॰भा॰ । एलापर्थ्याम् ॥ युक्तोरसोयस्या . ॥

युक्ता । स्त्री॰ एलानी॰इ॰गौ॰दे॰भा॰ ॰प्र॰वृत्तविशेषे ॥

युक्ति . । स्त्री॰ न्याये ॥ कार्यकारणयोरभेदसाधने॰न्यायोयथा । मृदिसदात्मनाघटेप्रागसति॰मृद्यितोमस्मात्॰तस्मात्॰कार्यकारणयोरभेदएव । कार्यकारणयोरन्यत्वे॰-एककारणज्ञानात्॰सर्वकार्यज्ञानमस्यादित्यादि: । योगे । योजनायाम् ॥ लोकव्यवहारे ॥ धर्मशास्त्रविरोधेतुयुक्तियुक्तोविधि स्मृत ॥ अनुमाने ॥ अपूर्वार्थप्राप्तौ ॥ सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषुषड्गुणेषु ॥ शास्त्रदीपिकायायुक्तिशब्दस्य॰प्रमाणपरतयाव्याख्यानात्॰प्रत्यक्षादिषट्सुप्रमाणेषु ॥ योजनम् । युजी स्त्रियांक्तिन् । नाट्यालङ्कारविशेषे ॥ तल्लक्षणंयथा । युक्तिरर्थावधारणमिति ॥ उदाहरणं यथा । यदिसमरमपास्यनास्तिमृत्योर्भयमितियुक्तमितोन्यत . प्रयातुम् । अथमरणमवश्यमेवजन्तो किमितिमुधामलिनयथ ' कुरुध्वमिति ॥

युग ' । पुं॰ रथहलाद्यङ्गे । जूआ॰इतिभाषा ॥

युगम् । न॰ युग्मे ॥ हस्तचतुष्के ॥ वृद्धिनामौषधे ॥ कृतादिषुचतुर्षु ॥ देवानांद्वादशसहस्रवत्सरेण॰चतुर्युगंभवति । मनुष्यमानेनचतुर्युगपरिमाणं विंशतिसहस्राधिकचत्वारिंशल्लक्षम् । ४३२०००० ॥ तत्रसत्ययुगस्यमानम् १७२८००० वर्षा । त्रेतायुगस्यमानम् । १२९६००० वर्षा . । द्वापरयुगस्यमानम् । ८६४००० वर्षा: । कलियुगस्यमानम् । ४३२००० वर्षा ॥ तेषां- भारतवर्षेवर्तित्वं यथा । चतुर्ष्वपि

भारतेवर्षेयुगानिमुनयोऽब्रुवन् । कृतंत्रेताद्वापरञ्चकलिश्चेतिचतुर्युगम् ॥ चत्वार्याहुः सहस्राणिवर्षाणान्तुकृतंयुगम् । तस्यतावच्छतीसन्ध्यासन्ध्यांशश्चतथाविधः ॥ इतरेषुससन्ध्येषुससन्ध्यांशेषुच त्रिषु । एकापायेनवर्त्तन्तेसहस्राणिशतानिच ॥ यदेतत्परिसङ्ख्यातमादावेवचतुर्युगम् । एतद्द्वादशसहस्रंदेवानांयुगमुच्यते ॥ इतिमनुः । तथाविष्णुपुराणे । चत्वारित्रीणिद्वेचैककृतादिषुयथाक्रमम् । दिव्याब्दानांसहस्राणियुगमाहुःपुराविदः ॥ तत्प्रमाणैःशतैःसन्ध्यापूर्वातत्राभिधीयते । सन्ध्यांशकश्चतत्तुल्योयुगस्यानन्तरोद्विजः ॥ सन्ध्यासन्ध्यांशयोरन्तर्यःकालोमुनिसत्तम । युगाख्यःसतुविज्ञेयः कृतत्रेतादिसंज्ञितः ॥ इति ॥ योजनम्० युज्यतेऽत्र । युजिर्योगे । घञ् । कुत्वम् । संज्ञापूर्वकत्वान्नगुणः । रथयुगेतिनिपातनाद्वा ॥

युगकीलः । पुं० युगकीलके ॥

युगकीलकः । पुं० युगकाष्ठस्यकीलके । शम्यायाम् । जुएकीकील० इ० भाषा ॥ स्वार्थेकन् ॥

युगक्षयः । पुं० महाप्रलये ॥ युगानांक्षयोयस्मिन् ॥

युगन्धरः । पुं० यत्ररथयुगकाष्ठमासज्यतेतस्मिन्काष्ठे ॥ कूबरे ॥ युगवोढृबन्धनकाष्ठंधारयति । संज्ञायांभृतॄवृजिधारीतिखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ पर्वतविशेषे ॥

युगपत् । अ० एकदा । एकस्मिन्नकाले । युगन्यस्मिन्काले । यु० ॥ गपतकप्रत्ययः ॥ यद्वा । युगपदतेऽस्मिन् । पदगतौ । क्विप्प्रत्ययः ॥

युगपत्रः । पुं० कोविदारे । रक्तकाञ्चनारवृक्षे ॥ युगपत्रमस्य ॥ युग्मपर्णत्वमार्च ॥

युगपत्रकः । पुं० कोविदारे । रक्तकाञ्चनद्रुमे । युगयुग्मपत्रमस्य ॥

युगपत्रिका । स्त्री० शिंशपावृक्षे ॥

युगपार्श्वगः । पुं० दमनकालेकाष्ठादीपितकाष्ठवाहे । प्रष्ठौहि ॥ युगस्यस्कन्धकाष्ठस्यपार्श्वंगच्छति । अन्येष्वपीतिडः ॥

युगलम् । न० युगे । युग्मे ॥ युज्यते । युजिर्योगे । वृषादिभ्यः काश्चित् । न्यङ्क्वादित्वात्कुत्वम् ॥ युगंलातिवा । आतइतिकः ॥ युगंयुग्मंमस्यास्तिवा । सिध्मादित्वाल्लच् ।

युगलाख्यः । पुं० बर्बुरवृक्षे ॥ वि० युग्मनामके ॥

युगांशकः । पुं० वत्सरे ॥ युगविभागके ॥

युगादिः । स्त्री॰ तिथिविशेषेषु ॥ यथा । वैशाखमासस्यसितातृतीया॰ नवम्यसौकार्त्तिकशुक्लपक्षे । नभस्य मासस्यचकृष्णपक्षे त्रयोदशीपञ्चदशी चमाघे ॥ एतायुगाद्य प्रोक्ता॰ स्वाध्यायवर्ज्यं येषुध । महापुण्य प्रदाश्चैताःदत्तस्याक्षयकारिका ॥ विशेषमाहनारद । कार्त्तिकेशुक्ल नवमीचादि कृतयुगस्यच । त्रेता दिर्माधवेशुक्लतृतीयापुण्यसम्मिता- ॥ कृष्णापञ्चदशीमाघेद्वापरादिरुदी रिता । कल्यादि स्यात्कृष्णपक्षे नभस्येचत्रयोदशीति ॥ कालविशे षे ।। युगस्यआदि ॥

युगान्त । पुं॰ प्रलये । युगशेषे ॥

युग्मम । न॰ द्वन्द्वे । युगले । युगे । जोडा॰ जोडी॰ इ॰ भा॰ ॥ युज्यते । युजिर्योगे । युजिरुजि तिजांकुश्चेतिमक् ।। द्वयो स्त्रोकयो रन्वये ।।

युग्मपत्र । पुं॰ रक्तकाञ्चने कोविदा रे ॥ न॰ युगलपर्णे ॥ युग्मप त्रमस्य ।

युग्मपत्रिका । स्त्री॰ शिशपावृक्षे ।।

युग्मपर्ण । पु॰ कोविदारे ।। सप्त पर्णवृक्ष ॥

युग्मफला स्त्री॰ इन्द्रचिर्भिट्याम् ॥ वृश्चिकाल्याम् । गन्धिकायाम् ॥

युग्मादरयम् । न॰ युग्मतिथिपूज्यता याम् ॥ द्वयोर्मान्यत्वे ॥

युग्य । पु॰ प्रासङ्ग्ये । शाकटे युगादीनावोढरि ॥ युग्यं रथादिकं वह तितद्वहतिरथयुगप्रासङ्गमितियत् ॥ न॰ याने ॥ हस्त्यश्वादिवाहने ॥ युज्यते । युजिर॰ । युग्यञ्चपत्रइति क्यबन्तोनिपातित ॥ युगायहितो वा । उगवादिभ्योयत् युगमर्हति वा । दण्डादित्वाद्यत् ॥

युङ्गी । पु॰ वर्णसङ्करजातिविशेषे । यथा । गङ्गापुत्रस्यकन्यायांवीर्येणवेश धारिणः । बभूववेशधारीचयुङ्गी युङ्गीप्रकीर्तितः । इ॰ ब्र॰ वै॰पु॰ ॥

युक्॰ग्॰ । त्रि॰ समाधिमति । युक्ते ॥ युज्यतेसमाधत्ते । युजस माधौदैवादिकः । क्विप्चेतिक्विन् ॥

युङ् । पु॰ योगकर्त्तरि । मेलनकर्त्त- रि ॥ युनक्ति । युजिर्योगे । ऋत्वि गादिनाक्विन् । युजेरसमासे॰ इ॰ नुम् । क्विन्प्रत्ययस्यकु । इतिन स्यकुत्वे न॰ सानुनासिकोङकार ॥

युजौ । पु॰ नित्यद्विवचनान्त॰ अ श्विनीकुमारयो ॥

युजान । पु॰ सारथौ ॥

युञ्जानः । पुं॰ सारथौ ॥ विप्रे ॥ भावनासहकारेणसर्वज्ञेयोगिविशे- षे ॥ यथा । योगीतुद्विविध प्रो क्तोयुक्तयुञ्जानभेदत । युक्तस्यसर्व दाभानचिन्तासहकृतोऽपर ॥ इ॰

भा० प० ॥ युक्तश्चेति- योगभ्यासा
वगत्यावगीकृत समाधिसमासादि
तोर्वियोगसिनिर्युक्तइत्युच्यते । च
यमेनविशिष्टयोगवत्वात्युक्तइत्युच्य
ते । सर्वदेतिचिन्तासहकारविनित्य
र्थं । भानसर्वविषयाणाप्रत्यक्षम्
अपरोयुञ्जान । विषयव्यावृत्त्यासा
त्मसमाधिरद्य । अयञ्च युञ्जान
उच्यते । चिन्ताध्यानम्० तदेवका
रणम्० तत्सहकारात्स्थूलसूक्ष्म-
व्यवहितविप्रकृष्टानर्थानिमन प्रत्य
क्षीकरोतीत्यर्थं । इतिसिद्धान्तमु-
क्तावली ॥

युत् । भ्वा० कुत्सायाम् ॥

युतक । न० हस्तचतुष्टये ॥ त्रि० यु
क्ते । अपृथग्भूते ॥ पृथग्योगे ॥

यतकम् । न० संशये ॥ युगे ।
युग्मे ॥ नारीवस्त्राञ्चले । पटाञ्चले
॥ चलनाग्रे । पादाग्रे ॥ युक्ते ॥
यौतके ॥ स्त्रीवस्त्रप्रभेदे ॥ सूर्याग्रे
॥ मैत्रीकरणे ॥ योनिसम्बन्धे ॥

युतयामित्रवेध । पुं० वेधविशेषे ॥
सयथा । पापात्सप्तमग शशीयदि
भवेत्पापेनयुक्तोयदायत्ने नाशुविव
र्जयेन्मुनिमितैर्दोषोप्ययकथ्यते।या
चायाविपदोग्रहैसुतवध चौरेचरो-
गागमोवैधव्यविवहेत्रतेचमरणं शूल
चपुंस्कम्भंचि ॥ अस्यापवादोयथा
। तुङ्गस्त्रिकोणनिजमन्दिरगोथपूर्णो

मित्रर्क्षसौम्यग्रहगोथतदीक्षितोवा-
यामित्रवेधविहितानपहृत्यदोषान्
दोषाकर सुखमनेकविध विधत्ते
वृषककर्कटसिहकन्यामिथुनधनुर्मी-
नतुलास्थे चन्द्रे शुभग्रहवीक्षितोवा
॥ युतयामित्रदोषोनास्ति ॥

युतवेध । पु० वेधविशेषे । सयथा
। चन्द्र करोतिरविणासहितोथ
नाशभौमान्वित पतिविनाशकर
सुचन्द्र । स्वर्भानुकेतुशनिभिर्मृ-
तिमादधातिनानासुखानिकविना-
शकृताबुधेन ॥

युधम् । न० आयोधने । जन्ये प्रधने
मृधे । रणे युद्ध० लडाई० इ०
भा० ॥ योधनम् । युसम्प्रहारे ।
भावेक्त ॥

युधरङ्ग । पुं० कार्त्तिकेये ॥

युधसार । पुं० घोटके ॥

युधाचार्य : । पुं० युधार्थमायुधविद्या
पदेशके ॥

युत् । स्त्री० समिति । आजौ । सङ्
ग्रामे । युधे ॥ योधनम् युध०। स
म्पदादित्वात्क्विप् ॥

युधाजित: । पुं० कैकय्याभ्रातरि । भ
रतमातुले ॥

युधान । पुं० क्षत्रिये ॥ युध्यते ।
युध० । युधिबुधिदृश : किच्चेत्या
नच् ॥

युधिष्ठिर । धर्मात्मजे । कुन्त्यां गर्भे-
धर्मात्कुन्त्युत्पन्ने । अर्जुनाग्रजे । प्रथमपाण्ड
वे । अजातशत्रौ । शल्यारौ । अ-
जमीढे ॥ युधिरणे अग्रभागित्वेन
स्थिर । अलुक्समासादित्यलुक् । ग
वियुधिभ्यां स्थिरइतिषत्वम् ॥
युध्म । पु॰ धनुषि ॥ संयुगे ॥ यु
ध्यते । युध॰ । इषियुधीन्धादि-
नामक् ॥ वाणे ॥
युयुक्खुर । पुं॰ युद्धव्यग्रे ॥
युयुत्सु । त्रि॰ योद्धुमिच्छौ ॥ युध
सन्नन्तादुप्रत्यय ॥ धृतराष्ट्राद्वैश्या
यांजाते ॥
युयुधान । पु॰ सात्यकौ । शिने-
र्नप्तरि ॥ इन्द्रे ॥ क्षत्रिये ॥ योद्ध-
रि ॥
युवगण्ड । पुं॰ यूनोगण्डस्थव्रण-
विशेषे । यवगण्डे । वयस्फोटे ॥
युवति । स्त्री॰ प्राप्तयौवनायांस्त्रि-
याम् । तरुण्याम् ॥ यौति॰ नित्य
मै मिष्टकान्येषु सर्वं कुकामं सुमि-
श्रीभवतिपाणिग्रहणेमसत्त्वाधिका-
रात् । यु मिश्रणे । कनिन् युव-
षितक्षीतिकनिन् । यूनस्ति ॥
हरिद्रायाम् ॥ स्त्रीसामान्ये ॥
युवती । स्त्री॰ तरुण्याम् । हिमयां
म् । वर्यायाम् । युवती । तथा
अधयादियथा । षोडशाब्दवेदा-
तातरुणीचि प्रमामता । पञ्चपञ्चा-
शतः प्रौढाइत्याभद्रतिसत्परम् ॥
बालातुप्राप्यदाप्रोक्त युवतीप्राप्यषो
डषी । प्रौढाकरोतिहृद्धत्व वृद्धाम-
रणमादिशेत् ॥ निदाघशरदोर्बा-
लाप्रौढावर्षावसन्तयो । हेमन्ते-
शिशिरेयोग्यामध्य ज्ञायिशस्यते ॥
योग्या॰युवती ॥ हरिद्रायाम् ॥
यौति॰ आत्मविश्लिष्टसर्वकामंसुमिश्री
भवति॰ इम्यत्यो सत्वाधिकारात् ।
यु मिश्रणे । शट . शतृ । उगितश्चे
तिङीप् ॥ यद्वा । युवतिशब्दात्॰
सर्वतोक्तिन्नर्थादितिङीष् ॥ स्त्री-
सामान्ये ॥
युवतीष्टा । स्त्री॰ स्वर्णयूथिकायाम् ॥
युवा । पु॰ वयस्थे । तरुणे । षोडश
वर्षमारभ्यत्रिंशद्वर्षपर्यन्तावस्थाव
ति । मतान्तरेणषोडशवर्षादारभ्यप
ञ्चाशद्वर्षपर्यन्तवयस्के ॥ यथा । षोडे
शाब्दवेदाततरुणस्ततउच्यते । ततः
स्यात्सप्ततेरूर्ध्वं वर्षीयान्भवते नर
मितिस्मृते . यौति । यु॰ । कनिन् यु
वृषीतिकनिन् ॥ त्रि॰ प्रशस्तवयसि ॥
श्रेष्ठे ॥ निसर्गवलशालिनि ॥ षष्टिव
त्सरान्तर्गतनवमवत्सरे ॥ तत्फल
यथा । महार्घंजायतेसर्वं घृततैलर
सादिकम् । प्रजानामाभवेद्वृद्धिर्यु
निसंवत्सरेशुभे ॥
युवनाश्व । पुं॰ सूर्यवंशीयराजवि
शेषे ॥ मान्धातृपितरि ॥

वर्त्तुल शोभन "स्थूल" कर्त्तव्यो-
द्गतमौलिक"। भविष्ये । बिल्व-
खदिरपलाशैर्वकलीयूप प्रशस्यते॥
इतिसामवेदिवृषोत्सर्गतत्वम् ॥
युवन्त्यनेन । यु॰ । कुयुभ्याञ्च-
ति॰ पादोदीर्घश्च ॥ युवन्तिबध्नन्त्य-
स्मिन् पशुमिति वा ॥

यूपकटक । पुं॰ चषाले ॥ यूपस्या
ग्रे स्थित कटकाकारः । यूपमूर्द्धि
निहितलौहवलये ॥

यूपकर्ण । पुं॰ यूपैकदेशे । घृता
वनौ ॥

यूपखण्ड । पुं॰ तक्ष्यमाणस्य यूप-
स्य प्रथमपतितशकले ॥

यूपद्रु पुं॰ खदिरवृक्षे ॥

यूपद्रुम । पु॰ खदिरवृक्षे ॥ यूप
स्य द्रुमः तदोपयुक्तत्वात् ॥ रक्त
खदिरे ॥

यूपलक्ष्य । पुं॰ पतत्रिणि पक्षिणि ॥

यूपाग्रम् । न॰ तर्म्मणि । यूपस्याग्र
भागे । यूपस्याग्रम ॥

यूषः । पुं॰ न॰ मुद्गादिक्वाथरसे ।
जूस॰ इ॰ भा॰ ॥ मुद्गामलकयू
षस्तुभेदीदीपनपाचनः ॥ पथ्यमु
पयोगिषड्यूषं यथा । मुद्गयूषं र
संतक्रं धान्यजीरकसंयुतम् । सै
न्धवेनान्वितं दद्यात्षड्यूषमिति-
कीर्तितम् । रसं॰ अघुयाद्रिमांसभव
म् ॥ ब्रह्मदारुवृक्षे ॥ यूषति । यू



अ॰ । अच् ॥ क्षुरपत्रिकायां ॥

येय । त्रि॰ यातव्ये ॥ यानयोग्य ।
या॰ । अचोयत् । ईद्यति ।
गुणः ॥

योक्ता । त्रि॰ योगकर्त्तरि ॥ युजे॰
कर्त्तरितृन् ॥

योक्त्रम् । न॰ मन्थमरज्जौ । आब
न्धे ॥ योत्रे ॥ युज्यतेऽनेन । यु
जिर्॰ । दाम्नीशसयुयुजेतिष्ट्रन्॥

योग । पु॰ सन्नहने । कवचादिधा
रणे । उपाये ॥ ध्याने ॥ सङ्गत्या
म् ॥ युक्तौ ॥ अपूर्वार्थसम्प्राप्तौ ।
अलब्धलाभे ॥ वपु स्थैर्ये ॥ प्र
योगे ॥ भेषजे ॥ विश्रब्धघातके ।
द्रव्ये । धने ॥ कार्मणे ॥ नैया
यिके ॥ चारे ॥ सूर्ये । विष्कम्भा
दिषु ॥ तेयथा । विष्कम्भ प्रीति
रायुष्मान्सौभाग्य . शोभनस्तथः-
अतिगण्डः सुकर्माधृति शूलस्त-
थैव च ॥ गण्डोवृद्धिर्ध्रुवश्चैव व्याघातो
हर्षणस्तथा । वज्रसिद्धिव्यतीपा
तौवरीयान्परिघ शिव ॥ सि
द्ध साध्य . शुभ . शुक्लोब्रह्मैन्द्रो
वैधृतिस्तथेति ॥ संयोगमात्रे ॥ प
रस्परसमागमे । चित्तवृत्तिनिरोधे
॥ सम्यग्दर्शनोपाय ॥ निष्कामक
र्मणि ॥ समाधौ ॥ दुःखसंयोग-
वियोगे ॥ अन्तःकरणशुद्धिरूपवै
राग्ये ॥ अघटनघटनासामर्थ्याति

अर्थे ॥ प्रभावे ॥ निरतिशयचक्षा
नैश्वर्याद्दिशक्तौ ॥ चित्तैकाग्रत-
यात्मतत्त्वस्वरूपानुभावावस्थत्वे ॥
मनोनाशवासनाक्षयानुकूले पुरु-
षप्रयत्ने ॥ चित्तस्यात्माकारप्र
त्ययेननिवृत्तिकृतापादने ॥ सि
द्ध्यसिद्ध्योः समत्वे ॥ ध्या-
नार्थे वीरासनादिनामनिश्शरीरब-
न्धे ॥ जीवात्मपरमात्मैक्ये ॥ सं
योगोयं गदतुक्तो जीवात्मपरमात्म
नोरित्युक्ते ॥ जीवात्मपरमात्मैक्य
लक्षणे० तत्त्वमस्यादिवाक्यजनिते०
अखण्डसाक्षात्कारे० सर्वयोगफल
भूते ॥ योजनम् । युजसमाधौ० यु-
जिर्योगेवा । घञ् ॥ कवचधारणे ॥
परमात्मचिन्तने ॥ योगिनि ॥ भग-
वदर्पणबुद्ध्याफलाभिसन्धिराहित्ये
न० कृतानि शास्त्रोक्तानि कर्मा
णि योगाः ॥ तैर्विदान्ते यज्ञस
योगः । अर्शआदित्वात्मत्वर्थीयोऽच् ॥
स्वरूपसम्बन्धे ॥ योगोजीवात्मनो
रैक्यंपूजनसेवकेशयोः । सर्वं ब्रह्मे
तिविदुषोनयोगोनचपूजनमितिस
च्चाभिधानतन्त्रम् ॥ ग्रहयोगविशे
षे ॥ यथा । बुधगुरुशुक्राणांमध्ये०
एकोयदकेन्द्रे० अथवाप्यष्टमे०
नवमेवास्थितस्तदायोग स्यात्
तनयातावत्सलभते ॥ युज्यतेजीवो
ब्रह्मणानेन । युजिर्योगे । करणेघ

अः ॥
योगचर । पु० ऋष्यमानन्दने । महा
वीरे । हनुमति ॥
योगज । अलौकिकसन्निकर्षविशेषे ॥
न० अगुरुणि ॥ योगोत्पन्ने ॥
योगतारा । स्त्री० दीप्तिमत्तरायांतारा
याम् ॥ यथा । स्वतारागणमध्ये तु
याभाराद्दीप्तिमत्तरा । योगतारेति
साप्रोक्तामत्स्याथापुरातनैः ॥
योगदानम् । न० छद्मदानम् ॥
योगनाविक । पु० मत्स्यविशेषे ।
गर्गाटे ॥
योगनिद्रा । स्त्री० हरेः परमानन्दम
य्यांशक्तौ ॥ योग स्वात्मनिष्ठैव०
निद्रैवनिद्रा ॥ योगः समाधिः ०
तद्रूपानिद्रावा ॥ दुर्गायाम् ॥ यथा
। यानिद्रात्वाक्षाप्रकाशेजगद्दृश
कपालत । विभज्यपुरुषयातियोग
निद्रेतिसोच्यते ॥
योगपट्टकम् । न० पूजादौधार्ये० उत्त
रीयविशेषे । योगपटा० स्त्री० गौ०
दे० भा० ॥ यथा । त्रिविधंयोगपट्ट
कमाद्यं व्याघ्राजिनोद्भवम् । द्वितीयं
मृगचर्माख्यं तृतीयंतन्तुनिर्मितम् ॥
चतुर्मासप्रविस्तारदैर्घ्यंचयवसूत्रव
त् । चतुर्मासम्० चतुरङ्गुलमायम्
योगपीठम् । न० देवानांयोगासने ॥
योगप्रतिपक्ष । पु० योगमचे ॥ योग
स्यप्रतिपक्षः ॥

न्द्रियार्थेषु नकर्मस्वनुषज्जते । सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥

योगासनम् । न० ब्रह्मासने । ध्यानासने ॥

योगिद्रव्य । पुं० वेदे ॥

योगी । त्रि० वसुरुद्रादित्यादिदेवताभक्ते ॥ हरिद्रत्राक्षये । ध्याननिष्ठे ।। निरतिशयध्यानैश्वर्यादिशालिनि ॥ समाधिनिष्ठेऽन्तर्दृष्टौ ॥ परमहंसपरिव्राजके ॥ परवैराग्ययुक्ते ॥ योगयुक्ते ॥ योगेनन्त्यसम्बन्धिनि ॥ योगारूढे ॥ सविविधोऽपरमः परमश्च । तत्रोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरमः । उत्पन्नतत्त्वज्ञानउत्पन्नजीवन्मुक्तिस्तुपरमोयोगीति ॥ सर्वेषांऽर्हं शरीरस्थे सुनिर्गन्धे चन्दनेतथा । समताभावनायस्यसयोगीपरिकीर्त्तितः ॥ आत्मौपम्येनसर्वत्रसमंपश्यतियोर्जुन । सुखंवायदिवादुःखंसयोगीपरमोमतः ॥ योगोऽस्यास्ति । अतइनिठनाविति इनिः कर्मयोगिणि ॥ यथा । योगिनःकर्मकुर्वन्तिसङ्गत्यक्त्वात्मशुद्धयइति ॥

योगिनी । स्त्री० योगयुक्तायांनार्याम् ।। भगवत्याः सखीरूपासुआवरणदेवतासु । ताः कोटिविधाः । तासांचतु षष्टिः प्रधानाः । तासुष्टयोगिन्यो यथा । ततोष्टपत्रेष्वब्जस्य पूजयेदष्टयोगिनी । शैलपुत्रींचण्डघण्टांस्कन्दमातरमेवच । कालरात्रिञ्चपूर्वादिचतुर्दिक्षुप्रपूजयेत् ॥ चण्डिकामथकूष्माण्डींतथाकात्यायनींशुभाम् । महागौरींचाग्निकोणेनैरृत्यादिषुपूजयेत् ॥ कुलकल्पाद्योगिन्यः स्त्रीसविवचायामूलेभ्योक्तेविनिमात्सचतुःषष्ठीप ॥ पश्चात्र योगिनीचक्रम् ॥ मङ्गलादिषु । यथा मङ्गलापिङ्गलाधन्याभ्रामरीभद्रिकातथा । उल्कासिद्धिसङ्कटाचयोगिन्योष्टौप्रकीर्तिताः ॥

योगिनीचक्रम् । न० तिथिविशेषेदिग्विशेषावस्थिति योगिनीषु ॥ यथा । ब्रह्माणीसंस्थितापूर्वेप्रतिपन्नवमीतिथौ । माहेश्वरीचोत्तरेचद्वितीयादशमीतिथौ । स्थितान्नेयेचकौमारीतृतीयैकादशीतिथौ । नारायणीचनैरृत्येचतुर्थीद्वादशीतिथौ ॥ पञ्चम्यान्त्रयोदश्यावाराहीदक्षिणेतथा । षष्ठ्याञ्चैवत्रयोदश्यामिन्द्राणीपश्चिमेस्थिता ॥ सप्तम्यापौर्णमास्याञ्चचामुण्डावायुगोचरे । अष्टम्यमावास्ययोश्चमहालक्ष्मीशगोचरे ॥ योगिनीगणमुखेनैवगमनादिप्रकारयेत् ॥ अपिच । नवमीप्रतिपत्पूर्वे० वह्निरुद्रैग्निकोणके ।

चयोदशवर्षेशाब्दे• वेदादित्ये चमे
चन्ते। चतुर्दशवर्षेपश्चात्•पुण्ये
मासुनिमाकृते। द ापचोत्तरे दर्शा
ष्टमीशानेवयोगि॥ बासेशुभप्र
दापृष्ठेवांछितार्थप्रदायिनी॥ द
च्छिणाधनदन्वोचसम्यक्खेस्त्युदायि
नी॥

योगीन्द्र । पुं• शिवे । योग पर
मात्मचिन्तनम्• तदूत्सुश्रेष्ठ ॥

योगीश । पुं• शिवे॥ विष्णौ॥ च
न्ये योगिनोयोगान्तरायैर्हन्यन्ते•स्व
स्वरूपात्प्रमाद्यन्ति• चयन्तुतद्रहि
तत्वात्तेषामीश ॥ याज्ञवल्क्य
मुनौ॥

योगीश्वर.। पुं• शिवे॥ योगिनामी
श्वरः॥ याज्ञवल्क्यमुनौ॥

योगीश्वरी । स्त्री• दुर्गायाम्।' यथा
। योगिशक्तादयोदेवा 'समकान्ता
स्तपोवला'। तेषास्वामौतथायोगी
श्वरीप्रभुपालना॥ चात्मेन्द्रियम
नादीनांसंयोगोयोगउच्यते। तेषां
वायोजनाद्योगी योगेश्वर्यैविवोधने
तिदेवीपुराणम्

योगेश । पुं• याज्ञवल्क्ये॥

योगेश्वर.। पुं• सदाशिवे॥ सर्वज्ञ
सर्वज्ञशक्तौभगवति । श्रीकृष्णे
॥ सर्वेषामणिमादिसिद्धिशालिना
योगिनामीश्वर ।सर्वयोगसिद्धौ
नामीश्वर ॥

योगेश्वरी। स्त्री• वराटदेशस्थिताया
मदुर्गायाम्॥वन्ध्याकर्कोटक्याम्॥

योगेष्टम्। न• सौसके। नागे। सी-
सकत्विप्रसिद्धेधातौ॥ योगेधातु-
सम्बन्धेइष्टम्। सप्तमीतिसमास॥

योग्यम्। न• ऋद्धिनामौषधौ॥ वृद्धि
नामौषधौ॥ पुं• पुष्यनक्षत्रे॥
त्रि• प्रवीणे॥ योगार्हे॥ उपाये
योग्येनार्थे क्षमस्थाज्जनस्य॥
शक्ते॥ युज्यते। युजिर•। ऋह
लोर्ण्यत्॥ यद्वा। योगायप्रभवति
। योगाद्यच्च॥ अभ्यासे॥ यथा।
अपर'प्रणिधानयोग्ययामरुत प
ञ्चशरीरगोचरानितिरघु'। प्रणि-
धानयोग्ययासमाध्यभ्यासेनवशमन
यदितिसम्बन्ध.॥

योग्यता। स्त्री• वाक्यार्थज्ञानहेतौ।
अर्थाबाधे॥ अग्निनासिञ्चेदिति
नप्रमाणम्• योग्यताविरहात्॥
भावेतल्॥ शाब्दबोधकारणविशे
षे॥ सतुपदार्थानांपरस्परसम्बधे
वाधाभाव'। इतिसाहित्यदर्पण
॥ न्यायमते• तत्पदार्थेतत्पदार्थ
वत्ता। यथा । पदार्थेतत्रतद्वत्ता
योग्यतापरिकीर्तिता। एकपदार्थे
ऽपरपदार्थसम्बन्धोयोग्यतातत्त्वय
। तज्ज्ञानाभावाद्वह्निनासिञ्चती
त्यादौनशाब्दबोध॥ चमत्ताथामि
तिलोकप्रसिद्धि'।

योनाल . । पु॰ यवनाले । जूर्णाह्वये । देवधान्ये । जुन्हरी॰ जुवार॰ इ॰ प्र॰ धान्ये ॥

योनि: । पुं॰ स्त्री॰ आकारे ॥ कारणे ॥ तोये ॥ स्मरमन्दिरे । भगे । वराङ्गे । उपस्थे । रतिगृहे । जन्मवर्त्मनि । गर्भाधानस्थाने . तस्यलक्षणयथा । शुभ कमठपृष्ठा भोगजस्कन्धोपमोभग । वामोन्नतश्चेत्कन्याज . पुत्रजोदक्षिणोन्नत ॥ आखुरोमागूढमणि सुश्लिष्ट सहत . पृथु । तुङ्ग: कमलवर्णाभ शुभो श्वत्थदलाकृति ॥ कुरङ्गखुररूपोयस्तुल्लिको दरसन्निभ । रोमशोविवृतास्यश्च दृश्यनाशोतिदुर्भग . ॥ शङ्खावर्त्तो भगोयस्या: सागर्भंमिहनेच्छति । चिपिट कर्परांकार किङ्करीप्रदोभग ॥ व शवेतसपत्राभोग जरोमोच्चनासिक . । विकट . कुटिलाकारोलम्बगल्लस्तथाशुभ . ॥ अपिच । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्तासाप्रकीर्तिता । तस्यास्तृतीयेत्वावर्तेगर्भशय्या प्रतिष्ठिता ॥ यौति । युमिश्रणे । वह्निश्रीतिनि ॥ प्रकृतौ ॥

योनिकन्द: । पु॰ योनिरोगविशेषे ॥

योनिकूट । पु॰ वैवाहिकविचारोपयोगिनि॰ योटकविशेषे । सयथा । तोयेशाश्विभयोस्तुरङ्ग उदितोवातार्कयो कासर: पूर्वाभाद्रधनिष्ठयोर्मृगपतिर्यामान्त्ययो कुञ्जर । मैत्रोग्नीज्यभयोर्जलश्रवणयो कौशोऽभिजिद्दैवयोर्दिभ ब्राह्मश्मयोरहिरपिज्येष्ठानुराधर्क्षयो ॥ वातायु शिवमूलयोस्तुसरमागोरर्यमोयान्त्ययोर्व्याघ्रश्चित्रविशाखयो फणिपुनर्वस्वोस्तुमार्जारक । आखु पितभगर्क्षयोस्तु कथितायोनिस्तुभानामियवैरस्थापितयोर्द्वयोरपि महत्पाणिग्रहवर्जयेत् ॥ गोव्याघ्रगजसिंहमश्वमहिष श्वैणस्वबभ्रूरगं वैरवानरमेषकश्चसुमहत्तद्वद्विडालोन्दरम् । लोकानां व्यवहारतोन्यदपिचज्ञात्वाप्रयत्नादिदंदम्पत्योर्नृपभृत्ययोरपिसदावर्ज्यंशुभस्यार्थिभि . ॥ एकयोनिषुसम्पत्तिर्दम्पत्यो सङ्गम सदा । भिन्नयोनिषुमध्यास्यादरिभावोमचेत्तयो . ॥ अपवादश्च । योनेरभावेनोद्वाह कार्यंसतु वियोगद । राशिवश्यस्वयद्यस्तिकारयेन्नतुदोषभाग् इति ॥

योनिज । त्रि॰ योनिनि सृतशरीरे ॥

योनिदेवता । स्त्री॰ पूर्वफल्गुनीनक्षत्रे ॥

योनिमुद्रा । स्त्री॰ देवतापूजायांप्रदर्शनीयाङ्गुलीरचितयोन्याकारमुद्रा

कारविशेषे ॥
योनिरोग । पु॰ भगन्दरे ॥
योन्यर्श । न॰ भगजातरोगविशेषे ।
कन्दसंज्ञे ॥
योषा । स्त्री॰ अबलायाम् । नार्याम् ॥
योषति॰ योषयतिवा । युषसौत्र
सेवायाम् । पचाद्यच् ॥ युष्यते॰
योष्यतेवा । घञ् ॥
योषित् । स्त्री॰ स्त्रीमात्रे । योषायाम्
॥ सात्रिविधा । यथा । योषितस्त्रि
विधाब्रह्मन्पृथिव्या मूढचेतसाम् ।
साध्वीभोग्याच कुलटाता . सर्वा :
स्वार्थतत्परा . ॥ परलोकभयात्सा
ध्वीतथेहयशसात्मन । कामस्त्रेहा
त्कुरुतेभर्त्तुः स्नेहस्सन्ततम् १ ॥
भोग्याभोग्यार्थिनीशश्वत्कामस्नेहे
ऽथकेवलम् । कुरुतेपतिसेवाञ्चनच-
भोग्याद्दृढञ्चयम् ॥ वस्त्रालङ्कारस-
म्भोगसुस्निग्धाहारमुत्तमम् । यावत्
प्राप्नोतिसाभोग्यातावत्त्ववशगाप्रिया
॥ २ ॥ कुलाङ्गारसमानारीकुलटा
कुलनाशिनी । कपटात्कुरुतेसेवा
स्वामिनोनचभक्तित. ॥ सदापुंयोग
मांशसुर्मनसामदनातुरा । आहारा
द्धिकजारप्रार्थयन्तीनवंनवम् ॥
जारार्थेस्वपतिंतातहन्तुमिच्छतिपुंश्च
ली । तस्यांयो विश्वसेन्मूढोजीवन
तस्यनिष्फलम् ॥ कथितायोषित ॰
सर्वाउत्तमाधममध्यमा ॰ । स्वात्मा
रामाविज्ञानन्तिमनसातानपण्डिता
॥ योषते युष्यतेवा । युष॰ । इस्
कृद्दियुषिभ्यइति ॥ अवध्या सर्व
भूतानांयोषित ॰ क्षम्यतामिति ॥
योषिता । स्त्री॰ योषिति ॥ युषेर्णिज
न्तात्कर्मणिक्त ॰ ॥
योषित्प्रिया । स्त्री॰ हरिद्रायाम् ॥
यौक्तिक । पु॰ नर्मसचिवे । त्रि॰
युक्तियोग्ये ॥
यौगपद्यम् । न॰ एकतायाम् ॥
यौगिक : । त्रि॰ योग्ये ॥ योगनित्यम
र्हति । छेदादित्वाट्ठञ् ॥ प्रकृतिप्र
त्यययोगलभ्यार्थंशाचकि ॥ योगायप्र
भवति । योगाद्यश्चेति॰ ठञ् ॥ यो
गरूढाश्चरूढाश्चयौगिकाश्चेतित्रिधा
पादितियादिशब्दायौगिका : । प-
ट्टिलाघवत्यमिति॰ ह्रादिकारादक्ति
नइतिङीषन्तात्स्त्रीभ्योढगितिढक्
प्रत्ययेनवैष्णवयोगार्थएव ॥
यौजनशतिक । त्रि॰ शतयोजनया-
यिनि ॥ योजनानांशतम्॰ योजन
शतम् । योजनशतंगच्छति । ठञ् ॥
पु॰ आचार्ये । योजनशतादभिगम
नमर्हति । ततोभिगमनमर्हतीति
चवक्तव्यमितिठञ् ॥
यौजनिक । त्रि॰ योजनमात्रयायि
नि ॥ योजनंगच्छति । योजनंगच्छ
तीतिठञ् ॥
यौतकम् । न॰ यौतुके । परिणयनल

र्थे यौधणे ॥ युतकयोनिसम्बन्ध । तत्रभवम् । तत्रभवइत्यण् ॥ युत योर्वधूवरयोर्वा॰ इदम् । तस्येदमि त्यण् ॥

यौतवम् । न॰ द्रवये । परिमाणे ॥ यौतेर्बाहुलकाद्भावे॰ कर्तरिवातुन् । योतु योधनम्॰ योधकोवा । तस्येदम । अण् ॥

यौतुकम् न॰ यौतके ॥

यौध । पु॰ योध । योधएव । स्वा- र्थिक प्रज्ञाद्यण् ॥

यौधिष्ठिर । त्रि॰ युधिष्ठिरसम्बन्धि नि ॥ सायंयौधिष्ठिरीसेनागाङ्गेयश रताडिता । प्रतिपत्पाठशीलाना विद्येवतनुतांगता ॥ युधिष्ठिरस्या यम् । तस्य इमित्यण् ॥

यौधिष्ठिरि । पुं॰ युधिष्ठिरात्मजे ॥ कुर्वादिभ्य वाधित्वा॰ बाह्वादित्वा दिञ् । बहुत्वे॰ युधिष्ठिरा: । यज्ञञइतिलुक् ॥

यौन । पुं॰ कन्यादानादिसम्बन्धे ॥ न॰ योनिसबन्धाधीनपापे ॥

यौवतम् । न॰ युवतीनांवृन्दे ॥ परि माणे॰ । युवतीनांसमूह । यौते शवन्तादुगितश्चेतिङीपि॰ भनद्दात्तादेरञित्यञ् ॥ लास्यप्रभे दे ॥

यौवनम् । न॰ अवस्थाविशेषे । तारु ण्ये ॥ यूनोभाव: । हायनांतेत्यण् अन्निितिप्रकृतिभाव ॥ कौमारप ञ्चमाब्दान्तपौगण्डदशमावधि । कै शोरमापञ्चदशाद्यौवनन्तुतत पर म् ॥ नवयौवनलक्षणयथा । दरोद्भि न्नस्तनकिंचिच्चलाक्षमै दुरस्मितम् । मनागभिस्फुरद्भावनव्य यौवनमुच्य ते ॥ नव्ययौवनकारकमौषध यथा अश्वगन्धानागवला गुडमांसविधिवि याम् । रूपभवेद्यथातद्वन्नवयौवनधा रिणाम् ॥ इति यवतिवृन्दे । युवतीनासमूह । अचहियूनस्ति रिति॰ स्त्रोयुवतिश इ । तस्मा द्भिक्षादित्वादणिवियङ्ख्नि॰ पुवद्भा वेऽन्नितिप्रकृतिभाव ॥

यौवनकण्टक । पु॰ न॰ मुखगण्ड । वयस्फोटे ॥

यौवनलक्षणम् । न॰ लावण्ये । कुच ॥

यौवनाश्व । पुं॰ मान्धातरिनृपे ॥ यौवनाश्वोयमांधाताचक्रवर्त्यवनी प्रभु । सप्तद्वीपवतीमेक शशासा च्युततेजसा ॥ यावत्सूर्यउदेतिस्म यावच्चप्रतितिष्ठति । सर्वंतद्यौवना श्वस्यमांधातु क्षेत्रमुच्यते ॥ इति वह्निपुराणम् ॥

यौवनाश्वक । पुं॰ मांधातृनृपे ॥

यौष्माक । त्रि॰ युष्मदीये ॥ युवयो र्युष्माकंवाऽयम् । युष्मदस्मदोरन्य तरस्याखञ्चेत्युक्ते: पक्षेऽण् । प्रकृतेर्युष्माकादेश ॥

यौष्माकीण । त्रि॰ युष्मत्सम्बन्धिनि । युष्मदीये । यौष्माके ॥ युवयोर्युष्माकं वाऽयम् । युष्मदस्मदोरितिख ञ् तस्मिन्नणिचयुष्माकास्माकौ ॥

॰ ❋ ॰

---

र । पुं॰ पावके । दहने ॥ तीक्ष्णे ॥ कामाग्नौ । रेफे ॥ लघुमध्ये ऽ।ऽ पु॰ न॰ ॥

रंहन् । त्रि॰ रममाणे ॥

रंह. । न॰ वेगे ॥ रमतेऽनेन । रमन्त्री डायाम् । रमेर्हुक्चेत्यसुन् । हुगागमश्च ॥ रंहत्यनेनवा । रंहणवा । रंहिगतौ । असुन् अचैवंवदन्ति रंहेरसुनासिद्धे॰ रंहेरसुनि॰ रंह इतिमाभूदिति॰ रमेरितिसूत्रम् । तथाच । स्यान्मध्योष्मचतुष्कत्वमंहसो । रंहसस्तथेतिद्विरूपकोश । एवञ्च॰ रंह ' सङ्घोऽसुराणां जगदुपकृतये नित्ययुक्तस्ययस्यौतिप्रीतिप्रसन्नो न्वहमहिमरुचे सोऽवतात्स्यन्दनोवइतिपाठोऽनुप्रासरसिकानांप्रामादिकइति ॥ सवेगगतिवचनेस्य प्रयोग ॥ वेगाख्यगुणे ॥

रकार । पु॰ रेफाख्यवर्णे । वासरूपविधिना॰ रात्कारप्रत्ययोपिभवति । रकारादीनिनामानिशृण्वतो ममपार्वतीतिलिङ्गात् ॥

रक्त । पुं॰ बन्धूके ॥ लोहितवर्णे यथा । पाणिपादतलौरक्तौनेत्रान्तनिनखानिच । जिह्वाताल्वधरोष्ठौचसप्तरक्तोधनीभवेदितिसामुद्रिकम् ॥ कुसुम्भे । हिज्जले ॥ न॰ कुङ्कुमे ॥ ताम्रे ॥ प्राचीनामलके ॥ पद्मके ॥ सिन्दूरे ॥ हिङ्गुले ॥ रक्तचन्दने ॥ शरीरस्थसप्तधात्वन्तर्गतधातुविशेषे ॥ रुधिरे ॥ असृजि लोहिते । अस्रे । क्षतजे । शोणिते । कीलाले । त्वग्जे । रक्तम्॰ इ॰ भा॰ प्र॰ ॥ रक्तस्यस्वरूपमाह । यद्रसोयकृद्यातितत्ररजकपित्तत ॥ । रागपाकस्वसम्प्राप्यसभवेद्रक्तसञ्ज्ञक ॥ रक्तसर्वशरीरस्थ जीवस्याधारउत्तम . ॥ स्निग्ध गुरुचलस्वादुविदग्ध पित्तवद्भवेत् ॥ जीवस्याधारउत्तमइति । यतआह । जीवोवसति सर्वस्मिन्देहेतत्रविशेषत । वीर्येरक्तेमलेयस्मिन्क्षीणेयातिक्षयक्षणात् इति ॥ वीर्येरक्तेमलेचशरीरारम्भके । वाग्भटोक्तपरिमाणमिते शुद्धेजीवोवसति॰ नतुदुष्टे प्रवृद्धे रक्तस्तावणोपदेशस्यवैयर्थ्यप्रसङ्गात् । पित्तवद्भवेत्॰ अम्ल भवेदित्यर्थ ॥ रक्तस्यस्थानमाह । । यकृत्प्लीहान्तरक्तस्यमुख्य स्थानंतयो , स्थितम् । अन्यत्रापिस्थितमतोरक्तानांपोष

र्भवेत् ॥ इति ॥ रक्तदोषनाशक मौषध यथा। ब्रह्मयष्टिफलं पिष्टं- धारिणातनुलेपत.। तेनघृष्ट रक्त दोष प्रणश्यतिनसंशय ॥ रज- तिस्म॰ रज्यतेवा। रक्तरागे। गत्य र्थेतिक्त। कर्मणिक्तोवा ॥ त्रि॰ अनुरक्ते ॥ नील्यादिरञ्जिते ॥ लो- हिते ॥ क्रीडारते ॥

रक्तक । पुं॰ अम्लाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैर- ण्डे ॥ न॰ हिङ्गुले ॥ त्रि॰ अनुरा- गिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वा त्॰ रक्त । स्वार्थेकन्।

रक्तकन्द । पुं॰ विद्रुमे ॥ राजपला ण्डौ ॥ रक्तालौ।

रक्तकन्दल । पुं॰ प्रवाले ॥

रक्तकमलम् । न॰ रक्तोत्पले ॥ कोक- नदे ॥

रक्तकम्बलम् । न॰ रक्तोत्पले ॥ यथा पाद्मे। रक्तकमले कुमुदे पुष्पे कल्हारेरक्तक वर्जेरिति ॥

रक्तकरवीरक । पुं॰ रक्तप्रसवे । ग- णेशकुसुमे । चण्डीकुसुमे । भूत द्राविणि । रविप्रिये । लालकनेर॰ इतिभाषाप्रसिद्धे ॥

रक्तकाञ्चन । पुं॰ रक्तकोविदारद्रु- मे । चमरिके ॥

रक्तकाण्डा । स्त्री॰ रक्तपुनर्नवाया- म् ॥

रक्तकाष्ठम् । न॰ पतङ्गे ॥

रक्तकुमुदम् । न॰ रक्तकैरवे ॥

रक्तकुसुम । पुं॰ पारिभद्रे ॥ धन्वन- वृक्षे ॥

रक्तकेशर: । पुं॰ पारिभद्रे ॥ पुन्ना- गवृक्षे ॥

रक्तकैरवम् । न॰ रक्तकुमुदे ॥

रक्तकोकनदम् । न॰ रक्तोत्पले ॥

रक्तखदिर । पुं॰ रक्तसारे । बहुश- ल्ये। याज्ञिके ॥

रक्तगन्धकम् । न॰ बोले ॥

रक्तगुल्म । स्त्रीणांरक्तजगुल्मरोगे ॥ तस्यौषध यथा। द्विजयष्टीत्रिकटुक चूर्णंपीत हरेच्छिव । तिलक्वाथेन- संयुक्त रक्तगुल्म स्त्रियाहर ॥

रक्तघ्न । पुं॰ रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री॰ दूर्वाविशेषे । गांठिया- दूर्वाइ॰गौ॰दे॰भा॰प्र॰ ॥

रक्तचन्दनम् । न॰ स्वनामप्रसिद्धेच न्दने। पत्राङ्गे। कुचन्दने। ताम्र सारे ॥ रक्तशीत गुरुस्वादुछर्दितृ- ष्णासपित्तहृत्। पित्तनेत्रहित वृष्य ज्वरव्रणविषापहम् ॥ रक्तश्वेतच न्दनञ्च ॥ रक्तसारे ॥ रक्तचन्दनमि व। रक्तसारत्वात् ॥

रक्तचित्रक । पुं॰ क्षुपविशेषे । काले। कालमूले। दाहके । चि- त्राङ्गे । राङ्गचिता॰इ॰गौ॰दे॰भा षाप्र॰ ॥

रक्तचूर्णम् । न० सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजन्तुक । पु० भूनागे ॥ रक्तवर्णजन्तुमात्रे ॥

रक्तजिह्व । पु० सिंहे ॥ त्रि० रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री० कुरुवकी ॥

रक्ततुण्ड । पु० शुकपक्षिणि ॥ त्रि० लोहितमुखयुक्ते ॥

रक्ततुण्डक । पु० भूनागे ॥

रक्तत्वचा । स्त्री० गोमूत्रिकायाम् ॥

रक्तत्रिवृत् । स्त्री० रक्तवर्णत्रिवृतायाम् त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदन्तिका । स्त्री० चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री० नलिकायाम् ॥ चिविल्लिकायाम ॥

रक्तधातु । पु० गैरिके ॥ ताम्रे ॥

रक्तनाल । पु० जीवशाके ॥

रक्तनासिक । पु० पेचके ॥ त्रि० लोहितनासिकाविशिष्टे ॥

रक्तप । पु० यातुधाने । राक्षसे ॥ रक्तपिबति । धा० । आतोनुपसर्गे क. त्रि० रक्तपानकर्त्तरि ॥

रक्तपट । पु० श्रैनाश्रिकभिक्षौ ॥ साङ्ख्यभिक्षौ ॥

रक्तपत्रिका । स्त्री० नाकुल्याम् ॥ रक्तपुनर्नवायाम् ॥

रक्तपद्री । स्त्री० समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्म । पु० न० रक्तोत्पले । कोकनदे ।

रक्तपल्लव । पु० अशोकवृक्षे ॥ लोहितपत्रे ।

रक्तपा । स्त्री० जलौकायाम् ॥ डाकिन्याम् ॥ रक्तंपिबति । धा० आतोनुपसर्गेक. ॥

रक्तपाकी स्त्री० वृहत्याम् ॥

रक्तपाता । स्त्री० जलौकायाम् ॥

रक्तपाद । पु० शुकपक्षिणि ॥

रक्तपादी । स्त्री० लज्जालौ ॥ हरायाम् ॥

रक्तपायी । स्त्री० रक्तपाजलौके ॥

रक्तपायिनी । स्त्री० जलौकायाम् ॥

रक्तपारद । पु० न० हिङ्गुले ॥

रक्तपिण्डम् न० जवापुष्पे ॥ द्रू० शब्दरत्नावली ॥

रक्तपिण्डक : । पु० रक्तालौ । रतालू० द्रू० भा० ।

रक्तपित्तम् । न० रोगविशेषे ॥

रक्तपित्तहा पु० रक्तवन्याम् ॥

रक्तपुच्छिका । स्त्री० ब्राह्मण्याम् । बाह्मनीतिप्रसिद्धजन्तुविशेषे ॥

रक्तपुनर्नवा । स्त्री० रक्तपुनर्नवाशाके । मण्डलपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकाया

कन्दे । यवनेष्टे ॥ गृञ्जनस्य मधुरकटुकन्दं नालमप्युपदिशन्ति कषायम् । पत्रसञ्चयमुशन्ति सतिक्तं सूरयो लवणमस्थि वदन्तीति राजनिर्घण्टः ॥

रक्तला । स्त्री॰ काकतुण्ड्याम् ॥

रक्तलोचन । पुं॰ कपोते ॥ त्रि॰ लोहितलोचनयुक्ते ॥ रक्ते लोचने यस्य सः ॥

रक्तवटी । स्त्री॰ मसूरिकायाम् ॥

रक्तवर्ण । पुं॰ किंशुके ॥ दाडिमे बन्धूके ॥ लाक्षायाम् ॥ निशादये कुरबपुष्पे ॥ मञ्जिष्ठायाम् ।

रक्तवर्म्म । पुं॰ इन्द्रगोपे ॥

रक्तवर्द्धन । पुं॰ वार्त्ताकौ ॥

रक्तवर्षाभू । स्त्री॰ रक्तपुनर्नवायाम् ॥

रक्तवसन । पुं॰ सन्न्यासिनि ॥ त्रि॰ लोहितवस्त्रवति ॥ न॰ रक्तवर्णवस्त्रे ॥

रक्तवात । पुं॰ रोगविशेषे ॥ नारिकेलस्य वै मूलं छागीक्षीरेण संयुतम् । पिबेच्चिविधस्तस्य रक्तवातो विनश्यति ॥

रक्तवालुका । स्त्री॰ सिन्दूरे ॥

रक्तविन्दु । पुं॰ रुधिरस्य कणे ॥

रक्तबीज । पुं॰ दाडिमे । शुम्भनिशुम्भयोः सेनापतौ असुरविशेषे ॥

रक्तबीजका । स्त्री॰ तरदीझर्दे ॥

रक्तवृन्ता । स्त्री॰ शेफालिकायाम् ॥

रक्तवृष्टि । स्त्री॰ रुधिरवर्षणरूपे उत्पातविशेषे ॥ तत्फलं शस्त्रोद्योगो यथा रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः । धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षिते भयं विद्यात् ॥

रक्तशालि । पुं॰ रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न॰ सिन्दूरे ॥

रक्तशिग्रु । पुं॰ रक्तशोभाञ्जनवृक्षे । रक्ते । मधुरे ॥ रक्तो मधुरः रक्तकण्ठानामिति दर्शनात् । स चासौ शिग्रुः । रक्तो वर्णेन पुष्पे वा ॥

रक्तशीर्षक । पुं॰ सरलद्रवे ।

रक्तशृङ्गिकम् न॰ विषे ॥

रक्तसञ्ज्ञ । पुं॰ कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री॰ जलौकायाम् ॥

रक्तसन्ध्यकम् । न॰ रक्तकह्लारे । उत्पले ॥ रक्तसन्ध्येव । इवार्थे कन् । केवा ॥ रक्तां सन्ध्यां कति । वक्रकुटिलायां गतौ । मूलविभुजादित्वात् को वा ॥

रक्तसरोरुहम् । न॰ रक्तपद्मे ॥ रक्तञ्च तत्सरोरुहञ्च ॥

रक्तसर्षप । पुं॰ राजिकायाम् ॥

रक्तसञ्ज्ञा। स्त्री० रक्तताम्राने ॥
रक्तसार । पुं० रक्तखदिरे ॥ अम्लवेतसे ॥ न० रक्तचन्दने ॥ पतङ्गे । बक्कम ० इतिख्याते ॥
रक्तसौगन्धिकम् । न० रक्तकह्लारे । रक्तसौधी० इ०भा०प्र० ॥ रक्तवर्णचिकालबिकाशिपुष्पवृक्षे ॥ रक्तश्चतत्सौगन्धिकञ्च ॥
रक्तस्राव । पु० रक्तपतने ॥
रक्तहंसा । स्त्री० रागिणीविशेषे ॥
रक्ता । स्त्री० गुञ्जायाम ॥ लाक्षायाम् ॥ मञ्जिष्ठायाम् ॥ उष्ट्रकाण्डाम् ॥
रक्ताकार । पु० प्रवाले ॥
रक्ताक्तम् । न० रक्तचन्दने ॥ त्रि० शोणितमिश्रिते ॥
रक्ताक्ष । पु० कासरे । महिषे ॥ क्रूरे ॥ पारावते ॥ चकोरे ॥ सारसे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे । दुर्भिक्ष मरण रोगोधान्यौषधिप्रपीडनम् । मादरोगोभवेद्देवि रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि० रक्तनेत्रवति ॥ रक्तेअक्षिणीयस्य । अक्ष्णोदर्शनादित्यच् ॥
रक्ताङ्ग । पु० भौमग्रहे ॥ कम्पिल्ले ॥ प्रवाले ॥ मत्कुणे ॥ मण्डले ॥ कृकलासे ॥ न० विद्रुमे । धीरे । रक्तचन्दने ॥ कुङ्कुमे ॥
रक्ताङ्गा । स्त्री० जीवन्तिकायाम् ॥
रक्ताङ्गी । स्त्री० मञ्जिष्ठायाम् ॥
रक्तातिसार । पुं० रोगविशेषे ॥ पित्तकृद्यदात्यर्थं द्रव्यमश्नातिपैत्तिके । तद्दोषाज्जायतेशीघ्र रक्तातीसार उल्वण ॥ वत्सकातरुत्वगार्द्रादाडिमफलसम्भवास्त्वक् च । त्वग्युगलपलमानविपचेदष्टाङ्गसम्मितेतोये ॥ अष्टमभाग शेष क्वाथ मधुना पिबेत्पुरुष । रक्तातिसारमुल्वणमतिशयित नाशयेद्ध्रुवम् ॥ कुटजदाडिमक्वाथ ॥ गोदुग्धनवनीतन्तु मधुनासितयासह । लीढ रक्तातिसारेतुग्राहक परम मह्त् ॥ नवनीतावलेह ॥ पीत मधुसितायुक्त चन्दनतण्डुलाम्बुना । रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत् ॥ चन्दनमचर्ब्वितम । चन्दनकल्क ॥
रक्ताधार । पुं० चर्मणि ॥
रक्तापद्म । न० कोले ॥
रक्तापामार्ग । पु० क्षुद्रापामार्गे । आघट्टके ॥
रक्ताम्बरम । न० वह्निशिखाख्यकुसुमरञ्जितेवस्त्रे ॥ काषायवस्त्रे ॥ त्रि० तद्वति ॥
रक्ताम्र । पु० कोशाम्रे ॥
रक्ताम्लान । पुं० कुरुवके ॥
रक्तार्क । पु० अर्कपर्णे । विकीरणे ॥ रक्तार्कपुष्प मधुर सतिक्तंकु

छक्रमिघ्न कफनाशनञ्च । आखोर्विषहन्तिचरक्तपित्त सङ्ग्राहिगुल्मश्वयथौहित तत् ॥
रक्तार्म्मम् । न॰ नेत्ररोगविशेषे ॥ तल्लक्षण यथा । पद्माभ मृदुरक्तार्मेय न्मासचीयतेसिती ॥
रक्तार्ब्बुद. । पु॰ उपपापोद्भवरोगविशेषे ॥
रक्तार्श । न॰ अर्शोरोगविशेषे ॥
रक्तालु । पुं॰ रक्तपिण्डाली । रक्तकन्दे । लोहिताली । रतालु॰रतगडा॰ह्नू॰भा॰प्र॰कन्दे ॥
रक्ताशोक. । पुं॰ वृक्षविशेषे ॥
रक्तिका । स्त्री॰ गुञ्जायाम । रत्ती॰घुघची॰चिरमिठी॰ह्नू॰भा॰प्र॰ भिन्नभूषणायाम् ॥ रक्तिकायाम ॥ रक्तिकापरिमाणे ॥
रक्तिमा ॥ पु॰ लोहितत्त्वे ॥
रक्तेक्षु । पु॰ रक्तवर्णेक्षौ। सूक्ष्मपत्रे॥
रक्तैरण्ड । पु॰ आम्रे । हस्तिकर्णे । रवौ ॥
रक्तोर्वारु । पुं॰ इन्द्रवारुण्याम ॥
रक्तोत्पल । पुं॰ शाल्मलिवृक्षे ॥ न॰कोकनदे । रक्तसरोरुहे ॥
रक्तोत्पलाभ । पुं॰ शोणवर्णे । त्रि॰ तद्वति ॥
रक्तोत्पलम् । न॰ गैरिके ॥
रक्ष: । पु॰ म त्रगुप्तसमर्थे ॥ रक्षति । रक्षपालने । पचाद्यच् ॥
रक्ष: सभम् । न॰ रक्ष: समूहे ॥

रक्षक । त्रि॰ रक्षितरि ॥ अनाथमालम्बहीनारक्षका: सर्वदेवता: ॥ रक्षति । रक्ष॰ । ण्वुल् ॥
रक्षणम् । न॰ पालने ॥ रक्षल्युट् ॥ आपदर्थे धनरक्षेद्दारान्रक्षेद्धनैरपि । आत्मानसततरक्षेद्दारैरपिधनैरपि ॥ त्रि॰ रक्षके । पालके ॥ रक्षति॰ पालयति । रक्ष॰ । नन्द्यादित्वाल्ल्यु ॥
रक्षणि । स्त्री॰ त्रायमाणायालतायाम् ॥
रक्षणीय । त्रि॰ रक्ष्ये । रक्ष॰ । अनीयर ॥
रक्षन् त्रि॰ रक्षितरि । रक्षति । रक्ष॰ । शतृ ॥
रक्ष । न॰ राक्षसे । निरृतिप्रभृतौ । रावणादौ । रक्षन्त्यस्मात् । रक्ष॰ । सर्वधातुभ्यश्चत्यसुन ॥ निर्दये ॥ यथा । दृष्ट्वातुविकलान्व्यङ्गानन्धान्रोगिणस्तथा । दयानजायतेय स्यसरक्षइतिमेमति ॥
रक्षा । स्त्री॰ जतुनि । रक्षणे । बाधानिवृत्तौ ॥ योगयुक्तोजनार्दनचिन्तयेदितियत्साध्यचिन्तकस्यपारक्षेत्यहमन्ये । यथोक्त सहस्रनामभाष्ये । नित्य स चिन्तयेदेवयोगयुक्तोजनार्दनम् । साध्यरक्षापरामन्येकोहिनस्ययच्युताश्रयमिति ॥ रक्षणम् । रक्ष॰ । गुरोश्चहल

कृत्य । टाप ॥ भख्यनि ॥ श्राव
ण्यापौर्णमास्यान्तुरक्षाबन्धनमिष्यते
। यथा । पौर्णमास्यांहरेरक्षाबन्धनं
विधिपूर्वकम् । अजराजकुमारत्वा
त्कैश्चिदिच्छन्तिसाधव ॥ तत्रभ
द्रासङ्गावेतामतिक्रम्यैवकुर्य्यात् ।
तथाचस्मृति । भद्रायाद्वेनकर्त्त
व्येश्रावणीफाल्गुनीतथा । श्राव
णीन्नृपतिहन्तिग्रामान्दहतिफाल्
गुनीति ॥ विधिश्चभविष्योत्तरे ।
उपाकर्मदिनेप्रोक्तमृषीणांचैवतर्प
णम् । ततोऽपराह्णसमयेरक्षापोट
लिकांशुभाम् ॥ कारयेदक्षतै
शस्तै सिद्धार्थैर्हेमभूषिताम् । व
स्त्रैर्विचित्रै कार्पासै. क्षौमैर्वा
मलवर्ज्जितै ॥ विचित्रग्रथितं
सूत्रं स्थापयेद्भाजनोपरि । उपलिप्ते
सागृहमध्ये दत्त्वचतुष्कं न्यसेच्छुभ
पीठम् । तत्रोपविशेद्राजासामा
त्य सपुरोहित समुहृत् ॥ तद
नुपुरोधान्नृपतेरक्षाबध्नीतमन्त्रेण ।
येनबद्धोबलीराजादानवेन्द्रोमहाब
ल । तेनत्वांप्रतिबध्नामिरक्षे मा
चलमाचल ॥ यदावत्र दाक्षायणा
इत्यादिवैदिकोप्यत्रमन्त्र : पठनी
य ॥ ब्राह्मणै . क्षत्रियैर्वैश्यै :
शूद्रैश्चान्यैश्चमानवै . । कर्त्तव्यो
रक्षणाचारोविप्रान्सम्पूज्यशक्ति
त । अनेनविधिनायस्तुरक्षिका

बन्धमाचरेत् । ससर्वदोषरहित .
सुखसम्बत्सरं वसेत् । इति ॥

रक्षापत्र । पुं० भूर्जवृक्षे ॥ न० भू
र्जत्वचि ॥

रक्षिका । स्त्री० रक्षायाम् । रखडी०
इ० भा० ॥

रक्षित । त्रि० त्राते । गोपायिते ।
गुप्ते ॥ रक्ष्यतेस्म । रक्ष० । क्त० ॥

रक्षिता । त्रि० रक्षाकर्त्तरि । रक्षके
॥ यथा । आयव्ययज्ञोलोकज्ञोदेशो
त्पत्तिविशारद । कृताकृतज्ञोभृत्या
नांज्ञेय स्यादेषरक्षिता ॥

रक्षी । त्रि० रक्षके ॥ अवश्य रक्षति ।
रक्ष० । णिनि ॥

रक्षिवर्ग । पुं० अनीकस्थे । राजर
क्षकगणे । अवश्य रक्षन्ति । रक्ष
पालने । आवश्यकेतिणिनि । र
क्षिणांवर्ग ॥

रक्षोघ्न । पुं० सिद्धार्थे । सितसर्ष
पे ॥ भल्लातकवृक्षे ॥ न० काञ्जि
के ॥ हिङ्गुनि ॥

रक्षोघ्नधूप । पुं० गुग्गुल्वगुरुसर्ज्जरस
वचागौरसर्षपचूर्णलवणनिम्बपत्र
व्यामिश्रं घृतसंयुक्ते ॥

रक्षोघ्नी । स्त्री० वचायाम् ॥ दुर्गाया
म् ॥

रक्षोजननी । स्त्री० रात्र्याम् ॥ राक्ष
समातरि ॥

रक्षोहा । त्रि० रक्षसांहन्तरि ॥ पुं०

गुग्गुलौ ॥

रघ्वग । पु॰ चापे ॥ रघ॰ । यज याचेतिनङ् ॥

रघु । पु॰ सूर्य्यवंशीयदिलीपराज पुत्रे । श्रीरामचन्द्रस्यप्रपितामहे । लङ्घते, लघिगतौ । लघिबंह्योर्न लोपश्चेतिकुर्नलोपश्च । बालमूलल घ्वङ्गुलीनाबालोरत्वमापद्यते॰इतिर त्वम् ॥ रङ्घतेनाश गच्छतीतिव्युत् पत्त्या॰ व्यष्टिसमष्टिरूपेऽन्नमयको षे ॥

रघुकार । पु॰ कालिदासकवौ ॥ रघुकाव्यविशेषं करोति । डुकृञ्॰ । कर्मण्यण् ॥

रघुनन्दन । रघुनाथ । } रामचन्द्रे ॥

रघुपति । पु॰ श्रीरामे ॥ यथा । यदुपतेः क्वगतामथुरापुरीरघुपतेः क्वगतोत्तरकोशला । इतिविचिन्त्य कुरुष्वमनः स्थिरं नसदिदंजगदित्य वधारयेतिरूपगोस्वामी ॥

रघुवंश । पु॰ रघोः सन्ततौ । रघोर्वंशः । कालिदासकृते काव्यविशेषे ॥

रघुवंशकेतु । रघुवंशतिलक । पु॰ रघुवर । } श्रीरामे ॥

रघूद्वह । पु॰ श्रीरामे ॥ उद्वहति । वह॰ । पचाद्यच् । रघूणामुद्वहोनायकः ॥

रङ्क । त्रि॰ कृपणे ॥ मन्दे ॥ रमते । रमेर्बाहुलकात्कः ॥

रङ्कु । पुं॰ शबलपृष्ठे । मृगविशेषे । रमते॰ रज्यतेवा । मृगय्वादित्वात् साधुः ॥ जनपदविशेषे ॥

रङ्ग । पु॰ रागे ॥ नृत्ये ॥ नृत्यस्थाने ॥ रणक्षितौ ॥ टङ्कणे ॥ खादिरसारे ॥ पु॰ न॰ त्रपुणि । त्रापुषे । वङ्गे । कुरूप्ये । पिच्चटे । पूतिगन्धे । रांग॰ इ॰ भा॰ ॥ तद्विशेषो यथा । धवलंमृदुलघुस्वच्छं स्निग्धमुष्णासहंहिमम् । सूत्रपत्रकरंकान्तं च पुष्पमुदाहृतम् ॥ खुरकंमिश्रकञ्चापि द्विविधंरङ्गमुच्यते । उत्तमंखुरकंतत्र मिश्रकंत्वहितंमतम् ॥ तस्याशुद्धस्य दोषोयथा । रङ्गोविधत्तेखलुशुद्धिहीनस्तथाह्यपक्वश्चकिलासगुल्मौ । कुष्ठानिशूलं किलवातशोथं पाण्डुप्रमेहं स्वभगन्दरञ्च ॥ विषोपमंरङ्गविकारवृन्दं क्षयञ्चकृच्छ्राधिकमज्वरञ्च । मेहाश्मरीविद्रधिरुग्ररोगान्नानापिकुर्य्यात् कथितान्विकारान् ॥ तस्यशोधनंयथा । वङ्गनागौप्रतप्तौ चगालितौतौनिषेचयेत् । त्रिधा त्रिधाविशुद्धिः स्याद्रविदुग्धेपिच त्रिधा ॥ तैलतक्रकाञ्जिकगोमूत्र कुलत्थक्वाथेषुप्रत्येकंत्रिधात्रिधा । ततोऽर्कदुग्धेत्रिधा ॥ अथमारण विधिः । मृत्पात्रेद्राविते रङ्गे

चिञ्चाप्रवत्वत्वचोरज । चिपत्वाव ङ्ग चतुर्थांशमयोद्व्यांप्रचालयेत् ॥ चिञ्चाचमिलो । रज . चूर्णम् । च- योर्द्वयोर्लौहकौ०करच्छुलौ ॥ ततो द्वियाममात्रेणवङ्गभस्मप्रजायते । च थभस्मसमतालंचिप्त्वाम्लेनविमर्द येत् ॥ ततोगजपुटेपक्त्वापुनरम्लेन मर्दयेत् । तालेनदशमांशेनयाममे कातत पुटेत् ॥ एवदशपुटे पक्व वङ्ग भवतिमारितम् ॥ अस्यगुणायथा । रङ्ग लघुसररूचकुष्ठमेहकफक्रमी न् । निहन्तिपाण्डुमश्वासचक्षुष्य पि त्तलमनाक ॥ सिंहोगजौघन्तुयथा निहन्तितथैवरङ्गोऽखिलमेहवर्गम् । देहस्यसौख्य प्रबलेन्द्रियत्व नरस्यपु ष्टि विदधातिनूनम् ॥ रङ्गति । रगि गतौ । पचाद्यच् ॥ रज्यत्यस्मिन्० रज्यतेऽनेनवा । रञ्जरागे । अकर्त्त रिचेतिघञ् । कुत्वम् ॥

रङ्गकार । त्रि० वस्त्रादौनारङ्गकर्त्तरि । रगरेज०दू०भा० ॥

रङ्गकाष्ठम् । न० पतङ्ग ॥

रङ्गजम् । न० सिन्दूरे ॥

रङ्गजीवक । पु० चित्रकरे ॥

रङ्गद । पु०टङ्कणे ॥ खादिरसारे ॥

रङ्गदा । स्त्री० स्फटिक्याम् ॥

रङ्गदायकम् । न० कङ्कुष्ठ ॥

रङ्गद्दृढा । स्त्री० स्फटिकायाम् ॥

रङ्गपत्री । स्त्री० )

रङ्गपुष्पी । स्त्री० ) नीलीवृक्षे ॥

रङ्गभूति । स्त्री० कोजागरपूर्णि मायाम् ॥

रङ्गभूमि । स्त्री० मल्लभूमौ । ना ट्यभूमौ ॥

रङ्गमद्यी । स्त्री० वीणाया ॥

रङ्गमाणिक्यम् । न० माणिक्यरत्ने ॥

रङ्गमाता । स्त्री० कुट्टन्याम् ॥ अनु नि । लाक्षायाम ॥ चुक्राम् ॥

रङ्गमातृका । स्त्री० लाक्षायाम् ॥

रङ्गलासिनी । स्त्री० शेफालिका- याम् ॥

रङ्गबीजम् । न० रूप्ये ॥

रङ्गशाला । स्त्री० नाट्यगृहे । नाच घर० दूतिभाषाप्र० ॥

रङ्गसङ्गमम् । न० यसदे । जस्त० दू० भा० ॥

रङ्गाङ्गा । स्त्री० स्फटिकायाम् ॥

रङ्गाजीव । पु० चित्रकारे ॥ रङ्गै राजीवति । जीव० । इगुपधेतिकः ॥ रङ्ग. आजीवोऽस्येतिवा ॥

रङ्गारि । पु० करवीरे ॥

रङ्गावतारकः । पु० रङ्गावतारि णि । शैलूषि । भरते । नटे ॥ नृत्य गीतस्थानेगीतवाद्यादिनातदनुगु- णतयाप्रसङ्गिनि ॥ द्व० प्रायश्चि त्तविवेक । नटगायनव्यतिरिक्तोर ङ्गावतरणजीविनिश्चितकुशूक-

भट्ट : ॥
रङ्गावतारी । पुं० नटे ॥
रङ्गिणी । स्त्री० कैवर्त्तिकायाम् ॥ शतमूल्यां ॥
रङ्गोपजीवी । पुं० नटमल्लादिवृत्तौ ॥ रङ्गोपजीविप्रभृतीनामन्नादानान्नरकप्राप्तिरुक्ता विष्णुपुराणे २ अंशे ॥ यथा । रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा । सूचीमाहिषिकश्चैव पर्वकारी च यो द्विजः ॥ आगारदाही मित्रघ्न शाकुनिर्ग्रामयाजकः । रुधिरान्धे पतन्त्येते सोमविक्रयिणश्च ये इति ॥
रङ्घ : न० रहसि ॥ इति भरतद्विरूपकोषः ॥
रचनम् । न० ग्रन्थने । निर्माणे ॥
रचना । स्त्री० कुसुमप्रकारादे पत्रवल्ल्यादेश्च रचने । परिस्पन्दे ॥ रचप्रतियत्ने । चुरादिरदन्तः । ण्यासश्रन्थोयुच् ॥ रच्यते० इति वा ॥ यथा क्रमेणास्थापने । निवेशे । स्थितौ ॥ निर्मितौ ॥ यथा । असाधारणचमत्कारकारिणी रचनाहि निर्मिति : तत्पर्याया सन्दर्भ : । गुम्फ : । सन्थनम् ॥ ग्रन्थनम् ॥
रचित . । त्रि० कल्पिते । कृते ॥ स्थापिते ॥ रच० । कर्मणि क्त : ॥
रज : । पुं० रेणौ । धूलौ ॥ परागे ॥ आर्त्तवे ॥ गुणान्तरे । रञ्जयति । रञ्जरागे । घञर्थेकप्रत्यय : ॥ न० स्त्रीकुसुमे ॥
रज ' श्रय : । पुं० शुनि । रजसिशेते । शीङ्० । अधिकरणे शेतेरित्यच् ॥
रज सारथि : । पुं० वायौ ॥
रजक : । पुं० निर्णेजके । वस्त्रधावके ॥ अयस्तीवरपत्न्यां धीवरात्जात सङ्करजाति वासांसि रजक : स्मृतौनिर्णिज्याद्रजक . शनै । अतोन्यथाहि कुर्वीत दण्ड्य : स्यात्कमाषकम् ॥ रज्यति । रञ्ज० । न्तिखनिरञ्जिभ्यइति० ष्वुन् । असि० अके० अनेचरञ्जर्नलोप . । षित्वान्ङीषि० रजकी । भाष्यमते० क्वुन् । टाप् रजिका ॥ शुक्ले ॥ रजकोधातकशुक्लावितिहेम. ॥
रजतम् । न० दुर्वर्णे । रूप्ये । अस्योत्पत्तिर्यथा । त्रिपुरस्यवधार्थायनिर्निमेषैर्विलोचनै । निरीक्षयामासशिव : क्रोधेनपरिपूरित ॥ ततस्तूल्कासमपतत्तस्य कस्माद्विलोचनात् । ततोरुद्रःसमभवद्द्वेष्वानरमिवज्वलन् ॥ द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात् ॥ तस्माद्रजतमुत्पन्नमुक्तकर्मसु योजयेत् । कृत्रिमञ्चभवेत्तद्विरङ्ग वादिरसयोगत : । पञ्चास्यगुणान्रूप्ये ॥ कारे दन्तिदन्तयो : ॥ शीघ्रते ॥ रदे

। शैले ॥ स्वर्णे । रजतिरज्यतेऽनेनवा । रञ्ज० । पृषिरञ्जिभ्याकिदित्यतच् ॥ त्रि० शुक्ले ॥
रजतद्युति । पुं० हनुमति ॥
रजतप्रस्थ । पुं० कैलासाचले ॥
रजताचल । पु० रौप्यपर्वते ॥
रजताद्रि: । पुं० कैलासपर्वते ॥
रजनम् । न० स्वर्णे । सुवर्णे ॥ कुसुमादिरागे ॥ रज्यतेनेन । रञ्ज । क्युन् ॥
रजनि । स्त्री० निशि । रात्रौ ॥ रजन्ति० अनुरक्ताभवन्ति० रागिणोस्याम् वाहुलकाद्रञ्जेरनिनलोपश्च ॥
रजनिकर । पुं० चंद्रे ॥
रजनी । स्त्री० नीलिन्याम्॥ रात्रौ ॥ हरिद्रायाम् ॥ जतुकायाम् । लाक्षायाम् ॥ रजन्त्यनुरक्ताभवन्त्यस्यां रागिण । रञ्ज० । धिपे: किञ्चेतिबकारादनि । कित्वान्नलोप: । वाहुलकाद्वा० रजनि । गौरादित्वान्ङीष् ॥
रजनीकर: । पु० हिमांशौ ॥
रजनीगन्धा । स्त्री० पुष्पविशेषे ॥
रजनीचर । पुं० राक्षसे । रात्रिचरे ॥ रजन्यांचरति । चरेष्ट: ॥ चौरे ॥ यामिकभटे ॥
रजनीजलम् । न० नीहारे । चोस० हू०भा० । रजन्याजलम् ॥
रजनीपुष्प । पुं० पूतिकरञ्जे ॥
रजनीमुखम् । न० प्रदोषे ॥ रजन्यामुखमिव ॥
रजनीहासा । स्त्री० शेफालिकापुष्पे हारसृङ्गार० पारिजात० हू० लोकप्रसिद्धे ॥ रजन्याहासोयस्या: ॥
रज । न० गुणान्तरे । प्रकृतिगुणविशेषे । रागद्वेषात्मकेदु खहेतौ ॥ रजोरागात्मकंविद्धितृष्णासङ्गसमुद्भवम् । तन्निबध्नातिकौन्तेयकर्मसङ्गेनदेहिनम् । आर्त्तवे । स्त्रीपुष्पे ॥ परागे । सुमनोरजसि ॥ रेणुमात्रे । धूलिमात्रे ॥ निषिद्धाऽनिषिद्ध रजोयथा । आयुष्कामीनसेवेततथासम्मार्जनीरज । तथाप्रशस्तधान्यानागवाञ्चैवरज शुभम् ॥ अशुभञ्चविजानीयात्खरउष्ट्राजाविकेषु च । गवारजोधान्यरज: पुत्रस्याङ्गभवंरज: ॥ एतद्रजोमहाशस्त महापातकनाशनम् ॥ अजारज खररजस्तथासम्मार्जनीरज । स्त्रिय: पादरजोराजन् शक्रादपिहरेच्छ्रियम् हू०ल०चं० ॥ रञ्जयति० रजनम् ० रज्यतेऽनेनवा । रञ्जरागे । भूरञ्जिभ्याकिदित्यसुन् । नलोप: ॥ अहनि ॥ दिवसे ॥ अस्रगहनीरजसोउच्येते० इतिनिरुक्तोक्ते ॥ सन्धिहीनंरजोहीनमपि

र। भाम ऽवर्जितम् । सुद्राशीनहस्त
ऽ लप न सिंविकरनहीतिलच्यम् ॥

रजस्वान् । पु० मेघे ॥ चित्ते ॥

रजस्वल । पु० महिषे । सैरिभे । चि०
सरजस्के ॥ रजोऽस्त्यस्य । रज
कृषोतिवलच् ॥

रजस्वला । स्त्री० स्त्रीधर्मिण्याम् । अ
व्याम् । आत्रेय्याम् । पुष्पवत्या
स्त्रियाम् । उदक्यायाम् ॥ द्वादशा
दस्मरादूर्ध्वं आपञ्चाशत्समा . स्त्रि
य । मासिमासिभगद्वाराप्रकृत्यै
वार्त्तं धसवेत् ॥ तच । प्रथमेऽहनि
चण्डाली द्वितीये ब्रह्मघातिनी । तृ-
तीये रजकी प्रोक्ता यथा वर्ज्या तथाङ्ग-
ना ॥ शुचाभर्त्तुश्चतुर्थेऽह्नि अशुद्धा दै
वपैत्रयोः । दैवे कर्मणि पैत्रे च पञ्च-
मेऽहनि शुद्ध्यति ॥ रजोऽस्त्यस्याः ।
रज कृष्यासुतिपरिषदो वलच् ।
तसौमत्वर्थ इति भत्वम् ॥ सिंहक-
र्कटस्थयोर्नद्याम् ॥ यथा । सिंहक-
र्कटयोर्मध्ये सर्वानद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समु-
द्रगाः ॥ उपाकर्मणि चोत्सर्गे प्रेत-
स्नाने तथैव च । चन्द्रसूर्योपरागे च र
जोदोषो न विद्यते ॥ दशवर्षाधिका
यां नार्याम् ॥

रजि: । पु० चन्द्रवंशीयराजविशे-
षे ॥

रजित । त्रि० आकृष्टे ॥ रञ्जेर्ण्य-
न्तात्कर्मणि क्त । रञ्जेर्णौ मृगरम-
णमुपसंख्यानम् इति नलोप ॥

रजोगुण । पुं० अप्रीत्यात्मके प्रकृते-
र्गुणे ॥ अप्रीतिरात्मभावो यस्य । उ
पष्टम्भकं चलञ्च रजः । सत्त्वतमसी
स्वयमक्रियत्वात् स्वकार्यप्रवृत्तिं प्रत्य
वसीदन्ती रजसोपष्टभ्येते उत्साह प्र
यत्नं कार्यते । तदिदमुक्तमुपष्टम्भक
रज इति । कस्मादित्यत उक्तं चलमि
ति । तदनेन रजसः प्रवृत्त्यर्थत्व
दर्शितम् । यद्दुःखहेतुस्तद्दुःखा
त्मकं रजः ॥ रजः कार्ये हास्यहर्षादौ ॥

रजोनिमीलित । त्रि० रजोगुणावृ
त्ते ॥ अपथे पदमर्पयन्ति हि श्रुतव-
न्तोऽपि रजोनिमीलिताः ॥

रजोबलम् । )
रजोरसम् । ) न० अन्धकारे ॥

रजोविशाल । पुं० भूर्लोके ॥ मध्ये
रजोविशालः सत्त्वधर्माधर्मानुष्ठा-
नपरत्वात् दुःखबहुलत्वाच्च रजो
विशाल इति साङ्ख्याचार्याः ॥

रजोहर । पुं० रजके ॥

रज्जुः । स्त्री० वेण्याम् ॥ बन्धनसाध
नवस्तुनि । शुल्वे । वराटके । गुणे
। डोरी० रस्सी० इ० भा० । सृज्यते ।
सृज विसर्गे । सृजेरसुम् च । चात्
सलोपः उप्रत्ययश्च । सस्य सुत्वे नशः
जश्त्वेन जः ॥ मध्यगुरौ ।ऽ। ॥

रज्यमानः । त्रि० लोहितायमाने ॥

रञ्जे र्दैवादिकात् कर्त्तरि शानच् । अ निदितामिति नलोपः ॥

रञ्जक । पुं॰ कुसुम्भादिना वस्त्रादि रागकर्त्तरि ॥ काम्पिल्यके ॥ प्रीति जनके ॥ न॰ हिङ्गुले ॥

रञ्जन : । पुं॰ रागजनने ॥ मुञ्जतृणे ॥ न॰ रक्तचन्दने ॥ हिङ्गुले ॥ पतङ्गे । वकम्॰ इ॰ भा॰ ॥ वर्णान्तरापादने ॥ रञ्जयति । रञ्जरागे । ण्यन्तः । युच्॰ ल्युड्वा ॥

रञ्जनक : । पु॰ कट्फले ॥

रञ्जनी । स्त्री॰ गुण्डारोचनिकायाम् ॥ नील्याम् ॥ मञ्जिष्ठायाम् ॥ शेफालिकायाम् ॥ हरिद्रायाम् ॥ पर्प्पट्याम् ॥ रञ्जयति । रञ्ज॰ । ल्युट् । णिलोपश्चस्यानिवत्त्वादप्राप्ते । स्त्रेतिबानलोपोन ॥ रज्यतेऽनये तिविग्रहेतु॰करणे तिल्युटिभवत्ये व । रञ्जे क्युन्निति वा ॥

रञ्जनीय । त्रि॰ रागोत्पादनयोग्ये ॥

रटित । त्रि॰ कथिते ॥ रटे कर्म्मणि क्तः ॥ न॰ कथनमात्रे ॥

रण । पु॰ कोणे । वीणादिवादने ॥ क्वणे । पु॰न॰ युधि । समरे । युद्धे ॥ रणनम्॰ रणन्ति॰ शब्दायन्तेऽस्मिन्निति वा । रणशब्दे । वशिरण्यो रित्यप् ॥ रणति । रण । पचाद्यच्वा ॥

रणत् । पु॰ ध्वनति ॥

रणतूर्य्यम् । न॰ सङ्ग्रामपटहे । अभयडिण्डिमे । युद्धवाद्ये ॥

रणप्रिय : । पु॰ श्येनविहगे ॥ न॰ उशीरे । वीरणस्यमूले ॥

रणमत्त । पुं॰ हस्तिनि । द्विपे ॥

रणमुष्टि : । पु॰ विषमुष्टिक्षुपे ॥

रणरङ्ग : । पु॰ रणकातरहस्तिनि । प्रतिमे ॥

रणरण : । पु॰ मशके ॥ न॰ उद्वाहने

रणरणक : । पुं॰ उत्कण्ठायाम् ॥ कामे ॥

रणसङ्कुलम् । न॰ तुमुले । व्याकुले रणे ॥ रणस्यसङ्कुलम् ॥

रणसमुद्यम । पु॰ युद्धोद्योगे ॥

रणाङ्गनम् । न॰ युद्धस्थले ॥

रणालङ्कार : । पुं॰ कङ्कपक्षिणि ॥

रण्ड । त्रि॰ अर्द्धचर्मावच्छिन्नावयवे ॥ धूर्त्ते ॥

रण्डक : । पुं॰ अफलद्रुमे ॥

रण्डा । स्त्री॰ मूषिकपर्ण्याम ॥ विधवायाम् ॥ रमन्तेऽत्र । रमक्रीडायाम् । अमन्ताड्ड । टाप् ॥

रण्डाश्रमी । पु॰ अष्टचत्वारिंशद्वर्षोपरिभार्याविहीने ॥ यथा । चत्वारिंशद्वत्सराणामष्टानाञ्चपरेयदि । स्त्रियाविमुज्यतेकश्चित्सतुरण्डाश्रमीमतः ॥

रतम् । न॰ मैथुने । सुरते ॥ तद्द्विविधम् । यथाहवात्स्यायनः । बाह्यमाभ्यन्तरञ्चेतिद्विविधं रतमु

च्यते । तत्राद्यं चुम्बनाश्लेषनखद
न्तक्षतादिकम् । द्वितीयं सुरत
साक्षान्नानाकारेणकल्पितमिति ॥
चि० गुह्ये ॥ अभिरते । अनुरक्ते
रमणम् । रम० । नपुंसकेभावेक्त
। अनुदात्तोपदेशेतिनलोप : ॥

रतकील . । पुं० कुक्कुरे ॥

रतकूजितम् । न० रतिकालकथाया
म् । मणिते ॥

रतगुरु : । पुं० भर्त्तरि हृदयेशे ॥

रतज्वर : । पुं० काके ॥

रतताली । पुं० विड्गे ॥

रतताली । स्त्री० कुट्टन्याम् ॥

रतनाराच : । पुं० नारीणांशीत्कारे
॥ स्मरे ॥ शुनि ॥ विड्गे ॥

रतनिधि : । पुं० खञ्जने ॥

रतराग . । पुं० सुरताभिलाषे ॥

रतर्द्धिकम् । न० दिवसे ॥ सुखस्ना-
ने ॥ अष्टमङ्गले ॥

रतव्रण : । )
रतशायी । ) पुं० कुक्कुरे । शुनि ॥

रतहिण्डक : । पुं० स्त्रीचौरे ॥ लम्प-
टे ॥

रतान्दुक : । पुं० कुक्कुरे ॥

रताम्बी । स्त्री० कुम्भकर्यां ॥

रतामर्द : । पुं० कुक्कुरे ॥

रतायनी । स्त्री० वेश्यायाम् ॥

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्या
म् ॥ कामुक्याम् ॥

रति : । स्त्री० स्मरदारेषु । कामदेव-
स्यपत्न्याम् ॥ चापाधिष्ठानस्था-
यादेव्याम् ॥ सुरते ॥ गुह्ये ॥ रा-
गे ॥ अनुरागे ॥ यथा । भगवान्०
ब्रह्म०कात्स्न्येनचिरन्वीच्यमनीष
या । तदध्यवस्यत्कूटस्थोरतिरात्म
न्यतोभवेत्इति ॥ रम्यतेऽनया
रम० । क्तिन् । अनुदात्तोपदेशवन
तितनोत्यादीनामनुनासिकलोपो-
झलिक्ङिति०इतिमलोप: ॥ चेत
परितोषे ॥ इष्टार्थसंयोगजनितायां
क्रीडायाम् ॥ इच्छाविशेषे ॥ य
था । यूनोरन्योन्यविषयस्थायिनी-
च्छारति : स्मृतेतिरसार्णवसुधा-
कर : ॥

रतिकुहरम् । न० भगे । योनौ ॥

रतिकूजितम । न० मणिते । मैथुनश
ब्दे ॥ रते कूजितम ॥

रतिक्रिया । स्त्री० संवेशने । मैथुने ॥

रतिगृहम । न० योनौ ॥ रमणम-
न्दिरे ॥

रतिचक्रम् । न० कामिन्यासहक्रीड-
ने ॥ यथा । शास्त्रस्यविषयस्तावद्या
वन्मन्दरसोनर : । रतिचक्रेप्रवृत्ते
तुनशास्त्रनापिचक्रम ॥

रतिनाग : । पुं० षोडशबन्धान्तर्गतप
ञ्चदशबन्धे । तल्लक्षणं यथा ॥ पीड
येद्ररुयुग्मेनकामुकंकामिनीयदि ।
रतिनाग : समाख्यात : कामिनी

नामनोरम ॥

रतिपति । पु० कामदेवे ॥ रतेः पतिः ॥ देशविशेषस्थस्त्रीणामाख्या- नविशेषितस्याविर्भावोयथा । वाचि श्रीमाथुरीणाजनकजनगदस्थायिनी नाकटाक्षे० ङ्गलेगौडाङ्गनानां० सुललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनानितम्बे०सजलघनरुचौकेरलीकेशपाशे०कार्णाटीनाकटौच- स्फुरतिरतिपतिर्गुर्ज्जरीणास्तनेषु ॥

रतिपाशक । पु० रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकामुकोयदिसुन्दरीम् । रतिपाशस्तथाख्यातः कामिनीनासुखावहः ॥

रतिप्रिय । पुं० कामदेवे ॥ रतिः प्रियायस्य । सुरतप्रिये ॥

रतिबन्ध । पुं० पद्मासनादिषोडशसु ॥ तेयथा । पद्मासनोनागपाशो लतावेष्टोऽर्द्धसम्पुटम् । कुलिश सुन्दरञ्चैवतथाकेशरएवच ॥ हिल्लोलोनरसिंहोपिविपरीतस्तथापर । क्षुब्धोवैधेनुकश्चैवमुत्कठस्तुततः परम् ॥ सिंहासनोरतिर्नागोविद्याधरस्तुषोडश ॥

रतिमदा । स्त्री० अप्सरसि । स्वर्वेश्यायाम् ॥

रतिमन्दिरम् । न० योनौ ॥ मैथुनगृहे ॥

रतिमित्र । पुं० रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकामुकश्चयदिकामुकी । रतिमित्रस्तथाख्यातः कामिनीनासुखावहः ॥

रतिरमण । पु० कामदेवे ॥

रतिलक्षम । न० निधुवने ॥

रतिलाभ । पु० सुरतसुखप्राप्तौ ॥ यथोक्तं रतिरहस्ये । सस्ततावपुषि मीलनदृशोर्मूर्च्छनाचरतिलाभलक्षणम् । श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्त्वरा । स्त्री० चिरञ्जीवायाम् । पिडिङ्गशाक०इ०गौ०दे० भा० ॥

रतिसुन्दर । पु० रतिबन्धविशेषे ॥ यथा । नारीपदद्वयंकामीधारयेद्धृदयेयदि । धृतकण्ठोरमेत्कामीबन्धस्याद्रतिसुन्दरः ॥

रतू । स्त्री० देवनद्याम् । सत्यवाचि ॥ ऋदितिसौत्रोधातु । तत्र ऋतेरम्चेतिकू अमागमश्च ॥

रतोद्वह । पुं० कोकिले ॥

रत्यङ्गम् । न० भगे । योनौ ॥ रतेः सुरतस्यअङ्गम् ॥

रत्नम् । न० स्वजातिश्रेष्ठे ॥ जातौ जातौयदुत्कृष्टं तद्रत्नमभिधीयते ॥ मणौ ॥ धनार्थिनोजना सर्वेरमन्तेस्मिन्नतीवयत् । ततोरत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥ तत्तु पाषाणभेदोस्तिमुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । व

च गारुत्मतपुष्परागौमाणिक्यमेव च । इन्द्रनीलश्चगोमेदस्तथावैदूर्य मित्यपि ॥ मौक्तिकविद्रुमश्चेतिर त्नान्युक्तानिवैनव। रत्नानिभक्षितानि स्युर्मधुराणिसराणिच। चक्षुष्याणि चशीतानिविषघ्नानिधृतानितु॥मङ्ग ल्यानिमनोज्ञानिग्रहदोषहराणिच॥ माणिक्य तरणे : सुजातममलमु क्ताफलशीतगोर्माहेयस्यतुविद्रुमो निगदित : सौम्यस्यगारुत्मतम् । देवेज्यस्यचपुष्परागमसुराचार्यस्यव ज्रशनेर्नीलनिर्मलमन्ययोर्नि गदि तेगोमेदवैदूर्यके ॥ रत्नानांशोधन मारणविधिर्वज्यवद्बोध्या। रमयति । रमक्रीडायाम् । रमतेऽस्मिन्वा । रमे सचेतिन । नेट् । माणि क्ये ॥ वज्रे ॥ सगणे ० ॥ ऽ ० ॥

रत्नकन्दल । पुं० प्रवाले ॥

रत्नकूट : । पुं० पर्वतविशेषे ॥

रत्नगर्भ : । पुं० समुद्रे ॥ रत्नानिग र्भेऽस्य ॥ कुबेरे ॥

रत्नगर्भा। स्त्री० भूमौ ॥ रत्नानिगर्भेऽ स्या ॥ उपचाराद्गुणवत्पुत्रायाम् ॥

रत्नचषक : । पुं० न० स्फटिकादि मणिपात्रे ॥

रत्नद्वीप:। पुं० न० रत्नप्रचुरद्वीपविशेषे।

रत्नधेनु । स्त्री० महादानविशेषे ॥

रत्ननिधि : । पुं० खञ्जनपक्षिणि ॥

रत्नपञ्चकम् । न० सुवर्णादिपञ्चसु । यथा । सुवर्णरजतमुक्तालाजावर्त प्रवालकम् । रत्नपञ्चकमाख्यातं मुनिभि : कर्मवेदिभि : ॥

रत्नपरीक्षा । स्त्री० मणिविचारे ॥ तत्र मणीनांतावद्गुणप्रधानार्थमाह । र त्नेनशुभेनशुभं भवतिनृपाणामनि- ष्टमशुभेन । यस्मादत : परीक्ष्य दै- वंरत्नाश्रितं तज्ज्ञै : ॥ द्विपहयव- नितादीनांस्वगुणविशेषेणरत्नशब्दो ऽस्ति । इहतूपलरत्नानामधिकारोव त्सपूर्वाणाम् ॥ रत्नानामुत्पत्तिप्रद र्शनार्थम्मतभेदमाचार्याणामाह। रत्नानिबलाद्दैत्याद्दधीचतोऽन्येवद- न्तिजातानि । केचिद्भुव : स्वभावा द्वैचित्र्यंप्राहुरुपलानाम् ॥ वज्रेन्द्र नीलमरकतकर्केतनपद्मरागरुधिरा ख्या : । वैदूर्यपुलकविमलकराजम णिस्फटिकशशिकान्ता : ॥ सौग- न्धिकगोमेदकशङ्खमहानीलपुष्प रागाख्या:। ब्रह्ममणिज्योतीरसस- स्यकमुक्ताप्रवालानि। वेणातटेविशु द्धं शिरीषकुसुमोपमञ्चकौशलकम्। सौराष्ट्रकमाताम्रं कृष्णंशूर्पारकम्भू- तम् ॥ ईषत्ताम्रं हिमवतिमतङ्गजं वल्लपुष्पसङ्काशम् । आपीतञ्चाकलि- ङ्गे श्यामंपौण्ड्रेषु सम्भूतम् ॥ ऐन्द्र षडश्रियुक्तं याम्यसर्पास्यरूपमसित ञ्च । कदलीकाण्डनिकाशं वैष्णव- मितिसर्वसंस्थानम् ॥ वारुणमब-

लागुच्छोपमभवेत्कर्णिकारपुष्पनि-
भम् । शृङ्गाटकस स्थान व्याघ्राक्षि
निभस्त्वष्टीतभुजम् ॥ वायव्यश्चयवी
पममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोत : खनिप्रकीर्णकमित्याकरस
म्भवस्त्रिविध ' ॥ १० ॥ रक्तपीत्व
शुभं राजन्यानासित द्विजातीनाम्
। शैरीष वैश्यानांशूद्राणांशस्त्र.तेऽ
सिनिभम् ॥ ११ ॥ वज्रमणिम्
त्यपरिज्ञानार्थमाह । सितसर्ष
पाष्टकंतण्डुलोभवेत् तण्डुलैस्तुविं
शत्या । तुलितस्यद्विजर्षेद्यान द्वि
द्यानितिचैतत् ॥ पादत्र्यंशार्द्धेन
त्रिभागपञ्चांशषोडशांशाश्च । भाग
श्चपञ्चविंशतिक : स्यात्साष्टत्रिक
श्चेव ॥ १३ ॥ शुभवज्रलक्षणान्या
ह । सर्वद्रव्याभेद्य लघ्वम्भसितरति
रश्मिवत्स्निग्धम् । तडिदनलश
क्रचापोपमस्त्ववज्र हितायोक्तम् ॥
अथाशुभलक्षणम् । काकपदमक्षि
काकेशधातुयुक्तानिशार्कर विद्धम् ।
द्विगुणाश्रिदग्धकलुषत्रस्तविशीर्णा
निनशुभानि ॥ यानिचबुद्बुददलि
ताग्रचिपिटवाशीफलप्रदीपानि ।
सर्वेषाम्मेतेषांमूल्याशमोष्टमोभा
नि ' ॥ १६ ॥ वज्र नकिंचिदपि
धारयितव्यमेकेपुत्रार्थिनीभिरबला
भिरथ तितज्ज्ञा . । शृङ्गाटकत्रि
पुटधान्यकवत्स्थितं यच्चोणीनिभ

श्वशुभद तनयार्थिनीनाम् ॥ स्वज
नविभवजीवितक्षय जनयतिवज्रम
निष्टलक्षणम् । अशनिभयविषारि
नाशनशुभमुपभोगकरञ्चभूभृताम्
॥ द्वात्रिंशाराष्टांससमसमतितम : ॥

रत्नपारायणम् । न० सर्व रत्नस्थाने ॥ यथा । समुद्रोपत्यकाहैमीपर्वताधित्यकापुरी । रत्नपारायणनाम्ना लङ्केतिममर्मैथिली ॥

रत्नप्रभा । स्त्री० जिमानांनरकविशेषे ॥

रत्नभू : । स्त्री० मणिप्रधानभूमौ ॥

रत्नमुख्यम् । न० हीरके ।

रत्नमुट् । त्रि० मणिचौरे ॥ रत्नं मुष्णाति । मुषस्तेये । क्विप् ॥

रत्नराट् । पुं० माणिक्ये ॥ रत्नश्रेष्ठे ॥

रत्नवती । स्त्री० भूमौ ॥ रत्नानि विद्यन्तेयस्याम् । मतुप् । उगित्वान्० ङीप् ।

रत्नवर्षुकम् । न० पुष्पकरथे ॥ त्रि० रत्नवर्षणशीले ॥

रत्नसानु ' । पुं० सुरालये । सुमेरुपर्वते ॥ रत्नानिसानौशिखरेऽस्य ॥

रत्नसू : । स्त्री० भूमौ ॥

रत्नाकर : । पु० जलनिधौ ॥ रत्नानामाणिक्यमुक्तादीनामाकर ' ॥

रत्नाङ्क : । पुं० विष्णुरथे ॥ रत्नचि

क्षे ॥
रत्नाचल । पु० रत्नार्थमणिमय पर्वते ॥
रत्नाभरणम् । न० मणिमयालङ्करणे । जडाऊगहना० हू०भा० ॥ तस्य धारणगुणा । धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम् । हर्षणं काम्यमोजस्य रत्नाभरणधारणम् ॥
रत्नि । पुं० बद्धमुष्टिकरे ॥ ऋच्छति० अर्यतेऽनेनवा । ऋगतौ । ऋतन्यञ्जीत्यत्रै, कत्निच् । यण् ॥
रथ । पुं० शताङ्गे । स्यन्दने ॥ पादे । चरणे ॥ वेतसे ॥ देहे । शरीरे ॥ रथवद्वयस्थानीयैरिन्द्रियैराक्रम्यमाणत्वाच्छरीरस्य ॥ रम्यतेऽनेन रमन्तेऽस्मिन्नेनवा । रम० । हनिकुषीतिक्थन् । अनुनासिकलोप ॥ एनेनसह्योहरि ॥ सगणे० ॥ ऽ० ॥ पौरुषे ॥
रथकड्या । स्त्री० रथवृन्दे ॥ रथानांसमूह । खलगोरथात्, इनित्रकट्यचश्चेति कट्यच् ॥
रथकार: । पु० रथस्य० । रथस्य-कार: ॥
रथकार: । पुं० तक्षणि । वर्द्धकौ । रथनिर्माणकर्त्तरि । माहिष्यात् करण्यामुत्पन्ने जातिविशेषे । बढ़ई० तखाण० इतिभाषाप्रसिद्धे ॥ माहिष्येण करण्यान्तु रथकार प्रजायते० इ० याज्ञवल्क्य ॥ रथं करोति । डुकृञ्० । कर्मण्यण् ॥
रथकुटुम्बी । पु० सारथौ ॥ रथकुटुम्बयितुंशीलमस्य । कुटुम्बधारणे । सुपीतिणिनि ॥ यद्वा । रथएवकुटुम्बम् । रथकुटुम्बमस्यास्ति । इनि ॥
रथगर्भक ' । पुं० स्कन्धवाह्ययाने । नररथे । कर्णीरथे । प्रवहणे । डयने ॥
रथगुप्ति । स्त्री० वरूथे । परप्रहरणाभिघातरक्षार्थंरथस्यसन्नाहवदावरणे ॥ रथस्यगुप्तिरावरणम् ॥
रथगोपनम् । न० रथगुप्तौ ॥
रथचरण ' । पु० कोकपक्षिणि । चक्रवाके ॥ रथचक्रे । पैय्या० हू०-भाषा ॥
रथद्रु । पु० तिनिशवृक्षे ॥ रथस्य द्रु: । तत्रोपयुक्तत्वात् ॥
रथद्वितीया । स्त्री० आषाढशुक्लद्वितीयायाम् ॥ यथा । आषाढस्यसितेपक्षेद्वितीयापुष्यसंयुता । तस्यांरथेसमारोप्यराममाभद्रया सह ॥ यात्रोत्सवंप्रवर्त्याथप्रीणयेच्चद्विजान्बहून् । ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कान्दपुराणम् । साचाथा । ऽजगन्नाथम् ॥
रथन्तरम् । न० सामविशेषे ॥ रथेन तरति । तॄप्लवनसन्तरणयो ' ।

संज्ञायांभृतॄवृजीतिखच् । व्युत्पत्ति माच नस्ववयवार्थानुगम ॥

रथपर्य्याय । पु॰ वेतसवृक्षे ॥ रथ : पर्यायोऽस्य ॥

रथपाद · । पु॰ चक्रे ॥

रथव्रज । पु॰ रथकड्यायाम् ॥ रथानांव्रज ॥

रथपुष्पा । स्त्री॰ नदीविशेषे ॥ रथपिनष्टि । पा॰ । क । पारस्करादित्वात्सुट्षत्वेनिपातसिद्धे ॥

रथसाधक । पुं॰ तिनिशे ॥ रथस्य-साधक ॥

रथाङ्ग । पु॰ कोकपक्षिणि ॥ अप-स्करे । चक्रभिन्नेरथावयवे ॥ न॰-चक्रे ॥ रथस्यचङ्गम् ॥

रथाङ्गपाणि । पु॰ विष्णौ ॥ रथाङ्ग पाणौयस्य स । प्रहरणार्थेभ्य परे निष्ठासप्तम्यौभवत ॥

रथाङ्गाह्वय ।पुं॰ चक्रवाके ॥ रथाङ्ग स्याह्वयोनामयस्य ॥

रथाङ्गी । पुं॰ श्रीहरी ॥ रथाङ्ग चक्र मस्यास्ति । इनि · ॥

रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥

रथान्तर । पुं॰ कल्पभेदे ॥

रथाभ्र । पुं॰ वेतसवृक्षे ॥

रथारोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥

रथावर्त्त । पु॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिक: । त्रि॰ रथिनि । रथस्वामिनि ॥ रथोस्यास्ति । अतइनिठनाविति ठन् ॥ रथेनचरतिवा । पर्पादिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेतिङीषि॰ रथिकी ॥

रथिका । स्त्री॰ क्षुद्ररथे । स्वार्थेकन् ॥

रथी । पु॰ स्यन्दनारोहे । रथारोहिणि । रथस्वामिनि । रथिके ॥ रथोऽस्यास्ति । इनि ॥

रथिन । पु॰ रथिनि । रथस्यइन । शकन्ध्वादि ॥

रथिनी । स्त्री॰ रथकड्यायाम् ॥ रथानासमूह । खलादिभ्यइनिर्वक्तव्य ॥

रथिर · । पुं॰ रथिके । रथोऽस्यास्ति । मेधारथाभ्यामिरन्निरचौवक्तव्याविति रच् ॥

रथी । स्त्री॰ शकट्याम् । मन्भोली॰ इ॰ भा॰ ॥ बह्वादिभ्यश्चेतिङीष् ।

रथोद्धता । स्त्री॰ त्रिष्टुप् ११ प्रभेदे ॥ रात्परैर्नरलगैरथोद्धता । यथा । राधिकादधिविलोडनस्थिताकृष्णवेणुनिनदैरथोद्धता । यामुनतटनिकुञ्जमञ्जसासाजगामसलिलाहृतिच्छलात् ॥ रथवदुद्धता ॥

रथ्य : । पुं॰ रथवाहकाश्वे । रथवोढरि ॥ रथ वहति । तद्वहतिरथयुगप्रासङ्गमितियत् ॥ रथासे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥
रथ्या । स्त्री० रथौघे ॥ रथानासमूह । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेतरमार्गे । जनसञ्चारिणिमार्गे । वर्त्म न्याम् । पथि ॥ चत्वरे ॥ रथाय हिता । यत्प्रकरणे रथाच्चेतियत् ॥ रथंवहतिवा । तद्वहतीतियत् ॥
रद । पु० विलेखने ॥ दन्ते ॥ पुरुषदन्तलक्षणं यथा । विवर्णैर्धनहीना स्युदन्ता स्निग्धघना' शुभा । तीक्ष्णादंष्ट्रा समा. श्रेष्ठाजिह्वा-रक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशैः प्रकारैर्दशनैर्नृप. । लक्षवानरदन्ताश्चनित्यं सुपरिपीडिता. ॥ हस्तिदन्ता' खररदाः स्निग्धदन्ताशुणान्विता । करालैर्विषमैर्दीर्घैर्दंशनैर्दुः. खजीविन. ॥ द्वात्रिंशद्दन्तारा।जानएकोनोश्चभोगवान् । त्रिंशद्दंतानरायेतेसुखदु' खस्यभागिन' ॥ एकोनत्रिंशद्दश-ना. पुरुषादु' खजीविन. । अ-ष्टाविंशद्दन्तायेषांतेनिदु' खस्यभा-जना ॥ स्त्रीदन्तलक्षणं यथा । कुन्दपुष्पसमादन्ताभाषितंकोकिलासमम् । दाक्षिण्ययुक्तमशठं हंसशब्द सुखावहम् ॥ नासासमासमपुटा-स्त्रीणांलकचिराशुभा । करालविषमादन्ता क्लेशायचभयायच ॥ चौर्यापकृष्टमासाश्चदीर्घाभर्तुसमृत्यवे । इति ॥ दन्तस्यलग्नशुचित्वं यथा । दन्तवद्दन्तलग्नेषुजिह्वास्पर्शेशुचिर्भवेत् ॥ अपिच । दन्तलग्नसमं ह्यार्थेलेपमन्येतदन्तवत् । नतत्रबहुश. कुर्याद्यत्नमुद्धरणेपुन: ॥ भवेदशौचमत्यर्थंतृणविधाद्व्रणेकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥
रदच्छद: । पुं० ओष्ठे ॥
रदन: । पु० रदे । दन्ते ॥ रद्यतेने-न । रद० । करणेतिल्युट् ॥ न० उत्खनने ॥
रदनच्छद' । पुं० ओष्ठे ॥ अधरे ॥ रदनाश्छाद्यन्तेऽनेन । छदस वरणे० चुरादि. । पुंसीतिघ: । छादेर्घेद्व्यतिह्रस्वः ॥ अस्यशुभाशुभलक्षणंयथा । मांसलैश्चघनोपेताश्चवक्त्रैरधरैर्नृपा: । बिम्बोपमैश्चस्फुटितैरौष्ठैरुक्षैश्चखण्डितै । विवर्णैर्धनहीना स्युदन्ता: स्निग्धाघना शुभा: ॥
रदनी । ) पुं० हस्तिनि ॥
रदी । )
रन्तव्य' । त्रि० रन्तुंयोग्ये ॥ रम० । तव्य' ॥
रन्तिदेव: । पुं० साङ्कृतिपुत्रेभरतान्वयोत्पन्ने चन्द्रवंशीयनृपतिश्रेष्ठे । यशयश: पुराणेप्रसिद्धम् । यस्य-कथावतोयश्लोक: । नकामयेऽहंग

तिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवस्य । प्राप्तिं प्रपद्यैखिलदेहभाजामन्त स्थितोयेनभवन्त्यदुःखा॥
गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥
रन्तु । पु० वर्त्मनि ॥ स्त्री०नद्याम् ॥
रधनम् । न० पाके ॥छदने ॥
रन्ध्रम् । न० दूषणे ॥ छिद्रे ॥ रमणम् । सम्पदादित्वात्क्विप् । स चासौ पूर्वकस्त्वान्नदीर्घं । रमक्रीडाधर ति । मूलविभुजादित्वात्क. ॥ यद्वा । रधयति । रधिर्हिंसासराध्योः । बाहुलकाद्रक् ॥ अष्टमभवने ॥ अश्वस्यकुक्षिनाभिमध्यभागे ॥ यथोक्तम् । कुक्षिनाभ्यन्तरेरन्ध्रमुपरन्ध्रं तथोपरीति ॥
रन्ध्रकण्ट । पु० जालबर्बुरके ॥
रन्ध्रकार: । त्रि० छिद्रस्यकारके । रन्ध्रहितौविधेरा०ह०भाषा०प्र० ॥ रन्ध्रं करोति । कृञोहेतुताच्छील्यानुलोम्येष्विति‌कृञ ष्टप्रत्यय: ॥
रन्ध्रबभ्रु । पुं० उदुरौ ॥
रन्ध्रवंश । पु० सच्छिद्रवंशे । कीचकाह्वये । मस्करे । सुषिरास्ये ॥ अस्यगुणायथा । वंशोत्वक्सौकषायो चकिञ्चित्तिक्तोवशीतलो । मूत्रकृच्छ्रप्रमेहार्श पित्तदाहास्रनाशनो ॥ विशेषोरन्ध्रवंशस्तुदीपनोजीर्णनाशक ॥रुचिकृत्पाचनोहृद्य : शूलघ्नोगुल्मनाशन ॥

रप । न० पापे ॥
रभस । पुं० हर्षे ॥ यथा । शुचापाचधाबीपरिणतिरमेध्यप्रचयभूरयंभूतावासोविसृमरकियतींयातिनदशाम् । तदस्मिन्धीराणांचणमपिकिमास्थातुमुचितमलीकार कोयदहमहमेवेतिरभसइतिशिल्हणमिश्रा. ॥ पुं०अभिधानविशेषे ॥ पौर्वापर्यविचारे ॥ त्रि०तद्वति ॥ रभते । रभराभस्ये । अत्यविचमीत्यादिनाऽसच् ॥ तद्वत्यर्शआद्यच् ॥
रम । पुं० कान्ते ॥ रक्ताशोकद्रुमे ॥ स्मरे ॥ रमते । रम० । पचाद्यच् ॥ रमणे ॥
रमक । पुं० विलासिनि । कान्ते ॥ रमते । रम० । रमेरश्चलोवेतिवुन् ॥ केनापिकर्मणाधररञ्जके ॥ रमयति । वुन् ॥
रमठम् । न० ) हिङ्गुनि ॥
रमठध्वनि. । पुं० )
रमण । पुं० धवे । प्रिये । पत्यौ ॥ स्मरे । कामदेवे ॥ रमयति । रम० । नन्द्यादित्वाल्ल्यु ॥ वर्णवृत्तान्तरे ॥ सगणोरमण । कविनाकथित ॥ यथा । धनदोधनद । भवतांभवतात् ॥ रासभे ॥ वृषणे ॥ महारिष्टे ॥ न०पटोलमूले ॥ जघने ॥ रमणे । ग्राम्यधर्मे । सुरते । मैथुने । क्रीडारते ॥ यथा

मुख ॥ क्रीडने ॥

रमणकम् । न॰ जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे ॥ यथा । एवमेवो त्तरेचोत्तरवर्षाणिचतपोधन । कुरु वर्षं सितम्भुङ्गाब्धेर्ङ्कवानवधि स्मृत ॥ हिरण्मयततोवर्षं श्वेतावधिनिगद्यते । रम्यकञ्चततोवर्षं नीलस्तस्यावधि . स्मृत ॥ अपिच । दक्षिणे नतुश्वेतस्य निषधस्योत्तरेण तु । वर्षं रमणकनामजायन्ते तत्र मानवा ॥ शुक्लाभिजनसम्पन्ना . सर्वेसुप्रियदर्शना । दशवर्षसहस्राणिशतानिदशपञ्चच ॥ जीवन्ति तेमहाभागनित्य मुदितमानसा ॥ इतिपाद्मे भूखण्ड ॥

रमणा । स्त्री॰ रमण्याम् ॥

रमणी । स्त्री॰ विशेषाङ्गनायाम् । नार्याम् ॥ रमयति॰रम्यत्वाद्याम् । रम॰ । ल्युट् ॥ वालाख्यद्रव्ये ॥ वेदिकायाम् ॥ • ( * ) •

रमणीय . । त्रि॰ सुन्दरे । शोभने । रम॰ । अनीयर् ॥

रमणीयकम् । न॰ छन्दोविशेषे । राभ्रभहितयरैरुदितरमणीयकम् । इतिलक्षिते ॥

रमणीयचरण . । त्रि॰ सुकृतिनि । पुण्यकर्मणि ॥ रमणीयशोभनचरणशीलयस्य ॥

रमण्य : । त्रि॰ रमणीये ॥ रमतेऽस्मिन् । रम॰ । यूरम्योश्च स्यन्य : ॥

रमति । पु॰ नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम॰ । रमेर्निदित्यति ॥

रमा । स्त्री॰ लक्ष्म्याम् । पद्मालयायाम् । सर्वत्ररमसे यस्माद्रमातस्माद्भविष्यसीतिविष्णुशापोक्तेरितुक्ता श्रीदेवीभागवते ॥ हालाहलोनैवविष विष रमापर जनाव्ययमेवमन्वते । योगेनजागर्ति निपीयत शिव ' स्मरन्रमामुह्यतिनिद्रयाहरि ॥ रमयति । रमक्रीडायाम् । पचाद्यच् । टाप् ॥ शशिध्वजराजकन्यायाम् । कल्किदेवपत्न्याम् ॥ शोभायाम् ॥

रमाधव : । पु॰ )

रमानाथ । पु॰ )

रमापति : । पुं॰ ) विष्णौ ॥ रमाया धव: ॥ नाथ : पतिर्वा ॥ *

रमाप्रियम् । न॰ पद्मे ॥

रमावेष्ट । पुं॰ श्रीवासे ॥

रमित । त्रि॰ रतिप्रापिते ॥

रमेश्वर : । पुं॰ विष्णौ ॥

रम्भ . । पुं॰ वेणौ ॥ वैष्णवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपितरि रभते । रभराभस्ये । पचाद्यच् । रभेरशब्लिटोरितिनुम् ॥

रम्भा । स्त्री॰ कदल्याम् ॥ अपसरोभेदे ॥ दुर्गायाम् ॥ गोध्वनौ ॥ वे

ञ्यायाम् ॥ रमते । रम० घञ् ।
टाप ॥ रम्यतेवा । घञ् ॥
रम्भातृतीया । स्त्री० व्रतविशेषकाले॥
रम्भोरू . । स्त्री० स्त्रीविशेषे ॥ रम्भे०
कदलीस्तम्भाविवऊरूयस्या . सा ।
उरूत्तरपदादौपम्यइत्यूङ् ॥
रम्य . । पु० चम्पके ॥ वम्पकवृक्षे ॥
न० पटोलमूले ॥ प्रधानधातौ ॥
त्रि० मनोज्ञे । हृद्ये । स्वभाव
सुन्दरे ॥ रम्यायाविकृतिरपिश्रिय
तनोति ॥ रम्यतेक्रीडत्यतेयच । रम
० । पोरदुपधादितियत् ॥ बलकरे॥
रम्यकम् । न० पटोलमूले । नील
गिरेरुद्दर्दर्शवर्त्तमाने० वर्षवि
शेषे ॥ नीलनीरजरम्यस्यरम्यकेहा
दृशस्थिति : । जनस्याव्दसहस्त्राणि
न्यग्रोधफलमश्नत : ॥
रम्यपदपाठ . । पु० देवतापदस्तोभे .
कालपूरणे ॥
रम्यपुष्प . । पुं० शाल्मलिपादपे ॥
रम्यफल . । पु० कारस्करवृक्षे ॥
रम्या । स्त्री० रात्रौ ॥ स्थलपद्मिन्याम् ॥
रम्र . । पुं० अरुणवर्णे ॥ शोभायाम्॥
रय : । पुं० वेगे । वेगाख्यगुणे ॥ स
वेगगतिःवने स्वप्रयोग : ॥ प्रवाहे
॥ रयत्यनेन । रयणं वा । रयगतौ
। पुंसीतिघ : । रीणात्यनेना ।
रीगतिरेषणयो : । पुंसीतिघ : ॥
हलश्चेतिघञितु० संज्ञापूर्वकत्वा

द्वृद्ध्यभाव ।
रयि . । पुं० धने । जले ।
रराटी । स्त्री० ललाटे ॥
रल्लक : । पुं० कम्बले ॥ कम्बलमृगे
॥ पक्ष्मणि ॥ रमते । रम० । क्वि
प् । गमादीनांक्वावितिमलोप
। तुक् । लाति । ला० । क्विप ।
रल्लासौलाश्च । स्वार्थेकन । कंप्य
इतिहृस्व : ॥ यद्वा । रमणम ।
रमि सम्पदादिक्विप । रत्क्रीडा
लक्यतेऽनेन । लकआस्वादने ।
घ : ॥ रत ल्लातिवाक्वुन ॥ क्षौणी
सि टूरसरल्लाम् ॥
रल्लकभल्लकम् । न० सिन्दूरसरणौ ।
मागधे० भा० ॥ शिर : सिन्दूरस
रणि । स्त्रीयारल्लकभल्लकमित्युक्ते
॥ सीतारल्लकभल्लभग्नहृदय स्वस्ति
नलङ्घ्वरङ्गतिलच्च्यम् ॥ रल्लकोभ
ल्लकमिव ॥
रव . । पु० ध्वाने । स्वने । शब्दे ॥
रवणम । रुशब्दे । ऋदोरप् ॥ ल
घुवर्ण० ॥
रवण . । पु० उष्ट्रे ॥ कोकिले ॥ खरे
॥ न० कांस्ये ॥ रवे ॥ त्रि० शब्द-
ने । तीक्ष्णे ॥ भण्डके ॥ चञ्चले ॥
रौति० तच्छील : । रु० । चलन
शब्दार्थादकर्मकाद्युच् । सुयुरुवणो
र्युजितियुज्वा ॥
रवथ । पुं० कोकिले ॥ रौति ।

रु॰ शीङ्शपिरुगमीत्यादिनाऽयप्र
त्यय ॥

रवि । पु॰ सूर्ये । आदित्ये । दिवा
करे ॥ रसान्‌आदत्ते॰ इतिरवि
। अत्ररसशब्दसलोप कौत्यत्वादा
नमर्थं । वीगत्यादाविति धातो॰र्नी
तिरूपम्॰ पृषोदरादित्वात्साधु
त्वम् । पृषोदरादित्वकल्पनामूल
न्तुविष्णुधर्मोत्तरवचनम् । तद्य
था । रसानाञ्चतथादानाद्रविरित्य
भिधीयतेइति ॥ प्रकाशानामध्येर
विर्विष्णोर्विभूति ॥ रूयते॰रुयते।
रुशब्दे । अचइ. ॥

रविकान्त । पुं॰ सूर्यकान्तमणौ ॥

रविचक्रम् । न॰ नराकारसूर्यचक्रवि
शेषे ॥

रविज : । पुं॰ शनैश्चरे ॥

रवितनय । पुं॰ सावर्णिकेमनौ ॥
शनौ ॥ यमे ॥

रविनन्दन । पु॰ सुग्रीवाख्यवानरे
॥ वैवस्वतमनौ ॥ सावर्णिमनौ ॥
शनौ ॥ यमे ॥

रविनामम् । न॰ बन्धुजीवके ॥
पद्मे ॥

रविपत्र । पुं॰ आदित्यपत्रक्षुपे ॥

रविपार्श्वग : । पुं॰ चण्डांशो पा
र्श्वकेषु ॥ तेयथा । माठर . पिङ्ग
लोदण्डश्चचण्डांशो . पारिपार्श्विक -
यो । अपिच । बाहु : शैष । खर
पद्मोद्वारवीशानुकारका । पिगौ
गजश्चपुरुष प्राग्रयातप्रतापकौ ॥
आश्विनेयौतथादण्डीकुल्माष पा
र्श्वगारवे : ॥

रविप्रिय । पुं॰ आदित्यपत्रे ॥ र-
क्तकरवीरे ॥ लकुचे ॥ न॰ ताम्रे
॥ रक्तकमले ॥

रविप्रीता । स्त्री॰ सुवर्चलायाम ॥

रविरत्नकम् । न॰ माणिक्ये ॥

रविलोचन । पुं॰ विष्णौ ॥ रविर्लो
चनमस्यविराडात्मनइतिरविलोच
न ॥

रविलोहम् । न॰ ताम्रे ॥

रविसञ्ज्ञकम् । न॰ ताम्रे ॥

रविसुत । पु॰ सुग्रीवे ॥

रविसूनु । पुं॰ शनौ ।

रवीन्दम् । न॰ पद्मे ।।

रवीषु । पुं॰ कामे ॥

रशना । स्त्री॰ काञ्च्याम् । कटिभूषणे
॥ अश्नुते । अशूङ्व्याप्तौसङ्घा
तेच । अशभोजनेवा । अश्निरशचेति
युन्॰ धातोरशादेश : ।। यद्वा ।
रशति । रशशब्देसौत्र: । बहुलम
न्यत्रापीतियुच् ॥ जिह्वायाम् ।

रश्मि । पुं । दीधितौ ।। पक्ष्मणि ।
नेत्रपत्रे ॥ अश्वरज्जौ । प्रग्रहे ।
रश्नाइयुक्ता।अश्नादीनांसंयमनरज्जौ
। अश्नुतेनेनवा । अशू॰ । अश्नोति
रशमेतिमि . ॥ सूर्यस्यरश्मिना

जलादानादानेयथा । तेजोभिः सर्वलोकेभ्योह्यादत्तेरश्मिभिर्जलम् । समुद्रादायुसयोगाद्वहन्त्यापोगभस्तय ॥ ततस्तुपयसाकालेपरिवर्त्तनृदिवाकर । नियच्छत्यपोमेघेभ्य : शुक्लाशुक्लैस्तुरश्मिभिरिति ॥ अमयादयः । तासांशतानिचत्वारिरश्मीनांवृष्टिसर्जने । शतत्रयहिमोत्सर्गेताव दृगभर्स्यसर्जने ॥ आनन्दास्त्वहिमेध्यास्तनूतना पूतनाइति । चतुशतवृष्टिवाहास्ता सर्वाअमृताख्य इति ॥

रश्मिपति । पुं० आदित्यपत्रचुपे ॥

रस । पुं० गन्धरसे ॥ जले ॥ विषे ॥ वीर्ये ॥ द्रवे ॥ रोगे ॥ स्वादे ॥ रसनाग्राह्येगुणे ॥ सचकालसत्त्वायभूमिवियदनिलानलससर्गेणपरिणामान्तरगत . षड्विधोभवति । तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुर ' १ । तोयाग्निगुणबाहुल्यादम्ल . २ । पृथिव्यग्निगुणबाहुल्याल्लवण . ३ । वाय्वग्निगुणबाहुल्यात्कटुक ४ । वाय्वाकाशगुणबाहुल्यात्तिक्त : ५ । पृथिव्यनिलगुणबाहुल्यात्कषाय . ६ । आपोरसानामाधारकारणम् • चैतेषाम्पोनाम । अपांपृथिव्यामनुप्रवेशात्पृथिव्याधारकारणमेव । तेनजलक्षितीअपितदाधारतयारसानामभिव्यक्तौकारणे ।



अभिव्यक्तिश्चमधुरादिरूपमन्तरेणासत्त्वात् • मधुरादिविशेषेपिजलक्षिती कारणे । अग्न्यादयस्तुत्रयोनीरसतयामधुरादिविशेषप्राधान्येननिमित्तकारणम् । तद्व्यतिरेकेणाम्लादिरसाभावात् । रसाभिव्यक्तेश्च • अग्न्यादिभूतत्रयसन्निधानविनानुपलब्धेरभिव्यक्तावपि • अग्न्यादीनांकारणत्वम् । अत्राहमाधवाचार्य्यः । कफवातौवातकफौवात . पित्तस्ववृद्धिशमौ । त्रिभिराद्यैस्त्रिभिरन्त्यैस्त्रिभिराद्यपरैस्तदन्त्येश्च १ ॥ अन्त्याद्यावाद्यमाद्यान्त्यावन्त्यंकोपशममलम् । मध्यमध्येतरौमध्यंप्रयोगानूनयतस्त्रिकौ ॥ २ ॥ आद्यमध्यंनयन्त्यन्त्यंमधुराद्या शमेतरौ । आद्य मध्यान्त्यमाद्यश्चमध्यमान्तिममन्तिमम् ॥ ३ ॥ आद्यंमध्यश्चमध्यान्त्यमाद्यमध्यान्तिमक्रमात् । आद्यंदोषरसा . प्राय : प्रयोगपरिशीलिता इति ॥ ४ ॥ मधुराम्ललवणकटुतिक्तकषाया षड्रसाः । तत्रत्रिभिराद्यैर्मधुराम्ललवणै. कफवातौ यथाक्रमम्वृद्धिशमौयात : । यातइत्यर्थ. । कर्मेहविंयातिवात:शमयातीत्यर्थ. । वातइतिवागतिगन्धनयो रित्यस्यधातोरूपम ' वातइतिसर्वत्रसम्बध्यते । अन्त्यैस्त्रिभि ' कटुतिक्तकषायै : वातकफौवृद्धिशमौ

वात . वातोद्धि वातिकफ ' शम
यातीत्यर्थं ॥ आद्यपरैस्तदन्यै रेवपि
त्तव्रुद्धि वातिमर्थवशाद्वचनविपरि
णाम.। आद्यैामधुर. तस्मात्परैरम्ल
लवणकटुकैस्त्रिभि पित्तवृद्धियाति
दन्यैस्तैभ्योन्यैर्मधुरतिक्तकषायै शम
याति। केचित्तु तदन्यैरित्यं सम्पठित्वा
सचन्यैरेवेतिविग्रहकृत्वासमधुर अ
न्यौतिक्तकषायौतैर्मधुरतिक्तकषा
यैरितिव्याख्यानयति॥ पिण्डार्थस्तु॰
कफवातौ॰ वातकफौ॰ त्रिभिराद्यै
स्त्रिभिरन्यैश्चयथासङ्ख्य व्रद्धिशमौ
वात । पित्तञ्चत्रिभिराद्यपरैस्तद
न्यैर्वृद्धिशमौवातौल्वेकोर्थं . ॥ १
अन्त्येति । अन्त्यास्त्रिक : कटुतिक्त
कषायाख्य .। चयाणांसङ्घ त्रि
क । आद्यस्त्रिकोमधुराम्ललवणा
ख्य :। एतौद्वौत्रिकौ॰ आद्य मल
वातंकोपशमौनयत:। मध्यमध्येत
रौत्रिकौमध्यस्चमध्यौचविद्यन्तेयस्मि
न्नसौमध्य इतरश्चतौत्रिकौ॰ मधु
राम्ललवणा. आद्यस्त्रिक .॰ तत्रम
ध्योऽम्ल. प्रथमातिरिक्तोकारणाऽभा
वात्स्वादम्ललवणकटुतिक्तकषाये
षुषट्सुमध्यौलवणकटूसमध्यत्रि
क . इतरोऽस्मादन्योमधुरतिक्तक
षायाख्य :॰ एतौमध्यवातपित्तक
फेषुपित्ताख्यंक्रमेणकोपशमौनयत.
।अन्त्य कफमाद्यान्त्यौ॰ आद्यस्त्रिको



मधुराम्ललवणाख्य । अन्त्यस्त्रि
क कटुतिक्तकषायाख्य क्रमे
णकोपशमौनयत ॥ २ ॥ (+)
मधुराद्या षड्रसा प्रयोगेणभ-
चणादिनापरिशीलिताअभ्यस्ता .
क्रमेणआद्यमध्यमन्त्यमित्याद्दीन्प्रा
योबाहुल्येन॰ शमेतरौशमप्रशमभि
तरकोप तेनयन्तिप्रापयन्ति । तत्र
मधुरआद्यमध्यम आद्यस्चमध्यश्चेति-
द्वन्द्वैकवत् । आद्यवायुम मध्य-
पित्त शम नयति । अन्त्यं भवमन्त्य
कफकोप नयति ॥ अम्ल ' आद्य
वायुशमनयतिमध्यान्त्यम पित्तक
फौकोप नयति ॥ लवण . आद्य
वायुशमं नयतिमध्यमान्तिम पित्त
कफौकोप नयति॥कटुरन्तिम कफ
शम नयतिआद्यमध्यञ्चवातपित्तौ
कोप नयति । तिक्त मध्यान्त्यं-
पित्तकफौशम नयतिआद्यवायुंको
पंनयति ॥ कषाय . मध्यान्तिमं-
पित्तकफौशम नयतिआद्यवायुंको
पंनयति प्रायइतिव्यभिचारात् ।
यथामधुरशीतापिजीवन्तीकफ शम
यति । मधुरोरसोवायुंकोपयति ।
एवकटुकोपिरसोनैवायुशमनय-
ति । एवमम्लादिष्वपिक्वचिद्व्यभि
चार .॥ ३ ॥ ४ ॥ तदुक्तंचरके ।
रसनार्थोरसस्तस्यद्रव्यमाप ' क्षिति
स्तथा ' निर्वृत्तौचविशेषेचप्रत्यया '

स्वादयस्तथ : ॥ एतैचरसा . परस्प
रसंयोगात्सप्तपञ्चाशङ्कवन्तीतिचक्र
पाणिदत्त ॥ अपिच । स्वाद्दम्ल
वणास्तिक्त . कटुकश्चकषायक ।
अमीतुषङ्रसा ख्याता : निर्वलो
त्पर पर ॥ न्यायमतेतु । रस
स्तुरसनाग्राह्योमधुरादिरनेकधा ।
सहकारीरसज्ञायानित्यत्त्वादिचपू
र्ववत् ॥ सहकारीति॰रासनज्ञानेर
सकारणमित्यर्थ । पूर्ववदिति ।
जलपरमाणोरसोनित्य . अन्य .
सर्वोपिरसोऽनित्यइत्यर्थ ' ॥ शृङ्गा
रादौ ॥ तेयथा । शृङ्गारहास्यकरु-
णारौद्रवीरभयानका . । वीभत्सा
द्भुतसञ्ज्ञौचेत्यष्टौनाट्येरसा स्मृ
ता ॥ अयब्दात्॰शान्तोपिनवम प्रो
क्तोवात्सल्य दशम 'स्मृत ।अष्टावि
त्युप्रसिद्धत्त्वादित्यग्रन्यत्रविस्तर ॥
देहस्थधातुप्रभेदे । रसिकायाम् ।
स्वेदमातरि । चर्मसारे । रक्तसारे
॥ भुक्तस्यपक्वस्यसारभूतोयोद्रव .
सरस . सोपिपच्यते । इतिभिष
ज ॥ अथस्वरूपमाह . । यथा
। सम्यक्पक्वस्यभुक्तस्यसारोनिगदि
तोरस . । सतुद्रव : सित : शीत'
स्वादु . स्निग्धश्चलोभवेत् ॥ तस्य
स्थानमाह । सर्वदेहचरश्चापिरस
श्चहृदयंस्थलम् । समानमरुता
पूर्वंयदय इदयैधृत ' ॥ तस्यकर्मा

ण्याह । आद्यश्चधमनीर्गत्वाधातून्
सर्वानय रस । पुष्णातितदनुली
यैर्व्याप्नोतिचतनु गुणै ॥ गुणै
शीतस्निग्धपोषकत्वै ॥ मन्दवह्नि
विदग्धस्तुकटुर्वाम्लोभवेद्रस ।
सकुर्याद्विविधान्रोगान्विषकृत्य क
रोत्यपि ॥ पारदे॥ रसायनार्थिभि
र्लोकै पारदोरस्यतेयत । ततो
रसइतिप्रोक्त . सचधातुरपिस्मृत
॥ रागे ॥ तृष्णायाम् ॥ क्षुद्रसुख
रागे॥ सविकल्पकानन्दे ॥ रसय
ति॰आस्वाद्यते । रसआस्वादने ।
धुरादिरदन्त । एरच् ॥ रस्यते॰
आस्वाद्यतेऽनेनवा । कर्मणिघञ्
। अर्शआद्यच्चानित्वात्नवृद्धि ॥
अपांसारोरसइत्यन्यत्र ॥ षष्ठाई ॥
लघ्वादिचिकली ॰ । ऽ ॥ मात्रामा
त्रे ॥ न॰ बोली ॥

रसक । पु॰ निष्क्राथमासे ॥ न॰
खर्परीतुत्थे ॥ येगुणास्तुत्थकेप्रोक्ता
स्ते गुणारसकेस्मृता ॥

रसकर्पूर । पु॰ न॰ कर्पूररसे ।
रसकपूर इतिख्याते ॥

रसकेशरम् । न॰ कर्पूरे । सिता
भ्रे ॥

रसगन्ध . । पुं॰ गन्धरसे । बोलै ॥
गन्धवान् रसोऽस्य । राजदन्ता
दि ॥

रसगन्धक । पुं॰ गन्धरसे । बोले

॥ स्न र्थे कप्रत्ययः ॥ गन्धके ॥

रसगर्भम् । न० रसाञ्जने । रसोग र्भोऽस्य ॥ हिङ्गुले ॥

रसघ्न । पु० टङ्कणे ॥

रसजम् । न० रक्ते ॥ रसाञ्जने ॥ मद्यकीटे ॥ गुडे ॥

रसज्ञ । त्रि० रसिके ॥ रसं जाना ति । ज्ञा० । आतोनुपेतिकः ॥

रसज्ञा । स्त्री० जिह्वायाम् ॥ टाप् ॥

रसज्येष्ठ । पुं० मधुररसे ॥ रसज्ञा नामिष्ट ॥

रसज्येष्ठ । पु० मधुररसे ॥ शृङ्गार रसे ॥

रसत् । त्रि० गर्जति ॥ रसति । रस- शब्दे । लट् . शतृ ॥

रसतेजः । न० रक्ते ॥

रसशब्दः । पुं० सशब्दमेघे ॥

रसदालिका । स्त्री० पुण्ड्रकेक्षौ ॥

रसद्रावी । पुं० मधुरजम्बीरे ॥

रसधातुः । पुं० पारदे ॥

रसधेनुः । स्त्री० दानार्थेक्षुरसनिर्मि तधेनौ ॥

रसनम् । न० स्वदने । स्वादे ॥ ध्वनौ ॥ रसग्रहणस्येन्द्रिये । जिह्वाया- म् ॥

रसना । स्त्री० रास्नायाम् ॥ काञ्च्या म् ॥ रज्जौ ॥ गन्धालिकायाम् ॥ जिह्वायाम् ॥ अस्याः शुभाशुभल- क्षणं यथा । कृष्णाजिह्वाभवेद्य स्यसमलायदिवाभवेत् । नष्टापवान् भवेन्मर्त्यःस्थास्थूलायथाभवेत् ॥ श्वेतजिह्वानरा ह्या शौचा- चारविवर्जिता । पद्मपत्रसमाजि ह्वासूक्ष्मादीर्घासुशोभना ॥ नस्थू- लानातिविस्तीर्णायेषांतेमनुजाधि पाः । निम्नदीर्घाचक्रस्वाचरक्ता- यारसनायदि ॥ सर्वविद्याप्रवक्ता सौभवेन्नास्त्यत्रसंशय . ॥ रसयति । रसआस्वादने । नन्द्यादित्वाल्- ल्यु ॥ रसयन्त्यनया । अन्यासम- न्येतियुञ्चा ॥ रसति । रसशब्दे । बहुलमन्यत्रापीतिवायुच् ॥

रसनाथ । पुं० पारदे ॥

रसनायक । पुं० शिवे ॥

रसनालिट् । पुं० कुक्कुरे ॥

रसनेत्रिका । स्त्री० मन . शिलाया- म् ॥

रसपाचकः । पुं० गुडे ॥

रसफल . । पु० नारिकेलवृक्षे ॥

रसभवम् । न० रक्ते ॥

रसमर्दनम् । न० पारदचूर्णीकरणे ॥

रसमान . । त्रि० कूजनशीले ॥ रस- ते : परस्मैपदित्वात् . ताच्छील्यव- योवचनशक्तिषुचानश्प्रत्ययेनशा- नच् ॥

रसमारणम् । न० पारदस्यमारणे ॥

रसमूर्च्छनम् । न० पारदस्यमूर्छाक- रणे ॥

रसराजः । पुं॰ पारदे ॥ रसाञ्जने ॥
रसवान् । त्रि॰ सरसे ॥
रसवती । स्त्री॰ पाकस्थाने । महान-
से ॥ रसा सन्त्यस्याम् । रसादि-
भ्यश्चेतिमतुप् । उगितश्चेतिङीप् ॥
रसलेहः । पु॰ पारदे ॥
रसविक्रयी । त्रि॰ दुग्धादिरसविक्रे
तरि ॥
रसवित्तृ । त्रि॰ रसज्ञे ॥
रसशेष । पुं॰ अपक्करसे ॥ भुक्तस्याप
क्वस्यसारभूतोयोद्रवः सरस । स
चापक्व सरसशेषइत्युच्यते ॥
रसशोधनम् । न॰ टङ्कणे ॥ पारदशु
द्धौ ॥
रससिन्दूरम् । न॰ सिन्दूररसाख्यौ
षधे ॥
रसस्थानम् । न॰ हिङ्गुले ॥ हृदये ॥
रसा । स्त्री॰ रसनायाम् । रास्नायाम्
॥ पाठायाम् ॥ शल्लक्यामोषधौ ॥
कङ्ग्वाम् ॥ भूमौ ॥ द्राक्षायाम्
॥ काकोल्याम् ॥ रसोऽस्यामस्ति ।
अर्शआद्यच् ॥ रस्यतेवारसआस्वा
दनेचुरादावदन्त । घञ्॰अज्वा ॥
रसाखनः । पुं॰ कुक्कुटे ॥
रसाग्रजम् । न॰ रसाञ्जने ॥
रसाञ्जनम् । न॰ रसजाताञ्जनविशेषे ।
रसगर्भे । तार्क्ष्यशैले । रसवत्॰र
सौत इतिभाषा ॥ रीत्यान्तुध्माय
मानायांतत्किट्टन्तुरसाञ्जनम् ।
तद्वत्‌तैतुकसंव्यदार्वीक्वाथसमुद्भव
म् इतिराजनिघण्ट । अन्यच
। दार्वीक्वाथसमक्षीरपाकनोत्थाय
थाघनम् । तदारसाञ्जनाख्यं तन्नेत्र
योः परमहितम् ॥ रसाञ्जन ता
र्क्ष्यशैलरसगर्भस्तुताक्ष्यजम् । रसा
ञ्जनकटुश्लेष्मविषनेत्रविकारनुत् ॥
उष्णरसाञ्जनतिक्तछेदनव्रणदोषहृत्
। इति ॥ रसयुक्तमञ्जनम् । शाक
पार्थिवादि ॥
रसाढ्यः । पुं॰ आम्रातके ॥ त्रि॰ स
रसे ॥
रसातलम् । न॰ पाताले ॥ रसायाभु
वस्तलमधः ॥
रसात्मकः । त्रि॰ रसस्वभावे ॥ रस
आत्मायस्य ॥
रसादानम् । न॰ शोषणे ॥ रसा
नामादानम् ॥ भूमिदाने ॥
रसाधारः । पु॰ सूर्ये ॥ रसस्याधारः ॥
रसाधिकः । पु॰ टङ्कणे ॥ अधिक
रसे ॥
रसाधिका । स्त्री॰ काकोलीद्राक्षाया
म् ॥
रसाभासः । पु॰ अनौचित्यादिप्रवृत्त
रसे ॥
रसाम्ल । पु॰ अम्लवेतसे ॥ न॰ वृ
क्षाम्ले ॥ चुक्रे ॥
रसायकः । पुं॰ तृणविशेषे ॥
रसायनम् । न॰ जराव्याधिजिदौषधे ॥

॥ नसूतेर्विनाकान्तकान्तं नवि मारस. । सूतकान्तसमायोगाद्रसायनमुदीरितमितिराजनिर्घण्ट. ॥ भावप्रकाशेतल्लक्षणादिर्यथा । यज्जराव्याधिविध्वंसि वयसस्तम्भकंतथा । चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥ दीर्घमायु स्मृतिं मेधामारोग्यंतरुणं वयः । देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् ॥ विशेषस्तु भावप्रकाशादिषु द्रष्टव्य: ॥ विषे ॥ काटौ ॥ तक्रे ॥ पुं॰ पक्षिराजे । गरुडे ॥ विडङ्गे ॥

रसायनफला । स्त्री॰ हरीतक्याम् ॥ रसायनानि फलान्यस्याः ॥

रसायनश्रेष्ठ । पुं॰ पारदे ॥

रसायनी । स्त्री मञ्जिष्ठायाम् ॥ गुडूच्याम् काकमाच्याम् ॥ महाकरञ्जे ॥ गोरक्षदुग्धायाम् ॥ मांसच्छदायाम् ॥

रसाल: । पुं॰ आम्रे ॥ इक्षौ ॥ रसमलति । अल॰ । कर्मण्यण् ॥ यद्वा । रसेनालति॰ अल्यतेवा॰ पर्याप्तेः॰ पूरयतिवा । अजेरव॰घञ् वा ॥ पनसे ॥ कुन्दरुष्के ॥ गोधूमे ॥ पुण्ड्रकनामेक्षौ । म॰वे॰ लि ॥ सिह्लके ।

रसालवट । पुं॰ यक्षपुर्यांवटवृक्षविशेषस्थाने ॥

रसालसा । स्त्री॰ नाड्यां ।

रसाला । स्त्री॰ रसनायाम् जिह्वायाम् ॥ दूर्वायाम् ॥ विदार्याम् द्राक्षायाम् ॥ शिखरिणीतिप्रसिद्धायाम् । मार्जितायाम् । अस्या करणप्रकारोयथा । माहिषमम्लमम्बुरहितंदध्याढकंशर्कराशुभ्रा प्रस्थयुगोन्मितांशुचिपटे किञ्चित्किञ्चित्क्षिपेत् । दुग्धेनार्द्धघनेनसम्यगनवस्थाल्यांदृढस्रावयेदेलावीजलवङ्गचन्द्रमरिचैर्योग्यैस्तद्योजयेत् ॥ भीमेनप्रियभोजनेनरचितानाम्ना रसालास्वयंश्रीकृष्णेनपुरापुनःपुनररियप्रीत्यासमास्वादिता । एषायेनवसन्तवर्जितदिने सेव्यते नित्यशस्तस्यस्यादतिवीर्यवृद्धिरनिशं सर्वेन्द्रियाणांबलम् ॥ ग्रीष्मे तथा शरदि येरविशोषिताङ्गायेचप्रमत्तवनितासुरतातिखिन्ना: । येचापिमार्गपरिखिन्नशरीरगात्रास्तेषामियं वपुषि पोषणमाशुकुर्यात् ॥ रसालाशुक्रलावल्या रोचनीवातपित्तजित् । दीपनीबृंहणीस्निग्धामधुराशिशिरासरा ॥ रक्तपित्ततृषादाहप्रतिश्यायंविनाशयेदिति ॥ अपिच । अर्द्धाढकंसुचिरपर्युषितस्यदध्न: खण्डस्यषोडशपलानिशशिप्रभस्य । सर्पि:पलंमधुपलंमरिचंद्विकर्षं शुण्ठ्या: पलार्द्धमपिचार्द्धपलंचतुर्णाम् ॥ सूक्ष्मे पटेललनया मृदुपाणिघृ

ष्टाकपूरव्रूलिसुरभीकृतपाचसस्था
प्रशान्तकोदरकृतासरसारसालाया
स्वादिताभगवतामधुसूदनेनेति ॥

रसान् लालाति । ला० । मूलविभु
जादित्वात्क । टाप् ॥

रसालिहा । स्त्री० शीर्णनालायाम् ।
पृथक्पर्य्याम् । चाकुलिया० इ०
गौ० दे० भाषा ॥

रसाली । स्त्री० पुण्ड्रकेक्षौ ॥

रसाश्वासा । स्त्री० पलाशीलतायाम् ॥

रसास्वाद । पु० अखण्डस्वत्वसम्ब
न्धेनापिचित्तवृत्ते सविकल्पका
नन्दास्वादने । धन्योऽहमित्याद्यान
न्दाकारवृत्तौ ॥

रसास्वादी । पु० भ्रमरे ॥ त्रि० रसा
स्वादविशिष्टे ॥ रसानामास्वादी ॥

रसाढ्य । पुं० सरलद्रुमरसे ॥

रसिक । पु० सारसखगे ॥ तुरगे ॥
हस्तिनि ॥ त्रि० सरसे । रसज्ञे ।
रसिया० इ० भा० रसोऽस्यास्मि
न्वाठन् ॥

रसिका । स्त्री० रसालायाम् ॥ इक्षुर
से ॥ कटिसूत्रे । काञ्च्याम् ॥
रसनायाम् ॥ रागवत्याम् । रसी
ली० इ० भा० ॥ टाप् ॥

रसिकेश्वर । पुं० श्रीकृष्णे ॥ वृन्दा
वनान्तरे रम्ये रासोत्सवसमुत्सुकम्
। रासमण्डलमध्यस्थं नमामि रसि
केश्वरम् ॥

रसिकेश्वरी । स्त्री० श्रीराधिकाया
म् ॥

रसितम् । न० कृते ॥ स्तनिते । मेघ
निर्घोषे ॥ त्रि० स्वर्णादिखचिते ।
सुवर्णादिलिप्ते ॥ रसशब्दे । भावे
क्त ॥

रसितवान् । त्रि० आस्वादितवति ॥
रस आस्वादने । क्तवतुप्रत्ययः ॥
उगितश्चेति ङीपि० रसितवती ॥

रसुन । पु० कन्दविशेषे । लशुने ॥

रसेन्द्र । पुं० पारदे । रसानामिन्द्रः ॥

रसोत्तम । पु० मुद्गे । श्रेष्ठरसे ॥
त्रि० तद्वति ॥

रसोद्भवम् । न० हिङ्गुले ॥ त्रि० रस
जाते ॥

रसोन । पुं० लशुने । रसोनके ॥
रस आस्वादने० चुरादिरदन्तः ।
जन्यते । पातकहेतुत्वात् । जन
परिहाणे । चुरा० अदन्तः । घुर
च । घञ् वा ॥ लशुनस्तु रसोनः
स्यादुग्रगन्धो महौषधम् अरिष्टो
म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥
अस्योत्पत्तिर्यथा । यदामृतं वैनतेयो
जहार सुरसत्तमात् तदा ततो
ऽपतद्बिन्दुः स रसोनोऽभवद्भुवि ॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जि
तः । तस्माद्रसोन इत्युक्तो द्रव्या
णां गुणवेदिभिः ॥ कटुकश्चापि मू
लेषु तिक्तः पत्रेषु संस्थितः ।

न.लंकषायउद्दिष्टोनालाग्रेलवण स्मृत ॥ बीजेतु . . र प्रोक्तोर सस्तज्ज्ञ्यावेद्भिः ॥ तस्मभवगगु णाः । रसोनोवृष्णोष्ण स्निग्धो ण्य ' पाचन सर ' । रसेप्राबीचक टु कसीक्ष्णोमधुरकोमत : ॥ भग्न सन्धानकृत्कण्ठ्यागुरु पित्तास्र वृद्धिद । बलवर्णकरोमेधाहितोने त्र्योरसायन ॥ हृद्रोगजीर्णज्वरकु क्षिशूलविबन्धगुल्मारुचिकासशोफा न् । दुर्नामकुष्ठानलसादजन्तुसमी रणश्वासकफाश्चहन्ति । मद्यंमां मतथाम्ल्मम्हितलशुनसेवितम् । व्यायाममातपरोषमतिनीरपयोगु डम् । रसोनमश्नन्पुरुषस्त्यजेदेत न्निरन्तर ' ।

रसोनक । पुं० रसोने । स्वार्थेकन् ॥

रसोपलम् । न० मौक्तिके ॥

रसौदनम् । न० पुं० मासरसेनसिक्तओ दने । रसोदनोगुरुर्बृष्योबल्योवा तज्वरापह ' ॥

रस्नम् । न० द्रव्ये ॥ रस्यते॰आस्वाद्य ते , रस॰ । रुचिशुचिरसिभ्य: कि दितिन : ॥

रस्यम् । न० रक्ते । त्रि० आस्वाद्ये । मधुररसप्रधाने ॥

रस्या । स्त्री० पाठायाम ॥ रास्ना- याम् ॥

रह : । अ० विजने । विविक्ते ॥ रह्य ते । रहिरसुन् ॥ रमन्तेऽत्रवा , र- मेर्हंशेहचेत्यसुन्॰हीन्मादेशश्च ॥

रह । न० तत्त्वे ॥ रतौ ॥ गुह्ये ॥ र ह्यते । रहत्यागे । असुन् ॥ यद्वा । रमन्तेऽत्र । रमेर्हंशेहचेत्यसुन्हा- न्मादेशश्च ॥

रहस्यम् । त्रि० अभिप्राये । उपनिष- दि ॥ उपासने ॥ अतिगोप्ये ॥ गो पनोयत्व सर्वत्रसमानम् ॥ रहस्यरो मस्यर्शनिषिधायथा । नसपंशस्य्रे श्रोर्ष्टं तस्यानिखानिचनस्पृशेत् । रोमाणिचरहस्यानिनाशिष्टेनसहा व्रजेत् ॥ स्तु० रहोभवम् दिगादि त्वायत् ॥

रहस्या । स्त्री० सरिद्विशेषे ॥ पाठा याम् ॥ रास्नायाम् ॥ टाप् ॥

रहित : । त्रि० वर्जिते ॥

रहूगण ' । पुं० पुराणप्रसिद्धेसिन्धुसौ वीरदेशयो॰र्नृपतिविशेषे ॥

रा । स्त्री० दाने ॥ आदाने ॥ विभवे ॥

राका । स्त्री० पूर्णेन्दुपूर्णिमायाम् ॥ न दीविशेषे ॥ कच्छरोगे ॥ नवजात- रज : स्त्रियाम् ॥ रातिशुभम् । रा दाने । कृदाधाराचिंकलिभ्य . क- कृत्योणादिक : कप्रत्यय : । बाहु लकाद्गुणात्संज्ञा । संज्ञापूर्वक- विधेरनित्यत्वात्कोपधातिह्रस्वोन ॥

राकिनी । स्त्री० दुर्गायाअनुचरीविशे षे ॥

राक्षस । पुं॰ कौणपे । क्रव्यादे । आशरे । रात्रिचरे । यातुधाने ॥ रक्षन्त्यस्मात् । रक्षपालने । असुन् । प्रज्ञाद्यण्॰ राक्षसः । स्वार्थिका . प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तइतिपुंस्त्वम् ॥ विवाहविशेषे । यथा । हत्वाच्छित्वाचभित्वाचक्रोशन्तींरुदतीगृहात् । प्रसह्यकन्याहरणराक्षसोविधिरुच्यते ॥ रक्षसइवायम् । अण् । षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ यथा । कोद्रवाः शालिमुद्गाश्चपीड्यन्तेबरवर्षिणि । सर्वौषधानिधान्यानिराक्षसेनिश्चरा प्रजा ॥

राक्षसिका । स्त्री॰ राक्षसीसङ्क्रान्तौ ॥

राक्षसी । स्त्री॰ चण्डायाम् । धनहर्यामौषधौ ॥ कौणप्याम् । राक्षसस्त्रियाम् । दंष्ट्रायाम् । डाढ दाढ॰ इ॰ भा॰ ॥ सायाह्नवेलायाम् ॥ सूर्यसङ्क्रान्तिविशेषे ॥ यथा । शनौ तोष्णमर्त्ये भवेद्राक्षसीसासुखायान्त्यजानांतदामासमेकम् ॥ तामस्याप्रकृतौ ॥ अविहितहिंसाहेतुद्वेषप्रधानाराक्षसीप्रकृतिः । वैदिकनिषेधातिक्रमेणस्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूतातामसी हिंसाप्राधान्येनद्वेषप्राबल्याद्राक्षसीत्वमस्याः ॥ रक्षसइयम् । तस्येदमित्यण् । ङीप् ॥

राक्षसेन्द्र । पुं॰ रावणे ॥

राक्षा । स्त्री॰ लाक्षायाम् । रक्ष्यतेऽनया । रक्ष॰ । गुरोश्चहलइत्य । प्रज्ञाद्यण् । अजादित्वाट्टाप ॥

राग । पुं॰ मात्सर्ये ॥ लोहितादिषु ॥ जपाकुसुमादिद्रव्ये ॥ क्रोधादौ ॥ अनुरागे । परस्परप्रीतौ । स्नेहे ॥ तल्लक्षणं यथा । सुखमप्यधिकं चित्तेसुखत्वेनैवरज्यते । यतस्तुप्रणयोत्कर्षात् सरागइतिकीर्त्यते ॥ इति ॥ सुखानुशयिनि । साधनरहितस्यापि॰ सर्वसुखजातीयमेभूयादितिविपर्ययविशेषे । महामोहे ॥ मोहादनुभूयमानसुखमनुशेतेकश्चिच्चित्तवृत्तिविशेषोरागः । सर्वसुखजातीयमेभूयादिति । तच्चदृष्टादृष्टसामग्र्यभावात्सम्पादयितुमशक्यम्॰ अतः सचित्तं कलुषीकरोति । यदातु॰सुखिषुप्राणिष्वयमैत्रीभावयेत्॰ सर्वेप्येतेसुखिनोमदीयाइति॰ तदातत्सुखंस्वकीयमेवसम्पन्नमितिभावयतस्तत्र रागोनिवर्त्तते । यथास्वस्यराज्यनिवृत्तावपिपुत्रादिराज्यमेवस्वकीयराज्यं तद्वत् । निवृत्ते चरागे॰ वर्षाव्यपायेजलमिवचित्तं प्रसीदति ॥ रज्यतेविषयेषुपुरुषोऽनेनेति व्युत्पत्त्या॰ कामे । गर्वे । ततत्फलतृष्णायाम् ॥ प्राप्तोविषयः क्षयकारणं सत्यपिनक्षीयतामित्येवमा

राग :

कारश्चित्तवृत्तिविशेषोरञ्जनात्मारा
ग ॥ सदाकामाभिनिविष्टस्वरूपो
भिष्वङ्गोराग . ॥ शोभनाध्यासनि
बन्धनोविषयेषुरञ्जनात्मकश्चित्तवृ-
त्तिविशेषोऽत्यन्ताभिनिवेशरूपोरा-
ग : ॥ रागोलिङ्गमबोधस्यचित्तव्या
यामभूमिषु । कुत : शाद्वलतातस्य
यस्याग्नि : कोटरेतरो ' ॥ रागाद्
य . सन्तुकाममतङ्गावोपराध्यति ।
उत्खातदंष्ट्रोरगवद्विद्याक्रियारिष्य
तीतिचाचार्य : ॥ सितादीनांवि-
कारविशेषे ॥ यथा । सितामध्वा-
दिमधुरोद्राक्षादाडिमजोरस : ।
विरलश्चेत्तुक्तोरागइति ॥ गान्धा-
रादौ ॥ नृपे ॥ चन्द्रे ॥ सूर्ये ॥ लाक्षा
दौ ॥ रक्तिमत्त्विषि ॥ रञ्जने ॥ गा
नशास्त्रोयरागेषु ॥ यथा । भरतम-
ते॰हनुमन्मतेचराग : षड्विध ' ।
तेषांनामानियथा । भैरव : १ कौ
शिक ' २ हिन्दोल : ३ दीप-
क . ४ श्रीराग : ५ मेघ : । हनु-
मद्भरतयोर्मतेप्रत्येकमेषांपञ्चरागि
ण्य सोमेश्वरकल्लिनाथयोर्मतेप्र-
त्येकमेतेषांषड्रागिण्य : । एतेषांप्र-
त्येकमष्टौपुत्रा : एकैकापुत्रभार्या-
च ॥ कल्लिनाथसोमेश्वरमतेषड्रागा
यथा । श्रीराग ' १ वसन्त : २ पं
चम : ३ भैरव : ४ मेघ : ५ नट
नारायण : ६ । इतिनानासङ्गीत

राग :

शास्त्रम् ॥ अथरागस्यव्युत्पत्तिसङ्
ख्यास्थानानि । येस्तुचेतांसिरञ्ज-
न्तिजगत्त्रितयवर्त्तिनाम् । तेराग
इतिकथ्यन्तेमुनिभिर्भरतादिभि .
॥ गोपीभिर्गीतमारब्धमेकैकंकृष्ण
सन्निधौ । तेनजातानिरागाणांस-
हस्राणितुषोडश ॥ रागेषुतेषुषड्
त्रिंशद्रागाजगतिविश्रुता' ॥ काल
क्रमेणतत्रापिङ्क्षासएवतुदृश्यते ॥
केचिदद्यापितेरागा : सर्वेसन्तीति
निश्चितम ' मेरोरुत्तरत : पू-
र्वपश्चिमेदक्षिणेतथा ॥ समु-
द्रकण्ठेयेदेशास्तत्रामीषांप्रचारणा
। तथाच । अङ्गवङ्गकलिङ्गते
लिङ्गभूलिङ्गद्राविड़सुरङ्गनेपालखिल
कसौवीरकौरवाश्मोरनाभीरनाशी
रसिन्धुजालन्धरमगमगधनिषधम
लयश्रीहयगजाञ्जयमालवजालवम
कमरुचोलोत्कलकुन्तलसिंहलहरि
कोलकेरलकोशलमत्स्यवालमद्रभद्र
सौविदर्भवातकिम्नातगुर्जरातगुर्ज्ज
रकांजरगौड़द्रविड़ोड्रान्तर्वेदिका
पाञ्चालसौराष्ट्रशवरलोहावरव
शकोकशवरूपकामरूपहरिगर्भवि
दर्भदुर्भटवाटकीकटदेवीङ्गनटङ्कन
नाटभोटकवाटकरहाटकर्णाटकुन्ति
कावन्तिककनकाङ्ककान्यकुब्जभोज
काम्बोजतोजतुखारविहारवलिहा
ररागौहविदेहवाह्लीकवर्वरीकाभी

राग .

गत्तानत्तोदिदेशेषु रागा प्रचरन्ती ति ॥ यस्यश्रवणमात्रेणरज्यन्ते स कला : प्रजा : । सर्वांचरञ्जनाद्वेतो स्तेनरागइतिस्मृत ॥ अथरागा : । भाद्रौमालवरागेन्द्रस्ततोमल्लारसंज्ञित : । श्रीरामश्चतत : पश्चाद्दसन्तस्तदनन्तरम् ॥ हिन्दोलश्चाथकर्णाटएतेरागा : षडेवतु । षट्त्रिंशद्रागिणीतत्क्रमश : कथितामया ॥ धानसीमामसीचैवरामकीरीच सिन्धुडा । आशावरीभैरवीचमालवस्यप्रिया इमा : ६ । वेलावलीपूरवीचकानडामाधवीतथा । कोडाकेदारिकाचापिमल्लारदयिता इमा : ६ ॥ गान्धारीशुभगाचैवगौरीकौमारिकातथा । वेलोयारीचवैरागीश्रीरागस्यप्रिया इमा . ॥ ६ ॥ तुडीचपञ्चमीचैवललितापठमञ्जरी । गुर्ज्जरीचविभाषाचवसन्तस्यप्रिया इमा ' ६ ॥ मायूरीदीपिकाचैवदेशकारीचपाहिडा । वराडीमोरहाटीचहिन्दोलस्यप्रिया इमा ६ ॥ नाटिकाचाथभूपालीरामकेलीगडातथा । कामोदाचापिकल्याणीकर्णाटस्यप्रिया इमा ' ६ । ३६ ॥ अथकालनियम : । विभाषाललिताचैवकामोदीपठमजरी । रामकीरीरामकेलीवेलोयारीचगुर्ज्जरी देशकारीचशुभगा पञ्चमीचगडातुडी । भैरवीचाथकौ

राग :

मारीरागिण्योदशपञ्चच ॥ एता ' पूर्वाह्णकालेतुगीयन्ते गायनोत्तमै. । वराडीमायूरीकोडावैरागीचाथधानुषी ॥ वेलावलीमोरहाटीसप्ततारागयोषित : । गेयामध्याह्नकालेतुयथाभरतभाषितम् ॥ गान्धारीदीपिकाचैवकल्याणीपूरवीतथा । कानडाशावरीचैवगौरीकेदारपाहिडा ॥ मायूरीमालसीनाटीभूपालीसिन्धुडातथा । सायाह्नेतास्वरागिण्य : प्रगायन्तिचतुर्द्दश ॥ पुरुषावस्तुभूषाख्यारागास्ते मालवादय । प्रदोषेचापराह्णे चरजन्यागानगोचरा . ॥ दशदण्डात्परराचौसर्वेषागानमीरितम् । मेघमल्लाररागस्यगानवर्षासुसर्वदा ॥ श्रीपञ्चमींसमारभ्ययावज्जन्मोत्सवहरे । तावद्दसन्तरागस्यगानमुक्त मनीषिभि . ॥ शक्रोत्थानसमारभ्ययावद्दुर्गामहोत्सवम् । गीयतेतद्धर्मेनिं ... मालसीसामनोहरा ॥ सर्वेषामिहरागाणारागिणीनाञ्चसर्वश । रङ्गभूमौनृपाज्ञायाकालदोषोनविद्यते ॥ रागस्यालापायेदादौतत्पश्चात्तदनन्तरम् । नान्यपश्चात्प्रगातव्यानृपाज्ञायांनदूषणम् ॥ रागा षडथरागिण्य षट्त्रिंशच्चारुविग्रहा आगताब्रह्मसदनात्ब्रह्माणसमुपासते ॥ अथध्यानम् । नितम्बिनीचु ।

राग

श्वितवक्त्रपद्म शुकद्युति कुण्ड
लवान्प्रमत्त । स्त्रीतशालीप्रविश
न्प्रदेशे मालाधरो मालवरागराज
॥ १ ॥ नीलोत्पलकर्णयुगेवहन्ती
श्यामासुकेशीचसुमध्यभागा । ईष-
त्प्रहासाम्बुजरम्यवक्त्रासाधानसीप-
त्प्रसुचारुनेत्रा ॥ १ ॥ करेयुताया
म्बुजयुग्मरम्याद्भुतस्ततसारुविलोक
यन्ती । कण्ठस्फुरन्मौक्तिकरत्नहा
रासामालसीसङ्घटिताविचित्रा ॥२॥
प्रतप्तचामीकरचारुवक्त्राकर्णा तस
कमलवहन्ती । पौष्प धनु ' पुष्पश
रैर्दधानाचन्द्राननारामकिरीप्रदि-
ष्टा ॥ ३ ॥ महेन्द्रनीलद्युतिर
म्बुजाक्षीप्रवादयन्तीकपिलाशयन्त-
म् । विचित्ररत्नाभरणासुकेशी-
सासिन्धुडाकान्तसमीपसख्या ॥ ४
॥ जवाप्रसूनद्युतिविम्बवक्त्रास
कम्बुपद्म करयोर्दधाना । क्षौमां
शुकाच्छादितगात्रयष्टिराशावरीरङ्ग
कलाविदग्धा ॥ ५ ॥ सरोवरस्था
स्फटिकस्यमन्दिरेसरोरुहै ' शङ्कर
मर्चयन्ती । तालप्रयोगप्रतिरङ्गगी
तैगौरीतनुर्भैरविकास्तीयम् ॥
६ ॥ अथमल्लारः । विहारशीलो
तिसुकान्तिदेहः कान्ताप्रियोधार्मि
कशीलयुक्तः । कामातुर ' पिङ्गल
नेत्रयुग्मोमल्लाररागः प्रियकृत्सु
वेशः ॥ २ ॥ सङ्केतितोत्फुल्लल

राग

तानिकुञ्जेकृतस्थिति कान्तसमा
गमाय । वेलावलीचम्पकमौलिनी
सावालाविचित्राभरणानिरुक्ता ॥
१ ॥ रम्य . सुकान्तस्थितमाथपच
रम्य वहन्तीकुचकुम्भयुग्मे । दूर्वाद
लश्यामतनु सकामापुरातनै
सापुरवीनिरुक्ता ॥ २ ॥ अशोक
वृक्षस्यतलेविषण्णाविद्योगिनीवाष्प
कणाश्रिताङ्गी । विभूषिताङ्गीजटि
लेखवालासाकानडाद्देमलवेषतन्वी
॥ ३ ॥ सङ्ग्यसङ्ग्यगलेदधानाप्र
सूनमालादयितेनवाला । गौरीस्व
कान्ता ननचुम्बितास्यासासुन्दरी
माधविकानिकुञ्जे ॥ ४ ॥ सुकण्ठ
पौवादयतिस्वभर्तुर्गानाथमभ्यस्य
तिसम्मुखेन । सदैवतालाविहि
ताचमाला कोलाकलातानवतीम
तासा ॥ ५ ॥ कान्त्वासमुत्पीर्णव
तीसुदेहाकेशप्रविष्टम्दितवारिबि
न्दु ' । निष्पीडयन्तीतिमिरांशु
कान्तं केदारिकारक्तपयोधरश्री ' ॥
६ ॥ अथश्रीरागः । लीलावतारेण
वनान्तराणिचिन्वन्प्रसूनानिवधूस
हाय । विलासवेशोद्युतिदिव्यमू
र्त्तिः श्रीरागएषप्रथितः पृथिव्या
म् ॥ ३ ॥ सध्यासुकालेगृहमध्यदे
शेप्रवादयन्तीहपिनाकयन्त्रम् । धा
राधराधातुविचित्रिताङ्गीगान्धारि
कागन्धसुजंनिधत्ते ॥ १ ॥ रस

राग

नथामुविचारितकौतुक विदधतीक
विकौविद्कौतुकम् । सुकवितामृ
तभावनतत्परा भगवतोसुभगासमु
द्राहृता ॥ २ ॥ पुष्पोद्यानेसाकंमा
लीकलापैः क्रीडन्नृत्यं वं कोकिला
काकलीषु । रामाश्यामासङ्गता
नाम्नसौमागौरीगौरीगौरवालोक
दृष्टा ॥ ३ ॥ अट्टालिकायांस्फुट
कौमुदीभि प्रकाशितायारजनीवि
हारम् । अङ्कायकान्तेनसम वसन्तौ
कौमारिकाकामकलावहन्ती ॥ ४ ॥
गौरीपादाम्भोजमभ्यर्चयन्तीगन्धोद्धू
त गन्धमाल्यं दधाना । नानारत्नो
पायनैभं क्तिभावैर्लोयारोकथ्य
तेधाल्लिकेयम् ॥ ५ ॥ उल्लासयन्ती
धम्मिल्लरत्नः स्थान् प्राणवल्लभेना ।
मालतीकुसुमस्रग्भिर्वैरागौरागि
णीस्मृता ॥ ६ ॥ अथवसन्त. ।
चूताङ्कुरेर्यो वल्लतावतसौविघूर्ण
मानारुणनेत्रपद्मः । पीताम्बरः
काञ्चनचारुदेहोवसन्तरागोयुवती
प्रियश्च ॥ ४ सुनृत्यमानातिसुशो
भयुक्तामुक्तालताकल्पितहारयष्टि.
। चूताङ्कुरं पाणियुगेवहन्तीजवा
सवाक्तौतुकिकेरितेयम् १ ॥ स
ङ्गीतगोष्ठीषु गरिष्ठभावं समाश्रिता
गायनसम्प्रदायैः । स्वर्वं ङ्गिनीनू
पुरपादपद्मासापञ्चमीपञ्चमवेदवेदी
॥ २ ॥ उरसिकेशचयस्यमुसारं विद

राग.

धतीश्रयनोत्थितचारुवेश्रम् । विलु
लितालकवल्लिकशाङ्गीभासुराललि
ताकथितावुधैः ॥ ३ ॥ सखीक
लापैः परिहास्यमानावियोगिनी
कान्तवियोगदेहा । पीनस्तनोच्चैव
धराप्रमुग्धाश्यामासुकेशीपठमञ्ज
रीयम् ॥ ४ कर्णोत्पलालम्बिमधु
व्रतालोभृशोतिसामञ्जुलकूजिता
नि । कान्तान्तिकगन्तुमना प्रदो
षे सागुर्ज्जरीवेशकलोचिताङ्गी ॥
५ ॥ अध्यापयन्तीनिजशिष्यवृन्द
संगीतशास्त्राणिविवेचनाभि ॥ म
नोहराहारलताभिरामासमस्तभा
षाकुशलाविशेषा ॥ ६ ॥ अथहिन्दो
ल. । हासाभिलासेनपतन्पृथि
व्यामुत्थापितस्तत्चणमालिवृन्दैः
। उल्लोलस गीतरसैविंदग्धोहिन्दो
लरागः कथितोरसज्ञैः ॥ ५ मयूरकं
काश्रवणोल्लसन्तीमयूरिकानृत्यतत
त्किरन्ती । मयूरकांतोवसिति दधा
नामायूरिकासङ्कथितागुणज्ञैः ॥ १ ॥
प्रदोषकालेरहसम्प्रविष्टाप्रदीपक-
स्तारुणगात्रवस्त्रा । सीमन्तसिन्दू-
रविराजमानासुरक्तमालाकिलदी-
पिकेयम् ॥ २ ॥ सार्द्धसखीभिर्वि
जनेवसन्तीविचित्रवस्त्रोजनितप्रस
ङ्गा । निरीक्ष्यमाणानन्दर्पणायाया
सादेशकारीकथितागुणज्ञैः ॥ ३ ॥
भस्मुदधानाचरणारविन्दं निषेधय

राग .

स्नीपरदेशयानम् । प्रकामदाम्पत्य
सुखेनिमग्नासापाहिडासङ्कथिता-
कवीन्द्रै ॥ ४ ॥ कर्णे दधानासुर-
पुष्पयुग्मं स्फुरत्सुवर्णोजमनोहरा-
ङ्गी । स्मेराननाचारुविलोलनेत्रा
वराङ्गनेयकथितावडारी ॥ ५ ॥ उ
त्पन्नमात्रे प्रथमापराधेमानंपुन. क
र्तुंमनास्थिरेण । स्वजुखभावान्नि-
यतरुदन्तीसामोरहाटीहठकेलिरु-
ष्टा । ६ ॥ अथकर्णाट : । कृपाण-
पाणिस्तुरगाधिरूढोमयूरकण्ठाति-
सुकण्ठकान्ति . । स्फुरत्सितश्नि
ग्धरस : प्रशान्त कर्णाटरागोऽव-
रितालवर्णं . ॥ ६ ॥ चिरनटन्ती-
शुभरङ्गमध्येसप्रार्थयन्तीनटिनंवस
न्तम् । सुगीततालेषुकृतावधाना-
नटीषुनाटीपरिधानदेहा ॥ १ ॥
स्वनाग्रकपुष्पलतादिरूढाङ्गसन्मुखो
सर्वमुद्वहन्ती । स्वनानिशम्यवदित
नोतिमुग्धाभूपालिकासास्वलदु
त्तरीया ॥ २ ॥ अध्यापयंतीशुक
सारसारी : श्रीरामरामेतिसुवेशल
क्ष्मी । वामस्तनार्द्धस्खलितांशुक
श्री ' श्रीरामकेलीकथिताकवीन्द्रे '
॥ ३ ॥ विशेषवैदग्ध्यवतीसमस्ता
न्कलाविलासैनविमोहयन्ती । ह
र्षान्नितस्वापरिपुष्टदेहावडाप्रलम्बस्त
नभारभव्या ॥ ४ ॥ भर्तुः सम
पार्श्वसिसन्तरन्तीपयेविश्वदेवसरो

राग :

रुहाणि । विचिन्वतीसौरभमोद
मानाकामोदरागिण्युदिताबुधेन्द्रैः
॥ ५ व्याधूतानटनत्यपरिश्रमेण
वालालीलाभि . मुदतोकृतादरा
। नटीनाकल्याणीकलयतिमनस्ह
सोपणप्रस्थानसुखरिताक्रिङ्कणीक
लापम् ॥ ६ ॥ अथरागरागिणीना
भावनिरूपणम् । मालव . श्रीश्च
हिन्दोलोमल्लारसदनन्तरम् । गाय
न्तिगायकाधीरसानन्देनचतुष्टय-
म् ॥ वसन्तराग कर्णाटोहौचैरौभ
त . क्रमात् ॥ धानसीमालसीचै
वभैरवीमाधवीतथा ॥ सुभगापञ्चमी
नाटीवेलोयारीचगुर्ज्जरी । कामो
दाचापिकल्याणीकोडाकेदारिका
तुडी ॥ कौमारीमायुरीचैवदेशका
रीचसिधुडा । रामकेलीचभूपाली
रागिण्यश्चेतिविंशति : ॥ आनन्दां-
श्चाकृतिप्रोक्तागोयन्तगानकोविदै '
। पूर्वोक्तानडागौरीरामकीरी-
चदोपिका ॥ आशावरीविभाषाच
वडारीचगडातथा । एताश्चनवरा
गिण्योवीराश्रीगानमुत्तमम् ॥ वेला
वलीचगान्धारीललितापठमञ्जरी ।
वैरागिरागिणीचापिमोरहाटीच-
पाहिडा ॥ करुणाशाविज्ञानीया
तुमर्दैतारागोपित : ॥ रागेण
रसभागेनषट्त्रिंशत्रागिणीषु च
। करुणानन्दवीरेषु ज्ञापनार्थंमत

थम् ॥ इतिसंगीतदामोदरेशिव नारदसंवादे १।३ अध्यायौ॥ रञ्जनम्। रञ्ज० भावेघञ्॥ रज्यतेऽनेनेतिवा। अकर्त्तरिचकारकेसञ्ज्ञायामितिघञ्। घञिचभावकरणयो रितिरञ्जे र्नलोप.॥

रागचूर्ण:। पु० दन्तधावने। खदिरे॥ मकरध्वजे। कन्दर्पे॥ लाक्षारसे॥ फल्गुचूर्णे। गुलाल०इ०भा०॥ सिन्दूरे॥

रागच्छन्न.। पु० कामदेवे॥ त्रि०रागेणच्छन्ने॥

रागद। पुं० तैरणीक्षुपे॥ त्रि०रागदातरि॥

रागदालि। पुं० मसूरे॥

रागपञ्च.। पु० कामादिषु॥ कामसमत्सरश्चैवस्पृहाहर्षातथैवच। लोभोमायाचदम्भश्चरागपञ्चइतीरित॥

रागपुष्प। पु० बन्धूके रक्ताम्लाने॥

रागपुष्पी। स्त्री० जवायाम्॥

रागप्रसव.। पु० बन्धूके॥ रक्ताम्लाने॥

रागबन्धी। त्रि० रागप्रवर्त्तके॥

रागयुक्। पुं० माणिक्ये॥

रागरज्जु.। पु० कामदेवे॥

रागलता। स्त्री० रत्याम्। कामप्रियायाम्॥

रागवृन्त.। पुं० कामदेवे॥

रागषाडव:। पुं० दाडिमद्राक्षायुक्तमुद्गयूषे॥

रागसूत्रम्। न० तुलासूत्रे॥ पट्टसूत्रे॥

रागाङ्गी। स्त्री०)

रागाढ्या। स्त्री०) मञ्जिष्ठायाम्॥

रागाद। त्रि० आग्राद्रस्वादानशीले॥

रागाशनि.। पुं० बुद्धे॥

रागिणी। स्त्री० विदग्धायांनार्याम्॥ मेनकायाज्येष्ठकन्यायाम्॥ जयश्रीनाम्न्यालक्ष्म्याम्॥ षड्रागाणांस्त्रिषु॥ तास्वहनुमन्मतेभरतमतेचत्रिंशत्प्रकारा.॥ सोमेश्वरमतेकल्लिनाथमतेचषट्त्रिंशत्प्रकारा। आसांविवरणंरागशब्देद्रष्टव्यम्॥

रागी। त्रि०कामाद्याकुलचित्ते। कामुके। रक्तरि। अनुरक्ते॥ रागिणोदेवा.प्रोक्ताःसदेवासुरमानुषा.॥ यथोक्तभागवलेव्यासेन। रागीविष्णुःशिवोरागी ब्रह्मापिरागसंयुत:। रागवानपिचातुर्थांविदेहइवलक्ष्यत इति॥ रञ्ज: सम्पृक्तानुरुधेतित घिनुण्॥ तृणधान्यविशेषे। लाञ्छने। बहुतरकणिशे। गुच्छकणिशे॥

राक्०ग्०। त्रि० समर्थे॥ राघति। राघृसामर्थ्येक्विप्॥

राघव.। पु० रघुवंशजे॥ श्रीरामे॥

पुराणप्रसिद्धेमत्स्येमहामीने ॥ यथा । अस्तिमत्स्यस्तिमिर्नामशतयोजन विस्तृतः। तिमिङ्गिलस्तद्गिलोपित द्गिलोप्यस्तिराघव . ॥ इति ॥ ब्रह्मा ण्डाभिमानिनि ॥ रङ्घतिनाशगच्छ तीतिरघुरन्नमय ' क्षोभ . । तत्रवि दितः । अण् ॥

राघवायण' । पुं॰ रामायणे ॥ यथा । सेतिहासपुराणानिराघवायणभा रतम् । समाप्तिरहितान्येवसन्तिता निश्रुतानिते ॥ इत्यग्निपुराणम् ॥

राङ्कल : । पुं॰ द्रुमकण्टके ॥

राङ्कवम् । न॰ मृगरोमजेवस्त्रे ॥ रङ्कौ भवम् । रङ्कोरमनुष्येण्चेत्यण् मृगरोमजइत्यत्रमृगशब्देनपशुमात्र ग्राह्यम् । तेनकम्बलाद्यपिराङ्कवम् ॥ पु॰ त्रि ॥ रङ्कौ॰देशविशेषेभ व ' । पूर्ववत्‌यण् ॥

राङ्कवक . । पुं॰ मनुष्ये ॥ रङ्कौभव : । मनुष्यतत्स्थयोर्वुञ् ॥

राङ्कवायण: । त्रि॰ राङ्कवार्थे ॥ रङ्कौ भव: । रङ्कोरमनुष्येण्चेतिष्फक् ॥

राङ्गणम् । न॰ रङ्गन्॰इ॰गौ॰भा॰ प्र॰ पुष्पविशेषे ॥

राट्॰ड् । पुं॰ राजनि ॥ राजते । रा जृदीप्तौ ॥ सत्सूद्विषितिक्विप्

राजकम् । न॰ नृपवृंदे ॥ राज्ञांसमूहः । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपु त्रवत्समनुष्याजाद्वुञ् ॥ पुं॰ राजनि ।

राजकदम्ब . । पु॰ कदम्बविशेषे ॥

राजकन्या । स्त्री॰ केविकापुष्पे ॥ भू पसुतायाम् ॥

राजकर्कटी । स्त्री॰ चीनाकर्कट्याम् ॥

राजकशेरु : । पुं॰ म॰जलजकन्दविशे षे ॥ भद्रमुस्तायाम् ॥

राजकीय : । त्रि॰ राजसम्बन्धिवस्तु नि ॥ राज्ञइदम् । राज्ञ : कचेति च्छ . ककारोन्तादेश ' ॥

राजकुमार : । पु॰ राजपुत्रे ॥

राजकूष्माण्ड ' । पुं॰ वार्त्ताक्याम् ॥

राजकोशातकी ॥ स्त्री॰ धामार्गवे । तोरञो॰इ॰ भा॰प्र॰ फलशाकेरा जकोशातकीशीतामधुराकफवात ला । पित्तघ्नीदीपनीश्वासज्वरका सकृमिप्रणुत् ॥

राजक्षवक : । पुं॰ सर्षपे ॥

राजखर्जूरी । स्त्री॰ श्रेष्ठखर्जूर्य्याम् । पिण्डखर्जूरिकायाम् । राजपिण्डा याम् । नृपप्रियायाम् ॥

राजगामि । त्रि॰ राजसम्बन्धिनि ॥

राजगिरि ' । पुं॰ शाकप्रभेदे । राजा द्री । राजशाकिन्याम ॥

राजगुह्यम् । न॰ सर्वेषांगुह्यानांरा ज्ञि ॥ गुह्यानांराजा । राजदन्तादि ॥

राजगृहम् । न॰ । तीर्थविशेषे ॥

राजग्रीव: । पुं॰ मत्स्यविशेषे ॥ मद्गु भेदे ॥

राजघः । त्रि॰ तीक्ष्णे ॥ राजहन्तरि ।

राजानंहन्ति । हन० । राजदन्त- सङ्ख्यानाद्दन् ॥ टिलोपोघत्वञ्च निपात्यते ॥

राजचिह्नम् । न० नृपाणासूचकील क्षणविशेषे ॥ चिह्नानांराजा । रा जदन्तादि ॥

राजचिह्नकम् । न० उपस्थे ॥ चिह्ना नांस्त्रीपुंविभाजकानांराजा ॥

राजजम्बू । स्त्री० पिण्डखर्जूरे ॥ जम्बूप्रभेदे । फणीन्द्रे । फरेंदा० इ० भा० । राजजम्बूफलस्वादुवि ष्टम्भिगुरुरोचनम् ॥ जम्बूनांरा जा ॥ राजदन्तादिः ॥

राजतम् । न० रजते ॥ त्रि० रज तनिर्मिते । रूप्यमये ॥ रजतस्यवि कारः । प्राणिरजतादिभ्योऽञि त्यञ् ॥

राजतरुः । पु० कर्णिकारवृक्षे ॥ आरग्वधे ॥

राजतरुणी । स्त्री० पुष्पविशेषे । महा सहायाम् । वर्णपुष्पे । अम्लाने । सुपुष्पे । सुवर्णपुष्पे ॥

राजता । स्त्री० राजत्वे ॥

राजताल । पु० स्वनामख्यातपा दपे ॥ गुवाकें ॥

राजतैमिषः । पुं० नाटाम्रे ॥ सु खाशे ॥ इ० त्रिकाण्डशेषः ॥

राजदण्ड । पुं० राजशासने ॥

राजदन्तः । पुं० अग्रोदन्तपङ्क्तिद्य मध्यदन्तयुग्मे ॥ दन्तानांराजा । राजदन्तादिषुपरम् ॥ उपरिस्थे योरधमध्यवर्तिदन्तद्वये ॥ यथा । राजदन्तौतुमध्यस्थावुपरिस्थे चिकौ क्वचिदितिहेमचन्द्रः ॥

राजदेशीयः । पुं० राजकल्पे । राज देश्ये ॥ ईषदूनोराजा । ईषदसमा प्तौकल्पप्देश्यदेशीयरः ॥

राजधत्तूरक । पु० स्वर्णधत्तूरे । रा जधूर्ते । महाशठे ॥

राजधर्म । पुं० राज्ञाकर्तव्येकर्म- णि ॥ सचमनुस्मृतेःसप्तमाध्याये० कालीपुराणस्य ॥ ८५ ॥ ८६ ॥ अ- ध्याययोः महाभारतस्यशान्तिपर्व- णिपद्मपुराणस्यस्वर्गखण्डे ॥ १३८ ॥ अध्यायेचद्रष्टव्य ॥

राजधानकम् । न० राजपुरे ॥ (*) ॥

राजधानी । स्त्री० कोट्टे । राजपुरे । स्कन्धावारे ॥ धीयतेऽस्याम्०इति० धानी । करणाधिकरणयोश्चेत्यधि- करणेल्युट् । ङीप् । राज्ञांधानी ॥

राजधान्यम् । न० श्यामाके ॥

राजधूस्तूरकः । पुं० स्वर्णधूस्तूरे ॥ राजधूर्ते । महाशठे । मिश्रेचधु ष्पके । भ्रान्ते । राजस्वर्णे ॥

राजा । पुं० प्रभौ ॥ क्षत्रिये ॥ मृगा- ङ्के । रजनीपतौ ॥ यक्षे ॥ शक्रे ॥ नृपे । पार्थिवे । राज्याभिषिक्तक्ष त्रिये ॥ अभिषिक्तजनपदपुरपाल-

राजा

यिष्ठपुरुषश्रेष्ठे । क्ष्माभृति । भूपे । प्रणताशेषसामन्ते ॥ अराजकेऽस्मिन् लोके सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ अस्य व्युत्पत्तिर्विष्णुपुराणे यथा । महता राजराज्येन पृथुर्वैण्य. प्रतापवान् । सोऽभिषिक्तो महातेजा विधिवद्धर्मकोविदैः ॥ पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः अनुरागात्ततस्तस्य नाम राजेत्यभाषतेति ॥ राजकर्त्तव्यकर्म्माणि यथा मदालसोवाच । वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः । कर्त्तव्यमविरोधेन स्वधर्म्मस्य महीभृता ॥ अविरोधेन० धर्मशास्त्राविरोधेन । व्यसनानि परित्यज्य सप्तमूलहराणि वै । आत्मा रिपुभ्यः संरक्ष्यो बहिर्मन्त्रविनिर्गमात् ॥ अष्टधा नाशमाप्नोति स्वचक्रस्यन्दनाद्यथा । तथा राजाप्यसन्दिग्धं बहिर्मन्त्रविनिर्गमात् ॥ दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः । चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥ विश्वासो न तु कर्त्तव्यो राज्ञा मित्राप्तबन्धुषु । कार्ययोगादमित्रेषु विश्वसीत नराधिपः ॥ स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना । भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥ प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता । जेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ॥ यस्त्वेतानविजित्यैव वैरिणो विजिगीषते । सोऽजितात्माजितामात्यः शत्रुवर्गं प्रबाध्यते ॥ तस्मात् कामादयः पूर्वं जेयाः पुत्र महीभृता । तज्जये हि जयो राज्ञो राजा नश्यति तैर्जितः ॥ कामः क्रोधश्च लोभश्च मदो मानस्तथैव च । हर्षश्च शत्रवो ह्येते नाशाय कुमहीभृताम् ॥ कामप्रसक्तमात्मानं स्मृत्वा पाण्डुं निपातितम् । निवर्त्तयेत्तथा क्रोधादनुह्रादं हतात्मजम् ॥ हतमैलं तथा लोभान्मदाद्वेनं द्विजैर्हतम् । मानादनायुषः पुत्रं हतं हर्षात्पुरञ्जयम् ॥ एभिर्जितैर्जितं सर्वं मरुत्तेन महात्मना । स्मृत्वा विवर्जयेदेतान् षड्दोषांश्च महीपतिः ॥ काककोकिलभृङ्गाणां बकव्यालशिखण्डिनाम् । हंसस्य कुक्कुटस्यैव लोहस्य च चरितं नृपः ॥ काकात्० सर्वशङ्किता । कोकिलात्० माधुर्यम् । भृङ्गात्० अपीड्याऽर्थादानम् । बकात्० शत्रुवधे एकाग्रताम् । व्यालात्० दुरुपसर्पित्वम् । शिखण्डिनः चित्रतां० सर्पग्रहणाय मूकताम्० राजा आत्मगोपनञ्च । हंसात्० सारग्राहित्वम् । लोहकुक्कुटात्० सधानम् ॥ कौशिकस्य क्रियां कुर्याद्विपक्षे मनुजेश्वरः । चेष्टां पिपीलिकानाञ्च काले भू

राजा

प. प्रदर्शयेत् ॥ कौशिकस्य॰उलू-
कस्यरात्रौकाकावस्कन्दनम् पिपी-
लिकानाम्॰सैनावहुत्त्वसंभच-
याश्च ॥ च्चयाग्निविस्फुलिङ्गानांवी
जचेष्टावशात्मतेः । चन्द्रसूर्यस्व-
रूपस्थनीत्यर्थं पृथिवीचिता ॥ च-
ग्निविस्फुलिङ्गात्॰दूराद्दाह' । वी
जात्॰महद्द्य निष्पादनम् । उष्ण
काले॰चन्द्र सुखदायो॰शीतका-
लेन । एवं सूर्य शीतेसुखदायीउ
ष्णकालेनएव कालानुसारेणसुखदु
खदातृत्वम् ॥ वधकात्पद्मसरभशू
लिन्यागुर्विणीस्तनात् । प्रजान्तपि
चचादेयातथाचण्डालयोषित ' ॥
वधकात् निघृणत्वम् । पद्मात्॰
कण्टकगोपनम् स्मितमुखताच ।
सरभात्॰ हत्वापिमत्त्नूनोद्वेग .
। यथासरभोऽष्टापदः परोन्नति न
सहते । शूलिन्याआर्त्तिज्ञापनम् ।
गुर्विण्या . स्तनात्क्षीरोन्दानम् ।
चण्डालयोषित्शौनिको॰छागशि
रोदर्शयित्वा अन्यद्विक्रीणाति ॥
भक्तार्कयमसोमानांतद्वद्वायोर्महीं
पति . । रूपाणिपञ्चकुर्वीतमहीपा
लनकर्मणि ॥ यथेन्द्रश्चतुरोमासान्
वार्योघेणो वभूतलम । आप्याययेत्
तथालोकान् परिचारैर्महीपति .
॥ परिचारैरर्थदानादिभि . ॥ मा
सानष्टौयथासूर्यस्तोय हरतिरश्मि

राजा

भिः । सूर्येण वाष्पपायेनतथाशु
ल्कादिनान्प . ॥ यथायम . प्रिय
द्वेष्यौप्राप्ते कालेनियच्छति । तथा
प्रियाप्रियौराजादुष्टादुष्टे समोभवेत्
॥ पूर्णेन्दु मालोक्ययथाप्रीतिमान्
जायतेनर । एवं यत्रप्रजा सर्वा
निर्वृ तास्तच्छशिव्रतम् ॥ मरुत
सर्वभूतेषु निगूढश्चरते यथा । एवं
चरेन्नृपश्चारैः पौरामात्यारिवन्धु
षु ॥ नलोभार्थैर्न कामार्थैर्नार्थार्थैर्
र्यस्य मानसम् । पदार्थैः कृष्यते
धर्मात् सराजास्वर्गमृच्छति ॥ लो
भादिप्रयोजनैः । उत्पथग्राहिणो
मूढान् स्वधर्माच्चलितान्नरान् । य .
करोतिनिजेधर्मे सराजास्वर्गमृच्छ
ति ॥ उत्पथग्राहिण पापिन ॥
वर्णधर्मानसीदन्तियस्यराष्ट्रे तथाश्र
मा । राजन्स्तस्यसुखतातपरत्रेह
चशाश्वतम् ॥ एतद्राज्ञ पर कृत्य
तथै तद्द्विकारणम् । स्वधर्मस्था
पन नृणांचाल्यतेनकुबुद्धिभि ॥पा
लनेनैवभूतानां कृतकृत्योमहीप
ति . । सम्यकपालयिताभाग धर्म
स्याप्नोतिवैयत ॥ एवमाचरतेरा
जाचातुर्वर्ण्यस्यरक्षणे . । ससु
खीविहरत्येषशक्रस्यै तिसलोकता-
म् ॥ इतिमार्कण्डेयपुराणे मदाल
सोपाख्यानाध्याय: ॥ राजते । रा
जृ॰ । कनिन्युवृषीतिकनिन् ॥

द्दीप्तिमति ॥ उत्तरपदेचेत् श्रेष्ठार्थ वाचक ॥

राजनम् । न० सामविशेषे ॥ त्रि० राज्ञ ' शूद्रायामुत्पन्ने ॥ राज्ञोऽपत्यम् । राजश्वशुराद्यत् । राज्ञो जातावेवेतिवार्त्तिकात् शूद्रायामुत्पन्ने क्षत्रियजातित्वाभावादण् । अन्नितिप्रकृतिभाव ' ॥

राजनामा । पुं० पटोले ॥

राजनीति । स्त्री० नीतिशास्त्रे । राजवर्त्मनि ॥ पश्चान्यत्रनीतिराजनीतिश्च ॥

राजनीलम् । न० मरकतमणौ ॥

राजन्य ' । पुं० क्षत्रिये ॥ षड्विधिबोधितानिकर्माणियथा । राजन्यानाश्चसहस्रसङ्ख्यामोभूमिशासनम् । अत्रापक्षीवपिगृह्णत शूद्रहत्तमथाप्येदिति ॥ अन्ननिषिद्धकर्माणियथा । राजन्यानांकराद्दानविनावैवाहिकस्य । प्रतिग्रह : सनिद्योअपरत्रचासुखप्रद : ॥ युद्धेपलायनञ्चैवतथाकातरतार्थिषु । अपालनंप्रजानाञ्चदानेधर्मेविरक्तता ॥ अनवेक्षासराष्ट्रस्यनाभृत्यानामनादर : । अमात्यानामसम्मानतीर्थानांकर्मानवेक्षणाम् ॥ भृत्यानाञ्चपरीवादोनिषिद्ध : क्षत्रजन्मनामिति ॥ राज्ञोपत्यम् । राजश्वशुराद्यत् । राज्ञोजातावेव । येवाभावकर्मणो

रितिप्रकृत्या ॥ राजपुत्रे ॥ वल्लौ ॥ क्षीरिकाद्रुमे ॥ राजति । राज् । राजेरन्य : ॥

राजन्यकम् । न० क्षत्रियसमूहे ॥ राजन्यानांक्षत्रियाणांसमूह । गोत्रोक्षोष्ट्रोरभ्रराजराजन्येतिवुञ् । प्रकृत्याअवोराजन्यमनुष्ययुवान ' ॥ पुं० राजन्यादेशे ॥ राजन्यानांविषयोदेश : । राजन्यादिभ्योवुञ् ॥

राजन्यबन्धु । पुं० दुर्वृत्तनृपतौ । राजाभासे ॥ राजन्यावन्धवोऽस्य ॥

राजन्वान् । त्रि० सुराज्ञिदेशे । यत्रदेशेस्वधर्मशीलोराजा० तत्रदेशे ॥ राजाअस्तिअस्यावा । प्रशंसायांमतुप् । राजन्वान्सौराज्ये० कृतिनिपातनान्नलोपाभाव : ॥ राजन्वती० भूमि : ।

राजपटोल । पुं० पटोले ॥

राजपटोली । स्त्री० मधुपटोल्याम् ॥

राजपट्ट : । पुं० मणिविशेषे । विराजते ॥

राजपट्टिका । स्त्री० चातकखगे ॥

राजपथ : । पुं० राजमार्गे ॥ राज्ञ : पन्था : । ऋक्पूरितिसमासांत. ॥ तल्लक्षणंयथाधनूंषिदशविस्तीर्ण : श्रीमान्राजपथ : स्मृत : । नृवाजिरथनागानामसम्बाध. सुसञ्चर : इति ॥

राजपर्णी । स्त्री० प्रसारिणीलतायाम् ॥

राजपलाण्डु : । पुं॰ रक्तवर्णपलाण्डौ । यवनेष्टे । राजप्रिये । महामूले । दीर्घपत्रे । रक्तकन्दे । लालकान्दा॰ लालप्याज॰इ॰भा॰ ॥

राजपीलु । पुं॰ महापीलुवृक्षे ॥

राजपुत्र । पुं॰ बुधग्रहे ॥ महाराजात्मजे ॥ राजनन्दने । युवराजे । राजकुमारे । भर्तृदारके ॥ कुमाररक्षाकर्त्तव्या राज्ञा यत्नेन सर्वदा ॥ तथाहि । राजपुत्रस्य रक्षा च कर्त्तव्या पृथिवीक्षिता । आचार्यश्चास्य कर्त्तव्यो नित्यमुक्तो रक्षणम् ॥ धर्मकामार्थशास्त्राणि धनुर्वेदञ्च शिक्षयेत् । रथे च कुञ्जरे चैनं व्यायामं कारयेत् सदा ॥ शिल्पानि शिक्षयेच्चैनं नाप्तैर्मिथ्याप्रियं वदेत् । गुणाधानमशक्यन्तु यस्य कर्त्तुं स्वभावतः ॥ बन्धनं तस्य कर्त्तव्यं गुप्ते देशे सुखान्वितम् । अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ अधिकारेषु सर्वेषु विनीतं विनियोजयेत् । आदौ स्वल्पेषु तत्पश्चात् क्रमेणाथ महत्स्वपि ॥ मृगयापानमक्षांश्च वर्जयेत् पृथिवीपतिः । एतान्यासेवमाना नो सुविनष्टाः पृथिवीक्षितः ॥ बहवो न पश्चाद्‌गूलायेषां सङ्ख्या न विद्यते । वृथाटनं दिवास्वप्नं विशेषेण विवर्जयेत् ॥ वाक्पारुष्यं न कर्त्तव्यं दण्डपारुष्यमेव च । परोक्षनिन्दा च तथा वर्ज्या नीया महीक्षिता ॥ अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत् । अर्थानां दूषणञ्चैव तथा चार्थेषु दूषणम् ॥ अकारणात् समुच्छेदं दुर्गादीनामसत्क्रिया । अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥ अदेशकाले यद्दानमपात्रे दानमेव च । अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्त्तनम् ॥ काम क्रोध मद मान लोभ हर्षस्तथैव च । जेतव्यमरिषड्वर्गं सादरं पृथिवीक्षिता ॥ एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः । कृत्वा भृत्यजयं सर्वं राजा जनपदं जयेत् ॥ कृत्वा तु विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् । बाह्याश्च विविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥ गुरवस्ते यथापूर्वं तेषु यत्नपरो भवेत् । पितृपैतामहं मित्रं सामन्तश्च तथा रिपोः ॥ कृत्रिमञ्च महाभाग मित्रं विविधमुच्यते । तथापि च गुरुः पूर्वं भवेत् तत्रापि चाहृतः ॥ स्वाम्यमात्यो जनपदो दुर्गं सैन्यं तथैव च । कोषो मित्रञ्च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥ सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्त्तितः । तन्मूलत्वात्तथाङ्गानां राजा रक्ष्यः प्रयत्नतः ॥ षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः । अङ्गेभ्यो यस्तथैकस्य द्रोहमाचरते ऽल्पधीः ॥ वधस्त

स्वतुकर्त्तव्य . शीघ्रमेवमहीक्षिता। नराज्ञामृदुनाभाव्य मृदुर्हिपरिभूयते ॥ नभाव्यंदारुणेनापितीक्ष्णा दुद्विजतेजन । कालेमृदुर्यीभवति कालेभवतिदारुण ॥ राजालोक द्वयापेक्षीतस्यलोकद्वयभवेत् । भृत्यै . सहमहीपाल परिहासवि वर्जयेत् ॥ भृत्या : परिभवन्तीह नृप हर्षवशङ्गतम् । व्यसनानिचस र्वाणिभूपति . परिवर्ज्जयेत् ॥ लो कसङ्ग्रहणार्थायकृतकव्यसनोभवेत्। शौटीरस्यनरेन्द्रस्यनित्यमुद्रिक्तचेत स :॥ जनाविरागमायातिसदा- दु सेव्यभावत । स्मितपूर्वाभि- भाषीस्यात्सर्वस्यैवमहीपति : ॥ म ध्ये प्यपिमहाभागभृकुटिंनसमाच रेत् । भाव्यंधर्मभृतांश्रेष्ठस्थूललक्ष्ये णभूभृता॥ स्थूललक्षस्यवशगासर्वा भवतिमेदिनी । अदीर्घसूत्रश्चभवे- त्सर्वकर्मसुपार्थिव : ॥ दीर्घसूत्र- स्यनृपते : कर्महानिर्ध्रुवभवेत् । रा गेदर्पेचमानेचद्रोहेपापेचकर्मणि ॥ अप्रियेचैवकर्त्तव्येदीर्घसूत्र : प्रश- स्यते । राज्ञासम्भृतमन्त्रस्यसदाभा- व्यंद्विजोत्तम ॥ तस्यासम्भृतमन्त्रस्य त्यजेयु : सर्वापदोध्रुवा , । कृत्वा- न्येवतुकर्माणिज्ञायन्तेयस्यभूपते: ॥ नारब्धानिमहाभागतस्यस्याद्वसुधा क्षयी । मन्त्रमूलसदाराज्यंतस्मा-



न्मूलंसुरक्षितम् ॥ कर्त्तव्य पृथिवी प.लैर्मन्त्रभेदभयात्सदा । मन्त्रवि त्साधितोमन्त्र : सम्पत्तीनांसुखाव- ह ॥ मन्त्रच्छलेनबहवोविनष्टा पृथिवीक्षित : । आकारैरिङ्गितैर्ग- त्याचेष्टयाभाषितेनच ॥ नेत्रवक्त्र विकारैश्चगृह्यतेन्तर्गतमन . । न- यस्यकुशलैस्तस्यवशेसर्वावसुन्धरा । भवतीहमहीभर्त्तु सदापार्थिवन न्दन । नैकस्तुमन्त्रयेन्मन्त्रनराजा बहुभि . सह ॥ नारोहेद्विषमांना वनापरीक्षितनाविकाम् । येषा स्वभूमिंजयतीभवेयु परिपन्थिन: ॥ तानानयेद्वशेसर्वान्सामादिभि- रुपक्रमै । यथानस्यात्कृशीभाव. प्रजानामनपेक्षया ॥ तथाराज्ञाप्रक र्त्तव्यंस्वराष्ट्र परिरक्षता । मोहाद्रा जास्वराष्ट्रंय . कर्षयत्यनपेक्षया ॥ सोचिराद्भ्रश्यतेराज्याज्जीविताञ्चस बान्धव : ॥ भृतोवत्सोजातबल कर्मयोग्योयथाभवेत्। तथाराष्ट्रं महाभागभृतकर्मसहभवेत् । योरा ष्ट्रमनुगृह्णातिराजास्वपरिरक्षति- ॥सङ्घातमुपयाचेत्तु विन्दतेसुमह त्फलम् । राष्ट्राद्धिरण्य धान्यञ्चमही राज्ञासुरक्षिता ।। नित्यस्वेभ्य: परेभ्यश्चयथामातायथापिता । नि त्यंराजास्वराष्ट्रं य : कर्षत्यन्यस्यचे च्छया ॥ गोपितानिसदाकुर्यात्-

सविभागीप्रियाखिच । अजस्रमुप योक्तव्य फलतेभ्यस्तथैवच ॥ धर्म कर्मद्मायत्त विधानेदैवमानुषे । तयोर्दैवमचिन्त्यहिपौरुषेविद्यतेक्रिया ॥ एवमहींपालयतोऽस्यभर्त्तुर्लोकानुराग : परमोभविष्य । लोकानुरागप्रभवाचलक्ष्मीर्लक्ष्मीवतश्चैव पराचकीर्त्ति ॥ इतिमात्स्ये १९४ अध्याय ॥ रजपूतइतिलोकप्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । वैश्यादम्बष्ठकन्यायाराजपुत्रस्यसम्भव इतिपराशरपद्धति ॥ करणकन्यायाञ्चयियाञ्जातस्चेतिपुराणम् ॥

राजपुत्रकम । न० राज्ञ ' पुत्राणास मूहे ॥ राजपुत्राणासमूह , । गोत्रोक्षोष्ट्रोरभ्रेत्यादिनावुञ् ॥ पुं० राजाम्रे ॥

राजपुत्रिका । स्त्री० राजकन्यायाम्॥ शरारिपक्षिणि॥जात्याम् ॥ राज्ञ पुत्रिकेव ॥

राजपुत्री । स्त्री० राजकन्यायाम् । मालात्याम् ॥ रेणुकाख्यौषधौ ॥ ॥ कटुतुम्ब्याम् ॥ राजरीतौ ॥ कुच्छुन्दर्याम ॥

राजपुष्प । पु० नागकेशरवृक्षे ॥

राजपुष्पी । स्त्री० )

राजप्रिया । स्त्री०) करुणीवृक्षे ॥

राजफणिज्भक । पु० नागरङ्गवृक्षे॥

राजफलम् । न० पटोले ॥

राजफला । स्त्री० जम्बू ॥

राजबदर । पु० उत्तमकोले । नृप श्रेष्ठे । नृपबदरे । राजवल्लभे । पृथुकोले । तनुबीजे । मधुरफले । राजकोले ॥ न० रक्तामलके ॥ लवणे ॥ लवल्याम् ॥

राजबला । स्त्री० गन्धालिकायाम् । प्रसारण्यामोषधौ ॥ बलानाबलप्रदानाराजेव । राजदन्तादि ॥

राजभद्दिका । स्त्री० हारुचीपक्षिणि ॥

राजभूयम् । न० राजत्वे ॥

राजभोगीणम् । न० राज्ञ शरीरा यहिते ॥ राज्ञोभोग शरीरम् तस्मैहितम् । आत्मन्विश्वजनभोगोत्तरपदात्ख ॥

राजभोग्य । पुं० पियालवृक्षे ॥ न० जातीकोषे । जातीफले ॥

राजभोजी । पु० वाजपेययज्ञे ॥

राजमण्डूक । पु० ब्रहद्भेके । महामण्डूके । पीताङ्गे । वर्षाघोषे ॥

राजमल्ल । पु० नृपमल्ले । उत्थिस्त्रे । उद्वते ॥ राज्ञामल्ल । मल्लानाराजावा ॥

राजमार्ग । पुं० राजपथे ॥

राजमाष । पु० बर्वटे । नीलमाषे । महामाषे । चौ रा० लोबियाबडा इ० भा० ॥ राजमाषोगुरु स्वादुस्तुवरस्तर्पण . सर . । रूक्षोवातकरोरुच्य स्तन्योभूरिमलप्रद ' ॥

प्रवेतोरक्तस्तथाकृष्ण स्त्रिविध स प्रकीर्त्तित. । योमहास्तेषु भवति सएवोक्तोगुणाधिक . ॥ अपिच । राजमाषंपरंहृद्य कफपित्तहर परम् । आध्मानवातकृद्रूक्षोतत्पच तद्गुणावहम् ॥ माषाणाराजा । राजदन्तादि ' ॥

राजमुद्ग . । पुं॰ मकुष्ठके ॥

राजयक्ष्मा । पुं॰ क्षयरोगे । यक्ष्मणि ॥ राज्ञश्चन्द्रमसोयस्मादभूदेषकिलामय . । तस्मात्त राजयक्ष्मेति केचिदाहुर्मनीषिण : ॥ षष्ठीतत्पुरुष ' कर्मधारयोवा । तथाहवाग्भट : । अनेकरोगानुगतोबहुरोगपुर सर . । राजयक्ष्माक्षय : शोषोरोगराडितिचस्मृत . ॥ नक्षत्राणाद्विजानाञ्चराज्ञोभूद्यदय पुरा । यच्चराजाचयक्ष्माचराजयक्ष्मात तोगत : ॥ इति ॥ महापातकज चिह्नमप्ययम् । यथाहविष्णु : । अथनरकानुभूतदु : खानातिर्यक्त्वमुत्तीर्णानामानुष्येलक्षणानिभवन्ति । कुष्ठ्यतिपातकी॰ ब्रह्महा यक्ष्मी॰सुराप . श्यावदन्तक . सुवर्णहारीकुनखोगुरुतल्पगोदुश्चर्मत्यादिकूर्मपुराणम् ॥

राजयज्ञ . । पुं॰ अश्वमेधे ॥ राज्ञएवतत्राधिकारात् ॥ राज्ञोयज्ञ : ॥

राजयोग : । पुं॰ ज्ञानपरिपाके । व्यवहारेष्वविक्षिप्तचित्ततालक्षणे योगविशेषे ' । राजत्वात्सर्वयोगाना- राजयोगइतिस्मृत । राजवद्दीप्यमान तपरब्रह्माणमव्ययम् ॥ देहिन प्रापयेद्यस्तुराजयोग सउच्यते- इत्युक्ते : ॥ राज्ञउपयुक्तोयोग ' । योगानाराजेतिवा ॥ हठयोगोदेह आयासकर ' । अयगुरोरवाप्तश्चक्रियायासेनमोक्षरूपपुरुषार्थप्रद . । हठवदस्याप्यष्टाङ्गानिसन्ति ॥

राजयोगी । त्रि॰ ज्ञानपरिपाकयुक्ते । व्यवहारेष्वविक्षिप्तचित्ततालक्षणयोगश्रेष्ठवति ॥

राजयोग्य ' । त्रि॰ राजार्हे ॥

राजरङ्गम् । न॰ रजते ॥

राजराज : । पुं॰ धनाधिपे । कुबेरे ॥ राज्ञायक्षाणाराजा । राजाहः सखिभ्यष्टच् ॥ नृपेशे । सार्वभौमे ॥ सुधाकरे । चन्द्रे ॥

राजरीति ' । स्त्री॰ पित्तलविशेषे । पाकतुण्डाम् ॥ महेश्वर्याम् । कपिलायाम् ॥

राजर्षि : । पुं॰ प्रभुत्वेसतिसूक्ष्मार्थनिरीक्षणक्षमे॰प्रजापालनाधिकारिणिक्षत्रपर्वनिमिप्रमुखे ॥ राजाचासौऋषिश्च ॥

राजलक्ष्मा । पुं॰ युधिष्ठिरे ॥

राजवंश्य : । त्रि॰ राजवीजिनि । राजवंशोद्भवे ॥ वशेभव : । दिगादि-

स्यादत् । राज्ञोवश्य ॥ राजवशे साधुर्वा । तत्रसाधुरितियत् ॥

राजवान् । त्रि० राजमात्रयुक्तदेशे ॥ सुराज्ञिदेशेराजन्वान्स्यात्ततोन्यत्र राजवान् । राजास्त्यस्यास्मिन्वा । मतुप् ॥

राजवर्त्म । न० घण्टापथे । राजपथे ॥

राजबला । स्त्री० भद्रबलायाम् ॥

राजवल्लभ । पुं० राजादन्याम् ॥ राजाम्रे ॥ राजभद्रे ॥ नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषे ॥ त्रि० नृपतिप्रिये ॥

राजवल्ली । स्त्री० सोमवल्ल्याम् । उच्छ्या० इ० गौ० दे० भा० ॥

राजवारुणी । स्त्री० सुराप्रभेदे ॥

राजवाह । पुं० घोटके ॥ वाहानां राजा । राजदन्तादि ॥

राजवाह्य । पुं० राजवाहकहस्तिनि । उपवाह्ये । विजयकुञ्जरे ॥ त्रि० राजवहनीये

राजवीजी । त्रि० राजवंश्ये । राज्ञो वीजयितुंशीलमस्य । वीजव्यजनेऽदन्त । सुप्रीतिणिनि ॥ यद्वा । राज्ञोवीजम् । राजवीजम् । तदस्यास्ति । अतइनि ॥

राजवृक्ष । पुं० गिरिमाल० इतिप्रसिद्धे सुवर्णके । आरग्वधे ॥ राजाचासौवृक्षश्च ॥ वृक्षाणांराजावा ॥ राजदन्तादि ॥ रोगाणांराजानं वृश्चतिवा । ओव्रश्चूच्छेदने । बाहुलकात्सुक् ॥ पियाले ॥ लङ्कास्थायिनिवृक्षे । लङ्काथ० इर० इ० भा० ॥

राजवृत्तम् । न० नृपचारित्रे ॥ तच्चतुर्विधम् । यथाहकामन्दकः । न्यायेनार्जनमर्थस्यवर्द्धनंपालनं तथा । सत्पात्रेप्रतिपत्तिश्चराज्ञोवृत्तं चतुर्विधमिति ॥

राजशण । पुं० महत्शणे । पाटसन० इ० भा० ॥

राजशफर । पुं० इल्शिशमत्स्ये ॥

राजशय्या । स्त्री० राज्ञः शयनीये । महाशय्यायाम् ॥

राजशाक । पुं० वास्तूके ॥

राजशास्त्रम् । न० नीतिशास्त्रे ॥ राज्ञांशास्त्रम् ॥

राजशिम्ब । पुं० निष्पावे ॥

राजशुक । पुं० प्राज्ञे । शतपत्रे । नृपप्रिये । राजसूआ० इ० भा० प्र० पक्षिणि ॥

राजशृङ्ग । पुं० मद्गुरमत्स्ये ॥ न० राजच्छत्रे । कनकदण्डके ॥

राजस । पुं० राजसाहङ्कारे । इन्द्रियार्थाकारणे । तैजसे ॥ त्रि० रजोगुणोद्भवे । रजोगुणप्रधाने ॥ तल्लक्षणंयथा । आरम्भरुचिताधैर्यमसत्कार्यपरिग्रहः । विषयोपसे

बाचाजसं राजस गुणलक्षणम् ॥ आरम्भरुचिताफलार्थं कर्मानुष्ठान शीलता ॥ अपिच । येनास्मिन् कर्मणालोकेख्यातिमिच्छति पुष्कलाम् । नचशोचत्यसम्पत्तौतद्विज्ञेयन्तुराजसमिति ॥ रजसोयम् । अण् ॥

राजसदनम् । न० राजगृहे । सौधे- ॥ राज्ञः सदनम् । योग्यत्वात् ॥ यद्वा । सदनानाराजा । राजदन्तादि: ॥ तद्भेदायथा । सौधोऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिक . सर्वतोभद्रोनन्द्यावर्तादयोपिच । विच्छन्दक: प्रभेदाहि भवन्तीश्वरसद्मनाम् ॥

राजसधनम् । न० धनविशेषे ॥ यथा । कुसीदकृषिवाणिज्यशुल्कागानानुवृत्तिभि: । कृतोपकारादाप्तञ्चराजसंसमुदाहृतम् ॥ अनुवृत्त्यासेवया ॥

राजसभा । स्त्री० नृपतिसमाजे ॥ राज्ञ: सभा । सभाराजेत्यनरराजपर्यायस्यैवग्रहणान्नक्लीबत्वम् ॥

राजसयज्ञ: । पुं० सकामानांयज्ञे ॥ अभिसन्धायतुफलं दम्भार्थमपिचैव यत् । इज्यतेभरतश्रेष्ठतं यज्ञं विद्धि राजसम् ॥

राजसर्प्प: । पुं० सर्पविशेषे । भुजङ्गभोजिनि ॥

राजसर्षप । पुं० राजिकायाम् । आसुर्याम् ॥ तिस्रभिलिंखाभि. परिमिते ॥

राजसायुज्यम् । न० राजत्वे ॥ राज्ञ सायुज्यम् ॥

राजसारस । पुं० मयूरे ॥

राजसाक्षकार । पुं० तैजसाहङ्कारे । इन्द्रियाणाकारणे ॥

राजसाहार: । पुं० रजोगुणिनाभोजने ॥ यथा । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन । आहारा राजसस्येष्टा दु:खशोकामयप्रदा: ॥

राजसी । स्त्री० दुर्गायाम् ॥ रजोगुणसम्बन्धिन्याम् ॥

राजसूय . । पुं० राज्ञाकर्त्तव्ये यज्ञविशेषे । नृपाध्वरे । क्रतुराजे । क्रतूत्तमे ॥ राज्ञासोतव्योऽभिषवद्वाराभिष्पादयितव्य । षुञ् अभिषवे । यद्वा । लतात्मक: । सोमोराजासूयतेकण्ड्यतेऽत्र इत्यधिकरणेक्यप् । राजसूयसूर्य्येत्यादिना निपातनाद्दीर्घ ॥

राजसूयकी । स्त्री० राजसूयस्य दक्षिणायाम् ॥

राजस्कन्ध: । पुं० घोटके ॥

राजस्वम् । न० करे । राजग्राह्यभागे ॥

राजस्वर्ण: । पुं० राजधुस्तूरके ॥

राजहंसः । पुं० कलहंसे ॥ चरणै-
श्चञ्चुभिर्लोहितैर्लोहितायैश्च सिता
। तैराजहंसाविज्ञ्याता इत्यादु
कोषकोविदाः ॥ हंसानाराजा ।
राजदन्तादि ॥ कादम्बे । वालि
हांस० इतिगौडदेशप्रसिद्धे । नील
हंसोयम् ॥ नृपोत्तमे ॥

राजहंसिनी । स्त्री० रसालाया प्रभे
दे । राजहंसाम् ॥ निर्नीरपाचि
तक्षीरमाहिषतद्भव दधि । शुभ्र
कं रथैलाद्य गालित राजहंसिनी
॥ राजहंसीसुमधुराबल्याहृष्यतरा
छिमा । अत्यर्थं पित्तशमनीकिञ्चित्
कफकरीस्मृता ॥

राजहर्षणम् । न० तगरपुष्पे ॥

राजहस्ती । पुं० राजगजे । मारीचे ।
यानकगजे । मदोत्कटे ॥

राजहासकः । पुं० मत्स्यविशेषे । का
तरे । कातले । राजीवे ॥

राजातनः । पुं० पियालवृक्षे ॥ रा-
जानमतति । अत० । कर्त्तरि०-
ल्युट् ॥

राजादनः । पुं० फलाध्यक्षे । क्षीरि-
कायाम् न०पियाले ॥ राजभि-
रद्यते । अद० । कर्म्मणिल्युट ॥
किंशुके । चिपचके ॥

राजादनी । स्त्री० क्षीरिकायाम् ।
खिर्नी०इ०भा० ॥

राजानुजीवी । त्रि०राजोपजीविनि ॥
तस्यकर्माणियथा । मत्स्यउवाच ।
यथानुवर्त्तितव्यं स्यान्मनोराजोपजी
विना । तथातेकथयिष्यामिनिबो-
धगदितोमम । आज्ञासर्वात्मना-
कार्याश्रवणस्यारविनन्दन । वाचि-
प्यवचनन्तस्यनवक्तव्यं तथावच ।
अनुकूलप्रियंतस्यवक्तव्यञ्जनसंसदि ।
रहोगतस्यवक्तव्यमप्रियंयद्धितंभवे-
त् ॥ परार्थमस्यवक्तव्य स्वस्थे चेत
सिभार्गव । स्वार्थं सुहृद्भिर्वक्तव्यो
नस्वयन्तुकदाचन ॥ कार्यातिपातः
सर्व्वेषुरक्षितव्यः प्रयत्नतः । न-
चहिंस्यंधनं किञ्चिन्नियुक्तेनचकर्म-
णि ॥ नोपेक्ष्यभाव्यमानाश्चतथारा-
ज्ञः प्रियोभवेत् । राज्ञश्चनतथा-
कार्यंवेषभाषितचेष्टितम् ॥ राज-
लीलानकर्त्तव्यातद्विष्टं विवर्जये-
त् । राज्ञः समोधिकोवानकार्यो-
वेशोविजानता ॥ द्यूतादिषुतथै-
वास्यकौशलञ्चप्रदर्शयेत् । प्रदर्श्य-
कौशलञ्चास्यराजानञ्चविशेषयेत् ॥
अन्तःपुरधनाध्यक्षैर्वैरदूतैः समा
गते । संसर्गंनव्रजेद्राजन्विनापा
र्थिवशासनम् ॥ निःस्नेहताञ्चाव-
मानं प्रयत्नेनचगोपयेत् । यच्चगुह्यं
भवेद्राज्ञोनतल्लोकेप्रकाशयेत् ॥ नृपे
णश्रावितंयत्स्याद्वाच्यावाच्यंनृपो-
त्तम । नतत्संश्रावयेल्लोकेतदारा-
ज्ञः प्रियोभवेत् । आज्ञाप्यमाने-

चान्यस्मिन् समुत्थायस्वरान्वित ।
यत्रकिङ्करवाणीतिवाच्योरजावि-
जानता ॥ कार्यावस्थास्वविज्ञाय-
कार्यमेवतथाभवेत् । सततक्रियमा
णस्मिन्लाघवन्तुव्रजेद्ध्रुवम् । रा
ज्ञ प्रियाणिवाक्यानिनचात्यर्थपु
न पुन नहास्यशीलस्त्रभवेन्न
चापिभ्रकुटीमुख ।नातिवक्तान-
निर्वक्तानचमत्सरिकस्तथा । घा
तारस्याचित्तश्चैवनभवेत्तुकथञ्चन ॥
दुष्कृतानिनरेन्द्रस्यनतुसङ्कीर्त्तयेत्
क्वचित् । वस्त्रशस्त्रमलङ्कारराज्ञा
दत्तन्तुधारयेत् औदार्येणनतद्दे
यमन्यस्मै भूतिमिच्छता । तच्चैवो
पासनञ्चैवदिवास्वप्न विवर्जयेत् ॥
नानिर्दिष्टे तथाद्वारे प्रविशेतकदाच
न । नच पश्येत राजानमयोग्यासु-
चभूमिषु । राज्ञस्तुदक्षिणेपार्श्वेवा
मेचोपविशेत्तथा । पुरस्ताच्चतथाप
श्चादासनन्तुविगर्हितम् ॥ जृम्भांनि
ष्ठीवनकासङ्कोपं पर्यङ्किकाश्रयम् ।
भ्रुकुटीवान्तमुद्गारतत् समीपेविव-
र्जयेत् ॥ स्वयतत्त्वनकुर्वीतस्वगुणा
ख्यापनतथा । स्वगुणाख्यापनेचैव
परमेवप्रयोजयेत् ॥ हृदयनिर्मल
कृत्वापराभक्तिमुपाश्रितैः । अनु
जीविगणैर्भाव्यनित्य राज्ञामतन्द्रि
तै ॥ शाठ्य लौल्यञ्चपैशुन्यं ना-
स्तिक्य क्षुद्रतातथा । चापल्यञ्च



परित्याज्य नित्य राजानुजीविना ॥ श्रु
तेनविद्याशिल्पैश्चसयोज्यात्मानमा
त्मना । राजसेवातत कुर्याद्भूत
येभूतिवर्द्धिनीम् ॥ नमस्कार्या
सदाचास्य पुत्रवल्लभमन्त्रिण । स
चिवैश्चास्यविश्वासोनतुकार्य क
थञ्चन ॥ अपृष्टश्चास्यनब्रूयात्का
म ब्रूयात्तथायदि । हितपथ्यञ्च
वचन हितै सहसुनिश्चितम् ॥
चित्तञ्चैवास्यविज्ञ यनित्यमेवोप-
जीविना । भर्त्तुराराधनकुर्याच्चित्त
ज्ञोमानव सुखम् ॥ रागापरागौ
चैवास्यविज्ञेयौभूतिमिच्छता । त्यजे
द्विरक्तभुरक्तोवृत्तिन्तुकारयेत् ॥
विरक्त कारयेन्नाशविपक्षाभ्युदयन्तथा
। आशावर्द्धनकङ्कत्वाफलनाशकरो
तिच अकोपोपिसकोपाभ्त प्रसन्नो
ऽपिचनिष्फल । वाक्य समन्द व
दतिवृत्तिच्छेदकरोतिच ॥ प्रदेश
वाक्यमुदितोनसम्भावयतेन्यथा ।
आराधनासुसर्वासुसुप्तवच्चविचेष्टते॥
कथासुदोषक्षिपतिवाक्यभङ्ग करो-
तिच । लक्ष्यतेविमुखश्चैवगुणस-
ङ्कीर्त्तनेकृते ॥ दृष्टि क्षिपत्यथान्य
त्रक्रियमाणेचकर्मणि । विरक्तलक्ष
णञ्चैतच्छृणुरक्तस्यलक्षणम् ॥ दृ
ष्ट्वाप्रसन्नोभवति वाक्य गृह्णाति
चादरात् । कुशलादिपरिप्रश्नै-
स प्रयच्छतिचासनम् ॥ विरक्तदर्शने

चास्परहस्ये चनयद्भते । जायते-ह्रष्टवदनः श्रुत्वातस्यतुतत्कथाम् ॥ अप्रियाण्यपिवाक्यानि तदुक्तान्यभिनन्दते । उपायनञ्चगृह्णाति स्तोकमप्यादरात्तथा ॥ कथान्तरेषुस्मरतिप्रहृष्टवदनस्तथा । इतिरक्तस्यकर्त्तव्यासेवारविकुलोद्वह ॥ आपत्सु नत्यजेत्पूर्वं विरक्तमपि सेवितम् । मित्र नचापत्सु तथाच भृत्य त्यजन्तियेनिर्गुणमप्रमेयम् । प्रभु विशेषे णचतेव्रजन्तिसुरेन्द्रधामामरवृन्दजुष्टम् ॥ इतिमत्स्यपुराणे राजधर्मेऽनुजीविवृत्तिनामाध्यायः ॥ १९० ॥

राजान्नम् । न० आन्ध्रदेशोद्भवशालिविशेषे । राजार्हे । दीर्घशूकके । धान्यश्रेष्ठे ॥ राजस्वामिकभक्ते ॥

राजाम्र । पुं० न० आम्रविशेषे । राजफले । मधुरे । कामाङ्गे । टङ्के ॥ राजाम्र तुवरंस्वादुविशदं शीतलगुरु । ग्राहिरूक्षविवन्धाध्म वातकृत्कफपित्तनुत् ॥

राजाम्लः । पुं० अम्लवेतसे ॥

राजार्कः । पुं० सितार्कवृक्षे । वसुके । मन्दारे । सदापुष्पे । अलर्के ॥

राजार्हम् । न० जोङ्गके । अगुरुणि ॥ त्रि० राजयोग्ये ॥ राजानमर्हति । अच् ॥

राजार्हा । स्त्री० जम्ब्वाम् ॥

राजालाबुः । स्त्री० स्वादुतुम्ब्याम् । महातुम्ब्याम् । शाकालाब्वा ॥

राजालुकः । पुं० महाकन्दे । मूलके ॥

राजावर्त्तः । पुं० उपरत्नभेदे । आवर्त्तमणौ । रेवटी० इ० भा० प्र० ॥ राजावर्त्तः प्रमेहघ्नश्छर्दिहिक्कानिवारणः ॥ विराटदेशज हीरके । विराटजे ॥ राजपट्टे ॥

राजाहिः । पुं० द्विमुखसर्पे । बिषायुधे । अहीरणौ ॥ अहीनांराजा । राजदन्तादिः ।

राजिः । स्त्री० वीथ्याम । पङ्क्तौ ॥ रेखायाम् । निरन्तरंपङ्क्तिसाधारणे ॥ राजति । राज० । इन् । वसिवपियजिराजीत्यादिना० इञ् वा ॥

राजिका । स्त्री० आसुर्य्याम् । क्षवे । क्षुधाभिजनने । राजसर्षपे । राई० इ० भा० ॥ राजिकाकफपित्तघ्नीतीक्ष्णोष्णारक्तपित्तकृत् । किञ्चिद्रूक्षाग्निदाकण्डूकुष्ठकोष्ठकृमीन्हरेत् । अतितीक्ष्णाविशेषेणतद्वत्कृष्णापिराजिका ॥ केदारे ॥ रेखायाम् । पङ्क्तौ ॥ राजति० राजयतिवा । राज० । ण्वुल् ॥

राजिकाफलः । पुं० गौरसर्षपे ॥

राजिफला । स्त्री० चीनाकर्कट्याम् ॥

राजिमत्फला । स्त्री० राजकोशात-

क्याम् ॥

राजिल । पुं॰ डुण्डुभसर्पे ॥ राजि लोनिर्विषसर्पे . ॥ राजि . रेखाऽस्यास्ति । सिध्मादित्वाल्लच् ॥ यद्वा । राजिंलाति । लाऽऽदाने । आतोनुपेतिकः ॥

राजी । स्त्री॰ निम्बिकद्रपङ्क्तौ ॥ कृदिकारादितिङीष् ॥

राजीफल . । पुं॰ पटोले ॥

राजीव । पुं॰ हरिणप्रभेदे ॥ राजीवस्तुमृगोज्ञेयोराजीभि परितोवृत ' । राजीवस्तुगुणोज्ञेय ' नृपतीनसमोजने . ॥ राइखडइतिख्याते बृहन्मत्स्यविशेषे ॥ हस्तिनि ॥ सारसपक्षिणि ॥ न॰ नलिने । पद्मे ॥ राजीरेखाऽस्यास्ति । अन्येभ्योपिदृश्यतइतिवासिकात । केशरस्वराज्यस्यास्तीतिवा ॥ त्रि॰ राजीमति विनि ॥

राजीवलोचन ' । त्रि॰ कमलनयने ॥

राजेन्द्रः । पुं॰ श्रीरामचन्द्रे ॥ मण्डलेश्वरादशगुणराजनि ॥ यथा । चतुर्ग्रामजनपर्यन्तमधिकारोनृपस्यच । योराजातच्छतगुण : सएवमण्डलेश्वर . ॥ तस्माद्दशगुणोराजाराजेन्द्र . परिकीर्त्तित ' ॥ इ॰ ब्र॰ वैवर्त्तपुराणं ॥

राजोद्वेजनसंज्ञकः । पुं॰ भूताङ्कुश वृक्षे ॥

राज्ञी । स्त्री॰ राजप्रियायाम् । नृपते पत्न्याम् । रोणी॰ इ॰ भा॰ ॥ भास्करस्यभार्यायाम् ॥ कांस्ये ॥ नील्याम् ॥ त्रैलोक्यात्मन कोशस्यपश्चिमदिग्भागे ॥ राज्ञावरुणेनाधिष्ठितत्वात् । सन्ध्यारागयोगाद्वा ॥

राज्यम् । न॰ नीवृति । जनपदे । देशे । विषये । उपवर्त्तने ॥ तल्लक्षणमुक्तंवरदातन्त्रे । यथा । लक्षाधिपस्यराज्य स्यात्साम्राज्य दशलक्षके । शतलक्षं महेशानिमहासाम्राज्यमुच्यते ॥ इति ॥ अपिच ॥ स्वाम्यमात्यौपुरराष्ट्रकोशदण्डौसुहृत्तथा । सप्तप्रकृतयोह्येता . सप्ताङ्गराज्यमुच्यते ॥ इति ॥ राज्ञ . कर्मभावोवा ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ राज्यनैश्छयति पिबादस्त तत्परिणामवित् । यत्प्रविष्ट. पुरुषआत्मानंनाववुध्यते ॥

राज्यका । स्त्री॰ पिष्टराजिकाद्धिलवणमिश्रितवास्तूकादौ । रायता॰ इ॰ भा ॥ राज्यक्तांयातिरोचन्यापाचन्यातांस्तुभक्षयेत् ॥ तान्वटकान् ॥

राज्यमूलम् । न॰ मन्त्रसंरक्षणे ॥

राज्याङ्गम् । न॰ राज्यस्योपाये । प्रकृतौ । स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गवलेषु ॥ राज्यस्यराजकर्मणोङ्गंसाधनम् । स्वामी॰ राजा॰ पुरो

क्षितकृतिश्रीधर : । अमात्योमन्त्री । सुहृत्० मित्रम् । कोशोभाण्डागार . । राष्ट्र देश । पर्वतादीनि दुर्गाणि । वलसैन्यम् । उक्तञ्चकामन्दकीये । स्वाम्यमात्यश्चराष्ट्रञ्चदुर्गंकोशोवलंसुहृत् । परस्परोपकारीदंसप्ताङ्ग राज्यमुच्यते । मीरश्चैतथा सप्ताष्टाङ्गमपिराज्यप्रकीर्त्तितमिति ॥ सप्ताङ्गस्यापिराज्यस्यमूलस्वामीप्रकीर्त्तित . । तन्मूलत्वात्तथाङ्गानांराजारक्ष्य प्रयत्नत ' ॥ षडङ्गरक्षाकर्त्तव्यातथातेनप्रयत्नत · । अंगेभ्योयस्त्वथैकस्यद्रोहमाचरतेऽल्पधी · ॥ वधस्तस्यतुकर्त्तव्य . शीघ्रमेवमहीक्षिता ॥

राटि · । स्त्री० युद्धे । राड० इ०भा० प्र० ॥

राङ्घि । स्त्री० धराविखरी ॥

राढ । पुं० मदनद्रुमे । मयनफलाख्ये ॥

राढक · । पु० स्वनामाख्यातेदेशे ॥ यथा । प्राच्यामागधशोणोत्तरारेन्द्रोगौडराढका : । इतिज्योतिषतत्त्वम् ॥

राढा । स्त्री० जनपदविशेषे । सुह्मेषु ॥ शोभायाम् ॥ गौडदेशेपुरीविशेषे ॥

राढि · । स्त्री० युद्धे ॥

राढीय : । त्रि० राढदेशोद्भवे ॥

रात . । त्रि० दत्ते ॥

रात्रम् । न० ज्ञाने ॥ यथा रात्रञ्चज्ञानवचनञ्ज्ञानपञ्चविध स्मृतम् । तेनेद पञ्चरात्र च प्रवदन्तिमनीषिण : ॥

रात्रक · । पुं० पञ्चधूटकाम्लवर्षवासिनि । सवत्सरमभिव्याप्यवेश्यावेश्मनिवासिनि ॥ न० पञ्चरात्रे ॥

रात्रि . । स्त्री० सूर्यकिरणानवच्छिन्नकाले । निशायाम् । निशीथिन्याम् । त्रियामायाम् । रात० इ० भा० ॥ तस्या कारणयथा । यदादित्यश्चअष्टासुमेरोभूगोलकोद्भवा । छायाभवेत्तदारात्रि · स्याञ्चतद्विरहाद्दिनम् ॥ इतिवह्निपुराणम् ॥ इयकालरूपत्नी । पश्चसन्ध्यायाम् ॥ रातिसुखम् · रा० । राशदिभ्याक्रिप् ॥ रात्रे पूर्वौ तरीयामौवेदाभ्यासेनतौनयेत् ॥ हरिद्रायाम् ॥

रात्रिचर · । पुं० राक्षसे ॥ रात्रौचरति । चरेष्ट । रात्रे कृतिविभाषेतिपक्षेमुमभाव ॥ त्रि० रात्रौगमनकर्त्तरि ॥

रात्रिचरी । स्त्री० राक्षस्याम् ॥ टित्त्वान्ङीप् ॥

रात्रिजलम् । न० कुज्झटिकायाम् । रात्रर्जलम् ॥

रात्रिजागर · । पुं० कुक्कुरे ॥ त्रि०

रात्रौजागरणकर्त्तरि ॥
रात्रिजागरद । पु॰ मशके ॥
रात्रिञ्चर । पु॰ यातुधाने । राक्षसे ॥ रात्रौचरति । चरेष्ट । रात्रेः कृतिविभाषेतिपक्षेमुम् ॥ त्रि॰ रात्रौगमनकर्त्तरि ॥
रात्रिञ्चरी । स्त्री॰ राक्षस्याम् ॥
रात्रिन्दिवम् । अ॰ अहोरात्रयोः ॥ रात्रौचदिवाच । अचतुरेत्यादिनाऽधिकरणार्थयोर्द्वन्द्वसमासान्तो-निपातितः । अव्ययान्तत्वादव्ययम् ॥
रात्रिपुष्पम् । न॰ उत्पले ॥
रात्रिमट. । पुं॰ राक्षसे ॥ अटति । अटगतौ । पचाद्यच् । सप्तमीतियोगविभागात्समासः ॥ रात्रौअटतिवा । रात्रेःकृतिविभाषेतिमुम् ॥
रात्रिमणिः । पुं॰ चन्द्रे ॥ रात्रेर्मणिरिव ॥
रात्रिवास । पुं॰ अन्धकारे ॥ रात्रौवासोऽस्य ॥
रात्रिवास । न॰ रात्रौशयनकालीनपरिधेयवस्त्रे ॥ यथाशयनस्थान्यकारिषुरात्रिवासोदिनेतथा । नाना स्वरकुवेशश्च व...

म् ।
रात्रिविगमः । पुं॰ प्रभाते ॥ रात्रेर्विगमोऽत्र
रात्रिविश्लेषगामी । पुं॰ चक्रवाके ॥
रात्रिवेद । पु॰ कुक्कुटे ॥
रात्रिवेदी । पु॰ कुक्कुटे ॥
रात्रिहास । पु॰ श्वेतोत्पले ॥
रात्रिहिण्डकः । पुं॰ अन्तःपुररक्षके ॥
रात्री । स्त्री॰ निशायाम् । रात्री ॥ कृदिकारादितिपाक्षिकोङीष् ॥
रात्रौ । अ॰ निशि ॥
रात्र्यन्ध । त्रि॰ रात्रौदृष्टिहीनेनरे । रतन्धा॰इ॰भा॰ ॥ तन्नाशकौषधयथा । देवदारोश्चवेचूर्णमजामूत्रेणभावयेत् । एकविंशतिवारमक्षिणी तेनचाञ्जयेत् ॥ रात्र्यन्धतापटलतानश्येदितिविनिश्चयः ॥ इतिगारुडे ॥ १८९ ॥ अध्यायः ॥ का-कादौ ॥
राद्ध । त्रि॰ पक्वे । सिद्धे ॥ सम्ये ॥ राध्यति । राध॰ ॥ राधेरनिटः क्तः ॥
राद्धान्तः । पुं॰ सिद्धान्ते ॥ राद्धःसिद्धोन्तोनिश्चयोयस्मिन् ॥
राधः । पुं॰ वैशाखमासे । माधवे ॥ राधा॰विशाखा॰तद्वतीपौर्णमासी॰ राधी । साऽस्मिन्नस्ति । साऽस्मिन्पौर्णमासीत्यण् ॥
राधनम् । न॰ साधने ॥ प्राप्तौ ॥ तोषे ॥
राधना । स्त्री॰ भाषणे ॥

राधरङ्ग । पुं॰ सुनासीरे ॥ सीरके ॥ घनोपले ॥ शीकरे ॥ इ॰ मेदिनी ॥

राधरङ्ग् । पुं॰ राधरङ्गार्थे ॥ इति हेमचन्द्र ॥ *

राध । न॰ ऐश्वर्ये ॥

राधा । स्त्री॰ गोपीविशेषे । तस्यानामानियथा । राधारासेश्वरीरासवासिनीरसिकेश्वरी । कृष्णप्राणाधिकाकृष्णप्रिय.कृष्णस्वरूपिणी ।कृष्णवामाङ्गसम्भूतापरमानन्दरूपिणी। कृष्णावृन्दावनीवृन्दावृन्दावनविनोदिनी ॥ चन्द्रावतीचन्द्रकान्ताशतचन्द्रनिभानना । नामान्येतानि साराणितेषामभ्यन्तराणिचेति ॥ राधेत्येवञ्च संसिद्धाराकारोदानवाचक ' । स्वयंनिर्वाणधात्रीयासाराधापरिकीर्त्तिता इतिब्रह्मवैवर्त्तपुराणम् । राध्नोतिसकलान्कामांस्तेताराधेतिकीर्त्तितेतिदेवीभागवतम् । राध्नोतिसाधयतीत्यर्थ : ॥ महालक्ष्म्याम् ॥ यथा । अन्मायामोहितायस्माब्रह्मविष्णुशिवादय . । वैष्णवास्तांमहालक्ष्मींपराराधावदन्तिते ॥ यदर्धाङ्गामहालक्ष्मी प्रियानारायणस्यच ॥ धन्विनाचिन्त्यभेदे । वेधविशेषे ॥ विशाखानक्षत्रे ॥ आमलक्याम् ॥ विष्णुक्रान्तायाम् ॥ विद्युति ॥ राध्नोति कार्यमनया । राधसंसिद्धौ । गुरोश्चहलइत्यकार ॥ यद्वा । राधयति । अच् । टाप् ॥

राधाकान्त : । पुं॰ श्रीकृष्णे ॥

राधाकृष्ण । पुं॰ राधाऽविनाभूतकृष्णे । श्रीकृष्णे । द्विभुजे । मुरलीधरे ॥ राधानामोच्चारणानन्तरकृष्णनामोच्चारणे विधियथा । नारद उवाच । आदौराधासमुच्चार्यपश्चात्कृष्णं विदुर्बुधा ' ॥ निमित्तमस्य भक्त वद्भक्तजनप्रिय ॥ श्रीनारायण उवाच । निमित्तमस्य त्रिविध कथयामिनिशामय, जगन्माता चप्रकृति पुरुषश्चजगत्पिता ॥ गरीयसीतिजगतामाता शतगुणै : पितु ' । राधाकृष्णेतिगौरीशेत्येवं शब्द ' श्रुतौश्रुत ॥ कृष्णराधेशगौरीतिलोकेनचकदाश्रुत . । प्रसीदरोहिणीचन्द्रगृहाणार्घ्यमिदंमम । गृहाणार्घ्यंमयादत्तंसञ्छायासहभास्कर । प्रसीदकमलाकान्तगृहाणममपूजनम् ॥ इतिदृष्टसामवेदेकौथुमेसुनिसत्तम । राशब्दोच्चारणादेव स्फीतोभवतिमाधव . ॥ धाशब्दोच्चारत . पश्चाद्धावत्येवससम्भ्रम . । आदौपुरुषमुच्चार्यपश्चात्प्रकृतिमुच्चरेत् । सभवेन्मातृगामीचवेदातिक्रमणे मुने ॥ इ॰ व्र॰ ब्र॰ वै॰ पु॰ ॥

राधातनय : । पुं० कर्णनामनि ॥ राधायास्तनय : ।।
राधावल्लभ : । पुं० श्रीकृष्णे ।।
राधावल्लभी । पुं० सम्प्रदायविशेषे॥
राधावल्लभीय : । त्रि० सम्प्रदायविशेषयुक्ते वैष्णवे ॥ न । तत्तिलकविशेषे ॥ यथा ॥ आनासामूलमाश्रित्यशिरोमध्यगतं मुने । हरिपादाकृतनासा मूलमाश्रित्ययत्नत : । हरिमन्दिरवत्सर्वं तद्राधावल्लभीयकम् । श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् । यौगुल तत्तुविज्ञेय यद्दिमध्ये सुरं गितम इतिपद्मपुराणम् ॥
राधाभेदी । पुं अर्जुने ॥
राधावेधी । पुं० अर्जुने ॥
राधासुत । पुं० कर्णे । चम्पाधिपे । अंगराजे । अर्कतनये ॥
राधेय : । पु० राधासुते । कर्णे ॥ राधाया : अपत्यम् । स्त्रीभ्योढक् ॥
राभसम् । न० उपक्रमे ॥
राम : । पुं० राघवे । दशरथतनये । श्रीरामचन्द्रे ॥ राम : शस्त्रभृतामहम् । युद्धकुशलानांमध्ये रामोऽखिलराक्षसक्षयकर : परमवीरोभगवद्विभूति : ॥ अयमवतारस्त्रेतायुगान्तेरावणादिवधार्थ : ॥ रेणुकेये । परशुरामे ॥ हलायुधे । बलभद्रे ॥ भार्गवोराघवोगोपस्त्रयोरामा : प्रकीर्तिता : ॥ राशब्दोरिरितिविख्यातश्च शिव : परिकीर्तित । शिवस्यात्मकब्रह्मरामरामेतिगीयते । राशब्दोविश्ववचनोमश्चापीश्वरवाचक : । विश्वेषामीश्वरोयोहितेनराम : प्रकीर्तित : ॥ रमतेरमयासार्द्धंतेनरामविदुर्बुधा : । रमायारमणस्थानरामंरामविदोविदु : । राश्चेतिलक्ष्मीवचनोमश्चापीश्वरवाचक : । लक्ष्मीपतिगतिरामप्रवदन्तिमनीषिण : ॥ नाम्नासहस्रंदिव्यानांस्मरणेयत्फलं भवेत् । तत्फलंलभतेनूनंरामोच्चारणमात्रत : ॥ वरुणे । हये ॥ पशुभेदे ॥ न० वास्तूके ॥ कुष्ठौषधौ ॥ तमालपत्रे ॥ त्रि० चारौ । मनोरमे ॥ सिते ॥ असिते । श्यामे ॥ परमात्मनि ॥ रमन्तेयोगिनोनन्तेनित्यानन्देचिदात्मनि । इतिरामपदेनासौपरंब्रह्माभिधीयते ॥ इतिपद्मपुराणम् ॥ रमते । रमक्रीडायाम् । ज्वलितिकसन्तेभ्योण ॥ यद्वारमन्तेसच्चिदानन्दलक्षणेयोगिनोऽस्मिन्ननेनवा । हलश्चेतिघञ् ॥ रमयतीतिवा ॥ मथुराचविलोमेनमध्यमोनंयदक्षरम् । योनस्मरतिलोकेस्मिन्सम्मध्य तन्नाम्खोपरि ॥ रामोपासकस्यतिलकयथा । श्रीरामोपासनायस्यतिलकतूर्ध्वंपुण्ड्रकम् । भ्रुवोर्मध्ये

सविन्दु. स्यात्यदिविप्रमनोहरम् ॥

रामकरी । स्त्री॰ रामकलीरागिण्याम् ॥

रामकर्पूरक: । पुं॰ स्वनामाख्यातिणे ॥

रामगिरि । पुं॰ स्वनामप्रसिद्धे॰ पर्वते॥ चित्रकूटपर्वते॰ इतिकश्चित्॥

रामचन्द्रः । पु॰ श्रीरामे । रावणारी ॥

रामजननी । स्त्री॰ रेणुकायाम् ॥ कौशल्यायाम् ॥ रोहिण्याम् ॥

रामठ. । पु॰ अङ्कोठवृक्षे ॥ न॰ हिङ्गुनि ॥ रामठदेशोद्भवत्वादुपचारः । रमन्तेऽनेनवा । रम॰ । रमेर्वृद्धिश्चेत्यठ । ॥ रमयतिवा ॥

रामठी । स्त्री॰ नाडीहिङ्गुनि ॥

रामण: । पुं॰ गिरिनिम्बे ॥ तिन्दुके ॥

रामणीयकम् । न॰ मनोहरत्वे । रमणीयत्वे ॥ रमणीयस्यभावः । योपधाद्गुरूपोत्तमाद्वुञ् ॥

रामण्यकम् । न॰ रमणीयतायाम् ॥

रामतरणी । स्त्री॰ लताविशेषे ॥

रामतरुणी । स्त्री॰ तरुणीपुष्पे । सेवती॰ इ॰भाषाप्र॰ ॥

रामतीर्थम् । न॰ गोमत्याम्प्रसिद्धे॥ सूर्य्यारके ।

रामदूतः । पुं॰ हनूमति ॥ यथा । मनोजवं मारुततुल्यवेगंजितेन्द्रियंबुद्धिमतांवरिष्ठम् । वातात्मजंवानरयूथमुख्यं श्रीरामदूतंमनसास्मरामीतिरामायणे ॥ रामस्यदूतः ॥

रामदूति । स्त्री॰ तुलसीविशेषे । विशल्यायाम् ॥

रामदूतिका । स्त्री॰ नागिन्याम् । नागपुष्प्याम् ॥

रामदूती । स्त्री॰ पर्णपुष्प्याम् । विशल्यायाम् ॥

रामनवमी । स्त्री॰ चैत्रशुक्लनवम्याम् ॥ रामनवमीव्रतेपारणकालस्तु । नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैः । उपोषणंनवम्यांवैदशम्यामेवपारणमिति ॥

रामपद्मम् । न॰ तीर्थविशेषे ॥

रामपूग. । पुं॰ पूगभेदे । कामीने । मुनिपूगे । सुरेवटे ॥

रामभद्र. । पु॰ श्रीरामे ॥

रामलवणम् । न॰ रोमके । सांभर॰ इ॰ भा॰ ॥

रामवल्लभम् । न॰ त्वचे ॥ त्रि॰ रामप्रिये ॥

रामबाणः । पुं॰ औषधविशेषे ॥ यथा । पारदामृतलवङ्गगन्धकभागयुग्ममरिचेनमिश्रितम । तत्रजातिफलमर्द्धभागिकंतिन्तिडीफलरसेनमर्द्दितम् ॥ वह्निमान्द्यदशवक्त्रनाशनोरामबाणइतिविश्रुतोरसः । सङ्ग्रहग्रहणिकुम्भकर्णकामामवा-

तखरदूषणं जयेत् ।। दीयतेतुशा णकानुमानत सद्यएवजठराग्नि-दीपन । रोचक कफकुलान्तका रक श्वासकासवमिजन्तुनाशन ।। पारदभाग.१ विषभाग १लवङ्गभा ग १ गन्धकभाग . १ मरिचभा गा ८ जातीफलभागौ २ रामबा णोरसोऽजीर्णे ॥ रामस्यशरे। राम शरे ॥

रामवीणा । स्त्री० वीणाप्रभेदे ॥

रामशर : । पु० शरवृक्षभेदे । राम काण्डे ॥

रामशीतला । स्त्री० आरामशीतला याम् ॥

रामसख । पुं० सुग्रीवे ॥ रामस्यस खा । टच् ॥

रामसेनक । पुं० भूनिम्बे ॥ कट् फले ॥

रामह्रद । पुं० तीर्थविशेषे ॥

रामा । स्त्री० उत्कृष्टयोषिति । रमते गीतकलाभिरिति० रमयतिपुरुष मितिवापुरुषरमणकारिण्यामबला याम् ॥ रम० । ज्वलादित्वाण ॥ हिङ्गुलिन्याम् । कष्टकार्यामः ॥ रक्तकन्यायाम् ॥ आरामशीतला-याम् ॥ अशोके ॥ गोरोचनाया म् ।। गैरिके ॥ हिंगुले ॥

रामानुजः। पुं० लक्ष्मणे ॥ श्रीकृष्णे ॥ आधुनिकवैष्णवसंप्रदाये ॥ न०

तिलकविशेषे ॥ यदूर्द्ध्वपुण्ड्रं तिलक शोभनतन्मनोहरम् । तन्मध्यपीत रेख चश्रीमद्रामानुजविदु ॥

रामायणम् । न० वाल्मीकीयेमहा काव्ये । वृत्त् वाक्यणावशब्दत्पन्ने महदाख्याने । रामेणरावणवधका व्ये । कुशलवोपदिष्टचतुर्विंशतिस हस्रश्लोकसङ्ख्याकआदिकाव्ये ।। य था । प्राप्तराज्यस्यरामस्यवाल्मी किर्भगवानृषि । चकारचरितङ्कृ त्स्न विचित्रपदमर्थवत् ॥ चतुर्विं शत्सहस्राणिश्लोकानामुक्तवानृष-षि :। तथासर्गशतान् पञ्चषट्का ण्डानितथोत्तरम्॥ तत्त्वशतकोटिसङ्ख्य कमपि। चरितरघुनाथस्यशतकोटि प्रविस्तरम् । एकैकमक्षरंपुंसामहा पातकनाशनम् ॥ तत्तुसम्पूर्णं ब्रह्म लोकेस्थितमित्यं तिल्यम् ॥ रामस्यअ यनचरितम् । पूर्वपदादितिणत्वम् ॥

रामालिङ्गनकाम : । पुं० रक्ताम्लाने॥

रामावल्लोपम : । पुं० चक्रवाके ॥

रामावरज . । पुं० लक्ष्मणे ॥ श्री कृष्णे ॥

रामिल । पु० रमणे ॥ कामे ॥

राम्भ । पुं० व्रतिनोवंशवेदण्डे ॥ र म्भस्यवेणोर्विकार . । पलाशादि भ्योवेत्यञ् ॥

रायभाटी । स्त्री० आमोल० कृ० गौ० प्र० । नदीस्रोतोविशेषे ॥

रायस्पोष : । पुं॰ धनपुष्टौ ॥ रायो धनस्यपोष . । अलुक्समास : । छान्दसोविसर्गस्यसकार . ॥

राल . । पुं॰ स्वनामप्रसिद्धे॰ यक्ष धूपे ॥ अस्यनामानिगुणास्वयथा । रालस्तुसालनिर्यासस्तथासर्जरस ' स्मृत : । देवधूपोयक्षधूपस्तथास र्वरसश्चस : ॥ रालोहिमोगुरुस्ति क्ता . कषायोग्राहकोहरेत् । दोषा स्वेदवीसर्पज्वरव्रणविपादिका : ॥ ग्रहभग्नाग्निदग्धांस्रमूलातीसार नाशन : ॥

रालकार्य्य : । पुं॰ सालवृक्षे ॥

राव । पुं॰ शब्दे । ध्वनौ ॥ रवणम् । रुशब्दे । भावेघञ् ॥

रावण : । पुं॰ लङ्केश्वरे । दशग्रीवे । पौलस्त्ये । षड्विंशग्रीवे ॥ रावणोलो कारावणइतिन्यायात्॰ रावयति । रु॰ । नन्द्यादित्वाल्ल्यु, । तदुक्त मुत्तरकाण्डे । यस्माल्लोकत्रयंचै तद्रावितं भयमागतम् । तस्मात्त्वं रावणोनामनाम्नावीरो भविष्यसी ति ॥ यद्वा । विश्रवसोपत्यम् । शिवादित्वात्॰ विश्रवसोविश्रवणरव णावादेशौनिपातितौ॰अण्च ॥

रावणगङ्गा । स्त्री॰ सिंहलदेशस्थनदी विशेषे । येतुरावणगङ्गायांजाय न्ते कुरुविन्दका ' । पद्मरागाघनं राग बिभ्राणा स्स्फुटार्चिष ' ॥

रावणारि : । पुं॰ श्रीरामे ॥ रावण स्यअरि : ॥

रावणि : । पुं॰ रावणस्यज्येष्ठपुत्रे । इन्द्रजिति ॥ अन्याप्ये रावणकुमा रे ॥ रावणस्यापत्यम् । अतइञ् ॥

राशि ' । पुं॰ पुञ्जे । उत्करे । कूटे । धान्यादिसमूहे ॥ मेषादिस्वरूपे ज्योतिश्चक्रस्यद्वादशांशे ॥ तस्यसं स्थानं यथा । विषुवत्क्रान्तिवृत्तै क्यात्पूर्वभागस्थितास्थिरा . । मे षाद्या : राशय . क्रान्तिवृत्तस्य : पू र्वदिक्क्रमात् ॥ तेयथा । मेषोवृषो थमिथुन कर्कट . सिंह एवच ॥ कन्यातुलावृश्चिकश्च धनुर्मकरएव च ॥ कुम्भोमीनश्चविज्ञेयाराशयो द्वादशैवते ॥ रश्यते॰रशतिवा । रशइतिसौत्रोधातु ' स्वनार्थे ' । बाहुलकादिण् । णिजन्तादचइर्वा ॥ यद्वा । अश्नुते । अशूव्याप्तौ । अशिपणाय्योरुडायलुकौ चेति॰ इण्॰ धातोरुडागमश्च ॥ गणिते ॥

राशिचक्रम् । न॰ मेषादिद्वादशराश्या दियुक्तवृत्ते । भचक्रे । ज्योतिष चक्रे ॥ सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम् । तदंशैभवे द्राशिर्नवचंचरणाङ्कित : ॥ तद्विव रण यथा । भचक्रं भ्रवयोर्बद्धमा क्षिप्तंप्रवहानिलै : । पर्येत्यजस्रं तन्नद्धाग्रहकक्षायथाक्रमम् ॥ उप

रिश्चस्त्वमहतीकक्षास्थाः श्रित
श्च। महत्याकक्षयाभागामहान्तो
ल्पास्तथाल्पया ॥ कालेनाल्पेनभ
गणं भुङ्क्तेऽल्पभ्रमणाश्रितः। ग्र
हः कालेनमहतामण्डलेमहतिभ्र
मन् ॥ स्वल्पयातुबहून्भुङ्क्ते
भगवान्शीतदीधितिः। महत्या
कक्षयागच्छन् ततः स्वल्पं शनैश्च
रः॥ मन्दादधः क्रमेणस्युश्चतुर्था
दिवसाधिपाः। वर्षाधिपतयस्तद्व
त्तृतीयाः परिकीर्त्तिताः॥ ऊ
र्द्ध्वक्रमेणशशिनोमासानामधिपाः
स्मृताः॥ होरेशाः सूर्यतनयाद
धोधः क्रमशस्तथा। भवेद्भकक्षा
तिग्मांशोर्भ्रमणं षष्टिताडितम्।
सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भ
मण्डलम् ॥ तत्कक्षाक्रममाह।
ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभि
धीयते। तन्मध्ये भ्रमणं भानामधो
धः क्रमशस्तथा॥ मन्दामरेज्यभू
पुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रम
न्त्यधोधः स्थाः सिद्धविद्याधराघ
नाः॥ रविर्मासं निशानाथं सपा
दद्दिवसद्वयम्। पक्षत्रयं भूमिपुत्रो
बुधोऽष्टादशवासरान् ॥ वर्षमेकं सु
राचार्यश्चाष्टाविंशद्दिनं भृगुः।
शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्ध
वत्सरम् ॥ एवं प्रमाणात्सकलाः
स्वराशिं भुञ्जते ग्रहाः ॥ इतिराशि
भोगः॥

राशिविभागः। पुं॰ अश्विन्यादिन
क्षत्रैर्मेषादीनांविभजने ॥ यथा।
सपादद्वयनक्षत्रैरश्विन्यादिभिरेवच
। राशयः कथिताह्येतेमेषादिद्वाद
शक्रमात् ॥ तथाहि। अश्विनीभर
णीकृत्तिकापादेमेषः १। कृत्ति
काशेषपादत्रयरोहिणीमृगशिरोऽर्द्धे-
वृषः २। मृगशिरःशेषार्द्धमार्द्रा
पुनर्वसुपादत्रयमिथुनम् ३। पुन-
र्वसुशेषपादेकपुष्याश्लेषाकर्कटः ४
। मघापूर्वफल्गुन्युत्तरफल्गुनीप्र-
थमपादः सिंहः ५। उत्तरफल्गुनी
शेषपादत्रयहस्ताचित्रार्द्धेकन्या ६
। चित्राशेषार्द्धस्वातीविशाखापाद
त्रयतुला ७। विशाखाशेषैकपादो
ऽनुराधाज्येष्ठावृश्चिकः ८। मूलं
पूर्वाषाढोत्तराषाढाप्रथमपादोधनुः
९। उत्तराषाढाशेषपादत्रयश्रवणा
धनिष्ठार्द्धंमकरः १०। धनि
ष्ठाशेषार्द्धंशतभिषापूर्वभाद्रपाद
त्रयकुम्भः ११। पूर्वभाद्रशेषपाद
उत्तरभाद्ररेवतीमीनराशिः १२।
रिति ॥ उक्तञ्च। सप्तविंशतिभै
र्ज्योतिश्चक्रस्तिमितवायुगम्। तद
ष्टांशोभवेद्राशिर्नवर्क्षचरणाङ्कितइ-
ति ॥

राष्ट्रः। पुं॰ न॰ उपवर्त्तने। चक्रे।
नीवृति। देशे। विषये॥ उपद्रवे

॥ राजति । राज्॰ । ष्ट्रन् । अर्थे तिष '॥

राष्ट्रनिवासी । त्रि॰ जानपदे । देशवासिनि ॥

राष्ट्रिका । स्त्री॰ कण्टकारिकायाम् ॥ राष्ट्रमस्त्यस्याः । अतइनिठनाविति ठन् ॥

राष्ट्रिय . । पुं॰ नाट्योक्त्याराजश्याले ॥ राष्ट्रेऽधिकृतः । राष्ट्रावारपारादृघखाविति घ । घखेयादेश . ॥

राष्ट्रीय । पुं॰ राष्ट्रिये ॥ त्रि॰ राष्ट्रसम्बन्धिनि ॥

रास : । पु॰ कोलाहले ॥ ध्वनौ ॥ भाषाशृङ्खलके ॥ विलासे । गोपानां गोपीभि सहक्रीडाविशेषे ॥ रासते । रासृशब्दे । अच् ॥ गर्ज्जिते ॥

रासगोष्ठी । स्त्री॰ हल्लीषके ॥ तल्लक्षण यथा । पृथुसुवृत्त मसृण वितस्तिमात्रोन्नतकौविनिखन्यशङ्कुकम् । आक्रम्यपद्भ्यामितरेतरन्तुहस्तैर्भ्रमोयखलुरासगोष्ठीतिहरिवशटीकायां नीलकण्ठ : ॥

रासन : । पुं॰ रसे ॥ रसनया गृह्यते । ग्रीषद्वत्यण् ॥

रासभ : । पुं॰ गर्द्दभे । रासते । रास॰ । रासिवल्लिभ्याम्ञ्च्यभच् ॥

रासभवन्दिनी । स्त्री॰ मल्लिकायाम ॥

रासभी । स्त्री॰ गर्दभ्याम् । गधी॰ हृ॰ भा॰ ॥ जातिलक्षणोङीष् ॥



रासमण्डलम् । न॰ श्रीकृष्णस्यरासक्रीडास्थले ॥

रासेरस . । पुं॰ रासगोष्ठ्याम् ॥ रासे ॥ शृङ्गारे ॥ रससिद्धौ ॥ रसावासे ॥ षष्ठीजागरके ॥ उत्सवे ॥ परिहासे ॥

रासेश्वरी । स्त्री॰ राधायाम् ॥

रास्ना । स्त्री॰ स्वनामख्यातलताविशेषे । नाकुल्याम । सुरसायाम् । भुजङ्गाक्ष्याम् । राइसन॰जैत॰हृ॰ भा॰प्र॰ ॥ रास्नातुत्रिविधाप्रोक्तामूलपत्र तृण तथा । ज्ञेयौमूलदलौश्रिष्टौतृणारास्नातुमध्यमा ॥ हृ॰ रा॰नि॰ ॥ अपिच । नाकुलीतुवरातिक्ताकटुकोष्णाविनाशयेत् । भोगिलूताखुवृश्चिकाखुविषज्वरकृमिव्रणान् ॥ हृ॰भा॰प्र॰ ॥ रास्नाशोथामवातघ्नोतिराजवल्लभ . ॥ एलावती॰हृ॰दे॰भा॰प्र॰औषधिविशेषे । एलापर्ण्याम् । सुवहायाम् । युक्तरसायाम् । कांटाआमरूली॰ हृ॰गौ॰दे॰भा॰प्र॰ ॥ अस्यागुणाय था । रास्नामपाचनीतिक्तागुरूष्णाकफवातजित् । शोथश्वाससमीरास्रवातशूलोदरापहा ॥ कासज्वरविषाशीतिवातिकामयहिध्महृत् ॥ राति॰रायतेवा । रासते॰रस्यतेवा । रादाने । रसआस्वादने॰रास शब्देवा । रास्नासास्नेतिसाधु : ॥

राहु । पुं० तमोग्रहे । स्वर्भानौ । सैंहिकेये ॥ रहति० गृहीत्वात्यजति चन्द्राकौं । रहत्यागे । बाहुलका-दुण् ॥

राहुगृहम् । न० कन्याराशौ ॥ राहो गृहम् ॥

राहुग्रह । पुं० )

राहुग्राह । पुं० ) उपरागेचन्द्रसूर्ययोर्ग्रहणे ॥

राहुच्छत्रम् । न० आर्द्रके ॥

राहुदर्शनम् । न० राहोश्चाक्षुषज्ञाने । ग्रहणे ॥

राहुभेदी । पुं० विष्णौ ॥

राहुमूर्धभित् । पुं० केशवे ॥

राहुरत्नम् । न० गोमेदके ॥

राहुलसू । पु० बुद्धे । सुगते ॥

राहुस्पर्श : पु० उपरागे ॥

राहुहा । पुं० विष्णौ ॥

राहूच्छिष्ट : । पुं० )

राहूत्सृष्ट : । पुं० ) लशुने ॥

रिक्त । त्रि० शून्ये ॥ यथा । रिक्तह-स्तोनगोपेयाद्राजानदेवतांगुरुमि-ति ॥ निर्धने ॥ न० वने ॥ रि-च्यतेस्म । रिचवियोजनसम्पर्चन-योः । क्त ॥

रिक्तकम् । त्रि० शून्ये ॥ स्वार्थे कन् ॥

रिक्ता । स्त्री० चतुर्थीनवमीचतुर्दशी-षुतिथिषु ॥

रिक्थम् । न० धनमात्रे । वसुनि ॥ रिच्यते । रिचिर्विरेचने । पातृतु दिवचिरिचीतिथक् ॥

रिक्थहारी । त्रि० दायादे ॥

रिक्थाद । पु० पुत्रे ॥

रिक्थी । त्रि० धनहारिणि ॥

रिखा । स्त्री० लिखायाम् । कौस० क० भा० इतिहेमचन्द्रः ॥ लख्य-ते । लखआलोचने । घञ् । पृ-षोदरादिः ॥

रिङ्खणम् । न० स्खलने ॥ धर्मादि स्खलने ॥ बालानांहस्तपादाभ्यांच-लने । रिखिगतौ । भावेल्युट् ॥

रिङ्गणम् । न० स्खलने ॥ धर्मादिस्खल ने ॥ बालानांहस्तपादाभ्याञ्चलने । रोंगणा० इ० भा० प्र० ॥ क्वचि-त्खात्पिच्छिलादेस्स्खलनरिङ्ग णं क्वचित् ॥ रिगिगतौ । भावेल्यु ट् ॥

रिङ्गन् । त्रि० जानुभ्यांगच्छति ॥ ग च्छति ॥

रिधम : । पुं० कामे ॥ वसन्ते ॥

रिपु । पुं० शत्रौ । अहितकारि णि ॥ आभ्यन्तरारिपवोयथा । का मक्रोधौलोभमोहौमदोमात्सर्यमेव-च । आभ्यन्तराङ्गमेप्रोक्तारिपवस्त-त्त्ववेदिभिः ॥ अनित्याः शत्रवो बाह्याविप्रकृष्टाश्चतेयतः । अत. सोऽभ्यन्तरान्नित्यान्षट्पूर्व्वमजय द्रिपून् ॥ अनिष्टंरपति । रपव्य

छायावाचि । रपेरिच्चोपधायाइति कु ' ॥ लग्नात्षष्ठभवने ॥ चोरक नामगन्धद्रव्ये ॥
रिपुघातिनी । स्त्री॰ लताविशेषे । कुचिकायाम् । कुचुड़॰ गौ॰ दे॰ भा॰ प्र॰ ॥ शत्रुनाशकारिण्याम् ॥
रिपुद : । पुं॰ दक्षिणोत्तरद्वारगृहे ॥
रिपुभम् । न॰ षष्ठराशौ ॥
रिप्फम् । न॰ व्ययभवने ॥
रिप्र : । त्रि॰ अधमे । कुत्सिते ॥ रीयते । रीङ् स्रवणे । लीरीङोर्ह्रस्व . पुट् चतरौस्त्रंशकुत्सनयोरिति रप्रत्ययोधातोर्ह्रस्व : प्रत्ययस्य पुट् च ॥
रिमेद ' । पुं॰ अरिमेदे ॥
रिरंसा । स्त्री॰ रन्तुमिच्छायाम् ॥ रमे : सन् ॥ अप्रत्ययात् । टाप् ॥
रिरंसु : । त्रि॰ रन्तुमिच्छौ ॥ रमे : सन्नन्तादुप्रत्यय : ॥
रिरक्षा । स्त्री॰ रक्षितुमिच्छायाम् ॥
रिरक्षिषु : । त्रि॰ रक्षितुमिच्छौ ॥
रिरी । स्त्री॰ पित्तलि ॥
रिश्य : । पुं॰ मृगे ॥
रिष्ट । पुं॰ खड्गे ॥ फेनिले । रीठा॰ इ॰ भा॰ ॥ न॰ एनसि । पापे ॥ क्षेमे । कुशले ॥ अशुभे । अकल्याणे ॥ अभावे । नाशे ॥ क्षेमाशुभाभावेषु ॥ रेषणम्॰ रिष्यतेस्म तिवा । रिषहिंसायाम् । क्त ' ॥
रिष्टक । पुं॰ फेनिले । रीठा॰ इ॰ भा॰ ॥
रिष्टि: । पुं॰ खड्गे । असौ ॥ स्त्री॰ शुभे ॥ रेषति । रिष॰ क्तिन् ॥
रिष्फम् : । न॰ व्ययभवने ॥
रिष्य . । पुं॰ मृगप्रभेदे ॥ रिष्यती । रिष॰ । अघन्यादित्वात्साधु : ॥
रिष्व : । त्रि॰ हिंस्रे ॥ न॰ शस्त्रे ॥ रिष्यतेऽनेन । रिष॰ । सर्वनिघृष्व रिष्वेतिसाधु : ॥
री । स्त्री॰ गतौ ॥
रीठा । स्त्री॰ रीठाकरञ्जे ॥
रीठाकरञ्ज ' । पुं॰ स्वनामख्याततरौ । गुच्छके । गुच्छपुष्पके । गुच्छफले । फेनिले ॥
रीढक : । पुं॰ पृष्ठवंशे ॥
रीढा । स्त्री॰ अवमाननायाम् । अवज्ञायाम् ॥ रेहणम् । रिहवधे । औणादिक : क्त : । स्त्रीत्व लोकात् ॥
रीण . । त्रि॰ स्रुतजलादौ । क्षरिते । स्रुते ॥ रीयतेस्म । रीङ् स्रवणे । क्त ' । स्वादयओदित : । ओदितश्चेतिनत्वम् ॥ क्षीणे ॥
रीति । स्त्री॰ स्यन्दे । गतौ ॥ प्रचारे ॥ लोहकिट्टे ॥ दग्धस्वर्णादिमले ॥ सीमनि ॥ स्रवणे ॥ स्वभावे । रूपे । लक्षणे । भावे । आत्म

 

नि । प्रकृती । सहजे ॥ पित्तले ॥ पित्तलन्त्वारकूटं स्यादारीरीतिश्च कथ्यते । राजरीतिर्ब्रह्मरीति कपिलापिङ्गलापिच ॥ रीतिरप्युप धातुः स्यात्ताम्रस्ययसदस्यच । पि त्तलस्यगुणाज्ञेया स्वयोनिसदृशा जनैः स योगजप्रभावेण तस्यान्ये पिगुणा, स्मृताः रीतिकायुगल रूक्ष तिक्तं चलवण रसे ॥ शोधनं पाण्डुरोगघ्नं कृमिघ्न नातिलेखनम् । कांस्यशब्दे स्यवोढव्य, शोधनेमा रणे विधिः ॥ वैदर्भ्यादौ ॥ रीति रात्माकाव्यस्य॰ विशिष्टापदरचना रीतिरितिचवामनसूत्रे । गुणभेदे नतद्विभागमाह । ओज, प्रसाद माधुर्यं गुणचितयभेदत । गौड वैदर्भ्यंपाञ्चालीरीतयः परिकीर्त्ति ताः प्रत्येकमेषालक्षणानि यथा । ओजः समासभूयस्त्व मांसलंपद डम्बरम् । व्यक्तार्थंपदमग्राम्यंप्र साद, परिकीर्त्तित, शब्दार्थयो स्तुरसवन्मधुर परिकीर्त्तितम् । सर्वलोकावगम्ययद्ग्राम्यतदभिधी यते ॥ सुश्राव्यमपिगम्भीर प्रसन्नमु पनागरम् । ग्राम्यंयथा । कान्ते मन्येऽप्यसौधन्यायस्त्वामद्यविवाह येत् । नाल्पेनतपसालभ्य, सुन्द रस्त्रीसमागमः ॥ उपनागर यथा । तन्वित्वदधर माधुनाविद नविदो

जना' वसुधायासुधाभावान्मृषा स्वर्गेयियासव ॥ शब्दालङ्कारं तत्स्याद्यदनुप्रासभासुरम् । वर्णा वृत्तिरनुप्रास पादेपादेविधीयते पदावृत्तिस्तुयमकमादिमध्यान्तसर्व गम् । क्रमेणरीतिचयाणामुदाहर णानि । ग गोत्तुंगतरंगस गतज टाजूटाग्रजाग्रत्फणिस्फूर्जत्फूत् कृतिभीतिसम्भ्रुतिचमत्कारस्फुर- त्सम्भ्रमा । आनन्दामृतवापिकां विदधतीचित्ते गिरीशप्रभोस्त्वांपा यान्नवस गमेभगवतीलज्जावतीपा र्वती ॥ भवतोमिरहव्याधिमधिग म्यससम्भ्रमा । कामिनीयामिनीका न्त कृतान्तमिवपश्यति ॥ हन्तालि सन्तापनिवृत्तयेऽस्या, किन्तालवृ न्त तरलीकरोषि । उत्तापएषोन्तर तोपहेतुर्नतम्भुवोनव्यजनापनेयः ॥ इतिकाव्यचन्द्रिका ॥ अपिच । वैदर्भीसाथपाञ्चालीगौडीयावन्ति कातथा । लाटीयामागधीचेतिषो ढारीतिर्निगद्यते ॥ रीयते॰ रीणा तिवा॰ रयणवा । रीडवर्णे॰ रीग तिरेवणयो, । क्तिच्॰ क्तिन्वा ॥

रितिकम् । न॰ पुष्पाञ्जने ॥

रीतिका । स्त्री॰ कुसुमाञ्जनेपित्तले ॥

रीतिपुष्पम् । न॰ कुसुमाञ्जनेरीति कायांध्मायमानायांजातेमले ॥ री तेः पित्तलस्यपुष्पमिव॰ तन्मल-

स्यात् ॥

रीतिहेतु : । पुं॰ रङ्गे । वङ्गे ॥ री तेर्हेतु ॥

रु : । पुं॰ शब्दे ॥

रुक : । त्रि॰ बहुप्रभेदे ॥

रुक्प्रतिक्रिया । स्त्री॰ रोगनिवारणे । चिकित्सायाम् ॥ रुज प्रतिक्रियानिरसनम् ॥

रुक्मम् । न॰ काञ्चने ॥ धूस्तूरे ॥ लौहे ॥ नागकेशरे ॥ रोचते । रुच दीप्तौ । युजिरुजितिजाकुस्वेति मक् ॥

रुक्मकार : । पुं॰ स्वर्णकारे ॥ रुक्म करोति । डुकृञ्॰ । कर्मण्यण् ॥

रुक्मकारक : । पुं॰ स्वर्णकारे ॥ रुक्मकारएव । स्वार्थेक : ॥

रुक्मवती । स्त्री॰ पङ्क्तिच्छन्द : १० प्रभेदे ॥ तल्लक्षणं यथा । रुक्मवती सायत्रभमसगौ ॥ यथा । कायमनोवाक्यै:परिशुद्धैर्यस्सदाकसद्विप्रभक्ति : । राज्यपदेहर्म्योलिसदा राक्मवतीविघ्न : खलुतस्य ॥ इयमेव॰ चम्पकमाला॰ रूपवतीचबोध्या॥ त्रि॰ स्वर्णवति ॥

रुक्मवेदी । स्त्री॰ काञ्चनवेदिकायाम् ॥ रुक्महिरण्य तन्मयाभिरिष्टकाभिश्चितावेदी॰ रुक्मवेदी ॥

रुक्माङ्गद : । पं॰ परमभागवतेनृपतितिविशेषे ॥

रुक्मिणी । स्त्री॰ कृष्णस्यप्रधानमहिष्याम् । लक्ष्म्याम् । हरिप्रियायाम ॥

रुक्मिणीव्रतम् । न॰ व्रतविशेषे ॥

रुक्मिदर्प्प : । पुं॰ )

रुक्मिदारी । पुं॰ ) बलरामे । बलभद्रे ॥

रुक्मी । पुं॰ भीष्मकात्मजे । रुक्मिणीभ्रातरि ॥

रुक्मिभित् । पुं॰ बलदेवे ॥

रुच . । त्रि॰ अग्रेमृष्टि । परषि ॥ अभिज्ञये । अभिगमे ॥ रूखा॰ कृत्यभयेर्भाषा ॥ रुच्यति । रुच्यपारुष्ये । पचाद्यच् ॥ यद्वा । रुहेरौणादिक . स : ॥

रुग्ण . । त्रि॰ रोगादिनाकुटिलीकृतेभुग्ने । वक्रे ॥ रुज्यतिस्म । रुजो भङ्गे । क्त : । ओदितस्चेतिनत्वम् ॥ रोगिणि

रुक्॰ग्॰ । स्त्री॰ शोभायाम् ॥ तेजसि ॥ द्युतौ ॥ इच्छायाम् ॥ रोचते । रुचदीप्तौ । क्विप् । शारिकाशुकवाचि ॥

रुच . । त्रि॰ शोभमाने ॥ रुचेरिगुपधेतिक : ॥

रुचक : । पुं॰ बीजपूरे । निष्के ॥ दन्ते ॥ कपोते ॥ एरण्डे ॥ न॰ सर्जिकाक्षारे ॥ अश्वस्याभरणे ॥ माल्ये ॥ सौवर्चले ॥ यथा । र-

रुकरोचनमेदिदीपनपाचनपरम्। सर्वेऽवातनुन्नातिपित्तलविशदलघु॥ उद्गारशुद्धिदंसूक्ष्मं विवन्धानाहशूलहृत्॥ माङ्गल्यद्रव्ये॥ उत्कटे॥ रोचनायाम्॥ विडङ्गे॥ लवणे॥ पुं० न० राजवेश्मविशेषे॥ वनान्तरे०। रोचतेऽनेन। रुचदीप्तावभिप्रीतौच। अन्तर्भावितण्यर्थं। क्रुन् शिल्पिसंज्ञयोरितिक्रुन्॥

रुचा। स्त्री० इच्छायाम्। दीप्तौ॥ शोभायाम्॥ शारिकाशुकवाचि॥

रुचि। पुं० प्रजापतिविशेषे। आकूतीपतौरौच्यमनो' पितरि॥

रुचि। स्त्री० दीप्तौ॥ शोभायाम्॥ अभिष्वङ्गे। उत्कटानुरागे॥ अभिलाषे॥ रोचते। रुच०। इगुपधात्किदितीन्॥ बुभुक्षायाम्॥ गोरोचनायाम्॥ आलिङ्गनविशेषे॥ तल्लक्षणंयथा नायिकायानायकस्यसम्मुखेजान्वोरूपर्युपविश्यवक्षसिवक्षोदत्त्वायदवस्थानमितिकामशास्त्र॥

रुचिकर। त्रि० रोचने॥

रुचित। त्रि० इष्टतमद्रव्ये॥ रुचेः कर्तारक्त॥ यद्वा। रोचते। रुच०। रुचिरस्यजातेतिइतच।

रुचिफलम्। न० अमृताङ्गे। अमृतफले॥

रुचिरम्। न० मूलके॥ कुङ्कुमे। लवङ्गे। त्रि० सुन्दरे॥ सौम्ये॥ मिष्टे। रोचते। रुच०। इषिमदिमुदीतिकिरच्।

रुचिरा। स्त्री० गोरोचनायाम्॥ अतिजगतीछन्द १३ प्रभेदे॥ तल्लक्षणादियथा। जभौसजौगितिरुचिराचतुर्ग्रहैः। यथा। पुनातुवोहरिरतिरासविभ्रमी०परिभ्रमन्वनरुचिराङ्गनान्तरेसमीरणोल्लसितलतान्तरालगोयथामरुत्तरलतमालभूरुह:॥ इतिमात्रान्तान्तरेपियथा। समचतुष्कलकलितसकलदलसंशोभितकुण्डलरुचिरा। नकुरुपयोधरमिहफणिपतिवरभणितमिदन्तरुचिरा॥ यथा। कस्यतनुर्मनुजस्यसितासितसङ्गमधिविधितः पतिता। यस्यकृतेकरभोरुविषीदसिमिहिरातपनिहतेवलता॥

रुचिराञ्जनः। पुं० शोभाञ्जने॥

रुचिराश्वः। पुं० नृपतिविशेषे॥ शोभनतुरगे॥ त्रि० तद्वति॥

रुचिष्यः। त्रि० इष्टवस्तुनि॥ रोचते० रुच्यसेवो। रुच०। रुचिभुजिभ्याकिष्यन्॥ अभिप्रेते॥

रुचि। स्त्री० दीप्तौ॥ रुक्रुचीरुचयः समाहृत्यैकार्थसञ्ज्ञः। कृदिकारादितिङीष्॥

रुच्यः। पुं० कतकवृक्षे॥ शालिधा

न्य ॥ पथ्यौ ॥ न० सौवर्चले ॥ त्रि० मनोज्ञे । सुन्दरे ॥ रोचते० रुच्यते वा । रुच० । राजसूयेतिसाधु ॥

रुच्यकन्द । पु० सूरणे ॥

रुग् । स्त्री० रोगे ॥ रुजतिदेहम् । रुजोभङ्गे । क्विप् ॥ रोजनवा सम्प दादित्विप् ॥ कुष्ठौषधौ ॥

रुजा । स्त्री० रोगे ॥ भङ्गे ॥ रुजति । रुजो० । भिदादिपाठात् ० रुजार्थानामितिनिर्देशाद्वाऽङ्टाप् ॥ रुगुपेतिकोश ॥ कुष्ठे ॥ मेष्याम् ॥

रुजाकर । पु० व्याधौ । न० कर्मरङ्गफले ॥ त्रि० पीडाकारिणि ॥

रुजासह । पुं० धन्वनद्रुमे ॥

रुणत्करा । स्त्री० सुव्रतायाम् । सुखसन्दोह्यायागवि ॥

रुण्ड । पुं० कबन्धे ॥

रुण्डिका । स्त्री० द्वारपिण्ड्याम् । देहल्याम् ॥ दूतिकायाम् ॥ रणभूमौ ।

रुतम् । न० वाशिते । तिरश्चांशब्दे । कूजिते ॥

रुदथ । पु० कुक्कुटे ॥ शुनि ॥ शिशौ ॥ रोदिति । रुदिर् अश्रुविमोचने । रुदिविदिभ्यांङिदित्यथ ॥

रुदन्तिका । ) स्त्री०

रुदन्ती । ) स्त्री० क्षुद्रक्षुपविशेषे । स्रवत्तोयायाम् । सञ्जीवन्याम् । रोमाञ्चिकायाम् । चणपत्र्याम् ॥ अस्या स्वरूपयथा । चणपत्रसमप

त्र क्षुपस्रवत्तयाकृति । शिशिरेजलबिन्दूनासवन्तीतिरुदन्तिका ॥ रुदन्तीबल्किकृद् व्यापित्तघ्नीचरसायनी ॥

रुदितम् । न० क्रन्दिते । क्रुष्टे ॥ रुदिर्० । भावेक्त ॥ त्रि० तद्वति ॥

रुद्ध । त्रि० नद्योप्राकारादिनाक्रतवेष्टने । वेष्टिते । वलयिते । सवीते । आवृते ॥ रुध्यतेस्म । रुधिर् आवरणे । क्त ॥

रुद्र । पु० गणदेवताविशेषे ॥ एकादशरुद्रेषु ॥ तेषांनामानियथा । अजैकपादहिर्बुध्नोविरूपाक्षोथरैवत । हरश्चबहुरूपश्चत्र्यम्बकश्चसुरेश्वर ॥ सावित्रश्चजयन्तश्चपिनाकी चापराजित । एतेरुद्राः समाख्याताएकादशगणेश्वरा । एते षामानसानान्तु त्रिशूलवरधारिणाम् । कोटयश्चतुरशीतिस्तत्पुत्राश्चाक्षमामता ॥ दिक्षुसर्वासुयेरक्षांप्रकुर्वन्तिगणेश्वरा । पुत्रपौत्रसुतास्त्वेतेसुरभीगर्भसम्भवा । ॥ श्रुतिमाल्ये ५ ध्याय ॥ शिवे । शम्भौ । ईशे ॥ रोदयत्यसुरान् । सहारकालेप्रजा । सहरन्रोदयतिवा । रुदिर् । रोदेर्णिलुक्चेतिरक्प्रत्ययश्चलुक् ॥ सर्वगतरुजाद्रावणात् ० रोदनहननाद्वारुद्रः । तथाचस्कान्दे । रुज । सर्वगता

यस्माद्रुद्रास्याग्निजगल्लक्षम् । शोदन
द्न्म्यिस्माच्चरुद्रस्तस्माद्रुद्र प्रिये ॥
यद्वा । रुत वेदात्मकशब्द कल्पादौ
ब्रह्मणे राति ० ददाति । गादाने ।
आतोनुपसर्गेक ॥ यद्वा । रुता
नादेनमकन्न जगदिदं द्रावयतिरञ्ज
यतीति ० नादात्मकत्वाद्रुद्र ॥ यद्वा ।
रुतानादेन ० प्रणवरूपेण ० वेदरूपेण
वा ० द्रावयति ० ० इष्टमर्थमितिरु
द्र 'यद्वा । रुत संसारदु खतद्धेतु-
वाद्रावयतीतिरुद्र तदुक्तरुतदु '
खस्तद्धेतु विद्रावयतिय प्रभु
। रुद्रइत्युच्यतेतस्माच्छिव ' परम
कारणमिति ॥ विष्णुरुद्रयोरभेदो
यथाकौर्मे । सर्वेवदेशोभगवान्म
हादेवोनसंशय । मन्यन्तेयेजग
द्योनिं विभिन्न विष्णुमीश्वरात् ॥
मोहादवेदनिष्ठाद्वा तेयान्तिनरक
नरा । वेदानुवर्त्तिन रुद्र देव ना
रायण तथा । एकीभावेनपश्यन्ति
मुक्तिभाजोभवन्तिते ॥ श्रीमद्भागवते
देव्यांशौरुद्रौपरिकीर्त्तितौ । यथा ।
इच्छयाब्रह्मणोवक्त्राद्रुरदानार्थमुद्भ
भौ । मूलरुद्रस्यांशभूतौरुद्रनामा
द्वितीयकइति ॥ आदित्यपचतत्त्वे
॥ एकादशाङ्के ॥ न ० रौद्ररसे ॥
रुद्रकोटी । स्त्री ० तीर्थविशेषे ॥
रुद्रगण ' । पुं ० शिवपार्षदसमूहे ॥
रुद्रचण्डी । स्त्री ० रुद्रयामलोक्तदेवी
माहात्म्ये ॥
रुद्रज । पु ० पारदे ॥
रुद्रजटा । स्त्री ० लताविशेषे । रौद्र्याम् ।
सौम्यायाम् । सुगन्धायाम् । सुपत्रा
याम् । सुगन्धपत्रायाम् । पत्रवल्ल्या
म् जटावल्ल्याम् ॥ अस्यागुणा । क
टुरसत्वम् ० श्वासकासहृद्रोगभूत
रक्षोनाशित्वञ्चेति ॥
रुद्रपत्नी । स्त्री ० चण्ड्याम् । दुर्गा
याम् ॥ अतस्याम् ॥
रुद्रप्रिया । स्त्री ० हरीतक्याम् ॥ रुद्रा
ण्याम् ॥
रुद्रवीणा । स्त्री ० सङ्गीतनारायणो
क्ते वीणाविशेषे । रुद्र्याम् ॥
रुद्रसर्ग । पुं ० रुद्रकर्त्तृकभूतवेता
लादिसृष्टौ ॥
रुद्रसावर्णि । पुं ० द्वादशेमनौ ॥
रुद्रसू । स्त्री ० एकादशपुत्रप्रसूयाम् ॥
रुद्राक्रीड ' । पुं ० श्मशाने ॥
रुद्राक्ष । पुं ० स्वनामाख्यप्रसिद्धे वृक्षे ।
तत्फले । चमरे । पुष्पचामरे ॥
अक्षफले । शिवाक्षे । सर्पाक्षे । भू
तनाशने ॥ विनाभस्मत्रिपुण्ड्रेण-
विनारुद्राक्षमालया । पूजितोपि
महादेवोनस्यात्तस्यफलप्रदः ॥ वि
नामन्त्रेणयोधत्ते रुद्राक्ष भुविमान
व । सयातिनरकान्घोरान्या
वदिन्द्राश्चतुर्दशेतिपद्मपुराणम् ॥
रुद्राक्षानकण्ठदेशेदशन ३२ परि

मितान्॰ मस्तकेविंशतिहे ४० ष ट् ६ षट् ६ कर्णप्रदेशे॰ करयु गलकृतेद्वादशे १२ द्वादशे १२ व । बाहोरिन्दो ' कलाभि १६ र्न यनयुगकृतैत्वे के १ मेक १ शिखा याम्॰ वक्षस्यष्टाधिक य . कलय तिशतक १०८ सखयंनीलकण्ठ ' इतिदेवीभागवतम् ॥ मन्त्रेणेति हिजेतरविषयम् । सर्वाश्रमाणांव र्णानांरुद्राक्षस्यधारणम् । कर्त्त व्य मन्त्रत . प्रोक्त द्विजानानान्यव- र्णिनामितिनारायणवचनात् ॥

रुद्राणी । स्त्री॰ शिवायाम् । भवा न्याम् । सर्वमङ्गलायाम् । रुद्रस्य स्त्री॰ इन्द्रवरुणभवसर्वरुद्रमृडहि- मारण्ययवयवनमातुलाचार्याणामा नुगिति॰ ङीषानुकौ ॥

रुद्रावर्त्त : । पुं॰ तीर्थविशेषे ॥ अद्रि कूटस्थानस्थायापरमेश्वर्याम् । रु द्रजटायाम् ॥

रुद्रास्पदम् । न॰ तीर्थविशेषे ॥

रुद्री । स्त्री॰ रुद्रवीणायां ॥

रुधिर : । पुं॰ अङ्गारके । कुजे । भौ मे । मङ्गलग्रहे ॥ न॰कुङ्कुमे ॥ श- रीरस्थरसभवधातौ । रक्ते । अ- स्रे । त्वगजे । शोणिते। असृजि । लोहू॰इ॰भा॰ ॥ रुणद्धि॰रुध्यते वा । रुधिर्॰ । इषिमदिमुदीति- किरच् ॥

रुधिराख्यम् । न॰ मणिप्रभेदे । यथो क्त गरुडपुराणे । हुतभुग्रूपमादा यदानवस्ययथेप्सितम् । नर्मदाया- न्निचिक्ष पक्षिप्सिहीनादिभूतले ॥ तत्रेन्द्रगोपकलितशुकवक्त्रवर्णं स- स्थानत . प्रकटपीलुसमानमात्र- म् । नानाप्रकारविहितरुधिराख्य- रत्नमुद्भूयतश्चखलुसर्वसमानमेव ॥ मध्येन्दुपाण्डरमतीवविशुद्धवर्णंत च्चेन्द्रनीलसदृश पटलतुलिस्यात् । सैश्वर्यभृत्यजननकथिततदेवपक्वम् ततकिलभवेत्सुरवज्रवर्णम् । इति गारुडे ॥ ७८ ॥ अध्याय ॥

रुधिरोद्गारी । पुं॰ षष्ठिसवत्सराणा मध्येवत्सरविशेषे ॥ तत्फलंयथा । महिषीगोहिरण्यादिताम्रकांस्यादा शेषत . । तत्सर्वंदेविविक्रीयकर्त्त व्योधान्यसञ्चय ॥ रक्तसवत्सरेदे विक्रूरबुद्धिर्नराधिपः । मानवा ' क्रूर चेष्टाश्चखड्गामेनजयेभवेत्॥ ५८॥

रुमण्वान् । पुं॰ लवणाचले ॥ लव- णमस्त्यस्मिन् । मतुप् । आसन्दी- वदिति॰लवणस्यरुमण्भाव ॥ ल वणाकरवाचकरुमन्शब्दस्यैतन्निपा तननलोपाभावार्थंपस्त्वार्थंश्चस्यपि स्तम् ॥

रुमा । पुं॰ लवणाकरे ॥

रुमा । स्त्री॰ सुग्रीवदारेषु ॥ विशिष्टल वणाकरे ॥

रुम । पु० रमणे ॥ अरुणे ॥ रम्यतेऽस्मिन् । रमक्रीडायाम् । चकि रम्योरच्चोपधायाइतिरक् ॥

रुरु । पुं० मृगविशेषे । हरिणजात्यन्तरे । भारस्तृङ्गाख्ये ॥ रुरुर्महान् कृष्णसारइतियादव ॥ व्याघ्रे ॥ यथा । गौरीगौपवीतोरुरुनखविलसत्कण्ठभूषस्थिरवन्नृति ॥ दैत्यभेदे । रौति । रुशब्दे । जम्वादय श्चेतिसाधु ॥ रुशातिभ्यांकुन्वा ॥

रुवु । ) पुं०

रुवुक । ) पु० एरण्डे ॥ इतिरत्नमाला ।, रक्तैरण्डे ॥ इतिराजनिर्घण्ट : ॥

रुशन् । त्रि० निन्द्यार्थावाचि ॥ रुशति । रुशहिंसायाम्तालव्यान्तस्तौदादिकस्तस्माच्छतृप्रत्यय । रुशन् शब्द . । रुशतीहिंसा । रुशद्वचनम् ॥

रुशती । स्त्री० निन्द्यार्थावाचि ॥ शत्रन्तान्ङीप् । आच्छीनद्योरितिनुम्विकल्पान्नुमभाव . । स्त्रियावाहुल्येनास्यदर्शनम् ॥

रुट् । स्त्री० क्रोधे० ॥ रुषहिंसायाम् । सम्पदादित्वात्क्विप् ॥

रुषा । स्त्री० अमर्षे । कोपे । मन्यौ । क्रोधे ।। क्विबन्ताद्गुरितिमतेनटाप् ॥

रुषित । त्रि० रुष्टे । क्रोधयुक्ते ॥ रुष्यतेस्म । रुषरोषे । क्त । रुष्यम् त्वरेतिपक्षे ०इड्विकल्प ।

रुष्ट . । त्रि० रुषिते ॥ शिवेरुष्टेगुरुस्त्राता गुरौरुष्टे नकश्चन । रुष्यतेस्म । रुष० । क्त . । रुष्यमत्वरसङ्घुषास्वनामितिपक्षेइडभाव ॥

रुह । त्रि० जाते ॥ आरूढे ॥ रुहे कासरिका ॥

रुहकम् । न० छिद्रे ॥

रुहा । स्त्री० दूर्वायाम् ॥ छिन्नापिरोहति । रुहवीजजन्मनिप्रादुर्भावे इगुपधज्ञाप्रीकिर क . । टाप् ॥ महासमङ्गायाम् ॥

रुहिरुहिका । स्त्री० उत्कण्ठायाम् ॥ इतिपुराणम् ॥

रुक्मा । पुं० वृक्षे ॥ रोहति । रुह० शीङ्क्रुशिरुहीत्यादिना० क्मनिप् ॥

रूक्ष: । पु० वृक्षे ॥ वरकाष्ठे ॥ त्रि० अप्रेमणि । परुषे ॥ अचिक्कणे । अस्निग्धे । रूखा० इतिभाषायाम् ॥ रूक्षयति । रूक्षपारुष्ये । पचाद्यच् ॥

रूक्षगन्धक . । पुं० गुग्गुलौ ॥

रूक्षणात्मिका । स्त्री० लङ्काधान्ये ॥

रूक्षदर्भ . । पुं० हरिदर्भे ॥

रूक्षपत्र : । पुं० शाखोटवृक्षे ॥

रूक्षप्रिय : । पु० ऋषभौषधे ॥

रूक्षस्वादुफल । पु० धन्वनवृक्षे ॥

रूक्षा । स्त्री० दन्तीवृक्षे ॥ क्रूरायाम् ॥ अस्निग्धायाम् ॥

रूढः । पुं॰ प्रकृतिप्रत्ययार्थमनपेक्ष्यशाब्दबोधजनकेशब्दे ॥ यथा । मुख्योलाक्षणिकोगौणः शब्दः स्यादौपचारिकः । यौगिकोयोगरूढो वारूढोवामुख्यएवसः ॥ इतिशाब्दिका ॥ अपिच । रूढमालक्षयति॰विभजतेच । रूढसङ्केतवन्नाम सैवसंज्ञेतिकीर्त्यते । नैमित्तिकीपारिभाषिक्यौपाधिक्यपितद्भिदा ॥ यन्नामयादृशार्थेसङ्केतितमेव॰नतुयौगिकमपि॰तद्रूढम् । योगरूढन्तुपङ्कजादिकंनतथा । रूढानामेवचसञ्ज्ञापदेनाभिलप्यते । नतुरूढादिवत्सञ्ज्ञानामोऽवान्तरभेदः । येनविभागव्याघातः स्यात् । सञ्ज्ञायास्त्रयोभेदा नैमित्तिकीपारिभाषिकी॰औपाधिकीचेति । पाचकपाठकादयस्तुनसंज्ञाः सङ्केतशून्यत्वात् ॥ येतुरूढस्यनाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति । जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया । जातिशब्दादिभेदेनचातुर्विध्यंपरेजगुः ॥ गोगवयादीनांगोत्वादिजात्या । पखाव्यादीनांलाङ्गूलधनादिद्रव्येण । धन्यपिशुनादीनापुण्यद्वेषादिगुणेन । चलचपलादीनाञ्चशब्दानाकर्मणाऽवच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेवरूढानामिति । यदुक्तंदण्डाचार्यैः । शब्दैरेवप्रतीयन्तेजाति-



द्रव्यगुणक्रियाः । चातुर्विध्यादमीषान्तुशब्दउक्तश्चतुर्विधइति ॥ तदेतज्जडमूर्खादीनामन्यशून्यादीनाञ्चशब्दानामपरिग्रहापत्त्यापरित्यक्तमस्माभिः ॥ नैमित्तिकसञ्ज्ञांलक्षयति । जात्यवच्छिन्नसङ्केतवती नैमित्तिकीमता । जातिमात्रेहिसङ्केताद्व्यक्तेर्भानसुदुष्करम ॥ यन्नामजात्यवच्छिन्नसङ्केतवत्सानैमित्तिकीसञ्ज्ञा । यथागोचैत्रादिः । साहिगोत्वचैत्रादिजात्यवच्छिन्नमेवगवादिकमभिधत्तेनतुगोत्वादिजातिमात्रम् । गोपदगोत्वेसङ्केतितमित्याकारकग्रहाज्ञानानयेत्यादौ गोत्वादिनागवादेरन्वयानुपपत्तेः । एकशक्त्यापरस्यान्यानुभावकत्वेऽतिप्रसङ्गात् ॥ पारिभाषिकीमौपाधिकीञ्चसंज्ञांक्रमेणलक्षयति । उभयावृत्तिधर्मेणसञ्ज्ञास्यात्पारिभाषिकी । औपाधिकीत्वनुगतोपाधिनायाप्रवर्त्तते ॥ उभयावृत्तिधर्मावच्छिन्नसङ्केतवतीसंज्ञापारिभाषिकी । यथाकाशडित्थादिः ॥ याचानुगतोपाध्यवच्छिन्नसङ्केतवतीसञ्ज्ञासात्वौपाधिकी । यथाभूतदूतादि । साहिसचेतनवृत्तविशेषगुणवत्त्वाकाशादारकत्वाद्यनुगतोपाधिपुरस्कारेणैवप्रवर्त्तते । इतिशब्दशक्तिप्रकाशिकायाम्॰जाति ॥ प्रसिद्धे ॥

रुहेर्गत्यर्थेतिक्त । ढत्वधत्वष्टुत्वढ लोपदीर्घ . ॥

रूढपद . । त्रि॰ बद्धमूले ॥

रूढि : । स्त्री॰ शिष्टप्रयोगे ॥ प्रसिद्धौ ॥ अनादिव्यवहारसिद्धसम्बन्धविशेषे ॥ मुख्यशब्दवृत्तिभेदे ॥ सा चस्वरूपेणजात्यागुणेन वानिर्दिश्याहैवस्तुनिसंज्ञासन्निसङ्केतेनप्रवर्त्तते । यथा । डित्थ . डवित्थ : गौ : शुक्लइति ॥ रूढशब्दनिष्ठशक्तौ ॥

रूपम् । न॰ वाच्याकारे । स्वभावे ॥ सौन्दर्ये । मनोहराकृतौ । तल्लक्षण यथा । अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येनभूषितवद्भान्तितद्रूपमितिकथ्यते ॥ रूप्यु व्यूलनीलमणि । : नाणके । प्रशस्ते ॥ पशौ ॥ शब्दे ॥ ग्रन्थावृत्तौ नाटकादौ ॥ आकारे ॥ श्लोके ॥ अवकाशःद्विपदान्ते नानाविकारविशेषे ॥ रूपन्तुषोडशविधंमोक्षधर्मेप्रकीर्तितम् । यथा । ह्रस्वम् १ दीर्घम् २ स्थूलम् ३ चतुरस्रम् ४ वृत्तम् ५ शुक्लम् ६ कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १० कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छलम् १४ मृदु १५ दारुण १६ मिति ॥ चक्षुर्मात्रग्राह्यगुणे ॥ तच्चशुक्लनीलपीत



रक्तहरितकपिशचित्रभेदात्सप्तविधम् . पृथिवीजलतेजोवृत्ति . तत्र पृथिव्यासप्तविधम् । अभास्वर शुक्लजले । शुक्लभास्वर तेजसि ॥ मात्राभावे ०।० ॥ त्रि॰ उत्तरपदस्थित्यास्वसदृशे ॥ यथापितृरूप पुत्र मातृरूपाकन्या ॥ प्रापके ॥ रोपयतिविमोहयति । रूपविमोहने । अच् ॥ यद्वा । रूप्यतेऽनेन । स्वप्नशिल्पशब्देतिसाधु ॥ रीतिश्च । कशब्दे । स्वप्नशिल्पेतिप : रीतेर्दीर्घश्च ॥ अतिरूपन्तुनिन्दितम् ॥

रूपकम् । न॰ नाटके ॥ मूर्त्ते ॥ रूप्ये ॥ काव्यालङ्कारे ॥ तल्लक्षणादि यथा । विषय्यभेदताद्रूप्यरञ्जन विषयस्ययत् । रूपक तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभि : ॥ अय हि धूर्जटि : साक्षाद्येनदग्धा : पुर : क्षणात् अयमास्तेविनाशम्भुस्तार्त्तीयीकविलोचनम् ॥ शम्भुर्विश्वमवत्यद्यस्वीकृत्यसमदृष्टिताम् । अस्यामुखेन्दुनालञ्जैनेवानन्दे किमिन्दुना ॥ साध्वीयमपरालक्ष्मीरसुधासागरोदिता । अयकलङ्किनश्चन्द्रान्मुखचन्द्रोतिरिच्यते ॥ सङ्ख्याविशेषे ॥ यथा । सप्तालीप्रोच्यतेगुञ्जासातिस्रोरूपकभवेत् । रूपकैर्दशभि : प्रोक्ता : कलञ्जोनामनामत : ॥ त्रि॰ । मूर्त्तिमति ॥ पुं॰ । इष्टादिसप्तसु ॥

तेयथा । इद प्रौढोऽयस्वरोविभ क्षचतुरक्रम: । निशारुक प्रतिताल: कथिता :सप्तरूपकोद्भतिदामोदर: ॥

रूपकभेद । पुं॰ अभिनेयप्रकारे ॥

रूपतत्त्वम् । न॰ शीले ॥

रूपधारी । त्रि॰ सौन्दर्यविशिष्टे ॥

रूपधेयम् । न॰ रूपे ॥ रूपमेव ।भागरूपनामभ्योधेय: ॥

रूपनाशन: । पुं॰ पेचके

रूपवान् । त्रि॰ आकारविशिष्टे ॥सौंदर्ययुक्ते ॥

रूपस्कन्ध: । पुं॰ विषयप्रपञ्चे । वासनामथचित्तेननिरूप्यमाणेषुशब्दस्पर्शादिषु । पञ्चेन्द्रियेषुच ॥ रूप्यन्तएभिर्वाविषयाकृतिकमकारणव्युत्पत्तिभ्यांसविषयाणीन्द्रियाणिरूपस्कन्ध: । रूप्यमाणपृथिव्यादीनांवाह्यत्वेपिदेहस्थत्वादिन्द्रियसम्बन्धाच्चाध्यात्मिकत्वम् ॥

रूपाजीवा ।स्त्री॰ वारस्त्रियाम् । वेश्यायाम् ॥ रूपमाजीवोस्या: ॥

रूपामाली । स्त्री॰वर्णवृत्तविशेषे ॥ यथा। चत्वारोयत्रकर्णाआयन्तेछन्दस्येवहारकुर्वन्ते ।भव्यावर्णापादेराजन्ते रूपामालीवृत्त तत्कान्ते ॥ यथा । हत्वाशत्रूंन्दुस्त्यान्तीचण्डसाचण्डीव . कल्याणं कुर्यात् । देवेन्द्राद्या: प्रौढ्यासम्प्राप्ता :ससेवन्ते तत्पादा

म्भोजम् ॥

रूपाक्ष । पु॰ कामदेवे ॥ रूपमक्षमस्य ॥

रूपिका । स्त्री॰ श्वेतार्कवृक्षे ॥ श्वेतार्कपुष्पे ॥

रूपी । त्रि॰ रूपवति ॥ मूर्तिमति ॥

रूपेश्वरी । स्त्री॰ देवीविशेषे ॥

रूप्यम् । न॰ आहतरजते ॥ आहतहेमनि ॥ तारे । चन्द्रहासे । रजते चन्द्रलोहके । चांदी॰ इं॰भा॰ ॥ अस्यलक्षण गुणादयस्वयथा । गुरुस्निग्धमृदुश्वेत दाहच्छेदघनक्षमम् । स्वर्णाभ्यचन्द्रवत्स्वच्छरूप्य नवगुणं शुभम् ॥ मारणार्थयोग्यम् ॥ कठिन कृत्रिमंरूक्षंरक्त पीत दल लघु । दाहच्छेदघनैर्नष्ट रूप्य दुष्ट प्रकीर्तितम् ॥ मारणायायोग्यम् रूप्यशीतंकषायाम्लं स्वादुपाकरससरम् ।वयस:स्थापनस्निग्ध लेखनवातपित्तजित् ॥ प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् ॥ तारंशरीरस्यकरोतितापंविड्बन्धनयच्छति शुक्रनाशम् । वीर्यंबलंहन्तितनोश्च पुष्टिं महागदान्पोषयतिह्यशुद्धम् ॥ अथशोधनविधि: । पत्तलीकृत्यपत्राणितारस्याग्नौप्रतापयेत् । निषिञ्चेत्तप्ततप्तानितैलेतक्रे चकाञ्जिके ॥ गोमूत्रेचकुलत्थानाकषायेचत्रिधात्रिधा । एवंरजतपत्राणाविशुद्धि:स

म्प्रजायते ॥ अथास्यमारणविधिः । भागैकतालकंमर्द्यं याममम्लेनवीन चित् । तेनभागत्रयतारपत्राणिप-रिलेपयेत् ॥धृत्वामूषापुटेरुद्ध्वापुटे त्त्रिंशद्वनोपलैः । समुद्धृत्यपुन स्तालदत्वारुद्ध्वापुटेपचेत् ॥ एवंच तुर्दशपुटैस्तारभस्मप्रजायते ॥ अ न्योपिप्रकारोयथा । स्नुहीक्षीरेणस म्पिष्टंमाक्षिकतेनलेपयेत् । तालक स्यप्रकारेणतारपत्राणिबुद्धिमान् । पुटेच्चतुर्दशपुटैस्तारभस्मप्रजाय-यते ॥ इति ॥ अथरूप्यकरणम् । मध्वाज्य गुडताम्र चकरेणमाक्षि-कारसम् । धमनाच्चभवेद्दैप्यसुवर्णं कारणं शृणु ॥ इतिगारुडे १८८ अध्याय. ॥ कार्षापणे ॥ त्रि॰ रूप वति । सुन्दरे ॥ आहतं॰ प्रशस्तं वा॰ रूपमस्यास्ति । रूपादाहतप्र शंसयोरितियत् ॥ रूप्यते । रूप रूपक्रियायाम् । यत्. ॥ अच.॰ बा ॥

रूप्यक. । पुं॰ लङ्कादिद्वीपवत्समुद्रा न्तर्वर्त्तिनिद्वीपविशेषे ॥

रूप्यमाषक : । पुं॰ कृष्णलाद्वयमि तैरूप्यमाने । द्वेकृष्णलेसमधृतेविज्ञे योरूप्यमाषकः ॥

रूप्यशाला । स्त्री॰ टकसाल॰ इति प्रसिद्धे रजतादिमुद्रागृहे ॥

रूप्याध्यक्ष : । पुं॰ नैष्किके ॥ रूप्यस्य अध्यक्ष. ॥

रूवुक : । पु॰ एरण्डे ॥

रूम : । पुं॰ शकदेशे । यथा । योरू मदेशाधिपतिंशकेश्वरं जित्वागृही-त्वोज्जयिनीमहाहवे । आनीयसम् भ्राम्यमुमोचतन्त्वहोश्रीविक्रमार्कः समसह्यविक्रम. ॥

रूषक । पुं॰ बासके ॥

रूषणम् । न॰ मिश्रणे ॥ रूष॰ । ल्युट् ॥

रूषित : त्रि॰ गुण्ठिते । गुण्डिते । रूष्यतेस्म । रूषिर्वेष्टनार्थोऽपठि तोपि॰ भ्वादौद्रष्टव्योभ्वादेराकृतिगणत्वात् । क्त : । रूक्षीकृते ॥ लिप्ते ॥ लग्ने । लग॰ इ॰ भा॰ ॥ रूष त॰ आ॰ विस्फुरणे॰ इतिकविक ल्पद्रुमः । अकर्॰ सेट् ॥

रे । अ॰ सम्बोधनविशेषे ॥ यथा । सम्बोधनेरुभौः पाटप्याटङ्गेहैहे हो ऽरेरेपिचेतिहेमचन्द्रः ॥ अनादरे ॥

रेक : । पुं॰ शङ्कायाम् ॥ नीचे । हीने ॥ विरेचने ॥ भेके । गूढव-र्चसि ॥

रेका । स्त्री॰ सन्देहे ॥

रेक्णः : । न॰ सुवर्णे । स्वर्णे । रिणक्ति । रिचिर् विरेचने । रिचेर्धनेघिच्चेत्य ऽसुन् । चात्प्रत्ययस्यनुट् । घित्वा त्कुत्वम् ॥

रेखा । स्त्री॰ अल्पके ॥ छद्मनि ॥

आभोगे । उल्लेखे ॥ उल्लेखस्त्वत्र दण्डाकारलिपिविशेषः । डंडी इ० लकीर० रेख० हू०भा० ॥ राज्याम् ॥ लिख्यते । लिखअक्षरविन्यासे । भिदादित्वादङ् धीरलयोरैकत्वम् ॥

रेखाभूमि. । स्त्री० वारप्रवृत्तिस्थले । लङ्कासुमेर्वोर्मध्यसूत्रगतदेशे ॥ यथा । यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशन्सूत्रं मेरुगतं बुधैर्निगदितासामध्यरेखाभुवः । आदौ प्रागुदयोऽपरत्रविषयेपश्चाद्धिरेखोदयात्स्यात्तस्मात्क्रियतेतदन्तरभुवं खेटेष्वृणं स्व फलमितिसिद्धान्तशिरोमणिः ॥

रेचकः । पुं० यवक्षारे ॥ जयपालवृक्षे ॥ तिलकवृक्षे ॥ क्रीडार्थजलनिक्षेपयन्त्रे । पिचकारी० हू० भा० प्र० ॥ प्राणवायोः शनैर्वामनासापुटाद्दक्षिण नासापुटाद्वा० सव्यापसव्यन्यायेनवहिर्निःसरणे ॥ मुच्यमानस्तुरेचकइतियाज्ञवल्क्यः । श्वासइतिभेष. ॥ चनोत्मोपेक्षायाम् ॥ निषेधनंप्रपञ्चस्य रेचकाख्यः समीरणः ॥ न० कङ्कुष्ठहसिकायाम् ॥

रेचनम् । न० मलभेदने । प्रस्कन्दने । विरेके । विरेचने ॥

रेचनकः । पुं० काम्पिल्लके ॥

रेचना । स्त्री० काम्पिल्ले ॥

रेचनी । स्त्री० त्रिवृतायाम् ॥ दन्त्याम् ॥ गुन्द्रायाम् ॥ रोचनकायाम् ॥ रिचिर्० । ल्युट् । ङीप् कालाञ्जन्याम् ॥ काम्पिल्ले ॥

रेचितम् । न० उत्तेजिताख्ये । यथा । उत्तेजितंमध्यवेगंयोजनंमथवल्गितेति ॥ रेचनम् । रिचिर्० । क्तः ॥ त्रि० रिक्तीकृते ॥ अश्वगतिविशेषे ॥

रेची । स्त्री० अङ्कोठे ॥ काम्पिल्लवी ॥

रेज. । त्रि० तेजिते ॥ रेजति । रेजतेवा । रेजृदीप्तौ । पचाद्यच् ॥

रेणुः । पुं० पर्पटे ॥ रेणुकायाम् ॥ पांशौ । पुं० स्त्री० धूलौ ॥ दीपखद्योतनुष्ठायाच्छिन्नवेशनखादिकम् । अजमार्जाररेणुश्चहन्तिपुण्यंपुराकृतम् ० ह० का० खो० । रिणाति० रीयतेवा । रीगतिरेषणयोः । अजिवृरीभ्योनिच्चेतिणुः ॥

रेणुकम् । न० कङ्कुष्ठभेदे ॥

रेणुका । स्त्री० मरिचाकृतिसुगन्धिद्रव्यविशेषे । द्विजायाम् । हरेण्वौ । भस्मगन्धिन्यामौषधौ ॥ अस्यागुणाः रेणुकाकटुकापाचीतिक्तानुष्णाकटुर्लघुः । पित्तलादीपनी

मेध्यापाचनीगर्भपातनी ॥ वलासवातवैकव्यहट्कण्डूविषदाहनुत् ॥ परशुराममातरि ॥ रेणुरस्यास्ति । लोमादित्वान्नन् । कुसुमान्तात्क: ॥ रेणुरिवभा । स च्छायामितिकन् ॥

रेणुकातीर्थम् । न० तीर्थविशेषे ॥

रेणुकासुत: । पुं० परशुरामे ॥

रेणुरूषित: । पुं० गर्दभे ॥ त्रि० धूलिव्याप्ते ॥

रेणुवास: । पुं० भ्रमरे ॥

रेणुसार: । पुं० कर्पूरे ॥

रेणुसारक: । पुं० कर्पूरे ॥

रेतजा । स्त्री० बालुकायाम् ॥

रेतनम् । न० वीर्ये । शुक्रे ॥

रेत: । न० वीर्ये । शुक्रे ॥ अप्सु रेत:पातनिषेधो यथा । नवामहस्तेनाद्यपिवेदञ्जलिना जलम् । नोत्तरेदनुपस्पृश्य नाप्सु रेत: समुत्सृजेत् ॥ पारदे ॥ रिणाति । री गतिरेषणयो: । स्रुरीभ्यां तुट् चेत्यसुन् ॥ पु० । कार्ये ॥ अथातो रेतस: सृष्टिरित्यादौ रेत:शब्दस्य कार्यपरत्वेन व्याख्यानात् ॥

रेत्रम् । न० रेतसि ॥ पीयूषे ॥ पटवासे ॥ सूतके । पारदे ॥

रेप: । त्रि० निन्दिते । विगर्हिते ॥ क्रूरे ॥ री० बाहुलकात्प: ॥

रेपा: । त्रि० अधमे ॥ क्रूरे ॥ कृपणे ॥ रपति । रप व्यक्तायां वाचि । रपेरत एच्चेत्यसुन् ॥

रेफ: । पुं० रवर्णे ॥ रादिफ: ॥ रिफ्यते । रिफति वा । रिफ घञ् । पचाद्यच् वा । रागे ॥ त्रि० अवद्ये । कुत्सिते ॥ रिफति । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । अकर्तरि चेति घञ् ॥ यद्वा । रिफति । अवद्यावमाधमेति प्रत्ययान्तो निपात: ॥

रेभणम् । न० हम्भायाम् । गोध्वनौ ॥

रेरिहाण: । पुं० वृषाङ्के । महादेवे । सदाशिवे ॥ अम्बरे ॥

रेवट: । पु० शूकरे ॥ वेणौ ॥ वातुले ॥ विषवैद्ये ॥ न० दक्षिणावर्तशङ्खे ॥

रेवत: । पुं० जम्बीरे ॥ आरग्वधे ॥ रेवतीपितरि० नृपतिविशेषे । बलरामश्वशुरे ॥

रेवतकम् । न० पारेवते ॥

रेवती । स्त्री० ककुद्मिकन्यायाम् । बलदेवपत्न्याम् ॥ मातृभेदे ॥ अन्त्यनक्षत्रे ॥ अस्मिन्नक्षत्रे जातस्य फलं यथा । चारुशीलविभवोजितेन्द्रिय: सत्कुले सुभवने कमानस: । मानवोऽनुभवेन्महीपती रेवती भवति यस्य जन्मभम् ॥ बाल

ग्रहविशेषे ॥ रैवतमनुमातरि ॥ धेनौ ॥ दुर्गायाम् ॥ रेवतीनक्षत्रे ० इतिगौरादिषुपाठान्ङीष् ॥ रेवत्यांजातायाम् ॥ चित्रारेवती तिनक्षत्रयोर्लुक्॥ पिप्पल्यादित्वा न्ङीष् ॥

रैवत्य : । स्त्री० सामविशेषे ॥ नित्य बहुवचनान्तोयंरेवतीशब्द : ॥

रेवतीजानि ' । पुं० रेवतीरमणे ॥ रेवतीजायायस्य । जायायानिङि तिसमासान्तोनिङादेश : । लोपो व्योर्वलीतियलोप : ॥

रेवतीभव : । पुं० शनैश्चरे ॥

रेवतीरमण . । पुं० रामे । हलायुधे । बलदेवे ॥ रेवत्यारमण . ॥

रेवतीश । पुं० बलभद्रे । रेवती रमणे ॥

रेवन्त । पुं० सूर्यात्मजविशेषे ॥ गुह्यकाधिपतौ ॥

रेवन्तप्रसू । स्त्री० संज्ञायाम् । सूर्यपत्न्याम् ॥

रेवा । स्त्री० नदीविशेषे ॥ नर्मदाया म् । मेकलकन्यायाम् ॥ रत्याम् । मन्मथयोषिति ॥ नीलीवृक्षे ॥ दुर्गायाम् ॥ रेवते । रेवृप्लवगतौ । पचाद्यच् । टाप् ॥

रेषणम् । न० वृकशब्दे ॥ हिंसाया म् । रिषहिंसायाम । ल्युट ॥

रै । ध० दाने ॥ अनादरे ॥

रा । पुं० स्वर्णे ॥ वित्ते । धने ॥ जलदे ॥ ध्वनौ । शब्दे ॥ रातिसु खम्० रायतेवा । राङ्दाने । राते र्डैः ॥

रैक्व : । पुं० संवर्गविद्याविदिमुनि विशेषे ॥

रैणुकेय । पुं० परशुरामे ॥ रेणु कायाअपत्यम् । स्त्रीभ्योढक् ॥

रैभ्य ' । पुं० ऋषिविशेषे ॥ रेभस्य गोत्राऽपत्यम् । गर्गादित्वाद्यञ् ॥

रैवत : । पुं० सुवर्णालौ ॥ शैलभेदे ॥ शङ्करे ॥ जयन्ते ॥ दैत्यविशेषे ॥ वर्त्तमानकल्पीयेपञ्चमेमनौ ॥

रैवतक ' । पुं० द्वारकासमीपस्थेप र्वतविशेषे । उज्जयन्ते ॥ श्रुतिपु राणप्रसिद्धेपरमहंसे ॥ न० पारे वतवृक्षे ॥

रोक ' । पुं० क्रयभेदे ॥ दीप्तौ ॥ न० नावि ॥ चरे ॥ बिले । छिद्रे ॥ त्रि० चले ॥ रोचतेऽत्र । रुच दीप्तौ । हलश्चेतिघञ् ॥ निष्ठासे ट्त्वान्न्यङ्क्वादित्वात्कुत्वम् ॥

रोग . । पुं० कुष्ठौषधौ । दोषवैषम्ये । व्याधौ आमये । गदे ॥ दुष्कर्म जानृणारोगाःयान्तिचेवक्रमाच्छम म् । जपैः सुरार्चनैर्होमैर्दानैस्त षाशमोभवेत् इतिकर्मविपाकः ॥ रोजनम् । भावेघञ् । रुजतिवा । रुजोभङ्गे । पदरुजेतिघञ् ॥

रुज्यतेपीड्यतेदेहोऽमेनेतिवारोग ॥

रोगघ्नम् । न॰ औषधे । त्रि॰ रोगनाशके ॥

रोगभूः । स्त्री॰ शरीरे ॥

रोगराजः । पुं॰ पापरोगे । राजयक्ष्मणि ॥ रोगाणांराजा । टच् ॥

रोगलक्षणम् । न॰ निदाने ॥

रोगशान्तकः । पुं॰ वैद्ये ॥

रोगशिला । स्त्री॰ मनःशिलायाम् ॥

रोगशिल्पी । पुं॰ शरालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षविशेषे ॥

रोगश्रेष्ठः । पुं॰ ज्वरे ॥ रोगेषुश्रेष्ठः ॥

रोगहम् । न॰ औषधे । भैषज्ये ॥

रोगहारी । पुं॰ चिकित्सके । वैद्ये ॥ रोगं हरतितच्छीलः । सुपीति णिनिः ॥ त्रि॰ रोगनाशके ॥

रोगितरुः । पुं॰ अशोकवृक्षे ॥

रोगी । त्रि॰ रोगयुक्ते । व्याधिते । आतुरे । अभ्यमिते । रोगार्त्ते ॥ रोगमस्यास्ति । इनिः ॥ अथवर्ग्ये चिकित्सार्थंपरीक्ष्यरोगितस्यहि ॥ तत्राहवाग्भटः । दर्शनस्पर्शन प्रश्नैः परीक्षेतथरोगिणम । आयुरादिदृशास्पर्शाच्छीतादेः प्रश्नतोऽपरम् ॥ आयुरादीत्यचादिग्रहणात् साध्यत्वाऽसाध्यत्वादिबोध्यम् । दृशा॰दर्शनेन । वयसम्पदादिश्यर्श तिभावेक्षिप् । स्पर्शात्॰ शीतादे । शीतोष्णमृदुकठिनत्वादिनापरीक्षणञ्च । प्रश्नतः । उदरलाघवगौरवलक्षणाऽऽलक्षणा॰बुभुक्षाऽबुभुक्षावलाऽवलादिना। मिथ्यादृष्टाविकाराश्चि दुराख्यातास्तथैवच । तथादुष्परिमृष्टाश्चमोहयेयुश्चिकित्सकाम् ॥ तत्रदर्शन नेत्रजिह्वामूत्रादेः कार्त्तव्यम् ॥

रोगिवल्लभम् । न॰ भैषज्ये । औषधे त्रि॰ रोगिप्रिये ॥

रोग्यम् । त्रि॰ अपथ्ये । अहिते ॥ रोगायहितम् । यत् ॥ रोगसम्बन्धिनि ।

रोचकः । पुं॰ बुभुक्षायाम् । अशनायाम् । जिघत्सायाम् । कदल्याम् ॥ राजपलाण्डौ ॥ अवदंशे ॥ ग्रन्थिपर्णभेदे । निशाचरे । धनहरे । कितवे । गणहासके । नेपालदेशभगिरुडर॰इतिप्रसिद्धे ॥ अस्यगुणाः । रोचकोमधुरस्तिक्तः कटुपाकः कटुर्लघुः । तीक्ष्णोहृद्योहिमोहन्तिकुष्ठकण्डूकफानिलान् ॥ रक्षोऽश्मस्वेदमेदोस्रज्वरगंधविषव्रणान् ॥ त्रि॰रुचिकारके ॥

रोचनः । पुं॰ कूटशाल्मलौ ॥ श्वेतशिग्रौ ॥ पलाण्डौ ॥ आरग्वधे ॥ करञ्जे ॥ अङ्कोठे ॥ दाडिमे ॥ त्रि॰ रोचके । रुचिकरे ॥ रोचते । रुचदीप्तौ । अनुदात्तेतश्चेतियुच ॥

रोचयति। नन्द्यादित्वाल्ल्युर्वा बहुलमन्यत्रापीतियुज्वा॥

रोचनक। पु० जम्बीरे॥

रोचनफल। पु० बीजपूरके॥

रोचनफला। स्त्री० चिर्भिटायाम्॥

रोचना। स्त्री० रक्तकह्लारे॥ गोपित्ते॥ वरयोषिति॥ रोचते। रुच०। बहुलमन्यत्रापीतियुच्। टाप्॥

रोचनिका। स्त्री० वंशरोचनायाम्॥ शुण्डारोचन्याम्॥

रोचनी। स्त्री० आमलक्याम्॥ गोरोचनायाम्॥ मनःशिलायाम्॥ श्वेतत्रिवृताताम्। काम्पिल्यौषधौ॥ रोचते। रुचदीप्तावभिप्रीतौ च। कृत्यल्युटइतिल्युट्॥

रोचमान। पुं० अश्वस्यग्रीवास्थरोमावर्ते॥ यथा। ग्रीवायांहृदयावर्तौरोचमानोगलोद्भव इतिचिन्ताशुभेषु:॥ अपिच। कण्ठगोरोचमानस्तस्यामिसौभाग्यवर्द्धनइतिवैजयन्ती॥ त्रि० अत्यन्तंदीप्यमाने॥ रोचते। रुच०। लट। शानच्। आनेमुक्॥

रोचित। त्रि० प्रकाशिते॥

रोची। त्रि० रोचिष्णौ॥

रोचिष्णु। त्रि० अलङ्कारादिनाशोभमाने। विभ्राजि। भाजिष्णौ॥ रोचतितच्छील। रुच०। अलङ्कृञिति० इष्णुच्॥

रोचि। न० शोचिषि। त्विषि। प्रभायाम्। दीप्तौ॥ रोचतेऽनेन। रुच०। बाहुलकादिसि:॥

रोची। स्त्री० हिलमोचिकायाम्॥

रोच्य:। त्रि० प्रकाश्ये॥ प्रीतिविषये॥

रोटिका। स्त्री० रोटी० इतिभाषाप्रसिद्धेपिष्टकविशेषे॥ अस्याः करणप्रकारोयथा। शुष्कगोधूमचूर्णेनकिञ्चित्पुष्टाप्लमोलिकाम्। तप्तकेलेदयेत्कृत्वा भूयोऽङ्गारेपितांपचेत्। सिद्धेषारोटिकाप्रोक्ताशुणानस्या: प्रचक्ष्महे। रोटिकाबलकृद्रुच्याबृंहणीधातुवर्द्धनी॥ वातघ्नीकफकृद्गुर्वी दीप्ताग्नीनां प्रपूजिता॥ यवजारोटिकारुच्यामधुराविशदालघु:। मलशुक्रानिलकरीबल्याहन्तिकफामयान्॥ पीनसश्वासकासांश्चमेदोमेहगलामयान्॥

रोड। पुं० क्षोदे॥ त्रि० तृप्ते॥

रोदनम्। न० क्रन्दने। शोकादिनास्नुपतने। रोना० इ० भा०॥ अस्रे। अश्रुणि। आसू० इ० भा०॥ रुद्यते। रुदिर्अश्रुविमोचने। बाहुलकात्कर्मणिल्युट्। तस्यशुभाशुभ यथा। अमलस्निग्धरुदितमदीन शुभदं नृणाम्। प्रचुराश्रुदीनरूक्षस्वरुदितं नसुखावहम्।

॥ रोदनाश्रुपतनेनमृतानानरक यथा ॥ ज्ञानिनोमारुदन्त्वेवमारोदी ' पुत्रसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानानरकं ध्रुवम् ।' स्मृतम्द्विश्वरोदननिषेधोयथा ॥ श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतोभुङ्क्तेयतोऽवश ' । अतोनरोदितव्य हिक्रिया कार्याविधानतः इति ॥

रोदनिका । स्त्री० यवासे ॥

रोदनी । स्त्री० कच्छुरायाम् । दुरालभायाम । यवासे ॥ रोदयति । रुदिर्० । ल्युट् । ङीप् ॥

रोद : न० दिवि ॥ भूमौ ॥ द्यावापृथिव्यो ॥ रोदितिसर्वमस्मिन् । रुदिर्० । असुन् ॥

रोदसी । अ० द्यावापृथिव्योः ॥ दिवि ॥ भूमौ ॥

रोदसी । स्त्री० स्वर्गे ॥ भूमौ ॥ द्यावाभूम्योः ॥ गौरादित्वात्पक्षेङीष् ॥

रोदस्यौ । स्त्री० द्विवचनान्त. । भूमिस्वर्गयो ' ॥

रोध : । पुं० नदीतीरे । कूले । रुणद्धि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधक : । त्रि० रोधिनि ॥ रुधिर्० । बाहुल्॥

रोधन : । त्रि० रोधकर्त्तरि ॥ न० रोधे ॥

रोधवक्रा । स्त्री० सरिति ॥ रोधेनवक्रा ॥

रोध । न० तीरे ॥ रुणद्धि । रुधिर्० । सर्वधातुभ्योसुन्निति० असुन् ॥

रोधोवक्रा । स्त्री० नद्याम् ॥ रोधसावक्रा ॥

रोधोवती । स्त्री० नद्याम् ॥

रोध्र ' । पुं० गालवे । लोध्रे न० अपराधे ॥ किल्विषे ॥ रुणद्धि ' रुधिर्० । बाहुलकाद्रन् ॥

रोध्रपुष्प : । पुं० मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री० धातकीवृक्षे ॥

रोप. । पुं० रोपणे ॥ इषौ । वाणे ॥ न० छिद्रे ॥ रोप्यतेऽनेनवा रुहजिमोहने । णिजन्त ' । घञ् ॥ यद्वा । रुहयतेऽनेन । हलश्चेतिघञ् ॥

रोपक . । पुं० सुवर्णसप्ततितमेभागे ॥ यथाहविष्णुगुप्त । स्त्रीनारारोपकैरष्टाभि श्चत्वापरिकीर्त्तित । सुवर्णसप्ततितमोभागोरोपकउच्यतइति ॥

रोपणम् । न० विमोहने ॥ जनने ॥ प्रादुर्भावे '। रुहेर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपण रसकं पिष्टासम्यक्सम ज्ञाव्य वारिणा । ग्रहणीयात्तज्जलसर्वत्यजेच्चूर्णमधोगतम् ॥ शुष्कस्तत्ज्जलं सर्वपर्पटो सन्निभभवेत् । विचूर्ण्यभावयेत्सम्यक्त्रिवेलत्रिफलारसे ।, कर्पूरस्वरसतच्चदशमांशेनमनि ' क्षिपेत् ।

अञ्जयेन्नयनेतेननेत्राखिलगदच्छि
दः ॥
रोपणचूर्णम् । न० नयनाञ्जनविशे-
षे ॥ यथा । शिलायारसकपिष्टास
स्यगाम्राप्यवारिणा । गदृणीयात्त
जलसर्वंत्यजेच्चूर्णमधोगतम् । शु
ष्कं तच्चजलसर्वं पर्पटीसन्निभंभवेत्
। विचूर्ण्य भावयेत्सम्यक्त्रिवेल-
त्रिफलारसे ॥ कर्पूरस्यरजस्तच्च
शमाशेनन्नि क्षिपेत् । अञ्जयेन्नय
नतेनसर्वदोषोपशान्तये ॥ समस्त
नेत्ररोगघ्न चूर्णमेतन्नसंशय ॥
रोपणवर्त्ति । स्त्री० नेत्राञ्जनप्रभेदे ॥
यथा । अशीतिस्तिलपुष्पाणिषष्टि
पिप्पलतण्डुला । जातीपुष्पाणि
पञ्चाशन्मरिचानिचषोडश ॥ सू-
क्ष्म पिष्टाम्बुनावर्त्ति . कृताकुसु-
मिकाभिधा । तिमिरार्जुनशुक्रा
णानाशिनीमांसवर्द्धिनुत् ॥ एतस्या
अञ्जनेप्रोक्तामाचासार्द्धहरेणुका ।
कुसुमिकावटी० रोपणी ॥
रोप्यातिरोप्य । पु० धान्यविशेषे ॥ य
था । रोप्यातिरोप्यालघव शीघ्रपा
कागुणोत्तरा । चदाहिनोदोषह-
रावल्यामूत्रविवर्द्धना ॥
रोमम् । न० जले ।
रोमकम् । न० पांशुलवणे । अयस्का
न्तप्रभेदे । पु० रूमाभिधेनगरे ॥
रोमकन्द । पु० पिण्डालौ ॥

रोमकपत्तनम् । न० पश्चिमेकेतुमाल-
वर्षस्थनिरक्षदेशेविद्यमानेपत्तने ॥
रूमे ॥ तच्चाधुनारूमस्याम्० इति
नाम्नाप्रसिद्धम् ।
रोमकूप । पु० रोममूले ॥

रोमकेशरम् ।
रोमगुच्छम् ।
रोमगुच्छकम्
रोमगुल्मम् । } न० चामरे । अत्र चलके ॥

रोम । न० लोम्नि । अङ्गजे । तनूरुहे ॥ तस्यफलंयथा । अल्परोमयुता
श्रेष्ठाजङ्घाहस्तिकरोपमा । रोमै
कैकंकूपकेस्यान्नृपाणांमहात्म-
नाम् ॥ द्वेद्वेरोमेपण्डितानांश्रोत्रि
याणांतथैवच । रोमत्रयदरिद्राणां
रोगीनिर्मांसजानुक . ॥ अपिच ।
रोमैकैकंकूपकेपार्थिवानांद्वेद्वेज्ञेये
पण्डितश्रोत्रियाणाम् । त्र्याद्यैर्नि
स्वामानवादुःस्वभाजःकेशास्त्वेवं
निन्दितापूजिताश्च ति ॥ रोहति । रुह० । नामन्सीमन्व्योम
न्रोमन्निच्यादिनासाधु । यद्वा ।
रूयते । रुशब्दे० रूङ्गतौ० भा
वे वा मनिन् ॥
रोमन्थ पु० उद्गीर्य्यचर्वणे । पशूनाच
र्वितस्याकृष्यपुनश्चर्वणे । जुगार०
इ० भा० ॥
रोमभूमि स्त्री० चर्मणि ॥
रोमलता । स्त्री० रोमावल्याम् ॥

रोमवान् । त्रि० रोमशे । लोमविशिष्टे ॥

रोमविकार ।) पुं० रोमाञ्चे ।
रोमविक्रिया ।) स्त्री० रोमहर्षणे ।

रोमश । पुं० पिण्डालौ ॥ मेषे ॥ कुम्भिनि ॥ शूकरे ॥ त्रि० अतिशय लोमविशिष्टे ॥ रोमाण्यस्यसन्त्यस्य । लोमादित्वात् श. । रलयोरभेद ॥

रोमशफल. । पुं० डिण्डिशे । मुनिनिर्म्मिते । डिण्डसी० टिण्डा० प्र० भा०

रोमशा । स्त्री० दुग्धावृचे ॥

रोमशूकम् । न० स्थौणेयके ॥

रोमहर्ष. । पु० पुलकितत्वे । रोमाञ्चे ॥

रोमहर्षण । पु० सूते । इतिहासपुराणानाधारकेव्यासशिष्ये ॥ यस्मात्सर्वरोमाणिवच्चसाह्र्षितानियत् । द्वैपायनस्यभगवस्ततोवैरोमहर्षणः ॥ भवत्समेवभगवान्व्याजहारस्वयंप्रभु ॥ विभीतकवृचे ॥ न० रोमाञ्चे ॥ रोम्णाहर्षणम् ॥

रोमाञ्च । पु० रोमहर्षणे । रोमोद्गमे ॥ रोम्णामञ्चनं पूजनम् । भावेघञ् ॥

रोमाञ्चिका । स्त्री० रुदन्तीवृचे ॥

रोमाञ्चित. । त्रि० जातपुलके । हृष्टरोमणि ॥ रोमाञ्च सञ्जातोस्य । तारकादित्वादितच् ॥

रोमाली । स्त्री० वय सन्धौ ॥ रोमावल्याम् ॥

रोमालु । पु० पिण्डालौ ॥

रोमालुविटपी । पु० कुम्भीवृचे ॥

रोमावली । स्त्री० नाभेरुपरिलोमश्रेण्याम् ॥

रोमाश्रयफला । स्त्री० झिन्झिरिष्टाक्षुपे ॥

रोमोद्गम ।) पुं० रोमहर्षणे ।
रोमोद्भेद. ।) पुं० रोमाञ्चे ॥

रोल । पुं० पानीयामलके ॥

रोलम्ब. । पुं० भ्रमरे ॥

रोला । स्त्री० मात्रावृत्तान्तरे ॥ यथा । रोलावृत्तमवेहिनागपतिपिङ्गलभणितप्रतिपदमिहचतुरधिककला विंशतिपरिगणितम् । एकादशमधिविरतिरखिलजनचित्ताहरणसुललितपदमदकारिविमलकविकण्ठाभरणम् ॥ यथा । तरतिपयोनिधिसलिलमयतिगिरिशिखरशिखोपरि० विशतिरसातलमटतियशस्तवसकलदिशोपरि । गगनगमनमभिनयतिसमंशशिनाश्रियमश्नुतिचित्रमिदनतथापिभवन्त भूपविसुश्रुति ॥

रोट । त्रि० बधके । हिंस्रे ॥ रोषति । रुष० । क्विच् ॥

रोष । पुं० कोपे । क्रोधे ॥ चपले

यमुदेतुमिच्छतातिमिररोषमयंधियापुर । अविभिद्यनिशाकृतंतम प्रभयानांशुमताप्युदीयते ॥

रोषणम् । रुषहिंसायाम् । भावे घञ् ॥

रोषण । पु॰ पारदे ॥ हेमघर्षणे ॥ उषरे ॥ ऊषरे ॥ त्रि॰ क्रोधने । अमर्षणे ॥ रोषतितच्छील । रुष॰ । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

रोषमय । त्रि॰ रोषादागते । मयड्वेतिमयट् ॥

रोषित । त्रि॰ रोषंप्रापिते । रुष्टे ॥

रोह । पु॰ अङ्कुरे ॥ सादिनि ॥

रोहक । पु॰ प्रेतविशेषे ॥ त्रि॰ रोढरि । रोहकारे ॥ रुह्बीजजन्मनिप्रादुर्भावे । ण्वुल् ॥

रोहण । पुं॰ गिरिप्रभेदे । विदूराद्रौ ॥ न॰ शुक्रे ॥ जन्मनि ॥ प्रादुर्भावे ॥

रोहन्त । पुं॰ द्रुमविशेषे । वृक्षात् । रुह॰ । रुहिनन्दिजीविप्राणिभ्यः षिदाशिषीतिझच् ॥ हश्चमार्ग ॥

रोहन्ती । स्त्री॰ लतान्तरे ॥ षित्वान् ङीष् ॥

रोहि । पुं॰ बीजे ॥ वृक्षे ॥ धार्मिके ॥ व्रतस्थाम् ॥ रोहति । रुह॰ । इगुपधिकहिंसतिविदिच्छिदिकीर्त्तिभ्यश्चेति ॥ गन्धमृगे ॥

रोहिण । पुं॰ भूतृणे ॥ वटवृक्षे ॥ रोहितकवृक्षे ॥ न॰ कालभेदे । रौहिणे । दिनस्यनवमेमुहूर्त्ते ॥ सचपूर्वाह्णश्राद्धस्यगौणकालत्वेनोत्तरावधि । अपराह्णश्राद्धस्यपूर्वावधि । एकोद्दिष्टश्राद्धस्यसमानकाल ॥ रोहति । रुह॰ । रुहेश्चेति॰ इनन् ॥ त्रि॰ रोहिण्यांजाते । नक्षत्रेभ्योबहुलमितिलुक् । लुक्तद्धितलुकि ॥

रोहिणि । स्त्री॰ रोहिणीनक्षत्रे ॥

रोहिणिका । स्त्री॰ रागादिनारक्तवर्णायांस्त्रियाम् ॥

रोहिणी । स्त्री॰ अश्विन्यादिषुचतुर्थनक्षत्रे । ब्राह्मम् ॥ तत्रजातस्यफलं यथा । स्याद्धर्मकार्येकुशलः कुलीनः सुचारुदेहोविलसत्कलेवरः । स्मराग्निनाचाकुलिताखिलाशयेयोरोहिणीज सधनीसमानी ॥ इति ॥ रोहिणीनक्षत्रे इति गौरादिषुपाठान् ङीष् ॥ कण्ठरोगविशेषे ॥ अस्यनामानिसङ्ख्याचयथा । रोहिणीपञ्चधाप्रोक्ता कण्ठशालूकएवच । अधिजिह्वस्वलयोऽलासनामैकवृन्दकः ॥ ततीवृन्द शतघ्नीचगिलायु'कण्ठविद्रधि । गलौघ'प्रस्वरघ्नस्मासतालसथैवच ॥ विदारीकण्ठ

रोहित्                                                                 

देशेतुरोगाचष्टादशस्मृता । इति ॥ र्धनौ । सोम्भेध्याम् ॥ रोहित वर्णयोगात्० ङीप् नौ ॥ लोहिता याम् ॥ रोहितशब्दात्स्त्रीत्वेपक्षा या० वर्णादनुदात्तात् तोपधात्तोने तिङीप तकारस्यनकारादेशश्च ॥ तडिति ॥ कटम्भरायाम् । कटु रोहिण्याम् ॥ सोमवल्के ॥ जिना नाविद्यादेवीविशेषे ॥ बलदेवस्य मातरि ॥ सुरभिकन्यायाम् ॥ न ववर्षीयायाकन्यायाम् ॥ हरीत क्याम् ॥ वृक्षासारोहिणीस्मृतेति लक्षणात् । कपिलवर्णाजत्तुलाका राविरेचनेप्रशस्ता ॥ काश्मर्याम् ॥ रागाद्यैरक्तितस्त्रियाम् ॥ रोहिण्या जातायाम् ॥ चित्तारेवतीरोहि णीभ्य स्त्रियामितिनक्षत्राणोलुक् । गौरादित्वान्ङीष् ॥

रोहिणीपतिः । पुं० इन्द्रौ ॥ रोहि ण्याः पति ॥ इन्दुभे ॥

रोहिणीरमणः । पुं० वृषभे ॥ वसुदे वे ॥ चन्द्रे ॥

रोहिणीवल्लभः । ) पुं० चन्द्रमसि
रोहिणीश । ) वसुदेवे ॥

रोहिण्यष्टमी । स्त्री० रोहिणीयुक्ताभा द्रकृष्णाष्टम्याम्

रोहित् । पुं० ... । ... । स्त्री०- मृग्याम् ॥ लताप्रभेदे ... इति ।

रोहित

कम० । इत्यरुहिपुषिभ्यइति ॥

रोहित । पुं० मीनविशेषे । रोहू० इतिभाषाप्रसिद्धे ॥ अस्यलक्षणगु णाश्चयथा । कृष्णा शल्कीशवर्ते तकु चित्सुमत्स्योय श्रेष्ठोसौ रोहितो वृत्तवक्त्र । कौष्या वल्यरोहितस्या पिमासजातहल्लिस्निग्धमुख्यातिवी- र्यम् ॥ अपिच । रक्तोदरोरक्तमुखो रक्ताक्षोरक्तपक्षतिः । कृष्णपक्षोम त्स्यश्रेष्ठोरोहित कथितोबुधैः ॥ रोहित सर्वमत्स्यानांवरोवृष्योर्दि तार्त्तिजित् । कषायानुरस स्वादु र्वातघ्नोनातिपित्तकृत् ॥ ऊर्ध्वज- त्रुगतान्रोगान्हन्याद्रोहितमुण्ड कम् ॥ अस्यपाकप्रकारोयथा । रो हितोदरखण्डाश्चकासमर्दनमर्दि ता । कटुतैलपरिभ्रष्टाहिङ्गुमे- न्धवसयुता ॥ शकलपृष्ठसम्भृत- रोहितदधिमर्दितम् । वेसवारान्वि तपाच्यप्रलेहविधिनाभृशम् ॥ त- न्मुण्डस्यतु । रोहितस्योत्तमदेहप्रले हेनावलेपितम् । योश्नातीहन र पूर्वमदेसस्मरूपभृत् ॥ रोहि त । प्रवरोमत्स्यानातिपित्तकरोगु रु । वातहापुष्टिदोहृद्य । स्निग्ध पथ्य समीरिण ॥ इति ॥ मृग विशेषे ॥ रोहितकद्रुमे ॥ हारभेदे ॥ रक्तवर्णे ॥ ऋषभाद्रिवासिगन्ध- र्वविशेषाणां सञ्ज्ञायाम् ॥ न० कु

द्रुमे ॥ रक्ते ॥ ऋजुशक्रशरासने । दण्ड आरे नाजाद्यौ दिविदृश्यमाने ज्योतिर्विशेषे ॥ इन्द्रधनुरेवेत्याख्यातादिनाऽऋजुवक्र सद्रोहितस्यात् ॥ त्रि० रक्तवर्णविशिष्टे ॥ रोहति । रुह० । रुहेरश्चलोवेतीतन् ॥ यद्वा । रोहणं रोह । सजातोऽस्य । तारकादित्वादितच् ॥

रोहितक । पुं० वृक्षविशेषे । रोहिषि । ग्रोहणची । दाडिमपुष्पके । सदाप्रसूने । रोहिडा० इ० भा० प्र० ॥ रोहितोवर्णोस्यास्ति । अच । स्वार्थेकन् ॥

रोहितगिरि । पु० पर्वतान्तरे । रोहितासइ० भा० प्र० ॥

रोहितगिरीय । पु० आयुधजीविविशेषे ॥ रोहितगिरिरभिजनो - स्यायुधजीविनः । छः ॥

रोहिता । स्त्री० रागादिनारक्तवर्णायांस्त्रियाम् ॥ वर्णादनुदात्तादिति पाक्षिकोङीप् तकारस्यनकारादेशश्चन ॥

रोहिताश्व । पुं० अग्नौ । वैश्वानरे ॥ लोहिताअश्वायस्य । वरुणस्त्वसितानश्वान्० कुबेर कुमुदोपमान् । हुताशन किंशुकाभान्० वायुर्धूम्रस्य।हणोदितिश्रालिहोत्रात् ॥ रलयोः सावर्ण्यात्रोहिताश्व ॥ रोहितोऽस्यौवाहनमस्य तिवा ॥ हरिश्चन्द्रनृपात्मजे ॥

रोहितिका । स्त्री० कोपादिनारक्तवर्णायाम्स्त्रियाम् ॥

रोहितेय । पु० रोहितके ॥ स्रोहा रौरोहितेय० स्याद्रक्तपुष्पश्चरोहित इतिरत्नकोष ॥

रोही । पु० रोहितके ॥ अश्वत्थे ॥ वटद्रुमे ॥ अवश्य रोहति । रुह० आवश्यकेणिनि ॥

रोहिष । पु० रौहिषे ॥ न० तृणान्तरे ॥

रोहीतक । पु० रोहितकद्रुमे ॥ रोहीतक प्लीहघातीरुग्यारक्तप्रसादन रोहीतकोयकृत्प्लीहगुल्मोदरहर स्मृत ॥

रौक्ष्यम् । न० रूक्षतायाम् ॥ पारुष्ये ॥ रूक्षस्यभाव । ष्यञ् ॥

रौच्य । पुं० मनुविशेषे ॥ ॥ रुचेप्रजापते । पुत्रोरौच्योनामभविष्यति ॥ बिल्वकाष्ठदण्डे । बैल्व ॥

रौद्र । पु० घर्मे । सूर्यतेजसि । आतपे ॥ अस्यगुणायथा । आतप कटुकोरूक्ष स्वेदमूर्च्छातृषावह दाहवैवर्ण्यजननोनेत्ररोगप्रकोपण ॥ रसविशेषे ॥ षष्टिवत्सरान्तर्गतचत्वारिंशे ॥ तत्फलयथा । अल्पतोयाघनावैश्वकीटका । प्रबला नृप अरुद्र पार्थिवादेविरौद्रे सवत्सरे ॥ ॥ ५४ ॥ शृङ्गाराद्यष्टर

सान्तर्गतविशेषरसे । उग्रे ॥ त्रि० तीव्रे ॥ भीषणे ॥ रुद्रसम्बन्धिनि ॥ रुद्रदैवत्ये ॥ रुद्रस्येदम् । अण् ॥

रौद्री । स्त्री० चण्ड्याम् ॥ ङीप् ॥ रुद्रजटायाम् ॥

रौप्यम् । न० रूप्ये ॥

रौप्यमाक्षिकम् न० तारमाक्षिके ॥

रौमम् । न० रौमके ॥ रुमायांभवम् । अण् ॥

रौमकम् । न० साम्भरि० इ० भा० प्र० लवणे । रौमे । वसुके ॥ रुमायाभवम् । तत्रभवइत्यण् । सञ्ज्ञायां कन् । त्रि० रोमकीभवस्ततत्रा गतोवा । पलाद्यादित्वादण् ॥

रौमहर्षणि । पु० उग्रश्रवसि । सूते ॥ रोमहर्षणस्यापत्यम् । अत इञ् ॥

रौरव । पु० नरकविशेषे ॥ घोरे ॥ त्रि० चञ्चले ॥ घोरे ॥ धूर्त्ते ॥ रुरुसम्बन्धिनि ॥ रुरुर्भीरश्रृङ्गाख्य प्राणिविशेष. । तस्यायम् । तस्ये दमित्यण् ॥

रौहिण । पुं० चन्दनवृक्षे ॥ न० दिनस्यनवमेमुहूर्त्ते । यथा । अत्र पूर्वाह्णे श्राद्धमभिधायरौहिणन्तु- नलङ्घयेदित्यभिधानेनपूर्वाह्णे श्राद्धस्य सङ्गवात्परोरौहिणपर्यन्तगौणपूर्वाह्णकाल प्रतीयते । तेन रौहिणंपूर्वाह्णे श्राद्धस्यगौणका- लत्वेनोत्तराऽवधि . अपराह्णश्राद् धस्यपूर्वावधिरित्यवगम्यते. ततश्च पूर्वदिनेसङ्गवात्पर रौहिणपर्यन्त तिथेर्लाभेपरदिनेमुहूर्त्तत्रयमात्रे- तत्तिथिलाभेपूर्वदिनेश्राद्धम् । रौहिणान्तरूपगौणपूर्वाह्णलाभात् नपरदिनेतथात्वभावात् । उभयदिने सङ्गवलाभेपरदिने० शुक्लपक्षे तिथि र्ग्राह्या तिवचनात् । रौहिनन्तुदिव- सस्यनवममुहूर्त्तस्तस्यज्योतिषोक्त- रोहिणीदैवतत्वात्रौहिणत्वमिति ज्ञतिश्राद्धतत्वम् ॥ त्रि० रोहि ण्याजाते ॥ सन्धिवेलादीत्यनेना ण् ॥

रौहिणेय : । पुं० बुधग्रहे ॥ हलायुधे । बलदेवे ॥ न० मरकतमणौ त्रि० गोर्वत्से ॥ रोहिण्याअपत्य म् । शुभ्रादित्वाट्ढक् ॥

रौहिष पुं० मृगविशेषे ॥ रोहिषत थाभेदमस्ति । शेषइत्यण् ॥ रोहित मत्स्ये ॥ न०वास्तृणे । रोहितइति० रोहिसइतिचख्यातेतृणे ॥ रोहिषतुव र तिक्तंकटुपाकव्यपोहति । हृत्क ण्ठव्याधिपित्तास्रशूलकासकफज्व- रान् ॥ रोहति । रुह० । रुहेर्वृद्धि श्चेतिटिषच् ॥

रौहिणी . स्त्री० मृग्याम् ॥ दूर्वायाम् ॥

॥ रकारसमाप्तः ॥

## लकारस्यप्रारम्भः



ल । पुं॰ इन्द्रे । शक्रे ॥ लकारे ॥ लघुस्वरे ॰ । ॰ ॥ न॰ पृथ्वीवीजे ॥ लीयते । लीङ्॰ । अन्येभ्योपिदृश्यतइतिड ॥

लकच । पुं॰ डहौ । लकुचे । इतिशब्दरत्नावली ॥

लकुच । पुं॰ लिकुचे । डहौ । हृढवल्कले । स्थूलस्कन्धे । क्षुद्रपनसे । वडहर॰इ॰गा॰प्र॰ ॥ अस्यगुणाः । आमलकुचमुष्णञ्चगुरुविष्टम्भकृत्तथा । मधुराम्लंतथात्यन्तंदोषत्रितयरक्तकृत् ॥ शुक्राग्निनाशनञ्चापिनेत्रयोरहितंस्मृतम् । सुपक्वंतत्तुमधुरमम्लंचानिलपित्तकृत् ॥ कफवन्हिकरंरुच्यं वृष्यंविष्टम्भकञ्चतत् ॥ लक्यते । लकधास्वादने । बाहुलकादुचः ॥

लक्तक । पुं॰ जीर्णवस्त्रखण्डे । कर्पटे । लत्ता॰इ॰भ॰प्र॰ ॥ द्रवद्रव्यं येनपूयतेतदच्छोयमितिस्वामी ॥ तत्तुल्यंवस्त्रेपिवर्त्तते ॥ मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे॰इतिमुकुटः ॥ प्रस्वेदादिमार्जनार्थंहस्तस्थवस्त्रखण्डस्यसञ्ज्ञेयमितिनव्याआहुः ॥ लक्तते । चोलजीश्चीडे । बाहुलकात्तन् । स्वार्थेकन । यद्वा । लक्यतेस्म । लक॰ । क्तः । स्वार्थेकन् ॥

लक्तकर्म्मा । पुं॰ पट्टिकाख्ये । रक्तवर्णलोध्रे ॥

लक्षम् । न॰ व्याजे । अपदेशे । परद्रोहफलकातिरिक्तव्याजे ॥ शरव्ये ॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम् १००००० लाखइ॰भा॰ ॥ लक्षणम् । लक्षआलोचने । घञ् ॥ लक्ष्यतेवा ॥

लक्षक । त्रि॰ लक्षयितरि । लक्षयतियस्तस्मिन् ॥ यथा ॥ लक्षकंनाम लक्षयति । यादृशार्थस्यसम्बन्धवति शक्तान्युदयन्नवेत् । तत्रलक्षकं नामतच्छक्तिविधुरंयदि ॥ यादृशार्थसम्बन्धवतियन्नामसङ्केतिततदेवतादृशार्थेलक्षकम्॰यदितादृशार्थेशक्तिशून्यं भवेत् । सम्बन्धादयस्तुशब्दास्तुरगादिसम्बन्धिनि॰लवणादाविवतुरगादावपिशक्ताएव । गङ्गादयस्तुतीरादावसङ्केतिता॰ । तत्सम्बन्धिनीरादिशक्तास्तेनगङ्गीताएमतीरादान्वयबोधयन्तितत्रलक्षकाएव ॥

लक्षणम् । न॰ नाम्नि ॥ चिह्ने ॥ स्वरूपे ॥ फले ॥ लक्ष्यतेज्ञायतेपदार्थोनेन । लक्षदर्शनाङ्कनयोः । करणेल्युट् ॥ तद्द्विविधम् । इतरभेदानुमापकम्॰व्यवहारप्रयोजकञ्चेतिन्यायमतम् ॥ व्याकरणमतन्तु । कृत्तद्धितसमासानामभिधानंनियामकम् । लक्षणन्त्वत्रभिज्ञाना तदभिज्ञानसूचकमिति ॥ सजाती

थविजातीयव्यावर्त्तकोलक्ष्यगत ' कश्चिल्लोकप्रसिद्धआकारोलक्षणमिति मीमांसकाः ॥ अथयोपियदार्था नानान्तर्यातिपृथक्त्वश . । लक्षणेनतुसिद्धानामन्तयान्तिविपश्चित इतिपूर्वाचार्या . ॥ स्वरूप तटस्थ द्विधालक्षणं स्यात्स्वरूपस्यबोधोयतोलक्षणाभ्याम् । स्वरूपेप्रविष्टात् स्वरूपेऽप्रविष्टाद्यथाकाकवन्तोगृहा . स्वविलक्षं ॥ शास्त्रे ॥ इतिवेयाकरणाः ॥ पुं॰रामभ्रातरि । सौमित्रौ ॥ सारसखगे ॥ लक्षेश्चुरादित्वान्ताच्चेरट् चेतिनप्रत्ययस्तस्याडागमश्च ॥

लक्षणा । पुं॰ वृत्तिविशेषे ॥ यथा । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ॥ साचत्रिविधा । जहल्लक्षणा ॰अजहल्लक्षणा॰जहदजहल्लक्षणेति । यथास्थानमासांलक्षणमनुसन्धेयम् ॥ शक्यसम्बन्धे ॥ यथा । लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥ अस्यार्थः । गङ्गायांघोषइत्यादौ॰गङ्गापदस्यशक्यार्थेप्रवाहरूपे॰घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वायत्र प्रतिसन्धीयते तत्रलक्षणयातीरस्यबोध ' । साच शक्यसम्बन्धरूपा । तथाहि प्रवाहरूपशक्यार्थसम्बन्धस्यतीरेऽगृहीतत्वात्तीरस्यस्मरणं ततः शाब्दबो

धइतिसिद्धान्तमुक्तावली ॥ शब्दानामौपचारिकोषुप्रवृत्तिषु ॥ यथा । आधारे कारणे कार्ये समीपे चोपकारके । धर्माद्यनुक्तौचेति लक्षणांसूरयोजगु ॥ मुख्यार्थानुगमानुपपत्तेर्गुणार्थप्रतिप्रतीतिकारिणीलक्षणासूरयस्तद्विदोजगु . ऊचु । कुत्रकुत्रेत्याह । आधारइत्यादि । तत्रतावदाधारे यथा । मञ्चा क्रोशन्तीति । अत्रहिमञ्चानामधिकरणभूतानामाचैतन्यात् ॰रोदनलक्षणे नक्रोशनार्थे नाननुगमादानर्थक्यात्॰तत्स्थानांबालानांसम्बन्धियत्क्रोशनतत्तेषुतात्स्थ्यात्मलक्षणयोक्तम् ॥ कारणे तुलक्षणायथा । शालीन्वृष्टोदेव इति । अत्रहिमुख्ययावृत्याशालिवर्षणस्यार्थोनन्वितइतिलक्षणया॰कालोचितायांवृष्टौशालिकारणभूतायाप्रतिबन्धवैकल्ययोरसम्भावनात्॰ सम्पन्नमेवशालिलक्षणंकार्यमुपचर्यते । अथवा आयुर्घृतमिति । आयुष्कारणेघृते॰ आयुषस्तत्कार्यस्योपचार . ॥ एव कार्येपि लक्षणासम्भवति॰ यथा । ऊर्णाः प्रावरणाः केचिदपरे तूलावास इति । अत्रकिलसूत्रभाव विना भाविना कम्बलपटादि भावेना परिणतयोरूर्णातूलयोर्मुख्ययावृ

त्याप्रावरणत्वमसम्भावितम् । तत्
कार्य्यश्चकम्बलपटात्मनएवतदुपपत्तेः
। ततश्चकम्बलपटादौचतयोः कार
णभूतयोरूर्णाकार्पासयोरुपचारः
कृतः ॥ समीपार्थलक्षणायथा ।
गङ्गायांघोषइति । अत्रहिमुख्यया
वृत्त्याप्रवहज्जलरूपस्रोतः गुणवृ
त्त्याचतद्विशेषं यद्किञ्चित् गङ्गाश
ब्दः कथयेत् तदाघोषासम्भाव्येवग्रा
माधिकरणतेति सामर्थ्यात्तत्सा
मीप्यलक्षणात्वेनतद्ग्रवतिष्ठते ॥
उपकारकेपिलक्षणादृश्यते यथा ।
भिक्षावासयन्तिकारीषोऽध्यापयती
ति । अत्रहिकिलनभिक्षास्तत्प्राव
रणाचलकरेणगृहीत्वागमननिषेध-
कुर्वन्ति । नापिसर्वथाऽस्मात्स्था
नान्नगन्तव्यमितिप्रणयवचनैरवस्था-
पयन्ति । अपितुप्रचुराणव्यञ्जनव
श्चस्तृप्तिहेतुत्वान्निरसनक्रियामुपका
रकत्वेनसम्भाव्यमाना प्रयोजक-
त्वेनोपचर्यन्ते । एवञ्चनकारीषोऽङ्ग
प्रत्याधीष्वेतिब्रुवन्माणवकमध्याप
यति । नापितच्छरीरमनुप्रविश्यभू
तवेतालादिभिरिवैनं पाठयति ।
किन्तर्हिशीतापनुत्तिहेतुतयाध्यय-
नविध्युपकारकत्वेनानुकूल्यं भज
स्तत्प्रयोजकत्वेनोपचरितः ॥ कि
ञ्चधर्माद्यनुकृताविति आदिग्रह
णादाकारानुकृतौच । तत्रधर्मानु

कृतौयथा । सिंहो माणवकः । गौ
र्वाहीकइति । अत्रहिलक्षणया
सिंहधर्माणांशौर्यादीनामनुकृत्यर्थं
माणवकेसामानाधिकरण्येनसिंह
शब्दः प्रवृत्तः । मुख्ययावृत्त्यातस्य
सिंहत्वस्यासम्भवात् । वाहीकेति
पृष्ठवहनत्वासम्भवात्तिष्ठल्लक्षणाग
च्छन्तृणादिचलीवर्दगतधर्मानुक
रणायगोशब्दः । सामानाधिकरण्ये-
नोपचरितवृत्तिरेवप्रवृत्तः । मुख्यया-
वृत्त्यातथाऽनन्वयात् ॥ एवमाकारा
नुकृतौयथा । सूचिभेद्यैस्तमोभिरि
ति । अत्रहितमसोऽमूर्त्तत्वात्सूचि
भेद्यत्वं मुख्ययावृत्त्यानसङ्गतमतोल
क्षणयातिनिविडत्वरूपमाकृति सू
चिभेद्यत्वेनानुकृता । एवं नामघ
नानितमासियद्वस्वादिवत्सूच्यादि-
नाभेद्यमप्येषावक्तुंशक्यमित्यर्थः ॥
मानान्तरोपरोधमुख्यार्थस्यापरिग्रहे
जाते मुख्याविनाकृतेर्थेयावृत्ति
सैवलक्षणाप्रोक्तेतिपूज्यपादाचा-
र्य्याः इत्येषायाम् ॥ प्रमाणे ॥
लक्ष्यतेऽनयेतिलक्षणा । टाप् ॥
सारस्यालक्षणाक्वचिदितिमेदिनि
करः ॥

लक्षणार्थ । पुं॰ लक्षणस्यप्रयोजने ॥
समानासमानजातीयव्यवच्छेदे ॥
लक्षणस्यअर्थः ॥

लक्षणीय । त्रि॰ लक्ष्ये ॥ भाव

मीये ॥

लक्षत्वम् । न० लक्षणाव्याप्यत्वे ॥

लक्षा । स्त्री० दशायुतसङ्ख्यायाम् ॥

लक्षित । त्रि० ज्ञापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लक्ष्ये । कर्मणि क्त ॥ लक्षणाश्रये ॥

लक्षितलक्षणा । स्त्री० लक्षितलक्षणायाम् ॥

लक्षिता । स्त्री० परकीयान्तर्गतनायिकाभेदे ॥

लक्ष्मणः । पुं० सौमित्रौ । श्रीरामभ्रातरि ॥ सारसे ॥ अर्थे । न० चिह्ने ॥ नामनि ॥ लक्षयति । लक्ष० । चुरा० । दिग्धात्वाख्यं रट् चतिनप्रत्ययस्य मुडागमोपीर्ष्ये के ॥ त्रि० श्रीयुक्ते ॥ लक्ष्मीरस्त्यस्य । पामादित्वान्न । लक्ष्मणायश्चेतिगणसूत्रेण त्वंबोध्यं ॥

लक्ष्मणप्रसूः । स्त्री० सुमित्रायाम् ॥

लक्ष्मणा । स्त्री० सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम् । क्षुद्रश्वेतकिन्याम् । कटुवार्त्ताक्याम् । निःस्नेहफलायाम् । चन्द्रपुष्पायाम् ॥ ओषधीभेदे । पुत्रकन्दायाम् । पुत्रदायाम् । नागपत्रम् । अस्रबिन्दुच्छदायाम् । लक्ष्मणाकन्दइतिनाम । गौडदेशप्रसिद्धे ॥ गुणास्तुयथा । पुत्रकाकारस्त्राल्पबिन्दुभिर्लाञ्छितासदा । लक्ष्मणापुत्रजननी बस्तगन्धाकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवैः ॥ अदन्तत्वाट्टाप ॥ दुर्योधनकन्यायाम् । साम्बपत्न्यां ॥

लक्ष्म । न० चिह्ने ॥ प्रधाने ॥ लक्षयति । लक्ष्यतेवा । लक्ष० । मनिन् ।

लक्ष्मीः । स्त्री० विष्णुपत्न्याम् । पद्मालयायाम् ॥ पद्मायाम् । लोकमातरि । मायाम् ॥ सम्पत्तौ ॥ शोभायाम् ॥ ऋद्ध्योषधौ ॥ वृद्धिनामौषधे ॥ फलनीवृक्षे ॥ सीतायाम् ॥ वीरभार्यायाम् ॥ स्थलपद्मिन्याम् ॥ हरिद्रायाम् ॥ शम्याम् द्रव्ये ॥ मुक्तायाम् ॥ मोक्षप्राप्तौ ॥ लक्षयति० पश्यतीतिम् । लक्ष० । लक्षेर्मुट् चेति० ईप्रत्ययस्य मुट् ॥ लक्ष्यते० लक्ष्यतेवा दुर्गायाम् ॥

लक्ष्मी । स्त्री० लक्ष्म्यर्थेषु ॥ कृदिति ङीष् ॥ लक्ष्मीर्लक्ष्मीर्हरिप्रियामिति द्विरूपाभिधानम् ॥

लक्ष्मीकान्तः । पुं० नारायणे ॥

लक्ष्मीगृहम् । न० रक्तोत्पले ॥ लक्ष्म्यागृहमिवगृहम् ॥ लक्ष्म्यावेश्मनि ॥

लक्ष्मीजनार्दनः । पुं० शालग्रामविशेषे ॥ तल्लक्षणंयथा । एकद्वारेचतुश्चक्र नवीननीरदोपमम् । लक्ष्मी

जनार्द्दनश्चियरहित वनमालया ॥ इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
लक्ष्मीताल '। पुं॰ श्रीतालवृक्षे ॥ तीर्थविकाश्यपरिच्छेदविशेषे ॥
लक्ष्मीनारायण '। पुं॰ शालिग्राम विशेषे ॥ तल्लक्षण यथा । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनाराय णाभिधम् ॥
लक्ष्मीनृसिंह '। पुं॰ शालिग्रामवि शेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृ ताश्यञ्चवनमालासमन्वितम् । ल क्ष्मीनृसिंहं विज्ञेय गृहिणाञ्च सु खप्रदम् ॥
लक्ष्मीपति । पुं॰ वासुदेवे । नारा यणे ॥ लक्ष्म्याः पतिः नरपतौ ॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियु क्ते ॥
लक्ष्मीपुत्र :। पुं॰ कामदेवे तुरङ्ग मे ॥ लवे ॥ कुशे ॥
लक्ष्मीपुष्प :। पुं॰ पद्मरागमणौ ॥
लक्ष्मीफल :। पुं॰ विल्ववृक्षे ॥ ल क्ष्मीप्रद प्रियं वाफलमस्य । शाक पार्थिवादि '॥
लक्ष्मीवान् । पुं॰ पनसवृक्षे ॥ श्वे तरोहितवृक्षे ॥ त्रि॰ श्रीले । श्रीमति । श्रीसमन्विते ॥ लक्ष्मीर स्यास्ति । मतुप् । मादुपधायाश्च तिवत्व ॥

लक्ष्मीवेष्ट . । पुं॰ श्रीवेष्टे ॥
लक्ष्मीश '। पुं॰ श्रीशे । विष्णौ ॥
लक्ष्मीसमाह्वया । स्त्री॰ रामपत्न्या म् । सीतायाम् ॥ लक्ष्मीसमसमाह्व यीयस्याः ॥
लक्ष्मीसहज '। पुं॰ चन्द्रे ॥
लक्ष्म्याराम .। पुं॰ वनविशेषे ॥ लक्ष्म्याः आराम '॥
लक्ष्यम् न॰ शरवेध्ये । शरव्ये ॥ व्याजे । अपदेशे ॥ त्रि॰ अनुमेये ॥ लक्षणयाबोध्ये ॥ दर्शनीये ॥ लक्षणम्॰ लक्ष्यतेवा । लक्षणालो चने । ण्यत् ॥
लक्षीकृत :। त्रि॰ वेद्धुमिष्टे ॥
लगडम् । त्रि॰ चारुणि । बन्धुरे । मनोज्ञे ॥
लगित :। त्रि॰ सङ्गयुक्ते । लगाइ॰ भा॰ ॥ लगिसङ्गे । क्तः ॥
लगुड :। पुं॰ दण्डे । दण्डकाष्ठे । लाठी॰ इ॰ भा॰ ॥
लग्न :। पुं॰ स्तुतिपाठके । प्रातर्गेये ॥ न॰ मेषादिराशीनामुदये । त्रि शङ्कागात्मके ॥ त्रि॰ लज्जितेसक्ते ॥ लगतिफले । लगे॰ । क्षुब्धस्वा न्तेतिक्तस्य डभावोनिष्ठानत्वमपि निपात्यते ॥
लग्नक :। पुं॰ प्रतिभुवियोहिदायं वि नाऽन्यकृतऋणस्य परिशोधं कर्त्तु मात्मान स्वीकरोति॰ यथा । यद्य

यत्तृष्णापनयनं नकरिष्यति॰ तच्च ह करिष्यामीतितस्मिन। आमन॰ कृ॰ भा॰ ॥ लजतेस्म । ओलजी व्रीडने । गत्यर्थेतिक्त । स्वार्थे का. ॥

लघट्। पुं॰ पवने। वायौ ॥ लङ्घते। लघिगतौ। लङ्घ्नं लोपश्चेत्यटि'॥

लघटि:। पुं॰ वायौ ॥

लघिमा। पुं॰ शिवैश्वर्यप्रभेदे ॥ येनलघुर्भवति॰ यत 'सूर्यरश्मीनालम्ब्यादित्यलोकं याति ॥ लघुतायाम् ॥ लघोर्भाव.। इमनिच्॥

लघिष्ठ:। त्रि॰ अत्यल्पके॥ अयमेषामतिशयेनलघु:। अतिशायने॰ इष्ठन्॥ भंले॥

लघीयान्। त्रि॰ अतिशयेनलघौ। लघुतरे॥ यथालघीयानशब्दोपदेशोगरीयानपशब्दोपदेश इति॥ अयमनयोरतिशयेनलघु:। ईयसुन्॥

लघु:। पुं॰ एकमात्रवर्णे॥ यथा। गुरोर्विभिन्नोलघुरेकमात्रोह्रप्रादिपूर्वोपिलघुर्विकल्पात्। क्वचित्सविन्दु: क्वचिदर्धविन्दुरोकारयुक्तोपिलघु: क्वचित्स्यात्॥ उच्चार्यमाणास्त्वरितप्रयत्नात्द्विवाश्चवर्णा: क्वचिदेकभावम्। भजन्ति भाषासुयस अकुतेषुविनाशमित्यवद्धानयोज्यम्॥ स्त्री॰ पृक्कानामौषधौ॥ न॰ शीघ्रे॥ कृष्णागुरुणि॥ लामज्जके॥ सत्वगुणे॥ विशेषनचशादौ॥ यथा। पुष्याश्विन्यभिजिद्धस्तालघुक्षिप्र गुरुस्तथा। अत्रपण्यरतिज्ञानंभूषाशिल्पकलादिकम्॥ त्रि॰ अगुरौ॥ मनोज्ञे। निःसारे॥ ह्रस्वे॥ लङ्घते। लघि॰ल घिव स्योनलोपश्चेति कुनलोपश्च॥ लङ्घतेवा॥

लघुकाम। त्रि॰ अल्पयाचके॥

लघुकाय'। पुं॰ अल्पायुषि। छागे। वर्करे॥ त्रि॰ क्षुद्रशरीरे॥

लघुकाश्मर्य.। पुं॰ कट्फलवृक्षे॥

लघुक्रिय.। त्रि॰ क्षिप्रव्यापारे॥

लघुखट्विका। स्त्री॰ आसन्द्याम्। क्षुद्रखट्वायाम्॥

लघुगर्ग.। पुं॰ चिकटकामत्स्ये॥

लघुचर्भिटा। स्त्री॰ मृगेर्वारौ॥

लघुजङ्गल:। पुं॰ लावकपक्षिणि॥

लघुतम:। त्रि॰ लघिष्ठे॥ अतिशायनेतमप्॥

लघुदन्ती। स्त्री॰ क्षुद्रदन्तीवृक्षे॥

लघुदुन्दुभि:। पुं॰ ढगडवाद्ये॥

लघुद्राक्षा। स्त्री॰ काकलीद्राक्षायाम्। निर्बीजायाम्॥

लघुनाम। न॰ अगुरुणि॥

लघुपञ्चमूलम्। न॰ क्षुद्रपञ्चमूल

पाचने ॥ तद्यथा । शालपर्णीपृश्नि पर्णीवार्ताकीकण्टकारिका । गोक्षुर पञ्चभिश्चैते' कनिष्ठपञ्चमूलकम् ॥ श्रस्यगुणा: । पञ्चमूलं लघु स्वादुवल्यं पित्तानिलापहम् । नात्युष्णं ह ह्यं ग्राहिज्वरश्वासाश्मरी प्रणुत् ॥

लघुपञ्चमूली । स्त्री॰ लघुपञ्चमूले । शालपर्ण्यादौ ॥ पञ्चानांमूलानांसमाहार . पञ्चमूली । लघ्वी चासौपञ्चमूलीचेतिविग्रह ' ॥

लघुपत्त्रिका । स्त्री॰ रोचन्याम् ॥ गुडारोचन्याम् ॥

लघुपत्त्री । स्त्री॰ अश्वत्थीवृत्ते ॥

लघुपिच्छिल . । पुं॰ भूकर्बुदारके ।

लघुपुष्प: । पु॰ भूमिकदम्बे ॥

लघुवदर । पुं॰ क्षुद्रकोली । सूक्ष्मफले ॥

लघुवदरी । स्त्री॰ भूवदर्याम् ॥

लघुब्राह्मी । स्त्री॰ क्षुद्रब्राह्म्याम् । जलोद्भवायाम् । सूक्ष्मपत्त्रायाम् ॥

लघुमन्थ ' । पुं॰ क्षुद्राग्निमन्थे ॥

लघुमास । पुं॰ तित्तिरिपक्षिणि ॥

लघुमासी । स्त्री॰ गन्धमांस्याम् । भूतकेश्याम् ॥

लघुराजमृगाङ्क . । पुं॰ औषधिविशेषे ॥ यथा । घृततीक्ष्णायुत सुरसास्वरसोलघुराजमृगाङ्कइतिप्रथित: । अपहन्त्यनिलान्सबलान्बहु लाग्निजभक्तरिपून्निवहन्नधरइति लोलिम्बराज ॥ *

लघुलयम् । न॰ वीरणमूले । नलदे ॥ लङ्घतेरोगान्॰ लङ्घ्यतेवाभूम्ना त् । लघि॰ । लघिच्छोरिति कु · । लीयते । लीङ्श्लेषणे । अच् । लघुचतत्लयञ्च ॥

लघुसदाफला । स्त्री॰ क्षुद्रोदुम्बरे ॥

लघुहस्त ' । पु॰ शीघ्रवेधिनि ॥

लघुहंसक । पुं॰ श्वेतहंसे ॥

लघुहेमदुग्धा । स्त्री॰ लघूदुम्बरिकायाम् ॥

लघूदुम्बरिका । स्त्री॰ क्षुद्रोदुम्बरिकायाम् ॥ लघुसदाफलायाम् ॥

लघूच्चरम् । न॰ माचाकाले ॥ निमेषोन्मेषणेमाचाकालोलघ्वच्चरन्त्वितिपुराणम् ॥

लघ्वाशी । त्रि॰ परिमितमेध्याशिनि लघुपरिमितमेध्यञ्चाशितुंशीलं यस्य ॥ निद्रालस्यादिचित्तलयकारिरहिते ॥

लघ्वी । स्त्री॰ लाघवयुक्तायाम् ॥ स्यन्दनस्यप्रभेदे ॥ पृक्कायाम् ॥ दन्त्याम् ॥ लघुस्त्रियाम् ॥

लङ्का । स्त्री॰ दक्षिणभारतवर्षस्य निरक्षदेशेविद्यमानायारक्ष'पुर्याम् । अधुनाश्रेलन्॰इतिख्यातायाम् ॥ जम्बूद्वीपस्योपद्वीपविशेषे शाखायाम् ॥ शाकिन्याम् ॥

कुलटायाम् ॥ धान्यविशेषे । करालत्रिपुटायाम् ॥ लक्यतेसुख मस्याम् । लकआस्वादने । चुरादि । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । नुम्यनुपधत्वान्नवृद्धि. ॥ यद्वा । रमन्ते स्याम् । वा हुलकात्कोलत्वञ्च ॥

लङ्कादाही । पु० हनूमति ॥

लङ्काधिपतिः । लङ्कापतिः । पुं० रावणे ॥

लङ्कापिका । स्त्री० पृक्कायाम् । पिडिङ्शाक० इ० गौ० दे० भा० प्र० ॥

लङ्कामलय । पु० लङ्काद्वीपस्थमलयशैले ॥

लङ्कायिका । स्त्री० ) लङ्कारिका । स्त्री० लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं० वृक्षविशेषे । लङ्कास्थुस्याम् । लङ्कासिज० इ० गौ० दे० भा० प्र० ॥

लङ्केश. । पुं० रावणे ॥

लङ्कोपिका । स्त्री० पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप्बीजसन्ताने । क्वुन् । वचिस्वपीतिवच्चउ. ॥

लङ्कोयिका । स्त्री० पृक्कायाम् ॥ लङ्कायामूयते । ऊयीतन्तुसन्ताने । क्वुन् ॥

लङ्गः । पुं० लङ्गे ॥ खिङ्गी । लाङ्

इ० गौ० भा० प्र० विटे ॥

लङ्गूलम् । न० लाङ्गूले । पुच्छे ॥

लङ्घनम् । न० उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासशुद्धि पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेतिलङ्घनमितिचरकोक्तौ यथानिर्णीतत्वात् ॥ अनशने ॥ लङ्घनेनक्षय नीतेदोषेसन्धुक्षितेऽनले । विज्वरत्वलघुत्वञ्चक्षुच्चैवास्योपजायते ॥ इत्यत्रानशनरूपस्य लङ्घनस्यफलकथनात् ॥ त्रिरात्र पञ्चरात्र वादशरात्रमथापिवा । लङ्घनं सन्निपातेषु कुर्यादारोग्यदर्शनादितिचक्रपाणिदत्तः ॥ क्रमणे ॥ प्लवने ॥ अश्वतृतीयगतौ ॥ सु तन्तुलङ्घन पश्चिमृगगत्यनुकारकमितिहेमचन्द्रोक्ते ॥ क्रमणे । यथा । नचाग्निं लङ्घयेद्धीमान् नोपदध्यादध. क्वचित् । नचैन पादत. कुर्यान्मुखे ननधमेद्बुधः ॥

लजकारिका । स्त्री० लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । तिलगर्भायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री० मन्दाक्षे । त्रपायाम् सुशीलस्यभार्येयम् । पद्मशान्तिम ॥ कृतेऽकरणीयेपरज्ञानसशङ्कयादु . खे ॥ अकरणीयाप्रवृत्तिजनकोऽन्त : करणस्यवृत्तिविशेषे ॥ लज्जनम । ओलस्जीव्रीडने ।

गुरोश्चहलइत्य । भर्लाजम्भश्चि । टाप् । लज्जालौ ॥

लज्जालु । पु० स्त्री० वराहक्रान्तायाम् । नमस्कार्याम् । खदिरपत्रिकायाम् । सङ्कोचिन्याम् ॥ लज्जालु शीतलातिक्ताकषायाकफपित्तनुत् । रक्तपित्तमतीसारयोनिरोगान्विनाशयेत् ॥

लज्जाशील । त्रि० अपत्रपिष्णौ । लज्जिते ॥

लज्जितः । त्रि० लज्जायुक्ते । सलज्जे । ह्रीणे । ह्रीते ॥ लज्जासञ्जाताऽस्य । तारकादित्वादितच् ॥

लज्जिरी । स्त्री० लज्जालौ ॥

लज्या । स्त्री० लज्जायाम् ॥ इतिशब्दरत्नावली ॥

लञ्ज । पु० पदे ॥ कच्छे ॥ पुच्छे ॥

लञ्जिका । स्त्री० वेश्यायाम् ॥

लट । पु० प्रमादवचने । दोषे । लटति । लटबाल्ये । अच् ॥

लटक । पु० दुर्जने ॥ संज्ञायांकन् ॥

लटपर्णम् । न० त्वचे ॥

लट । पुं० दुर्ज्जने ॥

लट्वः । जातिविशेषे । नट० इ० भा० ॥ रागभेदे ॥ तुरङ्गमे ॥ इत्युणादिकोष ॥

लट्वा । स्त्री० करञ्जप्रभेदे ॥ फले ॥ चवर्यां ॥ पक्षिविशेषे ॥ कुसुम्भे ॥ लटति । लट० । अशूप्रुषिलटीति कन् । टाप् ॥

लडह । त्रि० मनोज्ञे ॥ इतित्रिकाण्डशेष ॥

लड्ड । त्रि० दुर्जने ॥ इतिशब्दरत्नावली ॥

लड्डुकः । पुं० मोदके । लड्डू० लाडू० इ० भा ॥ लड्डुकोदुर्ज्जरोगुरुरितिराजवल्लभ ॥ दधिशाल्यस्तथादुग्धकाञ्जिक्यामाषपर्पटा । शूरणार्द्रककूष्माण्डशालूकामिषमत्स्यजाः ॥ नालिकेरप्रियालश्चमज्जाकूष्माण्डकादय । एतेषांलड्डुकाः प्रोक्ता सम्भवन्त्यन्यतोपिच ॥

लण्ड्र । पु० लण्डन्इतिख्यातेइङ्ग्लपुरे ॥

लण्डुजः । पु० लेण्डुजे । इङ्गरेजे ॥

लता । स्त्री० प्रियङ्गौ ॥ शाखायाम् ॥ पृक्कायाम् । ज्योतिष्मत्याम् ॥ लताकस्तूरिकायाम् ॥ माधव्याम् ॥ दूर्वायाम् ॥ शाखिशाखायाम् ॥ अशनपर्ण्याम् ॥ कैवर्त्तिकायाम् ॥ सारिवायाम् ॥ वल्ल्याम् । व्रतती ॥ लतति । लतिः सौत्रोवेष्टनार्थः । लतयाघातेवा । पचाद्यच्टाप् ॥

लताकस्तूरिका । स्त्री० लताकस्तूर्याम् । दक्षिणदेशजायाम् । मुष्कदानाइतिख्यातायाम् ॥ लताकस्तूरिकातिक्तास्वादीवृष्याहिमालघुः ।

चक्षुष्याऽदृनीश्च प्रत्यक्षावस्त्याख्यिगहृत् ॥

लताजिह्व । पु॰ सर्पे ॥ लतेवजिह्वाऽस्य ॥

लतातरु पुं॰ तालवृक्षे ॥ नारङ्गवृक्ष ॥ शालवृक्षे ॥

लताद्रुम । पुं॰ लताशाले । अश्वकर्णाद्वये । तार्क्षे ॥

लतापनसः । पु॰ चलाले । चित्रफले । सुखाशे । नाटाम्रे । तरमुर्झ ति॰तरबूजक्र॰ चख्याते ॥

लतापूका । स्त्री॰ समुद्राम्लायाम् । पिण्डिशाक॰ क्र॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लताफलम् । न॰ पटोले । लतायाः फले ॥

लताभद्रा । स्त्री॰ भद्रालीवृक्षे ॥

लतामणिः । पु॰ विद्रुमे । प्रवाले ॥

लतामरुत् । स्त्री॰ पृक्कायाम् ॥

लतायष्टि . स्त्री॰ भण्डीर्याम् । मञ्जिष्ठायाम् ॥

लतायावकम् । न॰ प्रवाले ॥

लतारसन . । पुं॰ सर्पे ॥

लतार्क . । पुं॰ दुद्रुमे । हरितवर्णपलाण्डौ ॥ लतासुअर्कस्तेअर्च्यतेवाविवलक्षणत्वानिन्द्यते । चर्कस्तवने॰ अर्चपूजायांवाघञ् ॥

लतार्कक : । पुं॰ दुद्रुमे ॥ स्वार्थेकन् ॥

लतालक. । पुं॰ गजे । हस्तिनि ॥

लतावेष्ट । पु॰ देशविशेषे ॥ रतिबन्धप्रभेदे ॥ यथा ॥ बाहुभ्यांपादयुग्माभ्यावेष्टयित्वास्त्रियभवेत् । लघुलिङ्गताडनयोनौलतावेष्टोयमुच्यते ॥

लतावेष्टितकम । पुं॰ आलिङ्गनभेदे ॥

लताशङ्कः । पु॰ शालवृक्षे ॥

लताश्रम । पु॰ लतामण्डपे ॥ लताविशिष्ट आश्रम ॥

लतिका । स्त्री॰ लतायाम् । स्वार्थेकन् । प्रत्ययस्थादितीत्वम ॥

लत्ता । स्त्री॰ योगविशेषे ॥ यथा । प्राहुपूर्णेन्दुसिता . स्वपृष्ठे॰ भसम्रगोजातिशरे ७ । ६ । २२ । ५ मितङ्घि । सलत्तयन्तेऽर्कशनीज्यभौमा सूर्याष्टतर्काग्निजित १२८। ६३ पुरस्तात् ॥ अस्या ' फलंयथा । रविर्लत्ताविसहरीनिस्वकौजीविनिर्दिशेन्मरणम् । चान्द्रीनाशकुर्याद्भौमीनाशंवदन्त्येवरम् ॥ सौरीमरण करोतिबधुविनाशं ब्रहस्पतेर्लत्ता । मरण लत्ताराहोः कार्यविनाश भृगोर्वदन्ति ॥

लसिका । स्त्री॰ गोधायाम् । लतिसीत्र । क्वचिदिभिदिलतिभ्यः कित्दितितिकन् ॥ लत्तायाम् ॥

लपनम् । न॰ आनने । मुखे ॥ लप्यतेऽनेन । लपव्यक्तायांवाचि । करणेल्युट् ॥ भाषणे ॥

लपितम । न० वचने ॥ लप० । भा
वे क्त । त्रि० उक्ते । कथिते ॥ ल
प्यतेस्म । लप० । क्त ॥

लप्सिका । स्त्री० सर्पिःपयोभ्यां पक्व
खाद्यवस्तुनि । लपसी० लापसी
तिच० ख्यातायाम् ॥ सायथा ।
समितासर्पिषाभ्रष्टाशर्करापयसि-
क्षिपेत् । तस्मिन्घनीकृते न्यस्य लवङ्ग
मरिचादिकम् ॥ सिद्धैषालप्सिका
ख्यातागुणानस्यावदाम्यहम् ॥ ल-
प्सिकात्र वृष्यावल्यापित्तानि-
लापहा । स्निग्धा श्लेष्मकरीगुर्वीरो
चनीतर्पणीपरम् ॥

लब्ध । त्रि० प्राप्ते ॥ सातेभवतुसुप्री
तादेवीशिखरवासिनी । उग्रेणत
पसालब्धोययापशुपति पतिरिति
लभ्यतेस्म । डुलभष प्राप्तौ ॥ क्त ॥

लब्धप्रशमनम । न० न्यायलब्धधनस्य
सत्पात्रे प्रतिपादने ॥ राज्यमचिर
लब्धस्यशमनंपरिपन्थिनाम् । रक्षन
प्रतिकाराभ्यालब्धप्रशमनविदुः ॥

लब्धलक्ष । त्रि० आयुधविदि । ल
क्षादप्रच्युतशरे ॥ लब्धं लक्षं येन ॥

लब्धवर्णः । पु० विचक्षणे ॥ विदुषि
। पण्डिते ॥ लब्धोवर्णः स्तुति-
र्येन ।

लब्धव्यः । त्रि० प्राप्तव्ये । लभ्ये ॥

लब्धप्रवेशः । त्रि० प्राप्तप्रवेशे ॥

लब्धा । स्त्री० नायिकाभेदे ॥

लब्धि । स्त्री० प्राप्तौ ॥ डुलभष० ।
स्त्रियांक्तिन्नाबादिभ्य ॥

लभस । पु० धने ॥ याचके ॥ वाजि
बन्धनरज्ज्वां ॥ लभते । डुलभष० ।
अत्यविचमितमीत्यादिना० असच् ।

लभ्य । त्रि० युक्ते ॥ लब्धव्ये ॥ ल
भ्यते । डुलभष० । पोरदुपधादि
तियत् ॥ लाभे ॥

लमक । पु० ऋषिविशेषे ॥ रमते ।
रम० । रमेरश्चलो । वुन् ।

लम्पट । पुं० षिड्गे ॥ मूर्खे ॥ यथा
श्रीभागवते । यथैहिकामुष्मिककाम
लम्पटः सुतेषु दारेषु धनेषु चिन्तय
न् । शङ्कते विद्वान्कुकलेवरात्यया
त्० यस्तस्य यत्नः श्रमएवकेवलमिति ॥
ऐहिकामुष्मिककामेषु० लम्पटोमू
र्खः सुतादिषु योगक्षेमं चिन्तयन्०
कुत्सितस्य कलेवरस्य० अत्ययात्
मृत्योः शङ्कते । तथाविद्वानपि
सन्नथ शङ्कते० तस्य यत्नः श्रमएवे
त्यर्थः ॥ लोलुपे ॥

लम्पाकः । पु० लम्पटे ॥ देशविशेषे ॥

लम्पापटह । पुं० वाद्यप्रभेदे । पटहे ॥

लफ । पु० प्लुतगतौ । लाफ० इ० भा० ॥

लम्ब । पु० नर्त्तके ॥ अङ्गे । कान्ते
उत्कोचे ॥ अंशभेदे ॥ क्षेत्रादौ
लम्बमानरेखासूत्रे ॥ त्रि० दीर्घे
॥ लम्बते । लबिअवस्रंसने । अच् ॥

लम्बकर्णः । पुं० अङ्कोटपादपे ॥

कृगन्ने । राक्षसी ।। हस्तिनि ।। श्ये नपक्षिणि ।। दीर्घश्रोत्रे ।। त्रि० दीर्घश्रोत्रवति ॥

लम्बकर्णी । स्त्री० गोविशेषे ॥

लम्बकेश । पुं० विष्टरे ॥ सतुविवाह कालेवरोपवेशनार्थसार्द्धद्वितयवा-मावर्त्तवलिताधोमुखाऽसङ्ख्याताद् र्भाः । यथा । ऊर्द्धकेशोभवेद्ब्रह्मा लम्बकेशस्तुविष्टर । दक्षिणावर्त्त कोब्रह्मावामावर्त्तस्तुविष्टर' ॥ केशो ऽस्यास्ति । त्रि०दीर्घकेशयुक्ते ॥

लम्बदन्ता । स्त्री० सैंहलीपिप्पल्या म । त्रि० बृहद्दशनविशिष्टे ॥

लम्बन: । पुं० कफे ॥ लम्बते । लवि० । नन्द्यादित्वाल्ल्यु' ॥ न० नाभिलम्बितकण्ठिकादौ । लअ न्लकायाम् ॥

लम्बमान: । त्रि० लम्बायमानेवस्तु नि ॥

लम्बबीजा । स्त्री० सैंहल्यांपिप्पल्या म् ॥

लम्बा । स्त्री० पद्मालयायाम् ॥ गौ र्याम् ॥ तिक्ततुम्ब्याम् ॥ दक्षदुहि तृविशेषे ॥ हिमालयकन्याविशे षे ॥

लम्बिका । स्त्री० घण्टिकायाम् । उपजिह्वायाम् । तालूर्द्ध सूक्ष्मजिह्वा याम् ॥

लम्बित: । त्रि० लम्बमानेमाल्यादौ ॥ शब्दिते ॥ स्रसिते ॥ लम्बते । लवि० । क्त' । इट् ॥

लम्बोदर: । पुं० श्रीगणेशे । गजान ने ॥ उदाने ॥ त्रि० भाद्रूने । औदरिके ॥ लम्बमुदरंयस्यस: ॥

लम्बोष्ठ । पुं० )
लम्बौष्ठ । पुं० )उष्ट्रे त्रि० लम्बितौ ष्ठे ॥ लम्बावोष्ठौयस्यस' । ओत्वो ष्ठयो समासे वा ॥

लम्भनम् । न० प्राप्तलम्भे । लाभे ॥ ध्वनौ ॥

लम्भनीय । त्रि० प्रापणीये ॥

लम्भा । स्त्री० वाटशृङ्खलायाम् ॥

लम्भित । त्रि० प्रयुक्ते ॥ प्रापिते याचिते ॥ लभेर्ण्यन्तात्कर्म्मणि क्त' । रभेरशब्लिटोरितिनुमाग म' ॥

लम्भुक । त्रि० लम्भनशीले । लब्ध रि ॥

लय' । पुं० विनाशे ॥ संश्लेषे ॥ तौर्यत्रिकसाम्ये । गीतवा द्यपादादिन्यासानांक्रियाकालयो: साम्ये ॥ लयनम् । लीङ्श्लेषणे । एरच् ॥ लीयन्तेक्षिप्य तेयनेन वा ॥ प्रलये ॥ मोक्षे ॥ लीयतेस्या महृयमस्मिन्निति० सुषुप्तौ ॥ अख ण्डवस्त्वनवलम्बनेनचित्तवृत्ते र्नि द्रायाम् ॥ न० उशीरे । लीयते ॥ लीङ् । पचाद्यच्

लयनम् । न० गृहे । वेश्मनि ॥ लीयतेऽस्मिन् । लीङो ल्युट् ॥

लयपुत्री । स्त्री० नर्त्तक्याम

लयारम्भ । } पुं०सर्ववेशिनिनटे ॥
लयालम्ब । }

लल । पु० विलासि ॥ लडति । लडविलासि । ललतेवा । ललईप्सायाम । पचाद्यच् । पूर्ववडलयोरैक्यम् ॥ ईप्सायाम ॥

ललज्जिह्व । पु० क्रमेलके । उष्ट्रे ॥ शुनि ॥ त्रि० हिंस्रे ॥

ललत् । त्रि० विलासयुक्ते ॥ उन्मन्यनविशिष्टे ॥ जिह्वाक्रियाविशिष्टे ॥ सच्चेपे ॥ ललते । कर्त्तरिशट ॥ ईप्साविशिष्टे ॥ उपसेवायुक्ते ॥ भाषणविशिष्टे ॥

ललदम्बु । पु० लिम्पाके ॥

ललन । पुं० वाले ॥ साले ॥ प्रियासे ॥ न० केलौ ॥ चालने ॥ अतिविस्तारवदनाजिह्वाललनभीषणा ॥

ललना । स्त्री० विशेषाङ्गनायाम् । कामिन्याम् । नारीभेदे ॥ जिह्वायाम् ॥ ललते । लल० चुरादीनां वाणिजितिपक्षे ०ल्युयुंज्वा ॥ लडति । लडविलासे । बहुलमन्यत्रापीतियुच् । डलयोरैक्यम् । टाप् ॥

ललनाप्रिय । पुं० कदम्बे । कामिनीवल्लभे ॥ न० ह्रीवेरे ॥

ललन्तिका । स्त्री० लम्बने । आनाभिलंबिकण्ठिकायाम् ॥ किञ्चिदवलम्बमानकण्ठभूषणे ॥ लडति । लड० । लट शतृ । उगितश्चेति ङीप् । डलयोरेकत्वम् । ललन्तीव । स्वार्थेकन् ॥ गोधायाम् ॥

ललाक: । पुं० मेहने ॥

ललाटम् । न० अलिके । गोधौ ॥ भाले ॥ ललंभ्रुवोरुपरिस्थाने । विलासमीप्साबा०अटति० । अटगतौ । कर्मण्यण ॥ लडतिललतेवा । लडललधातुभ्यांबाहुलकादाटच् ॥ अस्य शुभाशुभलक्षणमुक्तं गारुडे यथा । उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा । निर्द्धनाधनवन्तश्चार्द्धेन्दुसदृशैर्नराः ॥ आचार्य्याः शुक्तिविशालैः शिरालैः पापकारिणः । उन्नताभिःशिराभिस्तु स्वस्तिकाभिश्चैश्वराः ॥ निम्नैर्ललाटैर्बधार्हाः क्रूरकर्मरतास्तथा । संवृत्तैश्च ललाटैश्च कृपणाउन्नतैर्नृपा. ललाटोपसृतास्तिस्रोरेखास्युः शतवर्षिणाम् । नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलाः । केशान्तोपगताभिश्चअशीत्यायुर्नरोभवेत् ॥ पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्वहुभिस्तथा । चत्वारिंशश्चवक्राभिस्त्रिंशद्भ्रूलग्न

गामिभि ॥ वि शतिर्वामवक्राभि रायु च्चुद्राभिरल्पकम् । नपृथू बालेन्दुनिर्भभ्रुवौचायललाटकम् ॥ शुभमर्द्धेन्दुस स्थानमतुङ्ग स्याद् सीमशम् । इति ६५ अध्याय ॥

ललाटकम् । न० प्रशस्तललाटे ॥ ललाटमात्रे ॥

ललाटन्तप । पुं० सूर्ये ॥ ललाट तपति । तपसन्तापे । असूर्य्यलला टयोरितिखश् । मुम् ॥

ललाटिका । स्त्री० स्वर्णादिकृतभाल भूषणे । पत्रपाश्यायाम् । पानेपा टी० विन्दीवेना० टीकाटीकी०इ तिख्याते ॥ ललाटस्यालङ्कार । ललटेभवोऽलङ्कारोवा । कर्णल लाटात्कनलङ्कारे ।

ललामम् । न० पु० लाञ्छने । ध्वजे ॥ शृङ्गे ॥ प्रधाने ॥ भूषाया म् ॥ रम्ये ॥ वालधौ ॥ पुण्ड्रे । अश्वादीनाभालेऽन्यवर्णचिह्ने ॥ तुरङ्गे ॥ प्रभावे । अश्वस्यभूषाया म् ॥ लडनम् । लडवाल्ये० ल डविलासेवा । सम्पदादित्वाक्किप् । डलयोरेकता । ललममतिअमग त्यादौ । कर्मण्यण् ॥

ललामकम् । न० पुरोभागेन्यस्ते ललाटपर्य्यन्तमागतेशिखालविमा- ल्ये ॥ ललाममिव । इवार्थेकन् ॥ मुण्डमालायाम् ॥

ललाम । न० अश्वे ॥ चिह्ने ॥ शृ- ङ्गे ॥ पताकायाम् ॥ रम्ये ॥ प्रधा ने ॥ भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे ॥ प्रभावे लडनम्० लल् । लल माअमति । अम० । वाहुलकात् कनिन् ॥

ललामी । स्त्री० उत्चिप्तिकायाम् । कर्णाभरणविशेषे ॥

ललित । पु० प्रातर्गेयेरागविशेषे ॥ यथा । प्रातर्गेयास्तुदेशागीललि त . पठमञ्जरी । विभाषाभैरवीचै वकामोदीगीगुडकीर्यपि ॥ अस्यस्व रूपयथा । प्रफुल्लसप्तच्छदमाल्यधा रीयुवातिगौरोऽलसलोचनश्री । विनि सरन्वासगृहात्प्रभातेवि लासिवेशोललित प्रदिष्ट ॥ न० स्त्रीणाम्शृङ्गारभावजक्रियाविशेषरू- पेहावविशेषे ॥ सुकुमारविधानेनभ्रू नेत्रादिक्रियासचिवकरचरणाङ्गवि न्यासोललितम् । तथाच । सुकु माराङ्गविन्यासिमसृणाललितभवेत् । यथा । सभ्रूभङ्ग करकिशलयाव- र्त्तनैरापतन्तीसाक्षिप्यन्तीललित- ललितालोचनस्याञ्जनेन । विन्य स्यन्तीचरणकमलेलीलयास्वैरयाति- निःशङ्काचप्रथमवयसानर्त्तिताप ङ्कजाची ॥ भ्रूनेत्रादिक्रियाशालि सुकुमारविधानत .। हस्तपादाङ्ग विन्यासस्तथाललितंविदुरित्यन्ये

पि ॥ अनाचार्य्योपदिष्ट स्याल्ललित रतिचेष्टितमित्यन्ये । अपिच । विन्यासभङ्गिरङ्गानाम्भ्रूविलासमनोहरा । सुकुमाराभवेद्यत्तल्ललितं तदुदीरितम् ॥ विषमवृत्तप्रभेदे । यथा । नयुगसकारयुगलञ्चभवतिथ द्विचेत् तृतीयके । तदुदितमुरुम तिभिर्ललितयद्विशेषमस्यसकलय योज्झता । यथा । व्रजसुन्दरीसमुदयेनमुदितमनसास्मपीयते । हिमकरगलितमिवामृतकललितमुरारिमुखचन्द्रविच्युतम् ॥ त्रि० ईप्सिते ॥ कोमले ॥ ललिते । मधुरे ॥ लडेर्ललेर्वाभावेक्त । डलयोरभेदः ॥ सुन्दरे ॥

ललितकान्ता । स्त्री० मङ्गलचण्डिकायाम् ॥

ललिता । स्त्री० देवीविशेषे ॥ गोपीविशेषे ॥ नदीविशेषे ॥ सागराच्छिवात्पूर्वंमहादेवावतारिता । वैशाखशुक्लपञ्चम्यांतृतीयायांनरस्तु य । कुर्य्यादि ललितास्नानसशम्भुसदनंव्रजेत् ॥ कस्तूर्याम् ॥ लप्सिकाभेदे ॥ मेघरागस्यरागिण्याम् ॥

ललितासप्तमी । स्त्री० भाद्रशुक्लसप्तम्याम् ॥

ललितिका । स्त्री० शान्तनुतीर्थे ॥

लल्ल : । पुं० आचार्यविशेषे । वराहमिहिरसुते ॥

लव : । पुं० लेशे ॥ विनाशे ॥ छेदने कालभेदे । अष्टादशनिमेषास्तुकाष्ठाद्वयंलवइतिहेमचन्द्रोक्ते ॥ पक्षिविशेषे । लवा० हि० भा० प्र० गोपुच्छलोमसु ॥ रामनन्दने ॥ लवो न्मृष्टोलव : । वाल्मीकिना० लवैर्गोपुच्छलोमभिरुन्मृष्टोगर्भक्लेदो यस्य ॥ नाशे ॥ लवनम्० लूयतेवा । लूञ् छेदने । ऋदोरप् ॥ विलासे । इतिविनाशस्थानेपाठो विश्वहेमचन्द्रयो ' सम्मत : ॥ न० लामज्जके ॥ जातीफले ॥ लवङ्गे ।

लवङ्गम् । न० देवकुसुमे । श्रीसञ्ज्ञे । श्रीपुष्पे । वारिसम्भवे । भृङ्गारे । लौंग० हि० भा० प्र० ॥ गुणास्तु । लवङ्गं कटुकंतिक्तं लघुनेत्रहितंमतम् । दीपनंपाचनंरुच्यं कफपित्तास्रनाशकृत् ॥ तृष्णाञ्छर्दिं तथाध्मानंशूलमाशुविनाशयेत् । कासं श्वासञ्चहिक्काञ्चक्षयञ्चक्षपयति ध्रुवम् ॥ लुनाति० लूयतेवा । लू- ञ० । तरट्यादिभ्यश्चेत्यङ्गच् ॥

लवङ्गकम् । न० }<br>लवङ्गकलिका । स्त्री० } लवङ्गे

लवङ्गलता । स्त्री० पुष्पविशेषे । गन्धराजइतिकश्चित् ॥

लवण । पुं० समुद्रविशेषे ॥ राक्षसभेदे । लवणासुरे ॥ रसविशेषे । पटौ ॥ पृथ्व्यग्निगुणबाहुल्याल्लव

लवणाब्धि । पुं॰ लवणोदे । क्षारा ब्धौ ॥
लवणाब्धिजम् । न॰ सामुद्रलवणे ॥
लवणाम्भाः । पुं॰ लवणाब्धौ ॥ लवणं क्षारमम्भोयस्य ॥
लवणारजम् । न॰ लोणारक्षारे ॥
लवणाष्टकम् । न॰ सैन्धवादिषु ॥ तेयथा । लवणाष्टकमेतच्चसैन्धवञ्चसु वर्चलम् । विड समुद्रसञ्जातमुद्भि द रोमक गडम ॥
लवणोत्तमम् । न॰ सैन्धवे ॥
लवणोत्थम् । न॰ लोणारक्षारे ॥
लवणोद । पुं॰ लवणार्णवे ॥ लव णमुदकंयस्य । उत्तरपदस्यचेत्युद कस्योदादेश ॥
लवनम् । न॰ छेदने । अभिलावे । लूयनादृति भाषाप्रसिद्धे ॥ लूञ्॰ ल्युट् ॥
लवनी । स्त्री॰ फलवृक्षविशेषे । श्री फलायाम् । अयिमायाम । लोना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
लवपति । पु॰ नवांशिशे ॥
लवली । स्त्री॰ सुगन्धमूलायाम् । कोमलवल्कलायाम् । नोयाडि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे ॥ अस्याफलगुणायथा । लवलीफल मस्राशं कफपित्तहरंगुरु । विश द रोचन रूक्ष स्वादम्ल तुवर रसे ॥
लवाक : । पुं॰ छेदनद्रव्ये ॥

लवाणक : । पुं॰ दात्रादौ ॥ लूयतेऽनेन । लूञ्॰ । आयकोलूधूञ्छि क्षिधाञ्भ्यहत्वात्यक . ॥
लवि । त्रि॰ छिदुरे ॥
लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन । अर्त्तिलूधूसूखनेत्यादिना॰ इत्र . ॥
लशुन । पुं॰ न॰ रसोने ॥ अस्यप र्यायाद्योयथा । रसोनोलशुनोरि ष्टोम्लेच्छकन्दोमहौषधम् । महाक न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक : ॥ गन्धाकृतिरसैस्तुल्योगृञ्जनस्तुप लाण्डुना । दीर्घनालाग्रपत्रत्वाद् भिद्यतेसौपलाण्डुत . ॥ अश्नाति ॰ अश्नुतेवा । अशभोजने॰ अशू व्याप्तौवा । अशेर्लश्चेत्युनन् ॥
लष्व . । पु॰ नर्तके ॥ लष्यते । लष कान्तौ । सर्वनिघृष्वे तिसाधु : ॥
लसत् । त्रि॰ उल्लसति ॥ प्रकाशमा ने ॥
लसमान । त्रि॰ दीप्यमाने ॥
लसा । स्त्री॰ हरिद्रायाम् ॥
लसिका । स्त्री॰ लालायाम् ॥
लसितम् । न॰ चेष्टिते ॥
लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मास मध्यगेरसे ॥
लस्त । त्रि॰ श्लिष्टे ॥ क्रीडिते ॥ शि ल्पयुक्ते ॥ लष्यतेस्म । लसश्लेष णक्रीडनयो : । क्त ॥
लस्तक : । पुं॰ धनुर्मध्यभागे ॥

। सीरे । हले ॥ हलयाह्वे । तालौ ॥ गृहदारुविशेषे ॥ लिङ्गे ॥ लङ्ग ति । लगिगतौ । बाहुलकात्कल च्॰ दीर्घश्च ॥

लाङ्गलग्रह: । पु॰ कृषके ॥

लाङ्गलचक्रम् । न॰ कृषिकर्मणिह लाकारेचक्रविशेषे ॥

लाङ्गलदण्ड पु॰ ईषायाम् । हल युगयोर्मध्यकाष्ठ ॥ लाङ्गलस्य दण्ड ।

लाङ्गलपद्धति । स्त्री॰ सीतायाम् । हल रेखायाम् ॥ लाङ्गलस्य पद्धति ॥

लाङ्गलिक पु॰ स्थावरविषभेदे ॥

लाङ्गलिका । स्त्री॰ लाङ्गलीवृक्षे ॥

लाङ्गलिकी । स्त्री॰ अग्निशिखौष धौ ॥ लाङ्गलपुष्पविशेषोऽस्य स्या । अतइनिठनाविति ठन् । आतेरितिगौरादित्वाङ्ङीष् ॥

लाङ्गली । पु॰ बलदेवे ॥ हलिनि ॥ नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्य स्य । इनि: ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पज लशाकविशेषे । शारदायाम् । तोय पिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोऽस्त्यस्या । अच् । गौरादि॰ ।

लाङ्गुलम् । न॰ पुच्छे ॥

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ॥

लाङ्गूलम् । न॰ पुच्छे । लूमे । बालहस्ते । बालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्यऊरोल चावित्यूलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने ॥ कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पु॰ वानरे ॥ ऋषभना मौषधौ ॥

लाज: । पु॰ आर्द्रतण्डुले ॥

लाजा । पु॰ भूम्नि अक्षते । भृष्टधान्ये । एतेचव्रीहयोभृष्टालेजाजाइतिसंज्ञि ता ।। यवादयश्चयेभृष्टास्तेधाना परिकीर्त्तिता '॥ लाजास्स्युर्मधु रास्तर्पा' पित्तनाशना । गोधूमयावनाले त्या कि चिदुष्णा स्त्रोपना ' ॥ तृणातीसारप्रमनेः- धातुसाम्यकर परं मन्दाग्निवि षमाग्नीनाबालस्यविरयोपिताम ॥ देयश्चसुकुमारायालाजमण्ड सुस स्कृत ॥ अपिच । येषांस्युस्तण्ड लास्तानिधान्यानिसतुषाणिच । भ्र ष्टानिस्फुटितान्याहुर्लाजाइतिम- नीषिण: लाजा: स्युर्मधुरा शी तालघवोदीपनाश्चते । स्वल्पमूत्रमला रूक्षाबल्या: पित्तकफच्छिद ॥ छ र्द्यतीसारदाहास्रमेहमेदस्तृषापहा ॥ न॰ उशीरे ॥ लज्यते । लज भर्जने ॥ घञ् ॥

लाजा । स्त्री॰ अक्षते ॥

लाञ्छन: । पुं॰ रागीधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छयती । लाञ्छितलक्षणे ल्युट् ॥

लाट । पुं॰ देशविशेषे ॥ यथा । अवन्तीत पश्चिमेतुवैदर्भी इत्तिणोत्तरे । लाटदेश समाख्या तस्तत्रैश्रीशक्तिसङ्गमे ॥ जणुकै । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रास । पुं॰ शब्दालङ्कारेशुब्दत्तिप्रभेदे ॥ यथा शाब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रत ॥ शब्दगतोनुप्रास । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च॰लाटानुप्रास ॥ एषपदानुप्रासङ्गृत्यन्ये । पदानांस । सवृत्ति लाटानुप्रास . उदाहरणम् । यस्य नसन्निधे दयिताद्वदहनस्तुहिनदीधितिस्तस्य । यस्यचसन्निधेदयिताद्वदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अपिशब्देनसवृत्तिसमुच्चीयते । उदाहरणम् । वदनवरवर्णिन्यास्तस्या . सत्यसुधाकर : । सुधाकर: क्वनुपुन: कलङ्कविकलोभवेत् ॥

लाप . । पुं॰ कथने ॥ लपनम् । लप॰ । घञ् ॥

लाभ : । पुं॰ मूलधनादधिकार्जिते । विक्रेत्रापटादीनांमूल्यादधिकया प्राप्ते द्रव्ये । फले । इष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्तौ ॥ लभ्नादेकादशेस्थाने ॥ लभ्यते । डुलभष्प्राप्तौ । अकर्तरीतिघञ् । सज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभे सम्भवत्यधमंकामयमानोमूर्ख: ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छवित्वणविशेष ॥ लामज्जकं हिमंतिक्तं लघुदोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम् । न॰ अत्यन्तस्नेहकरणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणा । तस्मात्पुत्रञ्चशिष्यञ्चताडयेन्नतुलालयेत् ॥ चतुर्वर्षावधिसुतान्लालयेत्पालयेत्पिता । ततः षोडशायन्ततुगुणानविद्याश्च शिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहप्रदर्शयेत् ॥

लालस । पुं॰ लालसायामर्थेषु ॥ त्रि॰ उत्सुके ॥ भृशलसनमित्यर्थेयङन्तादच . ॥

लालसा । स्त्री॰ औत्सुक्ये ॥ तृष्णातिरेके ॥ महाभिलाषे ॥ याञ्चायाम । लोले ॥ दोहदे ॥ लम्पटायाम् । औत्सुक्यादिकोमलस ॥ यथा । लसकान्तौ । भृशलसन

मित्यर्थे यङन्तात् । टाप् ॥ यद्वा । ललसनम् । लसदीप्तौ । यगन्त. । अप्रत्ययात् । टाप् ॥

लालसीकम् । न० पिच्छिले ॥ विजिले ॥

लाला । स्त्री० सृणिकायाम् । स्यन्दिन्याम् । मुखस्रावे । लाल० दू० भा० ॥ लालयते । लल० । चुरादिः । पचाद्यच् ॥

लालाटिक. । पुं० आज्ञेयवशिष्ये ॥ मौहूर्त्तिकानायोगविशेषे ॥ यथा । लग्ने १ के व्ययलाभयोः १२ । ११ भृगुसुतेकर्मस्थिते १० भूमिजे० राहौधर्मविनाशयोः ६ । ८ रविसुते । द्यूने ७ ऽ रिसून्वो ६ । ५ विधौ । बन्धौ ४ ज्ञे० सहजार्थयो ३ । २ सुरगुरावेव ललाटोद्भवेयोगेनाशमुपैतिमानवपतिः पूर्वादिकाष्ठागत ॥ याचालग्ने सूर्ये स्थितेसतिपूर्वस्यालालाटिकोयोगः स्यात् । एव द्वादशेकादशस्थानस्थितेशुक्रे० आग्नेय्याम् । दशमस्थिते कुजे दक्षिणस्याम् । नवमाष्टमस्थानस्थे राहौनैर्ऋत्याम् । सप्तमस्थे शनौपश्चिमायाम् । षष्ठपञ्चमस्थानस्थितेविधौवायव्याम् । चतुर्थस्थानस्थितेबुधे उत्तरस्याम् । तृतीयद्वितीयस्थानस्थितेगुरावैशान्यांलालाटिकोयोग । इति । एव ललाटोद्भवेयोगेपूर्वादिदिशाङ्गतोनृपोनाशमुपैतीत्यर्थः ॥ प्रकारान्तरञ्च यथा । दिनेशाधिष्ठितोराशिर्यदा लग्नगतस्तदा । यातुर्मृत्युप्रदः प्राच्यादिशिसूर्योललाटग ॥ सूर्यस्यराशितस्तस्माद्द्वादशेलग्नगेगृहे । एकादशेवाआग्नेय्याटिशिशुक्रो ललाटगः ॥ ललाटग कुजोयाम्येदशमेलग्नगेगृहे ॥ लग्नगेनवमे राशावष्टमेवापिमैर्ऋते । ललाटगः सैंहिकेयोयातुर्द्राङ्निधनप्रदः ॥ लग्नगेसप्तमेराशौशनि . प्रत्यग्ललाटग । षष्ठराशौलग्नगतेपञ्चमे वापिचन्द्रमाः । ललाटगोवायुदिशियातुर्मृत्युप्रदस्तदा ॥ चतुर्थराशौलग्नस्थेबुध . सौम्येललाटग. राशौतृतीयेलग्नस्थेद्वितीयेचेन्द्रपूजित । ललाटगश्चन्द्रमौलेर्दिशियातुर्विनाशदः ॥ लालाटिनिदिगधीशैर्दिग्बलिविह्गैललाटगैवापि । प्रतिभगुणेप्रतिशशिजेकालाशुहोवसन्त्यजेयाचाम् ॥ स्पष्टमाह मार्त्तण्डे । लग्नेऽर्केन्दु अशुक्रासौरिगुरव । प्राप्तिव्ययेविद्भृगूखे शुक्रार्क्कुजेन्दुजा अस्तपो मृत्यो : सितज्ञासुरा । द्यूनेशुक्रकुजार्कजारिपुसुतेचन्द्रज्ञशुक्रा । सुखे चैतेखविकयो । सितज्ञगुरव प्राच्यादिलालाटिम : ॥ चि० प्रभे।भा

तद्दर्शिनि सेवके। प्रभुभावनिदर्शिनि ॥ ललाटकोपप्रसादचिह्नं ललाटमेवावपश्यति। संज्ञायाललाटकुक्कुट्यौपश्यतीतिठक् ॥ कार्यक्षमे सेवके ॥ दूरेस्थित्वाप्रभोर्ललाट पश्यतिनतुकार्येषूपतिष्ठत इत्यर्थः ॥ त्रि॰ ललाटसम्बन्धिनि ॥

लालाभक्ष:। पुं॰ नरकविशेषे ॥

लालामिक.। त्रि॰ ललामग्राहिणि ॥ ललामंगृह्णाति। प्रतिकण्ठार्थललाम्बे तिठक् ॥

लालामेह। पुं॰ प्रमेहविशेषे ॥ यथा। लालातन्तुयुत मूत्र लालामेहेनपिच्छिलम्। प्रमेहतीतिशेष'श्चौषधन्तु। गुडूच्याः स्वरस' पिबेन्मधुनासवं मेहजित्। हरिद्राचूर्णयुक्तोवारसोधात्र्याः समाहितः ॥

लालाविष:। पुं॰ लूतादौ ॥

लालास्राव:। पुं॰ ऊर्णनाभे ॥

लालिक.। पुं॰ महिषे ॥

लालित' त्रि॰ पालिते ॥ उपस्कृते ॥

लालित्यम्। न॰ ललितस्यभावे ॥ ष्यञ् ॥

लाव.। पुं॰ पक्षिविशेषे। लवा॰ इ॰ भा॰ प्र॰ ॥ अस्यप्रभेदामांसगुणाश्चयथा। लावाविष्किरवर्गेषुक्ते चतुर्विधताबुधैः। पांशुलोगौरकोन्योस्तिपौण्ड्रकोदर्भकस्तथा ॥ लवावह्निकरा. स्निग्धाज्वरघ्नात्रिदोषहिमा। पांशुल. श्लेष्मलस्तेषुवीर्योष्णोनिलनाशन: ॥ गौरोलघुतरोरूक्षोवह्निकारीत्रिदोषजित्। पौण्ड्रक पित्तकृत्किञ्चिल्लघुर्वातकफापह ॥ दर्भकोरक्तपित्तघ्नोहृदामयहरोहिम. पौण्ड्रक किञ्चिद्रक्त: ॥ लावयति। लूञ्॰। स्वार्थेण्यन्त:। अच्। छेदे ॥

लावक.। पुं॰ लावपक्षिणि। लघुजङ्गले ॥

लावणम्। न॰ लवणे ॥ नस्ये ॥ इतिरत्नमाला ॥ त्रि॰ लवणेनसंस्कृते ॥ इतिहेमचन्द्र: ॥ लवणसम्बन्धिनि ॥

लावणिक.। पु॰ लवणवणिजि ॥ लवणपण्यमस्य। लवणाट्ठञ् ॥ त्रि॰ लावण्यवति ॥ लावण्यंकान्तिविशेषोस्यास्ति। अतइनिठनाविति ठन्। ठस्येक'। यस्येतिचेत्यल्लोपेहलस्तद्धितस्येतियलोप' ॥ लवणेनसंस्कृते ॥

लावण्यम्। न॰ कान्तिविशेषे ॥ तस्यलक्षणंयथा। मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा। प्रतिभातियदङ्गेषुलावण्यंतन्निगद्यते ॥ लवणात्विट्विदातेयस्यतल्लवणम्

। अर्श आदिभ्योऽच् । लवणस्य भाव । दृढादित्वात्ष्यञ् ॥ यद्वा । लवणाल्लिट्० स एव । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाले श्वशुराभ्यां दत्ते धने ॥ यथा । प्रीत्यादत्तञ्च यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं यत् तत्लावण्यार्जितमुच्यते ॥ लावण्येन शीलेन पुण्यादि० तथा पादप्रणतायै शीलादिमत्यै वास्त्रियै श्वशुरादिना दत्तं तृतीय स्त्रीधनमित्यर्थः ॥

लावा । स्त्री० लावपक्षिणि ॥

लावुः । ) स्त्री०
लावुकम् । ) न० तुम्ब्याम् ॥

लावुका । स्त्री० तुम्बिकाभेदे ॥

लावुकी० सूक्ष्मवीणायाम् ॥ इ० शा० ली० ॥

लाबू । स्त्री० तुम्ब्याम् ॥

लाषुकः । त्रि० लषनशीले ॥ लष्यति० लषतिवा तच्छील । लषकान्तौ ॥ लषपतपदेत्युकञ् ॥

लास । पुं० नृत्यभावे ॥ स्त्रीणां नृत्ये ॥ यूषे ॥ लसनम् । लसश्लेषणक्रीडनयोः । घञ् ॥

लासकः । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ वेष्टके ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । ताललयाश्रये ॥ पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ अपिच । छुरितं यौवनञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयाद्यैर्भावैः रसैराश्लेषचुम्बनैः ॥ नायिकानायकौ रङ्गे नृत्यतश्छुरितं हितम् । मधुरबद्धलीलाभिर्नटीभिर्यन्नृत्यते ॥ वशीकरणविद्याभं तल्लास्यं यौवतं मतमिति ॥ लस० । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम् ॥

लिकुचः । पुं० लकुचे । डहौ । वडहलइ० भा० प्र० ॥ लक्यते । लक आस्वादने । बाहुलकादुचप्रत्ययः । पृषोदरादिः ॥ न० चुक्रे ॥

लिक्का । स्त्री० लिक्षायाम् ॥

लिक्षा । स्त्री० यूकाण्डे । लिक्षिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वादस्य त्वम् ॥ परि

मानविशेषे । कर्षचतुष्टये ॥ यथा । त्रसरेणवोऽष्टौविज्ञेयालिक्षैका परिमाणत । इतिमनु ॥ अपिच । जालान्तरगतेभानौयच्चाणुदृश्यतेरज: । तैश्चतुर्भिर्भवेल्लिक्षालिक्षाषड्भिश्चसर्षपइति ॥

लिक्षिका । स्त्री० लिक्षायाम् ॥

लिखनम् । न० लेखने ॥ अखण्डनीयायांविधिलिपौ ॥ यथा । यस्ययल्लिखनं पूर्वं यत्रकालेनिरूपितम् । तदेवखण्डितुं राधे अस्यनाहस्तको विधि ॥ विधातुश्चविधाताहंयेषांयल्लिखनं कृतम् । ब्रह्मादीनाञ्चक्षुद्राणानतत्खण्ड्यं कदाचन ॥ इ० ब्र० वै० पु० ॥

लिखित पु० धर्मशास्त्रप्रवर्त्तके मुनिविशेषे ॥ न० वर्णसंस्थाने । लिपौ ॥ लिख्यतेस्म । लिखअक्षरविन्यासे । क्त ॥ त्रि० लिखितपत्रादौ । यथा । प्रमाणं लिखितं भुक्तिसाक्षिणश्चेतिकीर्त्तितम् ॥ इतिमिताक्षरायांयाज्ञवल्क्य: ॥

लिखिताक्षरविन्यास: । पुं० लिपौ ॥

लिगु: । पुं० मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न० चित्ते ॥ लिगति । लगेसङ्गे । खरुशङ्कितिकुप्रत्ययान्त: साधु: ॥

लिङ्गम् । न० चिह्ने ॥ शिवमूर्त्तिविशेषे ॥ यथा । नेहलिङ्गार्चनात् किञ्चित्पुण्यमभ्यधिकं क्वचित् । इतिविज्ञाययत्नेन पूजनीय सदाशिव ॥ तथा । दुर्गार्चनरतोनित्यं महापातकसम्भवै: । दोषैर्न लिप्यतेवीरपद्मपत्त्र मिवाम्भसेत्याचारादर्शे भविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ हेतौ ॥ धर्मे ॥ व्याप्ये । व्यापकस्यस्मारके ॥ व्यक्ते ॥ तच्चलिङ्गं प्रधानस्य । महदादिसूक्ष्मपर्य्यन्तं ॥ लिङ्गनाज्ज्ञापनाद्बुद्ध्यादिषु ॥ लयङ्गच्छतीति० सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि० पञ्चकर्मेन्द्रियाणि० पञ्चप्राणा मनोबुद्धिरितिसप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसाधिया । शरीरं सप्तदशभि: सूक्ष्मं तल्लिङ्गमुच्यते ॥ लिङ्ग्यतेगम्यतेयेनेति० बुद्ध्यादौ ॥ अनुमाने ॥ तत्त्रिविधम् । अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिञ्चेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीचलिङ्गं तात्पर्यनिर्णये ॥ प्रमाणविशेषे ॥ शब्दसामर्थ्ये लिङ्गम् । यथाहु: । सामर्थ्यं सर्वभावानांलिङ्गमित्यभिधीयते० इति० । सामर्थ्यं रूढिरेव० समाख्यातोभेद: । तेनवर्हिर्देवसदनन्दा

मीतिमन्त्रस्यकुशलवनाङ्गत्वनतु॰ उलपादिलवनाङ्गत्वम् । तत्रबर्हिर्दामीतिलिङ्गात्तज्जन प्रकाशयितु समर्थत्वात् । एवमन्यत्रापि लिङ्गादिनियोगोद्रष्टव्य । तदिद लिङ्गवाक्यादिभ्योबलवत् । अतएवस्योन तेसदन कृणोमीतिमन्त्रस्यपुरोडाशसदनकरणाङ्गत्व सदन कृणोमीतिलिङ्गात्॰नतु वाक्यात् । मनसि । अवगम्यतेह्या यतोऽवगच्छतियेनतल्लिङ्गमितिप्रव्युत्पादा । पुंस्त्वादौ । शेफसि । मेहने । अस्यशुभाशुभलक्षण यथा । दीर्घलिङ्गेनदारिद्र्य स्थूललिङ्गेननिर्धन । कृशलिङ्गेनसौभाग्य ह्रस्वलिङ्गेनभूपति । कर्कशे कठिनेलिङ्गे । परदाररत । सदा । रमतेचसदादासीम् निर्द्धनोभवतिध्रुवम् । कृशलिङ्गेनसूक्ष्मेण रक्तलिङ्गेनभूपति । परस्त्रीरमतेनित्यनारोणाश्रमेभवेत् ॥ कृशलिङ्गेनरक्तेनलभतेचोत्तमाङ्गनाम । राजसुन्दर्यादिव्याङ्ग्या कन्यकाया पतिर्भवेत् ॥ इतिसामुद्रकम् ॥ अपिच । दक्षिणावर्त्तलिङ्गेनाय सभवेत् पुत्रवान्नर वामावर्त्ततथाकन्या सुवक्राक्षअवन्तिच । स्थूले सिराले । कठिनेनरादारिद्र्यभाजना । ऋजुभिर्वर्त्तुलैर्लिङ्गै पुरुषा सुखभागिन । यस्यप्रशेपदिष्टस्य भूमिस्पृशतिमेहनम् । सोगवान् सतुविज्ञेयोनरोदारिद्र्यभाजन ॥ भूमौपादोपविष्टस्ययस्यस्पृशतिमेहनम् । सोगवान्स्तुविज्ञेयस्तथातुरगमेहन ॥ स्थूलग्रन्थियुतेलिङ्गेनरोऽतिसुखभाग्भवेत् । लिङ्गे नम्रदुनामस्थौरि गत्नेकृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगिगतौ । हलश्चेतिघञ् । वेषे ॥

लिङ्गक । पुं॰ हकशठे । कपित्थे ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषेतुमहाक्षानेदेवीसालिङ्गधारिणीतिदेवीगीता ॥

लिङ्गपुराणम । न॰ लैङ्गे महापुराणे । तत्रश्लोकसंख्या यथा । एकादशसहस्राणिलिङ्गाख्य चातिविस्तृतमिति ॥

लिङ्गवर्द्धन । पुं॰ कपित्थवृक्षे ।

लिङ्गवर्द्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्ति । पु॰ धर्मध्वजिनि । जीविकार्थ जटादिचिह्नधारिणि ॥ जीविकार्थनिर्मितत्रयोविभक्तिर्जटादिकम् । धर्मध्वजीलिङ्गवृत्तिद्वय तत्रनिगद्यते ॥ लिङ्गमाश्रमादिचिह्नधारण वृत्तिर्जीविकाहेतुर्यस्य स ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

सूक्ष्मशरीरे । सप्तदशावयवास्तु । ज्ञानेन्द्रियपञ्चकम् कर्मेन्द्रियपञ्चक प्राणादिवायुपञ्चक बुद्धिमनसी चेति ॥ लिङ्ग्यते ज्ञायते प्रत्यगात्मसद्भावो येन । तल्लिङ्गम् । लिगि । हलश्चेति घञ् । लिङ्गञ्च तत् शरीरञ्चेति विग्रहः ॥

लिङ्गस्थ । पुं॰ ब्रह्मचारिणि । वर्णिनि ॥

लिङ्गानुशासनम् । न॰ वररुच्यादिकृते नाम्नालिङ्गबोधकेग्रन्थे ॥ तन्त्र शासनानर्हम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येति समासान्ताद्धूति सूत्रभाष्योक्तेर्लिङ्गानुवदन लोकादेवसिद्धमिति निर्णयात् ॥

लिङ्गालिका । स्त्री॰ दीनायाम् । क्षुद्रमूषिके ॥

लिङ्गी । पुं॰ प्रव्रजितादिषु । ब्रह्मचार्यादिषु ॥ धर्मध्वजिनि ॥ वेशधरे ॥ गजे ॥ आत्मनि ॥ लिङ्गमस्यास्ति । इनि ॥ न॰ व्यापके ॥

लिङ्गिनी । स्त्री॰ लताविशेषे । बहुपत्र्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । चाण्डाल्याम् । आपस्तम्भिन्याम् । पञ्चगुरिया॰ इ॰ भाषाप्रसिद्धे ॥

लिन्दुः । त्रि॰ पिच्छिले मसृणे ॥ वैदिकोयम् ॥

लिपि । स्त्री॰ लिखिताक्षरे । लिखौ ॥ सापञ्चविधा यथा । मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयः पञ्चधास्मृता ॥ एताभिर्लिपिभिर्व्याप्ताधरि श्रीशुभदा हरेति वाराहीतन्त्रोक्ताः ॥ लेखन्या लिखितविप्रे मुद्राभिरङ्कितञ्चयत् । शिल्पादिनिर्मितयच्च पाठ्यधार्यञ्च सर्वदेति मुण्डमालातन्त्रोक्तेश्च ॥ लिप्यते । लिप उपलेपे । इगुपधात् किदितीन् ॥ लिपि । प्रमाणसर्वेषां सर्वैवप्रशस्यते । विशेषाद्व्यवहारेषु न विनश्येच्चिरं यतद्धति श्रीमहानिर्वाणतन्त्रम् ॥

लिपिकर । पुं॰ लेखके ॥ लिपिं करोति । डुकृञ्॰ । दिवाविभेतिट ॥

लिपिका । स्त्री॰ लिपौ ॥

लिपिकारः । पुं॰ लेखके ॥ लिपिं करोति । कर्मण्यण् ॥

लिपी । स्त्री॰ लिपौ ॥ लिप्यते लिपेरिन्नन्तात् कृदिकारादक्तिन इति ङीष् ॥

लिप्तः । त्रि॰ कृतलेपने । विलिप्ते ॥ विषदिग्धे विषाक्ते ॥ भुक्ते । भक्षिते ॥ दिग्धे ॥ लिप्यतेस्म । लिप॰ । क्तः ॥ यद्वा । लिनाति । लीश्लेषणे । लीयते वा । लिङ्श्लेषणे । लीरीङोर्ह्रस्वः । पुट् च तरौ श्लेषणकुत्सनयोरिति तप्र-

श्चयेधातोर्ङ्ख प्रत्ययस्त्पुट् ॥ मिलिते ॥

लिप्तक । त्रि० विषाक्तबाणे । दिग्धे ॥ स्वार्थे कन् ॥

लिप्ता । स्त्री० घटिकायाम् । दण्डे ॥

लिप्तिका । स्त्री० दण्ड ॥ लिप्तैव । स्वार्थे कन् ॥

लिप्सा । स्त्री० इच्छायाम् । वाञ्छायाम् ॥ लभे सन्नन्तादप्रत्ययादिति०ष ॥ लाभेच्छायाम् ॥ यथा । अर्थिनिखिलरातिलिप्सादात रिदित्सातुदूरतोपास्ता । आस्ताक्ष पक्षकथेयरमापतेनोचिताभवतीति ॥

लिप्सु । त्रि० लब्धुमिच्छौ । गृध्नौ ॥ लुब्धे । अभिलाषुके ॥ लभे सन्नन्तादु ॥

लिवि । स्त्री० लिपौ । लिखितवर्णे ॥ लिप्यते । लिप० । इगुपधात्लिदितीन् । वाहुलकात्पस्यवत्वम् ॥ लिवि सौत्रोधातुर्वा ॥

लिविकर । पुं० लिपिकरे ॥ लिविं करोति । डुकृञ् । दिवाविभेतिट ॥

लिम्प । पुं० लेपनकर्त्तरि ॥

लिम्पट । पुं० विड्गे ॥ दूतिहारावली ।

लिम्पाक । पुं० जम्बीरे ॥ खरे ॥ न० निम्बूकै । पातनीवू० इू०

भा० ॥

लिश्व । पुं० नर्त्तके ॥ लश्यते । लषकान्तो । सर्वनिवृष्वेतिसाधुउपधेत्त्वम् ॥

ली । पुं० श्लेषणे ॥ चपले ॥ लीङ् क्विप् ॥

लीका । ) स्त्री० लिक्षायाम् । दूतिशब्दरत्नावली ॥
लीखा । )

लीढ । त्रि० आस्वादिते । भक्षिते ॥ लिह्यतेस्म । लिहआस्वादने । क्त । ढत्वधत्वष्टुत्वलोपदीर्घा ॥

लीन । त्रि० प्राप्तलये । विलीने ॥ छन्ने ॥ लीयतेस्म । लीङ्श्लेषणे । क्त । स्वादयश्चदितइतिनत्त्वम् ॥

लीला । स्त्री० केली ॥ विलासे ॥ शृङ्गारभावचेष्टायाम् । गतिहास्यवचनादिभि शृङ्गारभावतोजातक्रियानुकरणे ॥ प्रियस्यानुकृतिर्लीलाश्लिष्टावाग्वेषचेष्टितै । अलब्धप्रियसमागमयास्वचित्तविनोदार्थं प्रियस्ययावेशगतिहष्टिहसितभणितैरनुकृति क्रियतेसालीलेत्यर्थं तथोहि । अप्राप्तवल्लभसमागमनायिकाया . सख्या पुरोचनिजचित्तविनोदबुद्ध्या । आलापवेशगतिहास्यविलोकनाद्यै प्राणेश्वरानुकृतिमाकथयन्तिलीलामितिभरत ॥ शोभायाम् ॥ लयनली ।

लीड् । कन्यदादित्वात्क्विप् । नियलाति । ला० । आतोऽनुपेति क । यद्वा । लेलायनम् । लेला दीप्तौ० कण्ड्वादि । भिदादयङ् । अप्रत्ययादित्वित्वा । पृषोदरादि ॥ यद्वा । लयनम् । लीडोवाहुल काल्लोगुणाभावश्च ॥

लीलाखेल । पु० अतिशक्वरीछन्द १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीला खेल । यथा । पायाद्गोगेविन्द कालिन्दीकूलचौरीचक्री० रासो ल्लास क्रीडद्गोपीभि सार्द्धंली लाखेल .। मन्दाकिन्यास्तीरोपा न्ते स्वैरक्रीडाभिर्लीला० यद्वद्देवा नभौम स्वर्गेशानि खेलन्तोभि ॥ त्रि० विलाससुभगे ॥

लीलावती । स्त्री० केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टा ऽन्वितायाम् । खेलाविशिष्टाया म् ॥ भास्कराचार्यस्यपत्न्याम् ॥ भास्कराचार्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाह रणे यथा । लघुगुरुवर्णनियमविर हितमिहहिसुकलयचतुष्कलमष्टग णम् । द्वात्रिंशत्कलविरचितमिद मतिशयसहृदयहृदयदु . खहरण- म् । लीलावतिकाभवतिचकारकर्ण द्विजगणजगणभगणकलिता० फ णिनायकपिङ्गलविरचितमङ्गतवृत्त ममलगुम्फनललिता ॥ यथा । गो कोटिप्रतिदिनमिहवितरन्द्विजवर- निवहेसुरमातनुषेरिपुतिमिरदलन करहस्तकुशेशयमपिलक्ष्मीवसतिंत नुषे ।। दुरितविलयमिलितखल कौदयनृपराजवलयमवलयसि रणे- त्वयिचलतिचलतिवसुधावसुधाधि पकीर्त्तिसिद्धवरणीरमणे ॥ लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न० देववने ॥

लुक्कायित : । त्रि० अन्तर्हिते ॥

लुङ्ग । पुं० मातुलुङ्गे । वीज पूरे ॥ लुञ्ज्यते । लुजिभाषार्थे । घञ् । चजोरितिकुत्वम् । न्यङ्का दित्वाद्वा ॥

लुङ्गुष : । पुं० कोलङ्गे ॥

लुठनम् । न० वेल्लने । अश्वस्यभूमौ पुन : पुन : श्रमोपहनने । लोट न० कृ० भा० प्र० ॥

लुठित .। त्रि० श्रमशान्त्यर्थंमुहुर्मुहु : पराङ्वर्त्तश्वे । उपावृत्ते ॥ वेल्लते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकत्वा त्क्त . ॥

लुण्टक । पुं० शाकविशेषे । नथ्या० कृ० गौ० भा० प्रसिद्धे ॥

लुण्टाक । पु० चौरे ॥

लुण्टाकी । स्त्री० चौरायास्त्रिया म् ॥

लुण्ठक । त्रि० स्तेयकारकी ॥

लुण्ठनम् । न० हयलुठिते ॥ लूटइति प्रसिद्धे साहसे ॥ लुठिस्तेये । ल्यु ट् ॥

लुण्ठाक । पुं० परभृत्ये । हिके । काके ॥

लुण्डिका । स्त्री० )
लुण्डी । स्त्री० ) न्यायसारिण्याम् ।

लौंडी० इ० भा० प्र० ॥

लुप्तम् । न० चौर्यधने ॥ त्रि० विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न० ग्रस्ते ॥ लुप्तोव र्णपदंवायत्रवाक्ये पदेवातत् ॥

लुप्तसंवत्सर । पुं० विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्त राशि नैतिचेत्पुन । लुप्तसंवत्सरोज्ञे योगर्हित सर्वकर्मसु ॥ अस्या पवादस्तु घृगिमेषिभ्भाषिकुम्भे यद्यतीचा रगोगुरु । नतत्रकाललोप स्या दिव्याहभगवान्यम ॥ अन्यच्च । मासान्द्वयेकादशवाप्रभुज्यराशेर्य दाराशिमुपैतिजीव , भुङ्क्तेनपू र्वंचपुनस्तथापिन लुप्तसंवत्सरमा हुरार्या ॥ लुप्ताब्ददोषोऽचिमते नमध्येसोमोद्भवाया सुरनिम्नगा या ॥

लुप्ताब्द . । पु० लुप्तसम्वत्सरे ॥

लुब्ध । पुं० व्याधे ॥ लम्पटे ॥ त्रि० आकाङ्क्षिणि । गृध्नौ । परधना भिलाषुके ॥ धर्मार्थस्वद्रव्यत्यागा समर्थे ॥ मातरं पितरं भ्रातॄन्सर्वां श्चसुहृदस्तथा। घ्नन्तिह्यसुतृपोलुब्धा राजान प्रायशोभुवि ॥ लुभ्यति स्म । लुभगार्ध्ये । गत्यर्थेतिक्त ॥

लुब्धक ' । पु० व्याधे ॥ स्वार्थे० स ञ्ज्ञायांवाकन ॥ आर्द्रायाम् ॥

लुलाप ।पुं० महिषे॥ लुडति। लुडस ञ्श्लेषणे । इगुपधेतिक । डलयो रेकत्वम् । आप्नोति । आप्लृ० । अच् । लुलश्चासावापश्च । यद्वा । लुडाते । लुडलोडने । भिदाद्यङ् । लुलाविलोडिताआपोयेन । लुल विमर्दनेसौत्रोधातुर्वा ॥

लुलापकन्द ' । पुं० महिषकन्दे ॥

लुलापकान्ता । स्त्री० महिष्याम् ॥

लुलाय । पु० महिषे ॥ लुडति। लुड० । क । डलयोरभेद ॥ यद्वा । लुड्यते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रो धातुर्वा । बाहुलकादायप्रत्यय ॥ यद्वा । अयते । अय० । अच् । लुलश्चासौअयश्च ॥

लुलित । त्रि० आन्दोलिते । तरलि ते ॥ उत्सृष्टे ॥लिप्ते । यथा । बा ल्पेंदु स्वातिरेकोमललुलितवपुरि ति ॥

लुभभ । पुं॰ मत्तमातङ्गे । मत्तगजे ॥ रोषति । रुषहिंसायाम् । रुषेर्नित्लुष्चेत्यभच्॰ इतिरुषि रभच्नित्किद्वातोलुंषादेशश्च ॥

लू । स्त्री॰ लवने । लवनम् । लूञ भावेक्विप् ॥ लुनातिवा । अत्रवाच्यलिङ्गः ॥

लूता । स्त्री॰ ऊर्णनाभे । मर्कटके ॥ पिपीलिकायाम् ॥ रोगविशेषे । मर्मव्रणे ॥ लुनाति । लूञ॰ । हसिमृग्रिण्वामीतितन् । संज्ञापूर्वकत्वाद्गुणाभावः ॥

लूतातन्तु । पुं॰ मर्कटकजाले । मकडीकाजाला॰ इ॰ भा॰ लूतायास्तु ॥

लूतामर्कटक । पुं॰ लूतामर्कटक । पुंसी॰ नवमालिकयो । कपाविति हेमचन्द्रः ॥

लूतारिः । पुं॰ दुग्धफेनीक्षुपे ॥

लूतिका । स्त्री॰ ऊर्णनाभौ । मर्कटकी । मकडी॰ इ॰ भा॰ ॥ लूतैव । स्वार्थेकः ॥

लून । त्रि॰ छिन्ने ॥ लूयतेस्म । लूञ॰ । क्तः । ल्वादिभ्यश्चेतिनत्वम् ॥

लूनक । पुं॰ भिन्ने । भेदिते ॥ पशौ ॥ यावादिषु॰ पशौलूनवियात-इतिस्वार्थेकन् ॥

लूनि । स्त्री॰ छेदे ॥

लूमम् । न॰ पुच्छे । लाङ्गूले ॥ लूयते । लूञ॰ । बाहुलकान्मक् ॥

लेख । पुं॰ अदितिनन्दने । देवे सुरे ॥ ध्यानार्थंचित्रादौलिख्यते । लिखअक्षरविन्यासे । अकर्त्तरिचकारकेसंज्ञायामितिकर्म्मणिघञ् । ग्रीवाहस्तपादेषुतिस्रोलेखा सन्ति यस्येतिवा । अर्शआद्यच् ॥ लेख्ये ॥

लेखक । पुं॰ लिपिकरे । अक्षरचुञ्चौ । लेखनकर्त्तरि । लिखारी॰ इ॰ भा॰ ॥ लिखति । लिख॰ । शिल्पिनिष्वुन् । ण्वुल्वा ॥ अस्यलक्षणानियथा । सर्वदेशाक्षराभिज्ञ सर्वशास्त्रविशारदः । लेखकः कथितोराज्ञः सर्वाधिकरणेषुवै ॥ शीर्षोपेतान्सुसम्पूर्णान्समश्रेणिगतान्समान् । अक्षरान्वैलिखेद्यस्तुलेखकः सवरः स्मृतः ॥ उपायवाक्यकुशलः सर्वशास्त्रविशारदः । बह्वर्थवक्ताचाल्पेनलेखकः स्यान्नृपसत्तम ॥ वाक्याभिप्रायतत्त्वज्ञोदेशकालविभागवित् । अनाहार्योनृपेभक्तोलेखकः स्यान्नृपसत्तम ॥ इति मात्स्ये १८९ अध्यायः ॥ अपिच । सकृदुक्तगृहीतार्थोलघुहस्तोजिताक्षरः । सर्वशास्त्रसमालोकी प्रकृष्टोनामलेखकः ॥ राजलेखकलक्षणंयथा । ब्राह्मणोमन्त्रणाभिज्ञो राजनीतिविशारदः । नानालिपि

ज्ञोमेधावीनानाभाषासमन्वितः ॥ मन्त्रणाचतुरोधीमान्नीतिशास्त्रार्थकोविदः । सन्धिविग्रहभेदज्ञोराजकार्येविचक्षणः ॥ सदाराजहितान्वेषीराजसन्निधिसंस्थितः । कार्याकार्यविचारज्ञः सत्यवादीजितेन्द्रियः ॥ स्वरूपवादीशुद्धात्माधर्मज्ञोराजधर्मवित् । एवमादिगुणैर्युक्तः सएवराजलेखकः ॥ नृपानुवर्त्तीसततन्नृपविश्वासरक्षकः । नृपतेर्हितकान्वेषीसएवराजलेखकः ॥ इतिपत्रकौमुदी ॥

लेखन । पु० कासे । न० छर्दने ॥ भूर्जे । लिपिन्यासे ॥ लिख० । ल्युट् ॥

लेखनाञ्जन । न० अञ्जनविशेषे ॥ यथा । दधाण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवैः । चूर्णितैरञ्जनंप्रोक्तंपुष्पार्मादिनिकृन्तनम् ॥ कुक्कुटाण्डस्यत्वक् । शिलामनःशिला ॥

लेखनिक । पु० लेखहारे ॥ लेखेषु परहस्तेनस्वहस्तस्यचलेखके । यः स्वहस्तं परहस्तेनलिखितेषुविलेखयेत् तत्र ॥

लेखनी । स्त्री० कलमे । वर्णतूलिकायाम् ॥

लेखनीय । त्रि० लेख्ये

लेखर्षभ । पु० जिष्णौ । शक्रे । इन्द्रे ॥ लेखेषुऋषभः । सप्तमीतियोगविभागात्समासः ॥ लेखऋषभइवेतिवा । उपमितसमासः ॥

लेखहार )
लेखहारक ) पु० पत्रवाहके । लेखं हरति । हृञ्० । कर्मण्यण् ॥

लेखा । स्त्री० लिपौ ॥ राजिकायाम् । रेखायाम् ॥ लिख्यते । लिख० । भिदादिपाठादङ् गुणौ ॥ न्यायाम् ॥

लेखार्ह । पु० श्रीतालवृक्षे । मृदुच्छदे ॥

लेख्यम् । न० भागदानादिव्यवहारकरणे । पत्रे ॥ त्रि० लेखितव्ये । लेखनीये ॥ व्यवहाराङ्कक्रियापादाङ्गे ॥ यथा । षण्मासिकेऽपि समयेभ्रान्तिः सञ्जायतेयतः । धात्राक्षराणिसृष्टानिपत्रारूढान्यतः पुरा ॥ लेख्यन्तुद्विविधंप्रोक्तं स्वहस्तान्यकृततथाचसाक्षिकसाक्षिमत्त्वसिद्धिर्देशस्थितेस्तयोः ॥ मृतास्तुसाक्षिणोयत्रधनिकर्णिकलेखकाः तदप्यपार्थंकारणमृतेत्वाधेः स्थिराश्रयात् ॥ दर्शितप्रतिकालञ्चपठितश्रावितञ्चयत् । लेख्यंसिद्धयतिसर्वत्रमृतेष्वपिचसाक्षिषु ॥

लेख्यचूर्णिका । स्त्री० तूलिकायाम् ॥

लेख्यपत्र । पुं० तालद्रुमे ॥ न० लेखनीयपत्रे ॥

लेख्यस्थानम् । न० ग्रन्थकुट्याम् ।

ट्फ्‌तरद्वतीतरजनभा० प्र०

लेण्डम्। न० गूथे। शकृति। लेण्ड इ० भा० प्र०॥

लेण्डुज.। पु० इडुर्यजे॥ इडुर्यजानवषट्‌पञ्चलेण्डुजाश्चापिभाविनइत्यागमात्॥

लेप'। पु० लेपने॥ जग्धौ। अशने॥ अनुशये। अनुबन्धे॥ सच० इदमहमकार्षमेतत्फलभोक्ष्ये० इत्यनुसन्धानकर्त्तृत्ववासनानिमित्त। सचपुण्ये कर्मणिपुण्यरूप० पापेचपश्चात्तापरूपोभवति॥ लेपनम्। लिप० घञ्॥ सुधायाम्। चूना० इ० भा० प्र०॥

लेपक। पुं० पलगण्डे। राज इ० प्र० ज लो॥ त्रि० लेपकर्त्तरि॥ लिपति। लिप० ण्वुल्॥

लेपनम्। न० लेपे। चन्दनागुर्वादिनाङ्गविलेपने॥ देवगृहादिलेपने। लीपना० इ० भा० लिपेर्ल्युट॥ पु० तुरुष्कनामगन्धद्रव्ये॥

लेपभुक्। पुं० पितामहपित्रादिषु॥

लेपी। पुं० लेपके। पलगण्डे। शेकर० इ० गौ० दे० भा०। राज० इ० दे० भा०॥

लेप्य। त्रि० लेपनीये॥

लेप्यकृत्। पुं० लेपके॥

लेप्यमयी। स्त्री० काष्ठादिघटितपुत्तलिकायाम्। पञ्चलिकारिकायाम्॥

लेभिरम्। न० उलूखले॥

लेय। पु० सिंहराशौ॥

लेलायनम्। न० चलने॥

लेलायमान। त्रि० अतिशयचलनविशिष्टे॥यथाग्निर्न्नैविर्ग्रहणायलेलायमानोभवति॥

लेलिह। पु० सर्पे॥

लेलिहा। स्त्री० जीवन्यासमुद्रायाम्॥ यथा। तर्जनीमध्यमानामा समा कुर्यादधो मुखा। अनामायाञ्चिपेद्वामजुंकृत्वाकनिष्ठिकाम्। लेलिहानामसुद्रैयजीवन्यासेप्रकीर्त्तिता॥

लेलिहान.। पु० शिवे॥ सर्पे॥ त्रि० ललज्जिह्वे॥ लेहातिशयकारके। पुन. पुनर्लेहनकर्त्तरि॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये० गुणोयङ्लुकोरिस्य भ्यासस्यगुण॥

लेलिहाना। स्त्री० लेलिहायामुद्रायाम्॥

लेश। पुं० अल्पे कणे॥ लिशति। लिशगतौ। पचाद्यच्॥ लिश्यतेवा। घञ्॥

लेशेज.। त्रि० अतिकम्पने॥ लेशेनाल्पेनापिएजति। एजृ०। पचाद्यच्॥

लेष्टु.। पुं० इष्टमृत्पिण्डे। लोष्टे। ढीम०ढेला०डला इ० भा०प्र०॥

लिश्यते॰लिशतिवा। लिश॰। बाहुलकात्तुन्॥
लेष्टुघ्न । पुं॰ लोष्टभेदने॥
लेष्टुभेदन । पुं॰ कोटिशे। लोष्टभेदनमुद्गरे॥
लेसिक । पुं॰ कटिरोहके। हस्त्यारोहके॥
लेह । पुं॰ आहारे। भोजने। स्वादने॥ लेहने॥ लेहनम् लिहआस्वादने। घञ्॥ लेढि। शाद्यर्धेति-णोवा॥
लेहनम । न॰ जिह्वास्वादे। जिह्वया रसग्रहणे। चाटना॰इ॰भा॰॥ लिहेर्ल्युट्॥
लेह्यम्। न॰ अमृते। सुधायाम्॥ त्रि॰लेहयोग्ये। आस्वाद्ये। यज्जिह्वायानि क्षिप्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितच॥
लैङ्ग । पुं॰ वैयाकरणे॥ वैयाकरणाहिस्त्रीपुनपुंसकशब्दजाततत्त्वमितिवर्णयतितदयुक्तम्। स्त्र्यादेशब्दस्वभावत्वे सर्वादीनांत्रिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात्। औपाधिकधर्मत्वेचतस्यावस्तुत्वात्॥ न॰लिङ्गपुराणे॥ त्रि॰-लिङ्गसम्बन्धिनि॥ लिङ्गस्येदम तस्येदमित्यण्॥
लैङ्गी। स्त्री॰ लिङ्गिन्यामोषधौ॥

लोक । पुं॰ जने आत्मनि॥ लोक्यतेअनुभूयतेशास्त्रोपदेशशीलितबुद्ध्यायमितिव्युत्पादनात्॥ दर्शने॥ लोक्यमानेविषये॥ प्राणिनिकाये। भुवने॥ त्रयोलोकाः स्वर्गमर्त्त्यपातालानि॥ अत्रसप्तलोकनामानियथा। भूर्भुवः स्वर्महश्चैव जनश्चतपएवच। सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिताः॥ दृश्यवर्गे॥ ग्राह्यग्राहकत्रिषयेस्मिन्शरीरे॥ लोकोहिद्विविधः प्रोक्तआत्मानात्मविभेदतः। मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामतः॥ आत्मलोकस्यस्वरूपमित्याहुः शास्त्रदर्शिनः॥ मनुष्यलोकः पुत्रेणपितृलोकस्तुकर्मणा। विद्ययादेवलोकश्चेत्यब्रवीत्सकृद्धृश्रुतिः॥ लोक्यतेऽनुभूयते॰दृश्यते॰भुज्यते-वा। लोकृदर्शने। घञ्॥ कर्मफले॥ प्रसिद्धिमागमः प्राप्तोलोकइत्यभिधीयते। चतुर्दशविद्यास्थानानिलोकाइतिव्याख्यातारः। लोक्यतेज्ञायतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्तेः॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्यसर्वस्य लोकपदार्थत्वाद्दृश्यापिलोकान्तर्गतत्वम्॥
लोककान्ता। स्त्री॰ ऋद्धिनामौषधौ॥
लोकचक्षु । पुं॰ सूर्ये। जनलोचने

लोकजित् । पुं॰ जिने ॥ लोकंजयति । जि॰ । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥ लोकान्जयत्युपरमयतीति वा ॥ त्रि॰लोकजेतरि ॥

लोकतुषार । पुं॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक । पुं॰ नि । क्षेपापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ । पुं॰ शिवे ॥ ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ ॥ लोकैर्नाथ्यतेयाच्यतेवाकर्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रोवह्नि : पितृपतिर्नैर्ऋतिर्वरुणोऽनिल । धनद । शङ्करश्चैव लोकपाला : पुरातना ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ॥

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे ॥ येनोपायेनमर्त्यानां लोकयात्राप्रसिध्यति । तदेवकार्यंब्रह्मज्ञैरिदंधर्मसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्ये ॥

लोकबाह्य । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्बाह्य ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका वस्तुभूता सन्तीतिसङ्कल्पयति ॥

लोकविनायक । पुं॰ ग्रहविशेषे ॥

लोकविश्रुति । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विचित्रपरिहासकथादिके॰ असत्प्रियाख्याने ॥ न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानाम्वृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वेधर्मे प्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानां सङ्ग्रहोग्रहणम् ॥

लोकसार । पुं॰ प्रणवे ॥

लोकाकाशास्तिकाय । पुं॰ लोकानामन्तराकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्द्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रे तस्मैलोकात्मनेनम : ॥

लोकादि । पुं॰ अग्नौ ॥ लोकानामादि , प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंद्रष्टव्यवर्गंस्वाभाविकेनबोधेनसाक्षात्पश्यतीति॰लोकाध्यक्षः ॥ लोका

नामध्यच . । लोकाध्यच्चायच्छ तिवा।लोकान्अध्यच्चयतीतिकर्म्म ख्यणिउपपदसमासोवा ॥

लोकापवाद । पु॰ लोककर्त्तकायां निन्दायाम्॥ लोकापवादाद्भयम्॥

लोकायतम्। न॰ तर्कभेदे। चार्वाकदर्शने॥ लोकआयतम्॥

लोकायतिक । पु॰ चार्वाके।

लोकालोक । पु॰ परमेश्वरे॥ लोकाआब्रह्मस्तम्बपर्यन्त. आलोक्यते प्रकाश्यतेयेनस ॥ चक्रवालेऽद्रिविशेषे ॥ लोकालोकोवहिस्तस्मा लोकालोकनियामक.। योजनायुतविष्कम्भस्तुङ्गशृङ्गपरिष्कृत. ॥ अन्त. स्थित लोकवहि' स्थितस्त्वालोकनियमयतीति॰ लोकालोकनियामक । तद्वाह्येलोकाभावादित्यर्थ '॥ लोकदर्शने । भावेघञ्। नलोक ' अलोक । लोकश्चालोकश्च॰लोकालोकौ॰ प्रकाशान्धकारावनस्त अन्तर्वहि सूर्यकिरणानास्पर्शास्पर्शाभ्याम्॥

लोकालोकी। त्रि॰ त्रैलोक्यदर्शिनि ॥ लोकानालोकते॰तच्छील ' । णिनि ॥

लोकेश '। पुं॰ हिरण्यगर्भे। ब्रह्मणि॥ लोकानामीश ॥ बुद्धभेदे ॥ पारदे॥

लोकेशाधिष्ठित । पुं॰ राजनि॥

लोकेश्वर । पुं॰ शिवे॥ लोकानाञ्च नानाश्चईश्वर प्रभु॥ बुद्धभेदे॥

लोकेश्वरात्मजा। स्त्री॰ बुद्धशक्तिविशेषे। तारायाम। श्रियां। मनोरमायाम्॥

लोकैषणा। स्त्री॰ देवलोकादिकामनायाम्॥ लोकैषणेतिदेवादिलोकार्थोपासनार्थिता॥

लोकोत्तर '। त्रि॰ लोकातीते॥

लोकोद्धार '। पुं॰ तीर्थविशेषे॥

लोक्य । त्रि॰ परलोकादिसाधने। लोकायहिते॥

लोचनम । न॰ अश्रुणि। वास्पे॥

लोचक । पुं॰ मांसपिण्डे॥ अक्षितारकायाम्॥ कज्जले॥ स्त्रीभालभूषणे॥ कदल्याम्॥ नीलवस्त्रे॥ कर्णपूरे। कर्णिकायाम्। कर्णाभरणे॥ ज्यायाम्। मौर्व्याम्॥ भ्रूस्थचर्म्मणि॥ निर्मोके॥ त्रि॰ निर्बुद्धौ॥

लोचनम्। न॰ चक्षुषिचक्षुषि॥ अक्षशुभाशुभलक्षण यथा। कर्णान्तेपद्मपत्राभैर्लोचनै ' सुखभागिन.। मार्ज्जारलोचनै. पापीमहात्मामधुपिङ्गले॥ क्रूरा केकरनेत्राश्चहरिणाक्षा. सकल्मषा:। जिह्माक्षलोचनै: क्रूरा सेनान्योगजलोचना ॥ गम्भीराक्षाईश्वरा' स्थूम'

न्निग्ध स्थूलचक्षुष । नीलोत्पला क्षाविद्वास सौभाग्यश्चाबचक्षुषाम् ॥ क्षातृक्षणतारकालाणाम- क्षणासुत्पाटनकिम । मण्डलाक्षा स्वपापा स्युर्निक्षा स्युर्दीर्घलो चना ॥ हक्स्निग्धाविपुलाभोगे अल्पायुर्यातिचोन्नता । विशालोन्न तासुखिनिर्दरिद्राविषमभ्रुव ॥ इ तिगारुडे ६६ ॥ लोच्यतेनेन । लोचृदर्शने । ल्युट ॥ आलोचने ।
लोचनहिता । स्त्री॰ तुत्थाञ्जने ॥
लोचना । स्त्री॰ गुडशर्करविशेषे ॥
लोचनामय । पुं॰ चक्षूरोगविशेषे । अभिमन्थे ॥
लोचनी । स्त्री॰ महाश्रावणिका- याम् ॥
लोचमर्कट । पुं॰ लोचमस्तके ॥
लोचमस्तक । पुं॰ खराश्वायाम् । कारग्राम् । दीप्ये । मयूरे । म यूरशिखौषधे । रुद्रजटाङ्॰ गौ॰ दे॰ प्र॰ ॥ लोच्यते । लोचृदर्शने घञ् ॥ यद्वा । लोचयति । लोचृ भासार्थे । पचाद्यच् । लोचोदर्श नेयोभासमानोवा॰ मस्तकोऽस्य ॥
लोठनम् । न॰ क्षतस्तत्क्षालने ॥
लोडनम् । न॰ प्रतिघाते ॥
लोट्टणम् । न॰ लवणाट्टणे ॥
लोणा । स्त्री॰ क्षुद्राम्लिकायाम् । चा ङ्गेर्याम् ॥ लोणाशाके । लोनिका॰ लोनी॰ इ॰ भा॰ श्रुते ॥ अस्यागु णा । लोणारूक्षागुरु कट्वीवात श्लेष्महरोपटु । अर्शोघ्नीदीपनीचा म्लामन्दाग्निविषनाशिनी ॥
लोणाम्ला । स्त्री॰ क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥
लोणारम् । न॰ क्षारविशेषे । लवणो त्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥
लोणितम् । न॰ लोनियाख्यशाके ॥ शाकलोणितसञ्ज्ञकसुदलिततसेभ्रूलि तापितहिङ्गवार्द्रैणविमिश्रितंसलवण तक्रेणसपाचितम् । नोबास्वेदामि दसुहिङ्गुसहित तैलेनवाबामित खिन्नतण्डुलसयुतसलवण तक्रैर्वि- नापाचितम् ॥ लोणित शुभशोतो ष्णारूक्ष विष्टम्भकारकम । दोषघ्नन् मधुरणकेवातघ्नञ्चाम्लपित्तकृत् ॥
लोणी । स्त्री॰ लोणायाम् ॥
लोत । पुं॰ न॰ यास्ये । अश्रुणि । नेत्राम्बुनि ॥ न॰ लोप्त्रे ॥ लुना ति । लूञ्॰ । हसिमृग्रिन्त्यादिना तन् । लोतोमिषइतिक्तवत्नि र्द्दिष्टंतिसूत्रे कैयट ॥
लोत्रम् । न॰ लोप्त्रे ॥ नेत्रजले ॥ लूञ् । सर्वधातुभ्यष्ट्रन् ॥
लोध्र । पुं॰ गालवे । शाबरे । ति रीटे । तिल्वे । मार्जने । लोध॰ इ॰ भा॰ प्र॰ ॥ लोध्रोग्राहीलघु

शीतश्चक्षुष्य . कफपित्तनुत् । क षायोरक्तपित्तास्रग्ज्वरातीसारशो थहृत् ॥ इत्याहि । रुधिर० । वा हुलकात्ट्रन् । कपिलकादि ॥

लोध्रवृक्ष । पु० गालवे ॥

लोध्रपुष्पक । पुं० शालिप्रभेदे ॥

लोप । पु० अदर्शने ॥ गम्यमाना र्थस्याप्रयोगएवलोप । यथाविभक्ता धनेषु० विभक्ताभ्रातर अत्रोत्तर पदस्थधनस्यलोप ॥ लुप्यते । लु प्लृच्छेदने । कर्म्मणिघञ् ॥ छेदे ॥

लोपा । स्त्री० लोपामुद्रायाम् ॥

लोपाक ) पु० शृगाले । फेरौ ॥
लोपापक )

लोपायिका । स्त्री० शृगाल्याम् ॥

लोपामुद्रा । स्त्री० अगस्त्यमुने पत् न्याम् ॥ नमुदरातिवमुद्राघातो नुपेतिक । लोपेधर्मलोपाअमुद्रा हर्षंनलभतइत्यर्थः ॥

लोपामुद्रापति । पुं० अगस्त्यमुनौ॥

लोपाशक । पु० शृगाले ॥

लोपाशिका । स्त्री० शृगाल्याम् ॥

लोप्त्रम् । न० चोरिते । चोरधने ॥ लुप् त्र० । ष्ट्रन् ॥

लोप्त्री । स्त्री० हस्तालनया कृते० वारिमिश्रितगोधूमादिचूर्णपिण्डे । लोयी० मेडी० इतिचलोकभाषा याप्रसिद्ध ॥ षित्त्वान्ङीष् ॥ लो प्त्र ॥

लोभ । पु० धनतृष्णायाम् । सत्त तिधनागमेजायमाने प्यनुक्षणवर्द्ध मानेतदभिलाषे । स्वविषयप्राप्त निवर्त्य० इच्छाविशेषे ॥ आत्मनो ऽनुकूलेषुसुखहेतुषुदृश्यमानेषुश्रूय माणेषुस्मर्य्यमाणेषुवातद्गुणानु सन्धानाभ्यासेनयोरस्यात्मकोगर्द्धा भिलाषस्तृष्णा० लोभ ॥ धर्म विवे० धनपरद्रव्येच्छायाम् ॥ यथा । परवित्तादिकदृष्ट्वानेतुयोऽत्रहृदि जायते । अभिलाषोद्विजश्रेष्ठसलो भ परिकीर्त्तितइति ॥ सतुनाश कारणम् । यथा । लोभप्रमादवि श्वासै पुरुषोनश्यतेत्रिभि । तस्माल्लोभोनकर्त्तव्य प्रमादोनन विश्वसेत् ॥ अपिच । त्रिविधंनर कस्येद द्वार नाशनमात्मन । का म . क्रोधस्तथालोभस्तस्मादेतत्त्र य त्यजेदिति ॥ अस्यस्वरूप यथा । सन्त्येतेमददन्तिनोमदजलप्रम्लान गण्डस्थलावातव्यायतपातिनश्चतुर गाभूयोऽपिलप्स्ये पराम् । एतल्लब्ध मिद लभे पुनरिद लब्ध्वाधिकध्या यताचिन्ताजर्जरचेतसांवततृष्णा कानामशान्त कथा ॥ अपिच । क्षेत्रग्रामवनाद्रिपत्तनपुरीद्वीपक्षमा मण्डलप्रत्याशावनसूत्रबद्धमनसां लब्ध्वाधिक ध्यायताम् । तृष्णे दे वियद्विप्रसीदसितमोध्यङ्गानितुङ्गा

निचेत् तज्ञो प्राणभृताकुत शमकथाब्रह्माणडलचरपीति ॥ लो भएवमनुष्याणादेहस्थोमहारिपु । सर्वदु खाकर प्रोक्तोदु खद प्राणनाशक ॥सर्वपापस्यमूल हि सर्वदातृष्णयान्वित । विरोधकृ त्विवर्णानासर्वासे · कारण तथा ॥ लोभात्त्यजन्तिधर्मवै कुलधर्मत थैवहि । मातर भ्रातर हन्तिपित र'बान्धव तथा ॥ गुरु मित्र तथाभा म पुत्रच्चभगिनीतथा । लोभाविष्टो नकिंकुर्यादकृत्य पापमोहित ॥ क्रोधात्कामादहङ्कारास्लोभएव महारिपु · । प्राणास्त्यजतिलोभे नकि पुन . स्यादनावृतम् ॥ त स्माल्लोभाभिभूतस्तुकिंनकुर्यान्नर किलेतिदेवीभागवतम् ॥

लोभनी । स्त्री० महाश्रावणिकायाम् ॥

लोभनीय । वि० तृष्णोत्पादके ॥

लोभी । त्रि० गृध्नौ । लुब्धे । लोभयु क्ते ॥ लोभोस्त्यस्य । इनि . ॥

लोभ्य : । पु० मुद्गे ॥ त्रि० लोभनो ये ॥

लोमम् । न० पुच्छे । लाङ्गूले ॥

लोमकरणी । स्त्री० मासच्छदायाम् ॥

लोमकर्ण : । पु० शशके ॥ त्रि० लो मयुक्तकर्णविशिष्टे ॥

लोमघ्न : । पु० इन्द्रलुप्तकेरोगे ॥ त्रि० लोमघातके ॥ लोमानिहन्ति ।

हन० । अमनुष्यकर्तृकेचेतिटक ॥

लोम । न० तनूरुहे । रोमणि ॥ रोह ति । रुह० नामन्सीमन्व्योमन् रोमन्लोमन्नितिसाधु ॥ यद्वा । रूयते । रुशब्दे० रुङ्गतौभावणेवा । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद . । पु० ऋष्यशृङ्गमुने पु त्रे । अङ्गदेशीयराजविशेषे ।

लोमपादपू · । स्त्री० चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न० भव्ये ॥

लोमवान् । त्रि० लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष । पु० व्याघ्रादौ ॥

लोमश । पु० मुनिविशेषे ॥ मेषे ॥ त्रि० अतिशयलोमान्विते ॥ य था । कदाचिद्दन्तुरोमूर्ख · कदा चिल्लोमश सुखी । कदाचित्तुन्दि लोदु : खीकदाचिच्चञ्चलासती ॥ लोमानिसन्त्यस्य । लोमादिभ्य श : ॥

लोमशकान्ता । स्त्री० कर्कट्याम् ॥

लोमशपर्णिनी । स्त्री० माषपर्ण्याम् ॥

लोमशपुष्पक · । पु० शिरीषवृक्षे ॥

लोमशमार्ज्जार : । पु० पूतिके । मार्जातके । सुगन्धिनि । मूत्रपतने । गन्धमार्ज्जारकेगन्धगोकुला० इ० गौ० दे० भा० प्र० ॥ गन्धमार्ज्जार

वीर्य्यन्तुवीर्य्यकृत्कफवातहृत् । क
गडूकोठहर नित्य सुगन्धस्विदगन्धनु
त् ॥

लोमशा । स्त्री० काकजङ्घायाम् ॥
मांसाम् ॥ वचायाम् ॥ शूकशि
म्ब्याम् ॥ महामेदायाम् ॥ काशी
शे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥
अतिबलायाम् ॥ घण्टारवायाम्
। शणपुष्प्याम् ॥ पर्व्वरी ॥ गन्ध
मांस्याम् ॥ लोमानिसन्त्यस्या. ।
लोमादित्वाच्छ । टाप् ॥

लोमशातनम् । न० लोमपातने ॥

लोमहर्ष । पुं० रोमहर्षे रोमाञ्चे ॥

लोमहर्षण । पुं० सूते । व्यासशि
ष्ये ॥ न० रोमाञ्चे ॥

लोमहृत् । पुं० हरिताले ॥

लोमालिका । स्त्री० शृगालिकायाम्
। दीर्घजिह्वायाम् । उल्कामुख्या ॥

लोमावली । स्त्री० रोमावल्याम् ॥

लोल । त्रि० सतृष्णे ॥ चञ्चले ॥
लोडति । लुडविलोडने । क्वचिद
पवादविषयेप्युत्सर्ग प्रवर्त्तरच् । ड
लयोरेकत्वम् ॥ यद्वा । लोडति
। लोडृउन्मादे । पचाद्यच् ॥ देश
विशेषे ॥

लोलमान । त्रि० चलनशीले ॥ ता
च्छील्ये तिचानश् ॥ लुण्ठमाने ॥

लोला । स्त्री० जिह्वायाम् ॥ कमला
याम् । श्रियि ॥ चञ्चलायांनार्यां
म् ॥ कामलायाम् । प्रकरौछन्द
१४ प्रभेदे ॥ तल्लक्षण यथा । द्वि
सप्तच्छिदिलोलाम् सौभौगौचरणं
चेत् ॥ यथा । मुग्धे यौवनलक्ष्मी
र्विद्युद्विभ्रमलोला० चैलोक्याद्भुत
रूपोगोविन्दोतिदुराप तद्वन्दाव
नकुञ्जे गुञ्जद्भृङ्गसनाथेश्रीनाथेनसमे
तासच्छन्द कुरुकेलिम् । लोलाष्टा
प ॥

लोलार्क्क । पुं० सूर्य्ये । काशिस्थ
रवौ । लोलार्ककेशवौकोटीगङ्गा
व्यानगरधनु । कलिलं च शरी
धर्म्म शिवोधन्वोपुनातुमाम् ॥

लोलिका । स्त्री० चाङ्गेर्य्याम् ॥

लोलित । त्रि० वशीकृते ॥ चा
लिते ॥ श्लथे ॥ लोल. सञ्जातोऽ
स्य । इतच् ॥

लोलुप । त्रि० अतिलुब्धे ॥ गर्हितं
लुम्पति । लुप्लृच्छेदने । लुपसदे
तियङन्तादच् ॥

लोलुभ । त्रि० लोलुपे ॥ भृश लुभ्य
ति । लुभगार्द्ध्ये । धातोरेकाचह्
तियङन्तादच् ॥

लोष्ट । पुं० न० मृत्खण्डे । पांशु
पिण्डे । लोष्टौ । ढीम० ढेला०
इ० भा० ॥ लोष्टति । लोष्टसङ्घा
ते । पचाद्यच् ॥ यद्वा । लुनाति ।
लूञ्० लोष्टपलितावितिक्तः त
स्यसुट्० धातोर्गुणश्चनिपातनात्

॥ न० लोहमले ॥

लोष्टघ्न । पु० लेष्टुभेदने ॥

लोष्टभेदन । पु० कोटिशे । लोष्टभङ्गसाधनकाष्ठे ॥

लोष्टमर्द्दी । त्रि० लेष्टुमर्द्दनशीले ॥

लोष्टु । पुं० लोष्टे । दृढमृत्पिण्डे ॥

लोह । पु० सर्व्वलोहितच्छागे ॥ पु० न० लौहे । लोहविकारे ॥ जोङ्गके । अगुरुणि ॥ सर्व्वतैजसे रुधिरे ॥ कृष्णायसे । दृषत्सारे । शस्त्रके । कालायसे । लोहा० द्र० भा० प्र० । अथलोहस्योत्पत्त्यादयो यथा । पुरालोमिनदैत्यानां निहतानां सुरैर्युधि । उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च ॥ लोहोऽस्त्रौ शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी । गुरुतादृढतोत्क्लेदकश्मलदाहकारिता ॥ अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु । लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु ॥ रूक्षं वयस्यं चक्षुष्यं लेखनं चानिलं जयेत् । कफं पित्तं गरं शूलं शोथार्शः प्लीहपाण्डुता ॥ मेदोमेहक्रिमीन् कुष्ठं तत्किट्टं तद्वदेव हि । षण्ढत्वकुष्ठामयमृत्युदं भवेद्धृद्रोगशूलौ कुरुतेऽश्मरीञ्च । नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलोहम् ॥ जीर्णहारि मदकारि चायसं सर्व्वदशुद्धिमदसत्त्वात ध्रुवम् ॥ पाटवं न तनुते शरीरके दारुणां हृदिरुजाञ्च यच्छति ॥ अथलोहदोषप्रशान्तये शोधनमभिधीयते । पत्तलीकृतपत्राणि लोहस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं लोहस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ अथास्य मारणविधिः । शुद्धलोहभवं चूर्णं पातालगरुडीरसैः । मर्द्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ॥ पुटत्रयं कुमार्य्याश्च कुठारच्छिन्निकारसैः । पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥ अन्यच्च । त्रिपाद्द्वादशभागेन दरदं तीक्ष्णचूर्णतः । मर्द्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥ एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात् । सत्यानुभूतो योगीन्द्रैः क्रमोऽयं लोहमारणे ॥ कथ्यते रामराजेन कौतूहलधियाधुना । सूतकाद्द्विगुणं गन्धं दत्वा कुर्य्याच्च कज्जलीम् । द्वयोः समं लोहचूर्णं मर्द्दयेत्कन्यकाद्रवैः ॥ यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके । घर्मे धृत्वा रुवूकस्य पत्रैराच्छादयेद्बुधः ॥ यामद्वयाद्भवेदुष्णा धान्यराशौ न्यसेत्ततः । दत्वोपरि शरावञ्च त्रिदिनान्ते समुद्धरेत् ॥

पिष्टाचगालयेद्दस्मादेव वारितरं भवेत् । दाडिमच्छदलं पिष्टातच्चतुर्गुणवारिणा ॥ तद्रसेनायसच्चूर्णं सन्नीयात्प्लावयेदपि आतपेशोषयेत्तत्तत्पुटे देव पुन पुन ॥ एकविंशतिरात्रैस्तन्म्रियतेनात्रसंशय एव सर्वाणिलोहानिस्वर्णादीन्यपिमारयेत् । एवंमारितस्यलोहस्य मात्रा । गुञ्जामेकांसमारभ्ययावत् स्युर्नववल्लिका । तावल्लोह समश्नीयाद्यथादोषानल नर . ॥ कूष्माण्ड तिलतैलञ्चमाषान्न राजिकां तथा । मद्यमम्लरसञ्चैवत्यजेल्लोहसेवक ॥ लुम्पति । लुम्पतीति । घञ् ॥ लोहितवा । अच् ॥ यद्वा । रोहति । रुह० । अच् । रलयोरैक्यम् ॥ रुह्यतेवा । घञ् । कपिलकादि ॥ लूयतेऽनेनवा । लूञ् । बाहुलकात् हः । यदाहुश्चात्रसि पार्श्वपक्वमश्नातिवै द्विज । सपापिष्ठोपिभुङ्क्तेऽन्नं रौरवेपरिपच्यते इतिमत्स्यसूक्तस्मृ्लोहपात्रेभक्षणनिषेध ॥ ब्रह्मवैवर्तेपि । यथा । अथ . पात्रेपय : पानगव्य सिद्धान्नमेवच । भृष्टादिकमधु गुड नारिकेलोदकं तथा । फलंमूल चयत्किञ्चिदभक्ष्य मुनिरब्रवीदिति ॥

लोहकण्टक . । पुं० मदनद्रुमे ॥ लोहमयकण्टके ॥

लोहकान्त । पुं० अयस्कान्ते ॥ लोह कान्तोऽस्य ॥

लोहकार । पुं० लोहकारके । व्योकारे ॥ लोहं करोति । डुकृञ् । कर्मण्यण् ॥

लोहकारक . । पुं० लोहकृति । व्योकारे । लोहार० इ० भा० । कर्मकारे ॥ सङ्करजातिरय यथा । गोपालात्तन्तुवाय्यावै कर्मकारोऽथ भूत्सुत । ब्र० प० पु० ॥

लोहकिट्टम् । न० लोहमले । किट्टे ॥ यल्लोह यद्गुण प्रोक्त तत्किट्टमपि तद्गुणम् ॥ लोहस्यकिट्टम् ॥

लोहचूर्णम् । न० लोहकिट्टे ॥

लोहजम् । न० कांस्ये ॥ लोहकिट्टे ॥

लोहद्रावी । पुं० टङ्कणे ॥

लोहधमनी । स्त्री० भस्त्रायाम् ॥

लोहनाल । पुं० नाराचे ॥

लोहपृष्ठ । पुं० कङ्कपक्षिणि ॥ लोहमिवपृष्ठमस्य ॥

लोहप्रतिमा । स्त्री० लोहमय्याप्रतिमायाम् । सूर्म्याम् ॥

लोहमय ' । त्रि० लोहात्मके ॥

लोहमारक । पुं० शालिचशाके ॥

लोहराजकम् । न० कलधौते । रूप्ये ॥

लोहल . । पुं० शृङ्खलाधार्ये ॥ त्रि०

अत्यन्ताशयिनि ॥ लोहम लोह
लुहकल्पनादाविति स्वामी । लुह
औगार्द्धे इति वोपदेव । भावे घञ्
। लोहं लाति । आतोनुपेति कः ॥
यद्वा । रोहयतेर्बाहुलकादलच् ।
कपिलकादित्वाल्लत्व ॥

लोहवरम् । न० स्वर्णे ॥

लोहशिङ्घाणिका । स्त्री० लोहमले ।
मण्डूरे ॥

लोहश्लेषण: । पुं० टङ्कणे ॥

लोहसङ्करम् । न० वर्त्तलोहे ॥

लोहसार: । पुं० साराख्यलोहे ॥ यथा
भ्रष्टिखराङ्गारान्यङ्गान्यग्निनलेपि
ते । लोहस्युर्यच सूक्ष्माणि तत्सारम
भिधीयते ॥ लोहसाराद्भयहन्यात्
ग्रहणीमतिसारकम् । अर्शसर्वाङ्ग
जवातशूलश्वपरिणामजम् । छर्दि
स्पीनसपित्तश्वासमाशुव्यपोहति ॥

लोहाख्यम् । न० अगुरुणि ॥

लोहाभिसार: । पुं० भूपानानीराज
नाविधौ । महानवम्याप्राक्प्रख्या
नाच्छस्त्रवाहनादिपूजनविधौ । लो
हाभिहारे ॥ लोहस्त्रस्त्रस्य अभित:
सरणम् । सृगतौ । भावे घञ् ॥
लोहाभिसारोऽस्त्रभृताराज्ञानीरा-
जनाविधि: ॥

लोहाभिहार: । पुं० लोहाभिसारे ।
लोहस्त्रस्त्रस्य अभितोहरणम् । हृ
ञोभावे घञ् । लोहाभिहारदृष्यु
स्त्रो विधिर्नीराजनोत्तर ॥

लोहार्गल । पु० तीर्थविशेषे ॥ न०
स्त्री० लोहकीलके ॥

लोहि । न० श्वेतटङ्कणे ॥

लोहिका । स्त्री० खरसीन्दे । खर
पार्श्वे । लौहपार्श्वे ॥

लोहित: । पु० नदविशेषे ॥ भौमे
। मङ्गले ॥ रक्तवर्णे ॥ रोहित म
त्स्ये ॥ मृगविशेषे ॥ सर्पे ॥ सुरा
न्तरे ॥ मसूरे ॥ रक्तशालौ ॥ रक्त-
शालौ ॥ बलभेदे ॥ न० रक्तगोशीर्षे
कुङ्कुमे ॥ रक्तचन्दने ॥ पद्मरागेपतगे
॥ हरिचन्दने ॥ तृणकुङ्कुमे ॥ रु
धिरे ॥ युद्धे ॥ त्रि० रक्तवर्णान्वि
ते ॥ रोहति० रुह्यतेवा । रुह० ।
रुहेरश्चलोवेतीतन ॥

लोहितक: । पुं० पद्मरागमणौ ॥
भौमग्रहे ॥ लोहितएवमणि । लो
हितान्मणाविति कन ॥ न० रीतौ ॥

लोहितचन्दनम् । न० कुङ्कुमे ॥ लो
हितञ्चतच्चन्दनञ्च ॥ रक्तचन्दने ॥

लोहितपुष्प )
लोहितपुष्पक: ) पुं० दाडिमवृक्षे ॥

लोहितमृत्तिका । स्त्री० गैरिके रक्तवर्ण
मृत्तिकायाम् ॥ लोहिताचासौ
मृत्तिकाच ॥

लोहिता । स्त्री० रागादिरक्तायाम् ॥
वराहक्रान्तायाम् ॥ रक्तपुनर्नव
याम् ॥ वर्णादनुदात्तादितिपाच

के।ङीबभावस्तकारस्यनकारादेश स्वन ।

लोहिताक्ष । पुं॰ विष्णौ ॥ प्रति ष्टायामग्निभेदे ॥ कोकिले ॥ त्रि॰ रक्तवर्णचक्षुर्युक्ते ॥ लोहितेअक्षि णोयस्य । बहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच् ॥

लोहिताङ्ग । पु॰ कुजे ॥ कम्पिल्ल के ॥ लोहितान्यङ्गान्यस्य ॥

लोहितानन । पु॰ नकुले ॥ त्रि॰ रक्तवर्णमुखे ॥

लोहिताय । न॰ ताम्रे ॥

लोहितायसम् । न॰ रक्तवर्णलोहजा तौ ॥

लोहितिका । स्त्री॰ लोहितायाम् ॥ लोहितैव । लोहिताम्लयाविल्यच •लोहिताल्लिङ्गबाधनंवेतिकन ॥

लोहित्य । पु॰ अब्धौ ॥ नदे ॥ व्रीहौ ।

लोहिनिका । स्त्री॰ लोहिन्याम् ॥ लोहिन्येव । लोहिताल्लिङ्गबाधनंवे तिकन् ॥

लोहिनी । स्त्री॰ लोहितायाम् ॥ वर्णा दनुदात्तादितिङीप्॰ तकारस्यच नकारादेश ॥ गुञ्जायाम् ॥

लोहोत्तमम् । न॰ स्वर्णे काञ्चने ॥ लोहेषुसर्वतैजसेषुउत्तमम् ॥

लौकायतिक । पुं॰ चार्वाकदर्शना भिज्ञे ॥ लोकायतमधीतेवेदवा । उक्थादित्वात्॰ क्रतूक्थादिसूत्रा न्ताट्ठक् ॥ तार्किकभेदे ॥

लौकिक । त्रि॰ अप्राप्तशास्त्रपरिशी लनजन्यबुद्धिप्रकर्षे । प्रतिपाद्ये ॥ लोकप्रसिद्धे ॥ लोकव्यवहारमात्र परे ॥ लोकानुरञ्जनमेवतत्वमिति लौकिकानाभ्रान्तिमात्रमेव । लोक स्यभिन्नरुचित्वात्॰ तदनुरञ्जनस्ये श्वरेणापिकर्त्तुमशक्यत्वात् ॥ यथा हु । विद्यतेनखलुकश्चिदुपाय सर्वलोकपरितोषकरोय । सर्व थात्महितमाचरणीय किं करिष्यति जनोबहुजल्पइति ॥ लोकेविदि त । अर्थशास्त्रादिज्ञाने ॥ लो कसर्वलोकाट्ठञ् ॥ भवार्थेत्वध्या त्मादित्वाट्ठञ् ॥ स्मृत्युपनिबद्धे धर्मादौ । न॰ जागरिते ॥

लौकिकाग्नि । पु॰ असंस्कृताग्नौ ॥

लौल्यम् । न॰ चापल्ये ।लोलस्यभा व ष्यञ ॥

लौह । पुं॰ न॰ लोहे ॥ लोहएव । प्रज्ञाद्यण् ॥ लोहस्यविकार । रजतादित्वादञ् ॥

लौहदारक । पु॰ नरकभेदे ॥

लौहजम् । न॰ मण्डूरे ॥

लौहभाण्ड । पुं॰ अश्मभाले । हि मामृजिस्ता॰ इतिसाधारणभाषा प्रसिद्धे ॥ न॰ लोहनिर्मितभा ण्डे ॥

लौहभू । स्त्री० कठिन्याम् ॥
लौहशङ्कु । पु० नरकविशेषे ॥ लौहनिर्मितकीलके ॥
लौहा । ) स्त्री० कठिन्याम् ॥
लौहात्मा । ) स्त्री०
लौहित । पु० लोहिते ॥ त्रि० लोहितसम्बन्धिनि ॥
लौहितीक । पु० स्फटिके ॥ त्रि० लोहितवर्णतुल्ये ॥ लोहितद्रव । कार्कलोहिताट्टीकक् ॥
लौहित्य । पु० नदविशेषे । ब्रह्मपुत्र इतिप्रसिद्धे ॥ अब्धौ । सागरे ॥ व्रीहौ ॥ न० लोहितत्वे । रक्तिमनि ॥ तीर्थविशेषे ॥ ✝✱✝

लकारस्समाप्तः

•|—|•

---

वकारस्य प्रारभः

व० । अ० इवार्थे । औपम्ये ॥ पादपूरणे ॥
व । पुं० वकारे ॥ सान्त्वने ॥ वाते ॥ वरुणे ॥ वातिवानवा ॥ वागतिगन्धनयोः । ड ॥ वाहौ ॥ मन्थे ॥ कल्याणे ॥ बलवति ॥ शार्दूले ॥ वस्त्रे ॥ शालूके ॥ वन्दने ॥ न० प्रचेतसि ॥ वरुणबीजे ॥
वंश । पुं० पितृपितामहाद्युत्पादकप्रबन्धे । सन्ततौ । गोत्रे । जनने । कुले । जन्मनैकलक्षणे । सन्ताने ॥ शिष्याचार्यसम्बन्धाविच्छेदे ॥ त्वक्सारे । कर्मारे । त्वचिसारे । तृणध्वजे । बास० इ० भा० प्र० ॥ अस्य गुणा यथा । वंश सरोहिम स्वादु कषायो बस्तिशोधनः । छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् ॥ तत्करीरः कटुः पाकेरसेरूक्षो गुरुः सरः । कषायः कफकृत्स्वादुर्विदाही वातपित्तलः ॥ तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः । वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः ॥ पृष्ठावयवे ॥ वर्गे । सङ्घे ॥ वाद्यविशेषे । वसी० वांसी० इ० भा० ॥ इक्षुविशेषे । वंशके ॥ सालवृक्षे ॥ वम्रति० वम्यते वा । टू वम उद्गिरणे । बृहन्नमित्य शक्० इति तुन् । उक्तसूत्रस्थोज्ज्वलदत्तादिसूत्रवृत्तिप्रदर्शनात्० अनुनासिकस्य क्विझलोः क्ङिति दीर्घप्रसङ्गाच्च ॥ वनति० वन्यते वा । वनशब्दे० वनसम्भक्तौ वा । बाहुलकात्० श ॥ उच्यते० वश्चिवो । वशकान्तौ । घञ्० अच् वा । सङ्ख्याव शेनेतिनिर्देशान्नुम् । आच्छ्रीत्यनुमितियोगविभागाद्वा ॥
वंशक पु० इक्षुविशेषे । वंशोखा० इ० देशभा० प्र० । वाशा० सोमसाडा० इ० च० गौ० दे० भा० प्र० । दीर्घ

पोर सुकठिन सच्चारोवंशक स्मृत ॥ वंशकस्तूनभिष्यन्दीलघु दोषत्रयापह ॥ वंशद्रव । इक्षुविशे तिक्ततावितिकन ॥ वाग्भटामा- च०इ०गो०दे०भा०प्र०मल्ले ॥ न० अगुरुणि ॥

वंशकठिन । पु० देशविशेषे ॥ वंशा वैषाञ्च कठिनायस्मिन स ॥

वंशकफम् । न० इन्द्रतूले । वृक्षसूच के । ग्रीष्महासे । बुढियाकासूत० इ०भा०प्र० ॥

वंशकर्पूररोचना । स्त्री० वंशरोचना याम् ॥

वंशक्षीरी । स्त्री० वंशरोचनायाम् ॥ वंशात्क्षीरमस्या । गौरादि ॥

वंशगुल्म । पु० तीर्थविशेषे ॥

वंशज । पुं० वेणुयवे । वंशबीजे ॥ त्रि० वंश्ये । सद्वंशजाते ॥ बीज्ये ॥ वंशेजात । जनी० । ड ॥

वंशजा । स्त्री० वंशरोचनायाम् ॥ वंशात् जायते । जनी० । पञ्चम्या मितिड ॥

वंशतण्डुल । ) पु० वैणुयवे । वंशधान्यम् । ) न० वंशयवे ॥

वंशनालिका । स्त्री० वंशीवाद्ये ॥

वंशनेत्रम् । न० इक्षुमूले ॥

वंशपत्रः । पु० नले ॥ न० वंशपत्रे ॥

वंशपत्रक । पु० श्वेतेक्षौ ॥ वाग्भटामाच०इ०गो०टे०भा०प्र०सु द्रमल्ले ॥ नले ॥ न० हरिताले ॥

वंशपत्रपतितम् । न० अत्यष्टिच्छन्द १७ प्रभेदे ॥ यथा । दिङ्मुनिय शपत्रपतितभरनभनलगै ॥ यथा । नूतनवंशपत्रपतितरजनिजल लव०पद्मसुकुन्दमौक्तिकमिवोत्त- ममरकतगम् । एषचतचकोरनिकर प्रपिबतिमुदिता०कान्तमवेत्य- चन्द्रकिरणैरमृतकणमिव ॥

वंशपत्री । स्त्री० वेणुपत्र्याम् । हिङ्गु- पर्णाम ॥ हिङ्गुपत्रीगुणाविज्ञैर्वं शपत्रीचकीर्त्तिता ॥ नाडीहिङ्गुनि ॥ तृणविशेषे । वंशदलाया- म ॥ अस्यागुणा । सुमधुरत्वशि शिरत्वपित्तरक्तदोषनाशित्वरुच्यत्वा नि०पशूनादुग्धदायित्वञ्चेतिराज निर्घण्ट ॥

वंशपीत । पुं० कणगुग्गुलौ ॥

वंशपुष्पा । स्त्री० सहदेवीलतायाम् ॥

वंशपूरकम् । न० इक्षुमूले ॥

वंशमूलकम् । न० तीर्थविशेषे ॥

वंशयव । पु० वंशधान्ये ॥ यवाव- शभवारूक्षा कषाया कटुपा- किन । बद्धमूत्रा० कफघ्नाश्चवा- तपित्तकरा० सरा ॥

वंशरोचना । स्त्री० त्वक्क्षीर्याम् वे

शाव्याम् । श्वेतायाम् ॥ गुणाय-था । वशजाब्रूणोत्रृष्याबल्याम्वा द्दीचशीतला । तृष्णाकासज्वरश्वासक्षयपित्तास्रकामला । हरेत्कुष्ठत्रणपाण्डुकषायावातकृच्छ्रजित् ॥ रोचते । रुच० । नन्द्यादि । वशरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनायाम् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्थविले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥ यथा । पुरोजकार . परतस्तसन्नकौगणौजकारोरगणास्तत . परम् । निवेशितस्थेयशवन्तभूपतेर्ब्रवीतिवशस्थमदस्तदाफणी ॥ जतौतु वंशस्थमुदीरितंजराविति चास्यलक्षणम् ॥ त्रि० वंशस्थिते ॥

वंशस्थविलम् । न० जगति १२ प्रभेदे । वंशस्थेवृत्ते ॥ यथा । वदन्ति वंशस्थविलजतौजरौ । यथा । विलासवंशस्थविलमुखानिलैः प्रपूर्यंय : पञ्चमरागमुद्गिरम् । व्रजाङ्गनानामपिगानशालिनाजहारमान सहरि : पुनातुन : ॥

वंशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुर । पुं० करीरे । वंशाग्रे । यवफलाङ्कुरे ॥

वंशानुचरितम् । न० वंशचरितवर्णने ॥

वंशिकम् । न० अगुरुणि ॥ वंशोस्त्यत्र । अतइनिठनाविति ठन् ॥

वंशिका । स्त्री० वंश्याम वीणी ॥ अगुरिणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी० हृ०भा० ॥ कर्षचतुष्टये ॥

वंशीधर । पु० श्रीकृष्णे ॥ धरतीति धर । वंश्याधर ॥ त्रि०वंश्याधारके ॥

वंश्य । त्रि० सद्वंशजाते । कुल्ये । बौज्ये ॥ वंशेभव . । दिगादित्वाद्यत् ॥

वंहिष्ठ : । त्रि० अत्यन्तबहुले ॥ अयमेषामतिशयेनबहुल । अतिशायनेतमबिष्ठनाविती ष्ठन् ॥ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणाप्रस्थस्फवर्वंहिगर्वर्षित्रप्द्राघिवृन्दाइतिवंह्यादेशेनसाधु ॥

वंहीयान् । त्रि० बहुलतरे ॥ अयमनयोरतिशयेनबहुल . । द्विवचन विभज्योपपदेतरबीयसुनाविती यसुनि प्रियस्थिरेत्यादिनावंह्यादेश . ॥

वक । पु० बकार्थेषु ॥ यमल्यविशेषे ॥ यथा । जलकच्छापाताळदोलाभूधरबालुक : । बकाद्यायन्त्रभेदास्युर्वैद्याम्बाद्याश्चमूषिका ॥ दीर्घका-

शठकाचकुष्पागिलयेत्स्वल्पभाण्ड कम् । तिर्यक्कृत्वापचेच्चुल्यांवक्रयन्त्रमिदंस्मृतम् ॥ असुरविशेषे ॥

वकवृत्ति । पुं॰ वकवृत्तौ ॥ तल्लक्षणं यथा । अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठोमिथ्याविनीतश्चवकवृत्तिरुदाहृतः ॥

वकुल । पुं॰ वकुले ॥ न॰ अस्यफले ॥ अस्यगुणाः । वकुलं मधुरं ग्राहिदन्तस्थैर्यकरं परम् ॥ पुष्पगुणास्तु । पक्वंकषायंमधुरं शीतं पित्तकफास्रनुत् । तद्वद्वकुलपुन्नागकह्लारोत्पलपाटलम् ॥

वक्तव्य । त्रि॰ कुत्सिते । विहितकर्मत्यागाल्लोकविगर्हिते ॥ हीने वचनार्हे । अधीने ॥ वचनार्थः । वचपरिभाषणे॰ ब्रूञ् आदेशोवा तव्य ॥ न॰ वचने ॥

वक्ता । त्रि॰ पण्डिते ॥ वदे । वदावदे । योहिवक्तुजानातितस्मिन् औचित्याद्वहुविशिष्टं योवदतितच्चेत्यर्थः ॥ सुष्ठुवक्तरि ॥ वहुभाषिणि । वाचोयुक्तिपटौ । वाग्मिनि । वावदूके ॥ वक्ति । वचपरिभाषणे । तृन् ॥

वक्त्रम् । न॰ आस्ये । मुखे ॥ यथा । सौम्यत्वसहितंवक्त्रमंमलंयस्यदेहिनः । महाराजाभवेन्नित्य विपरीतेतुनिर्धनइति ॥ उच्यतेऽनेन । वच॰ । ब्रूञोवचिर्वा । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्र ॥ वस्त्रभेदे तगरमूले । विषमवृत्तान्तरे ॥ तस्य लक्षणादियथा । भवत्यर्द्धसमं वक्त्रं विषमस्वकदाचन । तयोर्द्वयोःकृपालोवच्छन्दस्तदधुनोच्यते ॥ वक्त्रयुग्म्यामगौस्यातामब्धेर्योऽनुष्टुभिख्यातम् ॥ अचिरात्वल्लोकं पूरयितव्यं ॥ वक्त्राम्भोजसदास्मेरंचचञ्चुर्नीलोत्पलफुल्लम् । जलवीनामुरारातेस्तेतोभङ्गजहारोच्चैः ॥

वक्त्रखुर । पुं॰ दन्ते ॥

वक्त्रज । पुं॰ ब्राह्मणे ॥ त्रि॰ मुखजाते ॥

वक्त्रतालम् । न॰ मुखवाद्ये ॥

वक्त्रपट्ट । पुं॰ अश्वान्नभोजनपात्रे । तोवडा॰ इ॰ भा॰ प्र॰ ॥

वक्त्रभेदी । पुं॰ तिक्तरसे ॥ त्रि॰ सुखभेदके ॥

वक्त्रवास । पुं॰ नागरङ्ग ॥ मुखगन्धे ॥

वक्त्रशोधनम् । न॰ भव्ये ॥ मुखशुद्धिकरणे ॥

वक्त्रशोधी । पुं॰ जम्बीरे ॥ त्रि॰ आस्यशोधके ॥

वक्त्रासव । पुं॰ अधरमधुनि ॥

वक्र । पुं॰ शनैश्चरे ॥ मङ्गलग्रहे ॥ रुद्रे ॥ त्रिपुरासुरे ॥ पर्पटे ॥ वक्र

गतिविशिष्टग्रहे ॥ न० सरिद्वक्रे पुट
भेदे ॥ त्रि० वक्रजी । वराले । कु
टिले । क्रूरे ॥ वक्रतितस्मा । वक्रग
तौ । स्फायितञ्चीतिरक् । न्यङ्क्वा
दित्वात्कुत्वम् ।

वक्रकण्ट । पुं० बदरवृक्षे ॥

वक्रकण्टक । पुं० खदिरवृक्षे ॥

वक्रखड्ग । पुं० करवाले ।

वक्रग्रीव । पुं० उष्ट्रे ॥

वक्रचञ्चु । पुं० शुके । कीरे ॥

वक्रतालम् । न० ) मुखवाद्ये ॥
वक्रताली । स्त्री० )

वक्रतुण्ड । पुं० गणेशे ॥ शुकख
गे ॥

वक्रदंष्ट्र । पुं० शूकरे ॥

वक्रनक्र । त्रि० खले । पिशुने ॥
पुं० शुकखगे ।

वक्रनालम् । न० मुखवाद्ये ॥

वक्रनासिक । पुं० पेचके । त्रि०
कुटिलनासायुक्ते ॥

वक्रपट्ट । पुं० तलसारके । तङ्ग०
कु० भा० प्र० ॥

वक्रपुच्छ । पुं० कुक्कुरे ॥

वक्रपुष्प । पुं० पलाशद्रुमे ॥ वक
वृक्षे ॥

वक्रवालधिः । पुं० शुनि ॥

वक्रभणितम् । न० वक्रोक्तौ । कुटि
लवाक्ये ॥

वक्रमः । पुं० पलायने

वक्रलाङ्गूल । पुं० कुक्कुरे ॥

वक्रवक्त्र । पुं० शूकरे ॥

वक्रशल्या । स्त्री० कुटुम्बिनीक्षुपे ।

वक्रशृङ्गी । स्त्री० गोविशेषे ॥

वक्रा । स्त्री० शृङ्गाम् । अजशृङ्ग्या
म् ॥

वक्राग्रम् । न० कवाटवक्रवृक्षे ॥

वक्राङ्ग । पुं० हंसे । न० कुटिलाव
यवे ॥

वक्री । पुं० बुद्धे ॥ त्रि० वक्रगतिवि
शिष्टे ॥

वक्रोक्ति । स्त्री० काकूक्तौ ॥ शब्दा
लङ्कारप्रभेदे । यथा । यदुक्तमन्य
थावाक्यमन्यथान्येन योज्यते । श्ले
षेण काक्वा वा ज्ञेया सा वक्रोक्तिस्त
था द्विधा ॥ तथेति श्लेषवक्रोक्तिः
काकुवक्रोक्तिश्च ॥ पदभङ्गश्लेषेण यथा
। नारीणामनुकूलमाचरसि चेज्जाना
सि कश्चेतनो वामानां प्रियमादधा
सि हितकृन्नैवाबलानां भवान् ।
युक्ताकि हितकर्त्तनं ननु बलाभावप्र
सिद्धात्मनः सामर्थ्यं भवतः पुर
न्दरमतच्छेदं विधातुं कुतः ॥ अ
भङ्गश्लेषेण यथा । अहो केनेदृशी बु
द्धिर्दारुणा तव निर्मिता । त्रिगुणा
श्रूयते बुद्धिर्न तु दारुमयी क्वचित्
॥ काक्वा यथा । गुरुजनपरतन्त्रतया
दूरतरं देशमुद्यतो गन्तुम् । अलिकु
लकोकिललतितं नैष्यति सखि सुरभि

समयेसौ ॥ कुटिलोक्तौ ॥ यथा । वाग्देवीव्याकरणविनैवविदुषाधृष्ट प्रविष्ट सभाजल्पन्नल्पमति स्म यात्पटुवटुभ्रूभङ्गवक्रोक्तिभि । ह्रीत सन्नुपहासमेतिगणकोगोला नभिज्ञस्तथाज्योतिर्वित्सदसिप्रग ल्भगणकप्रश्नप्रपञ्चोक्तिभि ॥

वक्रोष्ठिका । स्त्री० स्मिते । ग्रदृष्टर दहासे । ईषद्धासे ॥

वक्षणम् । पुं० वक्षसि ॥

वक्षा । पुं० अनडुहि ॥ वहति । वह० । वहिहाधाञ्भ्यश्छन्दसीत्य सुन्० प्रत्ययस्यचसुट्इतिवृत्तिक्त त् ॥

वक्ष । न० अवयवविशेषे । हृदयादु परिकण्ठादधोभागे । क्रोडे । भु जान्तरे । उरसि । वत्से ॥ अस्यशु भाशुभलक्षणयथा । अन्नवान्सम वक्षा स्यात्पीनैर्वक्षोभिरूर्जित । वक्षोभिर्विषमैर्निस्व शस्त्रेण निधनस्तथेतिगारुडे ६६ ॥ अथ वान्समवक्षा स्यात्पीनै शूरा धनान्विता । अल्पैश्वविकलादी नाविषमै शस्त्रमृत्यवइतिसमुद्र ॥ वक्षति । वक्षसङ्घाते । असुन् ॥ उच्यतेऽनेनवा । वच० । पचिवचि भ्यासुट्च्चत्यसुन् ॥

वक्षोज । पु० ) कुचे । स्तने ॥
वक्षोरुहम् । न० )

वगला । स्त्री० देवीविशेषे ॥ यथा । वैद्यनाथेतुवगलास्थान सर्वोत्तम स तमिति ॥

वगलामुखी । स्त्री० महाविद्याविशे षे । पीताम्बरायाम् । वगलायाम् ॥

वगाह । पु० अवगाहे ॥ भागुरीम्ह याल्लोप ॥

वग्नु । पु० वक्तरि ॥ वक्ति । वच० । वर्च गन्धे तिनु ॥

वङ्क । पुं० पर्याणभागे । पर्याणको टौ ॥ नदीपार्श्वे ॥ भङ्गुरे । व क्रे । इतिमेदिनिकर ॥

वङ्कसेन । पुं० अगस्तिद्रुमे ॥

वङ्का । स्त्री० वल्गाग्रभागे ॥

वङ्किल । पुं० कण्टके । द्रुमनखे० इ० वि० शेज ॥

वङ्क्य । वि० वक्रे ॥

वङ्क्रि । पु० न० वाद्यप्रभेदे ॥ वङ्कते । वक्रिकौटिल्ये । वङ्क्याद यश्चेतिक्रिन्नन्ता साधु ॥ गृहदा रुणि ॥ पार्श्वाऽस्थनि । पशुके ॥

वङ्क्रिम । वि० कुटिले ॥

वङ्क्षण । पुं० वस्त्यधजरुमेढ्राणा मन्तरालसन्धौ ॥ वाङ्क्षति० वाङ् क्ष्यतेवा । वाक्षिकाङ्क्षायाम् । ल्युट्वाहुलकाद्धातोर्ह्रस्व ॥ वङ्क्षतेवङ्क्षणइतिस्वामी ॥ यद्वा । वक्षति । वक्षरोषसङ्घातो । ल्युट् । आच्छीनद्योर्नुमित्यत्र०

नुमितियोगविभागाग्नुम् ॥
वङ्क्षु । स्त्री० गङ्गास्रोतोविशेषे । यथा । तस्या स्रोतसिसीताचवङ्क्षुर्भद्राचकीर्त्तितेतिशब्दमाला ॥ सातत्पर्ततादिक्षुचतुर्द्धाप्रतिपद्यते । सीताचालकनन्दाचवङ्क्षुर्भद्राचवैक्रमात् ॥ सागङ्गा ॥ वक्षुश्चपश्चिमगिरीनतीत्यमकाल तत ' । पश्चिम केतुमालाख्य वर्षमन्वेतिसार्णवम ॥
वङ्ग । पु० कार्पासे ॥ वृन्ताके ॥ चन्द्रवंशीयबलिराजपुत्रे ॥ वङ्गा . पु० भूम्नि० • जनपदविशेषे ॥ रत्नाकरसमारभ्यब्रह्मपुत्रान्तगःशिवे । वङ्गदेशोमयाप्रोक्तः सर्वसिद्धिप्रदर्शकः ॥ वङ्गानान्निवासोजनपद वङ्गा । निवासिगोजनपदेलुप् । लुपियुक्तवद्भाव ॥ न० रङ्गे । त्रपुणि । सीसे । नागजीवने । मृदङ्गे । रङ्गे । सिहले । रागकृ०भा०प्र०धातुविशेषे ॥ खुरकमिश्रकचापिद्विविधवङ्गमुच्यते । उत्तमखुरकंतत्र०मिश्रकन्त्वहितमतम् ॥ पथ्याचरकम् ॥ सीसके ॥ वङ्गति । वगिगतौ । पचाद्यच् ॥
वङ्गजम् । न० सिन्दूरे ॥ त्रि० वङ्गदेशजाते ॥
वङ्गन . । पु० वार्त्ताकौ ॥
वङ्गशुल्वजम् । न० कांस्ये ॥

वङ्गसेन ' )
वङ्गसेनक । ) पु० वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्यपुष्पगुणा । वासकस्यचपुष्पाणिवङ्गसेनस्यचैवहि । कटुपाकानितिक्तानिकासक्षयकराणिच ॥
वङ्गला । स्त्री० रागिणीविशेषे ॥
वङ्गारि । पुं० हरिताले ॥
वङ्गाल ' । पु० भैरवरागपुत्रे ॥
वङ्गाली । स्त्री० भैरवरागस्यरागिण्याम् ॥
वच । पु० कीरे । शुकपक्षिणि ॥ वक्ति । वचपरिभाषणे । पचाद्यच् ॥
वचक्नु : । पुं० विप्रे । ब्राह्मणे ॥ ऋषिविशेषे ॥ त्रि०वावदूके ॥ वक्ति । वच० । स्युवचिभ्योन्युजागूजक्नुचइत्यक्नुच् ॥
वचण्डा । स्त्री० वरिण्डार्थे ॥
वचण्डी । स्त्री० शारिकायाम् ॥ वर्त्तौ ॥ शस्त्रप्रभेदे । क्षुरिकायाम् ॥
वचनम् । न० शुण्ठ्याम् । उक्तौ । वाचि । भाषणे ॥ श्रुतिमाचात्सुधातुल्यं सर्वकालसुखावहम् । सत्यसारहितकरवचन श्रेष्ठमीप्सितम् ॥ वचेर्भावेल्युट् उच्यते॰ऽनेनवा ॥ शुण्ठ्याम् ॥ वाचोक्ती ॥
वचनग्राही । त्रि० वचनेस्थिते ॥
वचनीय । त्रि० वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री॰ निन्दायाम् । लोकापवादे ॥ भावेतल् ॥

वचनेस्थित । त्रि॰ विधेये । विनयग्राहिणि । आश्रवे । प्रवृत्तिनिवृत्त्योर्विधातुशक्ये ॥ वचनेतिष्ठति स्म । ष्ठा॰ । गत्यर्थेतिक्तः । तत्पुरुषेकृतीत्यलुक् ॥

वचनोपक्रम । पु॰ वाक्यारम्भे । उपन्यासे ॥

वचर . । पु॰ कुक्कुटे ॥ शठे ।

वचलु : । पु॰ वैरिणि ॥ शत्रौ ॥

वच । न॰ वाक्ये । वाचि । वचने ॥ वच॰ । सर्वधातुभ्योऽसुन्नित्यसुन् ॥

वचसाम्पति । पुं॰ सुरगुरौ । बृहस्पतौ ॥

वचा । स्त्री॰ शारिकायाम् ॥ उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोम्याम् । शतपर्विकायाम् अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥ अपिच । अङ्गिवीपयसाज्येनमासमेकंतुसेविता । वचाकुर्यान्नरप्राज्ञश्रुतिधारणसयुतम् ॥ चन्द्रसूर्यग्रहेपीतपलमेकपयोन्वितम् । वचायास्तत्क्षणंकुर्यान्महाप्रज्ञान्वितनरम् ॥ अथवचाभेदा । पारसीकवचाशुक्लाप्रोक्ताहैमवतीतिसाहैमवत्युदिताद्वत्क्षूलहन्तिविशेषत ॥ अथमहाभरीवचा॰यस्याकुलञ्जन॰इतिभाषायानामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी ॥ अपरासुगन्धास्थूलग्रन्थिर्यंसालोकेमहाभराइतिनाम । स्थूलग्रन्थि . सुगन्धान्यातताहीनगुणास्मृता ॥ द्वीपान्तरवचा ॰ याचोपचीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकट्वीतिक्तोष्णावह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादतनुवेदनाम्व्यपोहतिविशेषणफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।

वचोग्रह : । पु॰ कर्णे ॥

वचोहर . । त्रि॰ दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र । पुं॰ श्रीकृष्णस्यप्रपौत्रे ॥ अनिरुद्धात्सुभद्रायावज्रोनामनृपोभवत् इतिगारुडे १४४ ऽ ध्याय ॥ विष्कम्भादिषुपञ्चदशेयोगे ॥ अत्रजातस्यफल यथा । गुणीगुणज्ञोबलवान्महौजा . सद्रत्नवस्त्रादिपरीक्षक . स्यात् । वज्राभिधानेयदि

चेत्प्रसूतोवज्रोपमस्त्वाद्रिपुका
मिनीनाम्॥ कोकिलाक्षवृक्ष॥
श्वेतकुशे॥ सेहुण्डवृक्षे॥ न०
बालके॥ धात्र्याम्॥ काञ्जिके
॥ वज्रपुष्पे॥ लोहविशेषे॥ सच
बहुविधोयथा। नीलपिण्डम्०
अरुणाभम्० मोरकम्० नागकेश
रम्० तित्तिराङ्गम्० स्वर्णवज्रम्
०शैवालवज्रम्०शोणवज्रम्०रोहि
णीकाङ्कोलम्०ग्रन्थिवज्रकम्० मद
नाख्यमित्यादि। एतेषानामानुरूप
चिह्नमितिपुराणम्॥ अभ्रविशेषे॥
अस्योत्पत्त्यादिर्यथा। पुरावधायवृ
त्रस्यवज्रिणावज्रमुद्धृतम्। विस्फु
लिङ्गास्ततस्तस्यगगनेपरिसर्पिता
॥ तेनिपेतुर्घनध्वानाच्छिखरेषुम
हीभृताम्। तेभ्यएवसमुत्पन्नं तत्
तद्गिरिपुञ्जात्मकम्। तदभ्रंवज्रजा
तत्वादभ्रमभ्रवरोद्भवात्। गगना
त्स्खलितं यस्माद्गगनञ्चततोमत
म्॥ पिनाकं दर्दुरं नागं वज्रञ्चेति
चतुर्विधम्। वज्रन्तुवज्रवत्तिष्ठेत्
तन्नाग्नौविकृतिं व्रजेत्॥ सर्वाभ्रे
षुवरं वज्रंव्याधिवार्द्धक्यमृत्युहृत्।
पु० न० इन्द्रास्त्रविशेषे। ह्रादि
न्याम्। कुलिशे। भिदुरे। पवौ
। शतकोटौ। स्वरौ। शम्बे। दम्भो
लौ। अशनौ। दधीचेरस्थिसम्भवे
ऽस्त्रे। आयुधानांमध्येभगवतोवि



भूतौ॥ वज्रधारणविधिर्यथागुणे
कण्ठाणमिवश्चसनेमिनेश्चापिकोर्त्त
नात्॥ विद्युदग्निभयंनास्तिपठि
तेचगृहोदरे॥ लिखितेचगृहोदरे०
इतिशापाठ॥ जैमिनिश्चसुमन्तु
श्चवैशम्पायनएवच। पुलस्त्य पु
लहश्चैवपञ्चैतेवज्रवारकाः॥ रत्न
विशेषे। अभेद्ये। हीरके। हीरा०
इ० भा० प्र० अस्यविशेषोयथा।
स्वच्छं विद्युत्प्रभं स्निग्धंसौन्दर्यं ल
घुलेखनम्। षडारंतीक्ष्णधारञ्च
सुशाम्पारंश्रियंदिशेत्॥ भस्मा
भंकाकपादञ्चरेखाक्रान्तञ्चवर्तुल
म्। आधारमलिनं बिन्दुसन्त्रासे
स्फुटितंतथा॥ नीलाभंचिपिटं
रूक्षं तद्वज्रंदोषलं त्यजेत्॥ वज्रञ्च
चतुर्वर्णलक्षणंयथा। श्वेतंरक्तोह्नि
तपीतञ्चवज्रंयथाक्रमादुत्तराक्रमा
द्विप्रादित्वमिहाश्रयत्सुमनसः प्र
सतिसत्यतत। स्फीताकीर्त्तिम
नुत्तमाश्रियमिदंदत्तेयथासन्धृत
मत्यानामयथायथंतुकुलिशंपथ्य
हितंजायते॥ तस्यपरीक्षायथा
। यत्पाषाणतलेनिकाषनिकरैर्नोद्
घृष्यतेनिष्ठुरैर्यच्चान्योपलखेखसुद्गर
मुखैर्लेखान्नयात्याहतम्। यच्चा
न्यन्निजलीलयैवदलयेद्वज्रेणवा
भिद्यतेतज्जात्यंकुलिशंवदन्तिकुश
लाः श्लाघ्यं महार्घ्यञ्चतत्॥ तस्य

वर्णगुणोयथा । विप्र सोपिरसाय
नेषुबलवानष्टाङ्गसिद्धिप्रदोराजन्य
स्तुनृणांवलीपलितजिन्मृत्युजयेद
सा । द्रव्याकर्षणसिद्धिदस्तुसुत
रावैश्योऽथशूद्रोभवेत्सर्वव्याधिहर
स्तदेषकथितोवज्रस्यवर्णोगुण ॥ अ
पिच । वज्रस्यनामलक्षणगुणायथा
। श्वेतक पुंसिवज्रोस्त्रीचन्द्रोम
णिवरश्चस । सतुश्वेत स्मृतो
विप्रोलोहित क्षत्रियोमत ॥
पीतोवैश्योऽसित ' शूद्रस्तुवर्णा
त्मकश्चस ' । रसायनेमतोविप्र
सर्वसिद्धिप्रदायक ॥ क्षत्रियोव्या
धिविध्व सीजरामृत्युहर पर ।
वैश्योधनप्रद प्रोक्तस्तथादेहस्यदा
र्ढ्यकृत् ॥ शूद्रोनाशयतिव्याधीन्
वयस्तम्भ करोतिच । पुंस्त्रीनपुंस
कान्येतेलक्षणीयास्सलक्षणै ॥ सु
वृत्ता फलसम्पूर्णास्तेजोयुक्ताबृह
त्तरा । पुरुषास्तेसमाख्यातारेखा
बिन्दुविवर्जिता ॥ रेखाबिन्दु
समायुक्ता षडस्रास्तेस्त्रिय स्मृ
ता । षडस्रा ' षट्कोणा ॥
त्रिकोणाश्चसुदीर्घाश्चतेविज्ञेयान
पुंसका ' ॥ तेषिस्यु पुरुषा '
श्रेष्ठारसबन्धनकारिण । । स्त्रिय
कुर्वन्तिकायस्यकान्तिं स्त्रीणासुख
प्रदा : ॥ नपुंसकास्त्ववीर्या . स्यु
रकामा : सत्ववर्जिता । स्त्रियः



स्त्रीभ्य प्रदातव्या ' क्लीबा क्लीबे
प्रयोजयेत् ॥ सर्वेभ्य सर्वदादेया
पुरुषावीर्यवर्द्धना ॥ अशुद्धकुरु-
तेवज्रं कुष्ठ पार्श्वव्यथातथा । पा
ण्डुताप गुरुत्वञ्चतस्मात्स शोध्य
मारयेत् ॥ शोधनविधिस्तु । कुलत्थ
कोद्रवक्वाथेदोलायन्त्रे विपाचयेत्
। व्याघ्रीकन्दगत वज्रं त्रिदिन तद्वि
शुध्यति ॥ व्याघ्रीकण्टकारिका ।
अन्य शोधनविधिर्यथा । गृहीत्वा
क्षिशुभं वज्रं व्याघ्रीकन्दोदरेक्षिपे
त् । मक्षिषीविष्ठयालिप्त्वाकरी
षाग्नौविपाचयेत् ॥ त्रियामायाचतु
र्याम यामिन्यन्तेश्वमूत्रके । सेचये
त्पाचयेदेव सप्तरात्रे णशुध्यति ॥
अथास्यमारणविधि ॥ हिङ्गुसैन्ध
वस युक्ते क्षिपेत् क्वाथेकुलत्थजे ।
तप्त तप्त पुनर्वज्रं भवेत्भस्मत्रिसप्त
धा ॥ अन्योमारणप्रकारोयथा ।
मेषशृङ्ग भुजङ्गास्थिकूर्मपृष्ठाम्लवेत
सम् । शशदन्तसम पिष्टावज्रीक्षीरे
णगोलकम् ॥ कृत्वातन्मध्यग वज्रं
म्रियतेध्मातमेवहि ॥ मारितस्य
वज्रस्यगुणायथा । आयु पुष्टि ब
ल वीर्य वर्ण सौख्य करोतिच । से
वित सर्वरोगघ्न मृत वज्र नस शय '
॥ शेषरत्नानाशोधनमारणविधि
॥ वज्रवत्सर्वरत्नानिशोधयेन्मारये
त्तथा । शुद्धानांमारितानाञ्च

तेषांस्तृण गुणानपि ॥ मणयोवीर्य्यत
शीतामधुरास्तुवरारसात् । चक्षु
ष्यालेखनाश्चापि सारकाविषहार
का. ॥ धारणात्तेतुमङ्गल्याग्रह
दुष्टिहराअपि ॥ वज्रगणनातमयो
त्पत्तिपरीक्षामूल्यानिचपद्मान्यत्र
युक्तिकल्पतरुप्रभृतिषु ॥ मणिवेध
केरत्नविशेषे । मणिवेधकसूच्याम्
॥ वजतिगच्छतिपर्वतादौ । वजग
तौ । ऋज्रेन्द्रेतिरन् ॥ सगणे०॥८०॥

वज्रकम् । न० वज्रक्षारे ॥ दुग्धपाच
के ॥ वज्रकदुग्धपाचनमिति हारा
वली ॥

वज्रकङ्कट । पुं० हनुमति ॥

वज्रकण्टक । पुं० कोकिलाक्षवृक्षे ॥
स्नुहीवृक्षे ॥

वज्रकण्टकशाल्मली । स्त्री० नरकविशे
षे ॥

वज्रकन्द । पुं० वज्रकर्णे । सकारक
न्द इ० भा० प्र० ॥

वज्रकन्दा । स्त्री० स्नुह्यां ॥

वज्रकपाली । पुं० बुद्धविशेषे ।
हेरुके ॥

वज्रकालिका । स्त्री० मायादेव्याम् ॥

वज्रकूट । पुं० क्षत्रदीपस्याद्रिप्रभेदे ॥

वज्रकेतु । पुं० नरकराजे ॥

वज्रक्षारम् । न० क्षारभेदे । वज्रके
धूमोत्थे । क्षारश्रेष्ठे ॥

वज्रचर्म्मा । पुं० खड्गिनि । गण्डके

वज्रजित् । पुं० गरुडे ॥

वज्रज्वाला । स्त्री० वज्राग्नौ ॥

वज्रटीक । पुं० बुद्धविशेषे । चक्रस
बरे । वज्रकपालिनि ॥

वज्रतुण्ड । पुं० गणेशे ॥ गरुडे
गृध्रे । मशके ॥

वज्रदन्त: । पुं० शूकरे ॥ मूषिके ॥

वज्रदशन: । पुं० मूषिके ॥

वज्रद्रु । पुं० स्नुहीवृक्षे ॥ वज्रना
माद्रु: ॥

वज्रद्रुम: । पुं० स्नुहीवृक्षे ॥

वज्रधर: । पुं० इन्द्रे ॥ जिनविशे
षे ॥

वज्रध्वनि: । पुं० वज्रनिर्घोषे ॥

वज्रनिर्घोष: । पुं० अशनिशब्दे ॥
वज्रस्यनिर्घोष ॥

वज्रनिष्पेष: । पुं० स्फूर्जथौ । व
ज्रनिर्घोषे ॥ निष्पेषणम् । पिषॢ
सञ्चूर्णने । घञ् । इदुदुपधस्येति
ष: ॥ निष्पेषशब्दस्तुल्यशब्दपर:
। सङ्घट्टमात्रपरइत्यन्ये । वज्रस्य
निष्पेष: ॥

वज्रपञ्जर: । पुं० याचायोगान्तरे ॥
यथा । उच्चमूलत्रिकोणे शुभवर्गेषु
शनैश्चर । वज्रपञ्जरयोगोयं हन्ति
क्रूरानरीन्प्रति ॥

वज्रपाणि । पुं० पुरन्दरे । इन्द्रे ॥
वज्रपाणौयस्यस: ॥

वज्रपुष्पम । न० तिलपुष्पे । वज्र

मिवपुष्प ॥
वज्रपुष्पा । स्त्री० शतपुष्पायाम् ॥
वज्रबाहु । पु० इन्द्रे ॥
वज्रमूली । स्त्री० माषपर्ण्याम् ॥
वज्ररथ । पु० क्षत्रिये ॥
वज्ररद । पु० शूकरे ॥
वज्रलेप । पुं० कल्कविशेषे ॥ स चोक्तो वाराह्यां यथा । आमांतिन्दुकमाम कपित्थकं पुष्पमपि च शाल्मल्या । बीजानि मल्लकीनां धन्वन कल्कास्त्वचा चेति ॥ एतैः सलिलद्रोण्या क्वाथयितव्योऽष्टभागशेषश्च । अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥ श्रीवासकरसगुग्गुलुभल्लातककुन्दरूकसर्जरसैः । अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥ ३ ॥ अस्य गुणाना ह । प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु । सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥ ४ ॥ अन्यमप्याह । लाक्षाकुन्दरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि । नागफलनिम्बतिन्दुकमदनफलमधुकमञ्जिष्ठा. ॥ सर्जरससालकानिचेति कल्क कृतो द्वितीयोयम् । वज्राख्य प्रथमगुणैरयमपितेष्वेव कार्येषु ॥६ अपि च । गोमहिषाजविषाणैः खररोम्णामहिषचर्मगव्यैश्च । निम्बकपित्थरसैः सह वज्रतलो नामकल्को न्य ॥ ७ ॥ अपि च अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभाग । मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः ॥ ८ ॥ इति ॥
वज्रवल्ली । स्त्री० अस्थिसंहारलतायाम् ॥
वज्रवाराह । पु० जैमिन्यादौ ॥ यथा । जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च । पुलस्त्य पुलहश्चैव पञ्चैते वज्रवारकाः ॥
वज्रवाराही । स्त्री० मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् ॥
वज्रबीजक । पु० लताकरञ्जे ॥
वज्रवृक्ष । पु० सेहुण्डवृक्षे ॥
वज्रव्यूह । पु० वज्राकाररचनया विधाव्यवस्थितबले ॥
वज्रशल्य । पुं० शल्यकनामजन्तौ ॥
वज्रशृङ्खला । स्त्री० विद्यादेव्याम् ॥
वज्रसार । त्रि० वज्रवत्कठिने ॥
वज्रसूर्य । पुं० बुद्धविशेषे ॥
वज्रा । स्त्री० स्नुह्याम् । गुडूच्याम् । दुर्गायाम् ॥ वज्राङ्कुशकरीदेवीव ज्ञातैषा प्रगीयते इति देवीपुराणम् ॥
वज्राङ्ग । पुं० भुजङ्गमे ॥ त्रि० वज्रतुल्याङ्गयुक्ते ॥
वज्राङ्गी । स्त्री० अस्थिसंहारिणि । हाडजोड़ इ० भा० प्र० ॥ गवेधुकायाम् ॥
वज्राभ । पुं० दुग्धपाषाणे ॥ त्रि०

वज्रसमानदोप्तिमिति ॥
वज्रायुध । पु॰ इन्द्रे ॥
वज्राशनि । पु॰ स्त्री॰ वज्रे ॥
वज्रासनम् । न॰ अष्टाङ्गयोगस्थहती याङ्गविशेषे ॥ यथा । ऊर्वोः पादौक्रमात्न्यस्य कृत्वाप्रत्यङ्मुखाङ्गुली । करौनिदध्यादाख्यातंवज्रासनमनुत्तममिति ॥
वज्रास्थिशृङ्खला । स्त्री॰ कोकिलाक्षवृक्षे ॥
वज्री । पुं॰ देवाधिपे । शक्रे ॥ वज्रोऽस्यास्ति अतइनिठनावितोनि । बुद्धे ॥
वज्री । स्त्री॰ स्नुहीप्रभेदे ॥
वञ्चक । पु॰ जम्बुके । शृगाले । गृहबभ्रौ ॥ त्रि॰ खले । धूर्त्ते । परप्रतारणस्वभावे । सुवर्णादिद्रव्यगृहीत्वाऽपदव्यप्रर्पयेणवञ्चनशीले ॥ वञ्चयति । वञ्चुगतौ । ण्यन्तः । ण्वुल् ॥ वञ्चयतेवा । वञ्चुप्रलम्भने । आकुस्मीय । ण्वुल् ॥
वञ्चथ । पुं॰ धूर्त्ते ॥ वञ्चति । वञ्चु॰ । शीङ्शपीत्यादिनाऽथप्रत्यय ॥ कोकिले ॥ वञ्चनायाम् ॥
वञ्चनम् । न॰ प्रतारणे ॥ शाठ्ये ॥ वञ्चुप्रलम्भने । ल्युट् ॥
वञ्चना । स्त्री॰ प्रतारणायाम् ॥ प्रमादे ॥ यथा । मन्यतेस्मपिबतावितीचने पक्षपातमपिवञ्चनांमनद्र॰ ११ सर्गरघु ॥ ३६ ॥
वञ्चनीय । त्रि॰ प्रतारणीये ॥ वञ्चितुमर्हं । अर्हेकृत्यतृचश्चेतिवञ्चेरनीयर् ॥
वञ्चित । त्रि॰ प्रतारिते । विप्रलब्धे । वञ्चनाविशिष्टे ॥ वञ्च्यतेस्म । वञ्च॰ । ण्यन्त । क्त ॥
वञ्जुल । पु॰ तिनिशे ॥ अशोकतरौ ॥ वानीरे । वेतसे ॥ वञ्च्यते । बाहुलकादुलोजश्चान्तादेशश्च ॥ वञ्जतिवा । वजगतौ । बाहुलकादुलच् नुम्च ॥ दीर्घपर्णे वेतसे ॥ स्थलपद्मे ॥ पक्षिविशेषे ॥
वञ्जुलक । पुं॰ कर्णशालखगे ॥
वञ्जुलद्रुम । पु॰ अशोकतरौ ॥
वञ्जुलप्रिय । पुं॰ वानीरे । वेतसे ॥
वञ्जुला । स्त्री॰ बहुक्षीरायांगवि ॥
वट । पु॰ वृक्षविशेषे । न्यग्रोधे । बहुपदि । पादरोहणे । यक्षावासे । अस्यगुणा॰ । वट॰ शीतोगुरुर्ग्राहीकफपित्तव्रणापहः । वर्ण्योविसर्पदाहघ्नः कषायोयोनिदोषहृदिति ॥ कपर्दे । वराटके ॥ गोले ॥ गुणे । रज्जौ ॥ भक्ष्ये । बडा॰ इ॰ भा॰ प्र॰ ॥ साम्ये ॥ पिशाचविशेषे ॥ पश्चवरकम् ॥ वटति । वटवेष्टने । अच् ॥

वटक । पुं० तोलके ॥ पिष्टकप्रभेदे । बडा० भल्ला० इ० भा० प्र० सिद्धे ॥ तस्य निर्माणादिर्यथा । माषाणां पिष्टिकां युक्तां लवणार्द्रकहिङ्गुभिः । कृत्वा विदध्याद्वटकांस्तांस्तैले सुपचेत्ततः ॥ विशुष्का वटका बल्या हृष्या वीर्यविवर्द्धनाः । वातामयहरा रुच्या विशेषाद्दर्दितापहाः ॥ विबन्धभेदिनः श्लेष्मकारिणोऽत्यग्निपूजिताः । सम्पूर्णं निक्षिपेत्तक्रे भृष्टजीरकहिङ्गु च ॥ लवणं तत्र वटकान् सकलानपि मज्जयेत् । शुक्लास्तत्र वटको बलकृद्रोचनो गुरुः ॥ विबन्धहृद्दिदाही च श्लेष्मल पवनापह । राज्यक्तया तिरोचन्यापाचन्यातास्तु भक्षयेत् ॥ वटति । वट० । क्वुन् ॥

वटपत्र । पुं० बर्बराप्रभेदे । सितार्जके । न० न्यग्रोधपर्णे ॥

वटपत्रा । स्त्री० त्रिपुरमालीपुष्पवृक्षे ।

वटपत्री । स्त्री० मोहिन्याख्यलतायाम् । ऐरावत्याम् ॥ वटपत्रीकषायोष्णा योनिमूत्रगदापहा ॥

वटवासी । पुं० यक्षे ॥ त्रि० वटवृक्षवासकर्त्तरि ॥

वटाकर । पुं० शुल्बे । रज्जौ ॥ आ करोति । पचाद्यच् ॥ वटस्य आकारः ॥

वटारका । स्त्री० रज्जौ ॥

वटावीक । पुं० नामचौरे ।

वटि । स्त्री० उपजिह्विकायाम् ॥ वटिकायाम् ॥ वटति । वट० । सर्वधातुभ्य इन् ॥

वटिका । स्त्री० वट्याम् । मोदके गुटिकायाम् । पिण्डाम् ॥ व्यञ्जनोपयोगिमाषादिद्रव्ये । बडी० इत्युभयोर्भाषायां प्रसिद्धिः । अस्या निर्माणविधिर्यथा । माषाणां पिष्टिकाहिङ्गुलवणार्द्रकसंयुता । तया विरचिता वस्त्रे वटिका साधुशोषिता ॥ तलिता स्तप्ततैले ताथवा सुप्रलेहिता । वटकस्य गुणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ॥ कुष्माण्डकवटी ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥ मुद्गानां वटिका तद्वद्विचिता साधिता तथा । पथ्या रुच्या ततो लघ्वी मुद्गसूपगुणा स्मृतेति ॥

वटितम् । न० शिलापिष्टमांसे ॥ त्रि० शिलापिष्टद्रव्ये ॥

वटी । स्त्री० वटिकायाम् ॥ वृक्षविशेषे । नदीवटे । यज्ञवृक्षे ॥ त्रि० रज्जौ । गुणे ॥ वटति । वट० । अच् ॥ वत्सतेवा ॥ खनो घच् इति घ । गौरादि । ॥ यथा । सिताचतुर्गुणादेया वटीष्विह गुणो गुड इति ॥

वटु । पुं० ब्रह्मचारिणि ॥ ब्राह्मणमाणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

शोनाके ॥ वटति । वट० । यथा
र्थं तिसूत्रेणादु ॥
वटुक । पु० बालके । माणवके ।
भैरवविशेषे ॥
वटुकरणम् । न० उपनयने ॥
वटेश्वरपुरम् । न० तीर्थविशेषे ॥
वठर । पु० मूर्खे ॥ अम्बष्ठे ॥ शब्द
कारे ॥ वक्रे ॥ त्रि० शठे ॥ मन्द
बुद्धि । वच० । वचिमचिभ्यांकिर्च्च
त्यरष्ठौन्तादेशश्च ।
वडभी । स्त्री० सुदनो० गृहचूडा०
हृ० गौ० दे० भा० प्र० । कुडरी
षुच्छादनार्थं दत्तवक्रकाष्ठे । गोपा
नस्याम् ॥ वलते । बलसवर्ण ।
बाहुलकादभच् । गौरादित्वात्
ङीष् । चन्द्रशालायाम् ॥ चन्द्र
शालाचवडभीशालाप्रासादमूर्द्धनी
तिश्रीधरः ॥
वडवा । स्त्री० द्विजयोषिति । आश्व
याम् ॥ अश्वायाम् । घोटकयाम् ।
कुम्भदास्याम् ॥ नारीजात्यन्तरे ॥
बलंसामर्थ्यमतिशयितमस्याः । अ
न्येभ्योपीतिवः । डलयोरैक्यता ।
बलवातिवा । आतोनुपेतिक ॥ ब
लिनवलतिवा । अन्येभ्योपीतिडः ॥
वडवाकृत । पुं० पञ्चदशदासान्तर्ग-
तदासविशेषे ॥ यथा । भक्तदासश्च
विज्ञेयस्तथैववडवाकृतः ॥ वडवा
दासीतल्लोभादङ्गीकृतदास्यइत्य
र्थः ॥
वाडवाग्नि । पु० समुद्राग्नौ । सलि
लेन्धने । वडवाग्नौ ॥
वडवादुग्धम् । न० अश्वाक्षीरे ॥ अस्य
गुणाः ॥ रूक्षोष्णावडवाक्षीरबल्य
शाखानिलापहम् । अम्लपटुलघु
स्वादुसर्वंमेकाशफंतथा ॥
वडवानल । पुं० और्वे । वाडवे ।
वडवाग्नौ ॥ वडवायाअनल ।
आराधाधेयभावएवसम्बन्धस्त्वेनष
ष्ठ्यर्थः । पुराकिलऔर्वेणमुनिना०
ऊर्वोनिजपुत्रमिच्छताबद्धोमथित
तत्रज्वालामयपुरुषोजात०सचस
मुद्रेवडवामुखेऽवस्थापितइतिपौरा
णिका ॥
वडवामुख । पुं० और्वे । अश्व्यग्नौ
वडवानले ॥ न० पाताले ॥
वडवासुतौ । पुं० २ अश्विनीकुमार
योः स्वर्वैद्ययोः ॥
वडवाहृत । पुं० वडवाकृते । दा
सविशेषे ॥ वडवागृहदासीतयाहृ
तस्तल्लोभेनतामुद्वाह्यदासत्वनप्र-
विष्टः ॥
वडा । स्त्री० वटके ॥
वडिशम् । न० मत्स्यधरणार्थंवक्रलौ
हकण्टकविशेषे । मत्स्यवेधने ॥
बलिनोमत्स्यान्श्यति । शोतनू
करणे । आतोनुपेतिकः । डल
योरैक्यता ॥

वडिशी । स्त्री० वडिशे ॥

वड्र । त्रि० बृहति । वडा० वडी० द्र० भा० ॥ वलति । वलसंवरणे सञ्चरणे च । वहुलमन्यत्रापीतिरक् । डलयोरेकत्वस्मरणाद्वस्य ड ॥

वण । पुं० शब्दे ॥

वणिक्पथ । पुं० हट्टे । आपणे ॥ स्थलवणिज्यायाम् ॥ स्थलजलादि नाशाणिज्यमितिकुल्लूकभट्ट ॥

वणिक् । पु० क्रयविक्रयकर्त्तरि । वाणिज्यकारके । वैदेहके । सार्थवाहे । नैगमे । पण्याजीवे । क्रयविक्रयिके ॥ करणान्तरे ॥ स्त्री० वणिज्यायाम् ॥ पणते । पण० । पणे विज्यादेशश्च ॥

वणिज्या । स्त्री० विपणे ॥ न० वणिज । कर्मभावयोः ॥ दूतवणिग्भ्याञ्चेतिय । माधवस्तु० वणिज्या शब्द स्वभावात्स्त्रीलिङ्गोभावएवाचप्रत्ययोनतुकर्मणीत्याह ॥ भाष्ये तु० वाणिकर्मेवनास्ति ॥

वण्ट । पुं० अंशे । भागे । वाण्टा० द्र० भा० ॥ दात्रमुष्टौ । वेण्टा० द्र० भा० ॥ अनूढपुरुषे ॥

वण्टक : । पु० अंशे । भागे ॥ वण्टते । वटिविभाजने । कर्मणिघञ् । स्वार्थेक :

वण्टाल । पुं० युद्धभेदे । शूरयुद्धे ॥ नौकायाम् ॥ खनित्रे ॥

वण्ठ । पु० अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । वाठ० द्र० प० भा० प्र० वण्ठते । वठिएकचर्यायाम् । अच् ।

वण्ठर । पुं० स्थगिकायाम् ॥ रज्जौ कुक्कुरस्यलाङ्गूले ॥ करीरकोषे । ताम्बूलपल्लवे ॥ पयोधरे ॥ वण्ठरच् ॥

वण्ड । पु० अनावृतमेढ्रे । दुश्चर्मणि । त्रि० हस्तादिवर्जिते ॥ छिन्नलाङ्गूले । वाडा० द्र० भा० प्र० ॥ छिन्नहस्ते ॥ वनुते । वनुयाचने । वनतिवा । वनसम्भक्तौ । अमन्ताड्ड ॥

वण्डा । स्त्री० पांशुलायाम् ॥ अजादित्वाट्टाप् ॥

वत् । अ० सादृश्ये ॥ तेनतुल्यमित्यादिभिर्विहितोवतिप्रत्यय । यस्तूपसर्गाद्वात्वर्थइतिविहित , सनग्रह्यते ॥

वत । अ० आमन्त्रणे । सन्तोषे ॥ खेदे । अनुकम्पे ॥ विस्मये ॥ वयतेस्म । वयगतौ । गत्यर्थेतिक्त । नेट यलोप ॥ वन्यतिस्मवा । वनुयाचने । क्त अनुदात्तोपदेशेतिनलोप . ॥

वतंस । पु० कर्णपूरे । कर्णाभरणे ॥ शिरोभूषणे । शेखरे ॥ अवतंसपति० अवतंस्यतेऽनेनवा । तसि ०

गोभिरुजार्थे । पचाद्यच् । इन्शुति वितर्कः । भागुरिमतेनाकारलोपः ॥

वतण्ड । पु॰ मुनिविशेषे ॥

वतोका । स्त्री॰ अवतोकायाम । स्खलितगर्भायाम् ॥

वत्स । पु॰ पुत्रादौ । मत्रा॰ इ॰भा॰ ॥ तर्णके । शक्रत्करी ॥ वदत्यभीप्सा मातरम । वदव्यक्तायांवाचि॰ वदत्यर्थंवा । वृतृवदीतिस ॥ वर्षविशेषे ॥ वर्षे ॥ न॰ । उरसि । वक्षसि ॥

वत्सक । पु॰ कुटजवृक्षे ॥ न॰ पुष्पकासीसे ॥ सज्ञायाकन ॥ अनुकम्पितवत्स अनुकम्पतीवत्स । अनुकम्पायामितिक ॥

वत्सकबीजम् । न॰ इन्द्रयवे ।

वत्सकामा । स्त्री॰ वत्साभिलाषिण्यां गवि । वत्सलायाम् ॥ पुत्रादिकामनाविशिष्टायांनार्याम ॥

वत्सतर । पु॰ दम्ये । वत्सभावमतीत्यद्वितीयवय प्राप्ते ॥ तनुर्वत्सः वत्सोक्षाश्वर्षभेभ्यश्चतनुत्व इति-ष्टरच् ॥

वत्सतरी । स्त्री॰ वत्साायाभावमतीत्यद्वितीयवय प्राप्तायाम् । त्रिहायण्यां गवि ॥ तन्वोवत्सा । ष्टरच् । ङीष् ॥

वत्सनाभः । पु॰ विषवृक्षविशेषे । अमृते । उग्रे । महौषधे । मारणे । माकुराङ्कु॰ भा॰प्र॰ ॥ अस्यस्वरूपनिरूपणयथा । सिन्धुवारसदृक्पत्रोवत्सनाभ्याकृतिस्तथा । यत्पार्श्वे नतरोर्वृद्धिर्वत्सनाभ सभाषित इति ॥ अस्यगुणाः । अतिमधुरत्वम॰वातकफकण्ठरुक्सन्निपातनाशित्वम्॰पित्तसन्तापकारकत्त्वअचेतिराजनिर्घण्ट ॥ वत्सानननाभिर्नास्ति । अभक्षितायाम् । कर्मण्यण् ॥ वत्सस्तनाभिरिवनाभिरस्येतिवा ॥

वत्सप । पु॰ वत्सचारकबालके ॥

वत्सपत्तनम् । न॰ भारतवर्षोत्तरे देशविशेषे । कौशाम्ब्याम् ॥

वत्सपाल । पु॰ बलदेवे ॥ श्रीकृष्णे ॥ वत्सपे ॥

वत्सर । पु॰ द्वादशमासात्मकेकाले । संवत्सरे । अब्दे । हायने । शरदि । समायाम् । वर्षे । संवत्सरादिभेदेनपञ्चधाभवति । तथाहि । शकाब्दात्पञ्चभिः शेषात्समाद्यादिषुवत्सराः । सम्परीदानुपूर्वाश्चतथोदापूर्वकामताः ॥ अथषष्टिसंवत्सराणांगणना । मासे गुरोरगभिद॰ पञ्चवत्सराणांषष्टि॰ स्मृतामुनिवरैः प्रभवादिकानाम् । स्यादेकवत्सरमितिगुरुमध्यमेनराशिसुभोगमितिरेवसदातथाहि॥

प्रभवो॰विभव॰शुक्ल, प्रमोदो॰थ॰प्रजापति । अङ्गिरा, श्रीमुखो॰भावो॰युवा॰धातेश्वराभिधौ॥ बहुधान्य प्रमाथीच॰विक्रमो॰ष्टषसञ्ज्ञक । चित्रभानु सुभानुश्च॰तारण पार्थिवो॰व्यय सर्वजित्॰सर्वधारीच॰विरोधो॰विकृतस्तत । खर॰नन्दनसञ्ज्ञौच॰विजयो॰जय॰मन्मथौ ॥ दुर्मुखस्तदनुप्रोक्तो॰हेमलम्बकसञ्ज्ञक । विलम्बाख्यो॰विकारी॰स्याच्॰छर्वरी प्लवसञ्ज्ञको ॥ उक्त'शुभकृतस्माद्व्द शोभनकृतस्मृत । क्रोधी॰विश्वावसुर्ज्ञेयो॰वत्सरोऽपिपराभव । प्लवङ्ग कीलकाख्यो॰थसौम्य साधारणाह्वय. ततोविरोधकृन्नामा॰परिधावि॰प्रमाथिनौ॥ आनन्दो॰राक्षस प्रोक्तो॰ऽनलपिङ्गलसञ्ज्ञक । कालयुक्ताह्वसिद्धार्थौ॰रौद्रो॰दुर्मतिदुन्दुभी । रुधिरोद्गारिरक्ताक्षौ॰क्रोधन,॰क्षयक्रमत । वत्सराणागुरोर्मानैर्षष्टिरित्युदाहृता ॥ वत्सरानयन यथा । नगेनेखे' सन्निहतोद्विधाश क सखविश्वक्रोाचयमाङ्गभाजित । गता . सत्नब्व्यथकोभपदृष्टतोऽशेषकेशु : प्रभवादिवत्सरा: । अत्र॰आद्यातुविंशतिर्ब्राह्मी द्वितीयावैष्णवीस्मृता तृतीयारुद्रदै

वत्याश्चेष्टामध्याधमाभवेत् ॥ वसन्त्यस्मिन्नयनर्त्तुमासपक्षादय । वस निवासे । वसेश्चेतिमरप्रत्यय : । सत्वार्द्धधातुकइतिसस्यत ॥

वत्सरान्तक । पु॰ फाल्गुनेमासि ॥

वत्सल । पु॰ शृङ्गारादिरसान्तर्गतरसविशेषे । वात्सल्ये । तद्वान्नो , त्रि॰स्नेहयुक्ते । स्निग्धे ॥ वत्सेपुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति वत्सांसाभ्यांकामबले॰इतिलच् ॥

वत्सला । स्त्री॰ वत्सकामायाधेनौ ॥

वत्सशालम् । न॰ )
वत्सशाला । स्त्री॰ ) वत्सानागृहे ॥

वत्सानाश,त्ता पु॰। विभाषासेनेति॰पक्षेक्लीवता ॥ त्रि॰वत्सशालोत्पन्ने ॥ वत्सशालेजात । जातार्थे सवालुक् ॥ पक्षेत्रि॰वात्सशालोपि ।

वत्सा । स्त्री॰ पुत्र्याम ॥ वयसिप्रथमइतिङीप बाधित्वा॰अजादित्वाट्टप् ।

वत्साक्षी । स्त्री॰ गोडुम्बायाम् । चिचायाम् ॥

वत्सादन . । पुं॰ वृके ॥

वत्सादनी । स्त्री॰ छिन्नरुहायाम् । गुडुच्याम् । वत्सैरद्यते । अद॰ । ल्युट् ॥

वद । त्रि॰ वक्तरि ॥ वदति । वद-

व्यक्तायांवचि । पचाद्यच् ॥
वदनम् । न० आनने । मुखे । वद
त्यनेन । वद० । करणेल्युट् ॥
वदनासव । पु० अधरमधुनि । वक्त्रा
सवे ॥ वदनस्यआसवः ॥
वदन्ति । ) स्त्री० कथायाम् ॥
वदन्ती । )
वदन्य । त्रि० वदान्ये ॥
वदान्य । त्रि० अत्युदारे । दानशी
लके । वल्गुप्रदे । मायाचत्वेतिवद
ति । वद० । वदेरान्य ॥ चारुवा
दिनि । प्रियवादिनि ॥
वदामम् । न० फलविशेषे । सुफले ।
वातवैरिणि । वातादे ॥
वदाल पुं० पाठीनमत्स्ये बोआ-
लि० इ० गौ० दे० भा० प्रा० ॥
वदावद । त्रि० वक्तरि ॥ वदति ।
वद० । पचाद्यचि० चरिचलीतिद्वि-
त्वादि ॥
वद्रि । अ० कृष्णपक्षे ॥
वध । पुं० हिंसके ॥ हिंसायाम् ॥
वधुका । स्त्री० वध्वाम् ॥
वधू । स्त्री० स्नुषायाम् । इ० इ०
भा० प्रसिद्धे ॥ वहति० उह्यतेवा । व
हप्रापणे । वहेर्धश्च ॥ शारि
वौषधौ ॥ अध्व'म् ॥ नवोढायाम् ॥
भार्यायाम् ॥ पृक्कायाम् ॥ अङ्ग
नायाम ॥
वधूजन । पुं० योषिति ॥

वधूट । पुं० यौवने ॥
वधूटशयनम् । न० गवाक्षे ॥
वधूटी । स्त्री० स्वल्पवध्वाम् ॥ स्नुषा
याम् ॥ सुवासिन्याम् ॥ युवती ॥
वयस्यचरमइतिङीप् ॥
वधूत्सवप्रसव । पु० रक्ताम्लाने ॥
वध्रम् । न० इयरज्जौ ॥ वध्यतेऽनेन ।
वधेरौणादिकः ष्ट्रन् ॥
वध्रि । स्त्री० वध्रे ॥
वध्री । स्त्री० वध्रे ॥ षित्त्वान्ङीष ।
वध्रा . पश्यवध्रिका पश्येतिभा-
ष्यम् ॥
वनम् । न० नीरे । जले ॥ निवासे ॥
आलये ॥ प्रस्रवणे ॥ कानने । स्व-
त : सिद्धवृक्षसमूहे । गहने । ब
ना० इ० भा० ॥ प्रवासे । वन्यते०
सम्भज्यते० सेव्यते० याच्यतेवा व-
नसम्भक्तौ० वनुयाचनेवा हलश्चेति
कर्म्मणिघञ् । उञ्छापूर्वकत्त्वाद्
वृद्ध्यभावः ॥ कर्त्तरिपचाद्यज्वा ॥
त्रि० वननीये ॥ सम्भजनीये ॥
वनकदली । स्त्री० काष्ठकदल्याम् ॥
वनकन्द । पुं० सितशूरणे ॥ धरणी
कन्दे ॥
वनकार्पासी । स्त्री० त्रिपर्णायाम् ।
भारद्वाज्याम् । वनकपास० इ०
भा० ॥
वनकुलत्थ । पुं० कुलत्थायाम् ॥
वनकोद्रव । पुं० उद्दाले ॥

वनकोलि । पुं० वनजबदर्याम् । कर्कन्धिकायाम् ॥

वनगो । पुं० स्त्री० गवये ॥

वनगोचर । पुं० नारायणे ॥ वनं जलं गोचरो निवासस्थानं यस्य सः ॥ व्याधे ॥

वनचन्दनम् । न० अगुरुणि ॥ देवदारुणि ॥

वनचन्द्रिका । स्त्री० मल्लिकायाम् ॥

वनचम्पक । पुं० वनदीपे । हेमाह्वे ॥

वनचर । पुं० किराते ॥ वनमृगे ॥ वने चरति । चर० । चरेष्ट ॥

वनच्छाग । पुं० वनच्छगले । एडके । शिशुशाखके ॥ शूकरे ॥

वनज । पुं० मुस्तके ॥ स्तम्बेरमे । वनशूरणे अम्बुजे ॥ त्रि० वनोत्पन्ने ॥ वने जायते । जनी० । ड ॥

वनजा । स्त्री० मुद्गपर्ण्याम् ॥ वनकार्पास्याम् ॥ वन्योपोदक्याम् ॥ अश्वगन्धायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥ ऐन्द्रे । वनार्द्रकायाम् ॥

वनजायतेक्षण : त्रि० पद्मलोचने ॥

वनजीर । पुं० सूक्ष्मपत्रे । अरण्यजीरे ॥

वनतिक्त : । पुं० रोहितकद्रुमे ॥

वनतिक्ता । स्त्री० वनतिक्तिकायाम् ॥

वनतिक्तिका । स्त्री० पाठायाम् ॥ हरीतक्यां ॥

वनद । पुं० घने । मेघे ॥ वनं जलं ददाति । डुदाञ्० । क ॥ त्रि० वनदातरि ॥

वनदमन । पुं० अरण्यदमने ॥

वनदीप । पुं० वनचम्पके ॥

वनधेनु । स्त्री० गवय्यां ॥

वननीय । त्रि० सम्भजनीये ॥

वनपल्लव । पुं० शोभाञ्जनवृक्षे ॥ अरण्यजपत्रे ॥

वनपांशुल । पुं० व्याधे ॥

वनपिप्पली । स्त्री० क्षुद्रपिप्पल्याम् ॥

वनपुष्पा । स्त्री० शतपुष्पायाम् ॥

वनपूरक । पुं० वनबीजपूरे ॥

वनप्रिय । पुं० परभृते । कोकिले ॥ न० त्वचे । गुडत्वचि ॥ त्रि० अरण्यप्रियमात्रे ॥

वनभुक् । पुं० ऋषभौषधे ॥

वनमक्षिका । स्त्री० दंशे ॥ वनस्थमक्षिका ॥

वनमल्लिका । ) स्त्री० वनोद्भवमल्लिकायाम् ॥
वनमल्ली । )

वनमाला । स्त्री० श्रीकृष्णस्रजि सपल्लवपुष्पग्रथितायामाजानुलम्बिन्यां स्रजि ॥ तस्या : स्वरूपं यथा । आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्रजि ॥

वनमाली । पु० हरौ । श्रीकृष्णे ॥ वन वनपुष्प तन्मालाऽस्येति० वनमाली । व्रीह्यादित्वादिनि । सपल्लवं पुष्पग्रथितास्रक् वनमालेत्यन्ये ॥ आपादपद्म यामालावनमालेति सामतेतितुकलिङ्ग । सास्य स्तीति ॥ वन मस्तितु शीलमस्येति वा । सनधारणे । सुप्रीतिणिनि । ... दा अलतन्मावरूपावेजयन्त्या [illegible] वनमालाऽस्त्यन् वनमाली । वनमालापरिवेस धन्या पश्यन्तिते सुखमिति हरिव शौक्ति ॥

वनमालिनी । स्त्री० वाराह्याम् ॥ द्वारकापुर्य्याम् ॥

वनमुक् । पु० जलदे । मेघे ॥ वननीरमुञ्चति मुच्लृ० । क्विप् ॥

वनमुद्ग । पु० मकुष्ठके ॥

वनमुद्गा । स्त्री० मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री० कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री० मेथिकाप्रभेदे ॥

वनमोचा । स्त्री० काष्ठकदल्याम् ॥

वनर । पु० वानरे ॥

वनराज । पुं० मृगेन्द्रे ॥ वनस्यराजनि ॥

वनराजक । पुं० सिंहे ॥

वनराजि : । स्त्री० वनच्छायापङ्क्तौ ॥

वनरुहम् । न० पद्मे ॥ वनेरोहति । रुह० । इगुपधेतिक ॥

वनलक्ष्मी । स्त्री० कदल्याम् ॥

वनवर्व्वर । पु० कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री० अरण्यजवर्वर्याम् । सुप्रसन्नके । विषघ्ने । सूक्ष्मपत्रके । निद्रालौ ॥

वनवल्लरी । स्त्री० नि श्रेणिकातृणे ॥

वनवह्नि । पुं० दवानले ॥

वनवासन । पुं० गन्धोतौ । खट्टाशे ॥

वनवासी । पुं० नीलमहिषकन्दे । शाल्मलिकन्दे । पाटल्याम् । मुष्ककवृक्षे । शृङ्ग्याम् । ऋषभौषधे ॥ शूकरकन्दे । वाराहीकन्दे ॥ त्रि० वनवासकर्त्तरि ॥

वनबीज । } मातुलुङ्गिका
वनबीजक । } पु० याम् ॥ अर
वनबीजपूरक । } ण्यजातबीजपूरे । अम्लसारायाम् ॥

वनहन्ताकी । स्त्री० वृहत्याम् ॥

वनव्रीहि । पुं० नीवारे ॥

वनशूकरी । स्त्री० शूकशिम्ब्याम् ॥ अरण्यवाराह्याम ॥

वनशूरण । पुं० वनोद्भवोले । सितशूरणे । वनकन्दे ॥

वनशृङ्गाट । पुं० गोक्षुरके ॥ वनस्यशृङ्गाटइव ॥

वनशृङ्गाटक । पुं० गोक्षुरके ॥

वनशोभनम् । न० पद्मे ॥ त्रि० वन स्थशोभाकर्त्तरि ॥

वनश्वा । पु० गन्धमार्जारे ॥ वभ्रुके । गोमायौ ॥ व्याघ्रे ॥

वनसङ्कट । पु० मसूरे ॥

वनसद् । त्रि० वनेचरे ॥

वनसमूह । पु० वन्यायाम् ॥ वना नांसमूह ॥

वनसरोजिनी । स्त्री० वनकार्पास्या म् ॥

वनस्थ । पुं० मृगे ॥ त्रि० वनवा सिनि ॥

वनस्था । स्त्री० अश्वत्थीवृक्षे ॥

वनस्पति । पुं० द्रुममात्रे ॥ विना पुष्पफलशालिनिवृक्षे ॥ अपुष्पाफल वन्तोये तेवनस्पतय : स्मृताइति मनु : ॥ स्थालीवृक्षे । नन्दीवृक्षे ॥ वनस्पति । पारस्करादित्वात् सुट् ॥ वटे ॥

वनहरिद्रा । स्त्री० काननोत्पन्नहरि द्रायाम् । शोलिकायाम् ॥

वनहास । पु० अश्ववाले । काशतृ णे ॥ कुन्दवृक्षे ॥

वनहासक । पुं० काशतृणे ॥

वनाखु : । पुं० शशके ॥

वनाखुक । पुं० मुद्गे ॥

वनाज । पु० वनच्छागे । दूरिकेे ॥

वनाटु । पु० स्त्री० वर्वणायाम् । नीलमक्षिकायाम् ॥

वनाधिवासी । त्रि० वनस्थे ॥ वनम धिवसतितच्छील । णिनि : ॥

वनामल । पुं० करमर्दे । कृष्णापा कफले ॥

वनाम्र : । पुं० कोषाम्रे ॥

वनायु : । पु० हरिणे ॥ देशविशेषे ॥

वनायव । पुं० बहुवचनान्तोयम् । देशविशेषे ॥

वनायुज । पुं० हयविशेषे । वनायु जे ॥ वनायुषुदेशेजात । सप्तम्या मृजनेड । ॥

वनारिष्टा । स्त्री० वनहरिद्रायाम् ॥

वनार्चक । पुं० पुष्पजीविनि । मालाकारे ॥

वनार्द्रका । स्त्री० ऐन्द्रे । वनभवार्द्र के ॥

वनालिका । स्त्री० वन्यवल्ल्याम् । हस्तिशुण्डायाम् ॥

वनाश्रय । पु० द्रोणकाके ॥

वनाह्विर : । पुं० दन्तायुधे । शूकरे ॥

वनि । पुं० अग्नौ ॥ वन्यतेयाचते । वनुयाचने । खनिकष्यज्यसिवसि वनिसनिध्वनिग्रन्थिवलिचरिभ्यश्चे ति० इप्रत्यय : ॥

वनित । त्रि० याचिते ॥ सेविते ॥

वनिता । स्त्री० उत्पादिताथ्यर्थानुरा गनार्याम् ॥ योषिन्मात्रे ॥ वन्यते स्म । वनुयाचने० वनसम्भक्तौवा । क्त । शस्विभाषितव्यस्तानित्यत्वा

द्दिट् ॥ यद्वा । वनतेर्बाहुलकादि तन् ॥

वनी । पुं॰ कन्दमूलफलाद्याहारैवसा ग्निहोत्रे॰निरग्निहोत्रे॰ वानप्र स्थे । तृतीयाश्रमे ॥ वन निवासस्था नमस्यास्ति । अतइनिठनाविती नि ॥

वनी । स्त्री॰ विपिने । गहने ॥ वनति । वन॰ । पचाद्यच् । गौरादि ॥

वनीपक । त्रि॰ याचके ॥ वनीपा ति । आतङ्कतिक । तत . स ञा याकन् ॥

वनीयक : । त्रि॰ याचके ॥ वननम् । वनु॰ । सर्वधातुभ्यइन् । वनि याञ्चा॰तामिच्छति । सुपआत्मन क्यच् । ण्वुल् ॥

वनेचुद्रा । स्त्री॰ कारङ्गे ॥

वनेचर । पुं॰ किराते ॥ त्रि॰ अर ण्यचारिणि ॥ वनेचरति । चरेष्ट इतिट : ॥ तत्पुरुषेकृतीत्यलुक् ॥

वनेज्य । पुं॰ वनरसाले ॥

वनेसद् । पुं॰ वनेचरे ॥ वनेसीदति । षद्लृ॰ । क्विप् । तत्पुरुषइला दिनाऽलुक् ॥

वनेसर्ज । पुं॰ असनवृक्षे ॥

वनोद्भवा । स्त्री॰ वनकार्पास्याम् ॥ त्रि॰ वनजे ॥

वनोपल : । पुं॰ आरण्यगोमये ॥

वनौका : । पुं॰ वानरे ॥ वनस्थिते । पुलिन्दे ॥ वनमोकोस्य ॥

वनौषधी । स्त्री॰ वनोद्भवौषधिमात्रे ॥ प्रायोजना सन्निवनेचराद्यागो पाद्य प्राकृतनामतज्ज्ञा । प्र योजनार्थाभिधन प्रवृत्तिर्यतस्तत प्राकृतइत्यदोष ॥ किञ्च । रसवी र्यविपाकेभ्योमूलात्पुष्पात्फलाद्द लात् । आकाराद्देशकालादेर्भनी षध्यर्थमुन्नयेत् ॥

वन्दक । पुं॰ नीलवल्ल्याम् । व- न्दायाम् ॥ त्रि॰ वन्दनकृति ॥

वन्दका । स्त्री॰ वृक्षादन्याम् । वन्दा याम् ॥

वन्दथ । त्रि॰ स्तोतरि ॥ स्तुत्ये ॥ वन्दते॰ वन्द्यतेवा । वदि अभिवादनस्तुत्यो शीङ्शपिरु गमिवञ्चिजीविप्राणिभ्योऽथइत्यच वक्षीत्यस्यस्थानेवन्दोतिपाठोपिवहु श्रुतैर्निर्धारितइतिवन्देरथ ॥

वन्दनम् । न॰ नतौ । प्रणामे ॥ वन्दे ल्युट ॥ मुखे ॥

वन्दनमाला । स्त्री॰ तोरणे । रम्भा स्तम्भचतुष्टयवेष्टितास्वपत्ररचितमा लायाम् ॥ यथा । कुर्याद्वन्दनमा लायोरम्भास्तम्भे सुशोभने । चूत वृक्षोद्भवे पत्रैर्जागरैचक्रपाणिन . । युगानिपत्रसङ्ख्यानांस्वर्गेतस्यो त्सवोभवेत् । पूज्यतेवासवाद्यैश्च क्रीडतेचाप्सरोगत . ॥

वन्दनमालिका । स्त्री० वहिर्द्वारोपरि शुभदायांमालायाम् ॥ यथा । तो रणोर्द्वेतुमङ्गल्य दामवन्दनमालिका ॥

वन्दना । स्त्री० समीच्याम् । स्तुतौ ॥ हेमभस्मनातिलके ॥ यथा । ऐशान्यामाहरेद्भस्मशुचावायस्तुवेण वा । वन्दनाकारयेत्तेनशिर क ण्ठांसकेषुच ॥ कश्यपस्येतिमन्त्रेण यथानुक्रमयोगतद्भूतिवशिष्ठ ॥

वन्दनी । स्त्री० नतौ ॥ जीवातौ ॥ वस्याम् ॥ पाचनकर्मणि ॥

वन्दनीय । पु० पीतभृङ्गराजे ॥ त्रि० नमस्ये । वन्द्ये । स्तवनीये ॥ वन्दितुमर्हे । वदि० । अनीयर् ॥

वन्दनीया । स्त्री० गोरोचनायाम् ॥ अजादित्वाट्टाप् ॥

वन्दा । स्त्री० वृक्षोपरिजातवृक्षे । वृक्षादन्याम् । वृक्षरुहायाम् । जीवन्तिकायाम् । वन्दाके ॥ वृक्षविजातीयप्ररोहोवन्दा । वन्द्यते । वदि० । गुरोश्च हलः ॥ भिक्षुक्याम् । वन्द्यां ॥

वन्दाक : । पु० द्रुमरुहायाम् । वन्दायाम् ॥ यथा । वन्दाक : स्यात्हिमस्तिक्त : कषायोमधुरोरसे । मङ्गल्य . कफवातास्ररक्षोव्रणविषापह ॥ † * †

वन्दाका । ) स्त्री० वन्दायाम् ।
वन्दाकी । ) वृक्षादन्याम् ॥

वन्दारु . । त्रि० वन्दनशीले । अभिवादके ॥ वन्दते । वदि० । शृवन्द्योरारु . ॥

वन्दि : । स्त्री० निबद्धमनुजादौ । प्रग्रहे । उपग्रहे । वन्दी० ङ्० लोक० प्र० ॥ सोपानके ॥

वन्दिग्राह । पु० अग्न्यायुधदेवतागारभेदके ॥

वन्दिचौर . । पु० माचले । सन्धिचौरे ॥

वन्दित । त्रि० पूजिते ॥

वन्दी । पुं० राजादे ' स्तुतिपाठिनि । स्तुतिपाठके । भाट० ङ्० प्र० ॥ प्रस्तावानुवक्तरि ॥ वन्दिनस्त्वमलप्रज्ञा : प्रस्तावसदृशोक्तय ॥ वन्दते । वदि० । ग्रह्यादित्वादावश्यके तिवाणिनि ॥ पणमध्यस्थे ॥

वन्दिपाठ । पु० भोगावल्याम् । स्तुतिग्रन्थे ॥

वन्दी । स्त्री० आहृतस्त्रियाम् ॥ पणमध्यस्थायाम् ॥ वन्द्यते० वन्दते वा । वदि० इन् । ङीष् ॥ शुद्धायांचत्रियेणोत्पादितायाम् ॥

वन्दीकार . । पु० वन्दिग्राहे । प्रसह्यचौरे । माचले ॥

वन्द्य । त्रि० स्तव्ये । वन्दनीये ॥

वन्द्या । स्त्री० स्तव्यायाम् । वन्दनीयाया

म्॥ गोरोचनायाम्॥ वन्द्रायाम्॥
वन्द्र:। त्रि॰ पूजके॥ पु॰ गुरौ॥ वन्द्रते॰ वन्द्यतेवा। वदि॰। स्फायितञ्चीत्यादिनारक्॥ न॰ नत्यार्थे॥
वन्य.। पुं वनौर्षे। वनशूरणे॥ वाराहीकन्दे॥ देवनले॥ न॰ कैवर्तीमुस्तके॥ त्वचे॥ त्रि॰ वनौ द्भूते। वनेभव। यत्॥
वन्या। स्त्री॰ वनसमूहे॥ अम्बुसमूहे॥ वनानांसमूह'। पाशादिभ्याय:॥ गोपालकर्कट्याम्॥ मुद्गपर्ण्याम्॥ गुञ्जायाम्॥ भद्रमुस्तायाम्॥ गन्धपत्रायाम्॥ मिश्रेयायाम्॥
वन्येपोदकी। स्त्री॰ लताप्रभेदे वनआयाम्। वनसाह्वयायाम्॥ इतिराजनिर्घण्ट:॥
वन्न। त्रि॰ भजिनि। भागिनि॥ वनति। वनसम्भक्तौ। स्फायितञ्चीत्यादिनारन्॥
वप:। पु॰ मेदसि॥ केशमुण्डने॥ बीजवपने॥ वपति। टुवप्॰। पचाद्यच्॥ वपतियदिक्षणात्. उपसमासाद्यबीजम्॥
वपनम्। न॰ बीजाधाने॥ मुण्डने॥ यथा। गङ्गायाभास्करक्षेत्रेमातापित्रोर्गुरोर्मृतौ। आधानेसोमपानेच वपनंसप्तसुस्मृतम्॥

टुवप्॰। ल्युट्॥ अन्यत्रनिधनात्पल्यु पत्नीकेशान्नवापयेत्॥ शौर्ये॥
वपनी। स्त्री॰ नापितशालायाम्॥
वपा। स्त्री॰ विवरे। छिद्रे॥ मेदसि॥ उप्यतेऽत्र। टुवप्॰। भिदाद्यङ्॥ यद्वा। वपति। पचाद्यच्। टाप्॥
वपिल। पुं॰ पितरि॥
वपुस्तव.। पुं॰ शरीरस्थरसधातौ।
वपुन.। पु॰ देवे। सुरे॥
वपुषा। स्त्री॰ हवुषायाम्। हीरवेर॰ कू॰ भा॥
वपुष्टमा। स्त्री॰ ब्रह्मचारिण्याम्॥
वपु'। न॰ तनौ। शरीरे॥ प्रशस्ताकृतौ॥ वपति॰ उप्यतेवा। टुवपबीजसन्ताने। अर्तिपृवपीत्युसि.॥
वप्तव्य:। त्रि॰ अपंणीये॥ भूमौकौ ञ्छिवप्तव्य॰ मुर्वरायानचोषरे॥
वप्ता। पुं॰ जनके॥ त्रि॰ वापके। वपति। टुवप्॰। ण्वुल्तृचाविति तृच्। कवौ॥
वप्र.। पुं॰ ताते॥ प्रकारे॥ न॰ सीसके॥ पुं॰ न॰ प्राकाराधारवेदिकायाम्। चये॥ तथाचार्थशास्त्रम्। खातादुद्धृतमृदावप्रं कारयेत्॰तस्योपरिप्राकारमिति॥ अद्रा वप्रोयथा। महीध्रानामद्रावप्रां

तडागशतशोभिताम् । प्राकारगृह मस्वाधामिन्द्रस्येवामरावतीम् ॥ महान्वप्रोयस्या । प्राकाराधार भूताकृचिमोच्छ्रिताभूमिर्वप्रसञ्ज्ञ तिवि॰ पु॰ ॥ रोधसि । तटे ॥ रेणौ ॥ चेचे । केदारे ॥ सानुनि ॥ उप्यतेऽच । टुवप॰ । हृधिवपिभ्यां रन् ॥

वप्रक्रीडा । स्त्री॰ वृषभादीनावप्रक्रियायाम् ॥ यथा । उत्खातकेलि शृङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दार्णव . ॥

वप्रा । स्त्री॰ मञ्जिष्ठायाम् ॥

वप्रि : । स्त्री॰ चेचे ॥ वपति । टुवप॰ । वङ्क्र्यादित्वात्साधु : ॥

वप्री । स्त्री॰ वल्मीके ॥

वम । पु॰ स्त्री॰ वमने ॥

वमथु : । पु॰ वमने ॥ गजस्यकरशीकरे ॥ वमन॰ वम्यतेवा टुवमउद्गिरणे ॥ ट्वितोथुच् ॥

वमन । पु॰ शणे ॥ न॰ छर्द्दने ॥ मर्द्दने ॥ आहुतौ । आहरणे ॥

वमनी । स्त्री॰ जलौकायाम् ॥

वमनीया । स्त्री॰ मक्षिकायाम् ॥ त्रि॰ वमनयोग्ये ॥

वमि : । पुं॰ हुताशने । अग्नौ ॥ धूर्त्ते ॥ स्त्री॰ वान्तौ । छर्द्दने ॥ वमनम् । टुवम॰ । कृत्यकृष्यादिभ्य . ॥

वमित । त्रि॰ कृतवमने ॥ यथा । वमितलङ्घयेत्प्राज्ञोलङ्घितन तुवामयेत् । वमनेक्लेशवाहुल्याद्न्यायाल्लङ्घनकर्षितम् ॥

वमी । स्त्री॰ वमने ॥ कृदिकारादिति ङीष ॥

वभ्र : । पुं॰ वम्रो ॥

वम्री । स्त्री॰ उपजिह्वायाम् । सीमक॰ इ॰ दे॰ भा॰ । वालवी॰ इ॰ महाराष्ट्रभाषा ॥ इ॰ हि॰ न्द्र . ॥

वम्रीकूट । पु॰ वल्मीके ॥

वय : । पुं॰ पक्षिणि । खगे ॥ तार्क्ष्ये ॥ यौवने ॥ कालकृतायायौवनादिरूपायाशरीरावस्थायाम् । वाल्यादौ ॥ अवहिवय . पक्षा : । यथा । कौमारयौवनमध्यत्वस्थविरत्वानिचत्वारिवयांसीत्येक ' प च . । तथाचाहु . । आद्येवयसि नाधीतद्वितीयेनार्जितधनम् । तृतीयेनतपस्तप्त चतुर्थेकिंकरिष्यतीति ॥ चीणिवयांसीत्यन्ये । यदाहु । पितारक्षतिकौमारेभर्त्तारक्षतियौवने ॥ पुत्रास्तुस्थाविरेभावेनस्त्रीस्वातन्त्र्यमर्हतीति ॥ अन्ये तु॰कौमारयौवनस्थविरत्वानि॰चीणीच्छन्ति । आहुश्चति । आषोडशाद्भवेद्वालोयावत्चीरनिवर्त्तक : । मध्यम . सप्तति र्यावत्परतोवृद्धउच्यतइति ॥ केचित्तुउपचयापचयलक्षणेद्वेवयसी

दृश्यन्तिअस्मिन्पक्षेयौवनस्यप्रथम
वयोवाचित्वात्तदायसिप्रथमद्गतिवधू-
टीचिरण्टीत्यत्रङीपिसिद्धे० वय
स्यचरमद्गतिनवक्तव्यमितिस्थितम्॥
यस्त्वर्थप्रकरणादिकमनपेक्ष्यश्रवण
मात्रेणवय प्रतिपादयति० सव
योवाचीत्युच्यते० अन्तरङ्गत्वात्०
ङेनेहन । उत्तानशया० लोहित
पादा । इहप्रकरणादिनावयस '
प्रतीतावपि० शब्दादप्रतीते . । अ
वस्थापिहिव्याध्यादिवशादुत्तानाशे
ते० अलक्तकेनचरक्तचरणाभवति
॥ वयते० वेति० अजतिवा । वय
गतौ० वीगत्यादौ० अजगतौवा
असुन् ॥ वयस्त्रिविधबाल्य मध्य
मवार्द्धकतथेतिसुश्रुत ॥

वयस्थ । त्रि० मध्यमवयसि । तरु
णे ॥ वयसितिष्ठति । सुपौतियो
गविभागात्क . ॥

वयस्था । ) वयस्था । ) स्त्री० ब्राह्म्याम् ॥ गुड्
च्याम् ॥ आमलक्याम् ॥ सूक्ष्मैला
याम् ॥ काकोल्याम् । पथ्याया
म् । पूतनायाम् । हरीतक्याम् ॥
सोमलतायाम् ॥ शाल्मलौ ॥ क्षी
रकाकोल्याम् ॥ अत्यम्लपर्ण्याम्॥
मत्स्याक्ष्याम् ॥ वयोयौवनतिष्ठ
त्यनया । स्था० । कअर्थेक ॥ युवतौ ।
तरुण्याम् । सख्याम् । आल्या

म् ॥ खर्परेशरिवाविसर्गलोप ॥

वयस्य । पु० समानवयस्के । स्नि
ग्धे । सवयसि ॥ वयसातुल्य
। नौवयोधर्मेत्यादिनायत् ॥ स
ख्यौ ॥

वयस्या । स्त्री० सख्याम् ॥ टाप् ॥

वयस्यो । पु० तरुणे ॥

वयुन । पु० देवतालये ॥ न० प्रज्ञा
ने ॥ कर्मणि ॥ अजति । अज० ।
अजियमिशीङ्भ्यश्चेत्युनन्चित्
। अजेर्वी गुणायादेशौ ॥

वयोधा । पुं० यूनि । तरुणे ॥ वयो
दधाति । डुधाञ् • । वयसिधाञ
इत्यसिङित् ॥

वयोवङ्ग । न० सीसके ॥

वयोवाची । पुं० अर्थप्रकरणादिकम
नपेक्ष्यश्रवणमात्रेणवयस प्रतिपा
दकेकुमारादिशब्दे ॥

वर । पु० देवाहृते । देवतादेरभी
प्सिते ॥ तपोभिरिष्यतेयस्तुदेवेभ्य .
सवरोमतइतिभरत . ॥ भर्त्तरि ॥
जामातरि ॥ वृत्तौ । वरणे ॥ वि
टे । पिङ्गे ॥ गुग्गुलौ ॥ कन्या
र्थिनि ॥ वरपरीक्ष्यकन्यादेया ।
तथाहिविद्याप्रभावज्ञानस्यपरीक्ष्य
वणयाद्वरम् । अथोक्तंदेवीभागवते
। वरायगुणहीनायवृद्धायाज्ञानिने
तथा । दरिद्रायचमूर्खायरोगिणे
कुत्सितायच ॥ अत्यन्तकोपयुक्ताय

वाऽत्यन्तदुर्मुखायच । पङ्गवेपङ्क्ति हीनायचान्धायबधिरायच ॥ जडायचैवमूकायक्लीवतुल्यायपापिने । ब्रह्महत्यालमेत्सोपिय स्वकन्यां प्रयच्छति ॥ शान्तायगुणिनेचैवयूनेचविदुषेपिच । साधकायसुतादत्त्वा दशयज्ञफलं लभेदितिनवम स्कन्ध ॥ न॰ कुङ्कुमे ॥ किञ्चिदिष्टे । मनाक्प्रिये ॥ तथाहि । वर प्राणत्यागोनचपिशुनवाक्येष्वभिरतिर्वरं मौनं कार्यं नचवचनमुक्तं यदनृतम् । वरं क्लीवभाव्यं नचपरकलत्राभिगमनं वरं भिक्षाशित्वं नच परधनानाहिहरणम् ॥ त्रि॰ श्रेष्ठे ॥ साधुनि ॥ व्रियते॰वरणं वा । वृञ्वरणे । ग्रहवृद्रित्यप् ॥ यद्वा । वृणोति॰ वरतिवा । पचाद्यच् ॥

वरक । पु॰ वनमुद्गे ॥ पर्पटे ॥ तृणधान्यप्रभेदे । स्थूलकङ्गौ । चीना॰ इ॰ भा॰ प्र॰ ॥ मधुरोवरकोरूक्ष कषायोवातपित्तकृत् ॥ न॰ पचोर्णे । धौताधौतसाधारणवस्त्रे ॥ पोताच्छादने ॥

वरक्रतु । पुं॰ इन्द्रे । मरुत्वति ॥

वरचन्दनम् । न॰ कालीये ॥ देवदारुणि ॥ वरश्चतच्चन्दनञ्च ॥

वरट । पुं॰ हंसे ॥ गन्धोल्याम् । वरडे॰ इ॰ प्र॰ कीटे ॥ म्लेच्छजातिविभेदे ॥ न॰ कुन्दपुष्पे ॥ वृणोतिसेवतेसर । वृङ्सम्भक्तौ । वृणोतिरा । वृञ्‌आवरणे । शकादिभ्योटन् ॥

वरटा । स्त्री॰ हंसस्ययोषिति । हंस्याम् ॥ गन्धोल्याम । बरडे॰ इ॰ भा॰ प्र॰ कीटे ॥ कुसुम्भबीजे । वरट्टिकायाम ॥ यथा । वरटामधुरास्निग्धारक्तपित्तकफापहा । कषायाशीतलागुर्वी स्वादवृष्यानिलापहा ॥ ✝ ✝

वरटी । स्त्री॰ हंस्याम् । वरडे॰इ॰- प्र॰सपक्षकीटे । गन्धोल्याम ॥ गौरादि ।

वरट्टिका । स्त्री॰ वरटायाम् । कुसुम्भबीजे ॥

वरण । पु॰ तिक्तशाके । वरुणद्रुमे॥ प्राकारे । सालि॥ उष्ट्रे ॥ सङ्क्रमे॥ न॰कन्यादिवरणे ॥ वेष्टने । वृत्याम् ॥ व्रियते॰वृणोतिवा । वृञ्॰ । युच् ॥ कर्तृकरणयोर्वाल्युट् ॥ वरणे । यथा वरवृत्वन्तितदेवाअवरदश्चवराथिनाम् । धातुर्वैवरणेप्रोक्तस्तस्मात्सवरण स्मृत ॥ इति साम्बपुराणम् ॥ पूजनादौ ॥

वरणसी । स्त्री॰ वाराणस्याम् ॥

वरणा । स्त्री॰ काश्य।उत्तरसीम्निस्थितायानद्याम् ॥

वरणीय । त्रि॰ उपासनीये । वरेण्ये ॥

वरण्ड । पुं० अन्तरावेद्याम् । वर ण्डके ॥ समूहे । सङ्घे ॥ वदना मये । वयस्फोडा०इ०भा०प्र० ॥ वृणोति । वृञ्० । अण्डन्वृक्षस्भ- वृञद्धस्यण्डन् ॥

वरण्डक । पुं० अन्तर्वेदौ । वरण्डे । मातङ्गवेद्याम् ॥ अभ्यासकालिका सनवेदिमन्तर्वासद्त्लिनीयोधयेतेद्र तिप्रसिद्धिः ॥ यौवनकण्टके ॥ स र्कुले । गोलइतिख्याते ॥ भि- त्तौ ॥ त्रि०विशाले ॥ भयसम्प- न्ने ॥ कृपणे ॥

वरण्डा । स्त्री० शरिकायाम् ॥ व र्त्याम् । शस्त्रविशेषे । छुरिका याम् ॥

वरण्डालु । पुं० फलपुच्छे ॥

वरतिक्त । पुं० कुटजवृक्षे ॥

वरतिक्तिका । स्त्री० पाठायाम् ॥

वरत्करी । स्त्री० रेणुकानामनिगन्ध द्रव्ये ॥

वरत्रा । स्त्री० नद्ध्याम् । चर्मयर ज्जौ० । वरत०इ०भा०प्र० ॥ दू ष्यायाम । कक्षायाम् । गजमध्य बन्धनरज्जौ ॥ व्रियतेऽनया । वृ ञ० । बाहुलकादत्र । वृञश्चिदि त्यत्वा ॥ यद्वा । वरत्रायते । चेङ्पालने ॥ आतोनुपेतिक ॥

वरत्वच । पुं० निम्बवृक्षे ॥ न०श्रेष्ठ वल्कले ॥

वरद । त्रि० प्रसन्ने ॥ अभीष्टदात रि । समर्द्धके ॥ शान्तचित्ते ॥ व रददाति । दुदाञ्० । आतोनुप सर्गेइतिक ॥ पुं० अग्नौ ॥ शा न्तिकर्मणिपुष्टौचवरदोऽहव्यवाहन इत्यागमात् ॥

वरदा । स्त्री० कन्यायाम् । कुमारि कायाम ॥ वरदाख्याम् ॥ अश्वग न्धायाम् ॥ आदित्यभक्तायाम ॥ टाप ॥ तिथिविशेषे । माघशुक्लच तुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री० माघशुक्लचतु र्थ्याम् ॥ तस्यांगौरीपूज्या । यथा । भविष्योत्तरेमाघशुक्लमधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजि ता । सौभाग्यमतुलंकुर्यात्पञ्चम्यां श्रीरपिश्रियम् ॥

वरदातु । पुं० भूमिसहवृक्षे ॥

वरदाची । स्त्री० दुर्गायाम् ॥

वरदानम् । न० भीमेतीर्थभेदे ॥ यत्र विष्णवेदुर्वाससावरोदत्त ॥

वरदारु । पुं० शाकवृक्षे ॥

वरदासङ्गम । पुं० तीर्थविशेषे ॥

वरपर्णाख्य । पुं० क्षीरकञ्चुकी- वृक्षे ॥

वरप्रद । त्रि० वरदे ॥

वरप्रदा । स्त्री० अगस्त्यमुनेःपत्न्या म । लोपामुद्रायाम् ॥ वरप्रददा ति । दुदाञ०क । टाप ॥

वरफ । पु० पिशाचविशेषे ॥ यथो-
क्तं शूलिनीमन्त्रविधाने । सहस्र प्र
जपेन्मन्त्रशूलिन्यायस्य शङ्कर । ब-
टाश्चवरफाश्चैवनस्य शन्तिकदाच-
नेति ॥

वरफल । पु० नारिकेलवृक्षे ॥ वराणि
फलानियस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्र-
व्ये ॥

वरम्वरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरणकार
यितरि ॥

वरर । त्रि० वरप्रदे ॥ वरान्राति ।
रादाने । आतङ्कतिक ॥

वररुचि । पु० पुनर्वसौ ॥ कात्या
यनमुनौ ॥ विक्रमादित्यराजसभा
स्थेकविविशेषे ॥ वरेषुरुचिर्यस्य ॥

वरल । पुं० बरटे । गन्धोल्याम् ॥

वरलब्ध । पुं० चम्पकवृक्षे ॥ त्रि०
वरप्राप्ते ॥

वरला । स्त्री० गन्धोल्याम् ॥हंस्याम्॥

वरली । स्त्री० वरटायाम ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् ।
मस्तकाग्निन्याम् ।उत्तमायानार्य्या
म् ॥ यथा . लक्षणयथा । शीतेसु
खोष्णासर्वाङ्गीग्रीष्मे यासुखशीत -
ला । भर्तृभक्ताचयानारीसाभवेद्वर
वर्णिनी ॥ इतिरुद्रः ॥ वरोवर्णो
स्यस्या । इनि । ङीप् ॥ लाक्षा
याम् ॥ हरिद्रायाम् ॥ रोचनाया
म् ॥ फलिन्याम् ॥ साधीयस्याम्
वरस्यासौवर्णश्चसोस्त्यस्या । इ-
नि । ङीप् ॥ श्रियि ॥ गौर्याम् ॥
सरस्वत्याम् ॥

वरवाह्लीकम् । न० कुङ्कुमे ॥

वरवृत । पु० सुप्रसादे । शिवे ॥
वरेषुवृत ॥

वरा । स्त्री० फलत्रिके । त्रिफलाया-
म् ॥ पाठायाम् ॥ रेणुकाख्यगन्ध
द्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥
ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विड
ङ्ग । श्रेष्ठायाम् ॥ ग्रहवृद्धिस्थवन्ता
हृजष्टाप् ॥

वराक । पु० सङ्करे । रणे । युद्धे ॥
त्रि०शोचनीये । शोच्ये ॥ अव-
रे ॥ वृणोतीतच्छील । वृङ्सम्भ
क्तौ । जल्पभिक्षकुट्टलुण्टवृङ . षा
कन् ॥

वराकी । स्त्री० अवरोयाम् ॥ ङीष् ॥

वराङ्गः । पुं० पुष्करिणि । गजे ।
मातङ्गे ॥ न०योनौ ॥ मस्तके ॥
गुडत्वचि ॥ शोभनावयवे ॥ त्रि०
शोभनावयवविशिष्टे ॥ वरश्चतद-
ङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्प
त्रे । त्वचे ॥ वरमङ्गमस्य । शोषा

द्विभाषितिकप् ॥

वराङ्गना । स्त्री॰ अतिप्रशस्ताङ्गयुक्तायां स्त्रियाम् ॥ यथा । शिर सपुष्पं चरणौ सुपूजितौ वराङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनम् चिरप्रनष्टां श्रियमानयन्ति षट् ॥

वराङ्गरूपोपेत : । त्रि॰ श्रेष्ठरूपयुक्ते । सिंहसंहनने ॥ अङ्गानि च रूपञ्च अङ्गरूपाणि । वराणि च तानि अङ्गरूपाणि च॰ तैरुपेत ॥

वराङ्गी । पुं॰ अम्लवेतसे ॥

वराङ्गी । स्त्री॰ हरिद्रायां ।

वराट . । पुं॰ कपर्दके ॥ तस्य भेदाः पञ्च यथा । सिंही॰ व्याघ्री॰ मृगी॰ हंसी॰ विदन्तेति राजनिर्घण्ट. ॥ रज्जौ ॥ वरमटति । अटगतौ । कर्मण्यण ॥

वराटक: । पुं॰ पद्मबीजकोषे ॥ रज्जौ ॥ कपर्दके कौडी॰ इ॰ भा॰ प्र॰ ॥ तस्य सङ्ख्याभेदेन संज्ञाभेदा यथा । वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणस्ततश्च . तेषोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्क ' ॥ इति लीलावती ॥ अपिच । तान्त्रिक . कार्षिक . पण इति याज्ञवल्क्यवचनेन॰ गुञ्जा पञ्चाद्यमाषकस्ते षोडशाद्य ' कर्षोऽस्त्रीत्यमरसिंहोक्ते न च अशीतिरक्ति कापरिमितताम्रे पणशब्द : सङ्केतित सच तावत्सङ्ख्यकवराटकैर्लभ्यते इति वराटकेष्वपि तथा व्यवहार । एतन्मूलकभविष्यमत्स्यसूक्तयोर्वचनं यथा । अशीतिभिर्वराटकै पण इत्यभिधीयते । तैर्षोडशै : पुराण स्याद्रजत सप्तभिस्तु तै रिति प्रायश्चित्ततत्त्वम् ॥ ते च दक्षिणार्थं विधीयन्ते । यथा । हत मन्त्रो चिरं दान हतो यज्ञस्त्वदक्षिण: । तस्मात्पणं काकिणीं वा फलं पुष्पमथापि वा ॥ प्रदद्याद्दक्षिणां यज्ञे तया सफलो भवेत् । इति शुद्धितत्त्वम ॥ व्रियते दलै ' । वृञ् आवरणे । अन्येभ्योपीत्याटच् ॥ तत स्वार्थे क : ॥ यद्वा । वर दलवर्णमटति । अट॰ । कर्मण्यण् । तत : स्वार्थे कन् ॥

वराटकारजा : । पुं॰ नागकेशरवृक्षे ॥

वराटिका । स्त्री॰ कपर्दके ॥

वराण . । पुं॰ इन्द्रे ॥ वरुणवृक्षे ॥

वराणसी । स्त्री॰ काश्याम् ॥

वरादनम् । न॰ राजादने ॥

वराभिध : । पुं॰ अम्लवेतसे ॥ श्रेष्ठनामनि ॥

वरारकम् । न॰ हीरके ॥

वरारोह . । पुं॰ परमेश्वरे ॥ वरआरोहोऽस्य । पुनरावृत्त्यसम्भवात्॰ वरमारोहणं यस्मिन् वा ॥ गजारो

हे ॥ अवरोहे ॥
वरारोहा । स्त्री० मत्तकाशिन्याम् । वरवर्णिन्याम् । वरआरोहोनित म्बोऽस्या ॥ कटौ ॥
वरालिका । स्त्री० आर्यायाम् । पार्वत्याम् ॥ दू० चि० ॥
वराशि । पुं० स्थूलवस्त्रे । स्थूल शाटके ॥ वर श्रेष्ठवरण वाअश्नुते । अश्नुव्याप्तौ । इन् ॥
वरासन । पुं० चिडगे ॥ द्वारपा ले ॥ न० ओड्रपुष्पे ॥ श्रेष्ठास ने ॥
वरासि । पुं० स्थूलशाटके ॥ खड् गधरे ॥
वरासी । स्त्री० स्नानवस्त्रे ॥
वराह । पुं० विष्णौ ॥ मानप्रभेदे ॥ तीर्थप्रभेदे ॥ अद्रिविशेषे ॥ मुस्ता याम् ॥ शिशुमारे॥ वाराहीकन्दे ॥ अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपवि शेषे ॥ यथा । गन्धर्वौ० वरुण सौ म्योवराहः काङ्कएवच । कुमुदश्च काशिकश्चनागोभद्रारकस्तथा॥ चन्द्रे न्द्रमलया शङ्खयवाङ्गकाभक्ति मान् । ताम्राङ्गश्चकुमारीचतथ द्वीपादशाष्टभिरिति ॥ सूकरे । कोले । भूदारि॥ अस्यमांससाधना दियथा । वराहस्यतनु तोये स- म्यक्प्रक्षालितासुहुः। दृष्टाग्निनाथ वादग्धाकिञ्चित्तैलेनसेकिताम् ॥ शल्यैपादशयेत्तातुयावन्निर्लोमता भवेत् । ततोतितीक्ष्णशल्येपाकट्ट यित्वायथोचितम् ॥ गृहणीयाच्चा मिष तस्मपृथगङ्गविभागश । र न्धयेद्बहुधाअन्नप्रलेहतलनादिकम् ॥ स्वेदनश्चश्रमघ्नश्च शीतलतर्पणं गु रु । श्रमानिलहरस्निग्ध वाराहबल वर्द्धनम् ॥ वरश्रेष्ठमाहन्ति । हन० । अन्येष्वपीतिड ॥ तन्मां सविष्णवेनदेयम् ॥ तदुक्त विष्णु सूत्रे । नाभक्ष्य नैवेद्यार्थे०भक्ष्ये ष्व जामहिषीक्षीरंवर्जयेत् । पञ्चनख मत्स्यवराहमांसानिचेति ॥ आर ण्यवराहमांसश्राद्धादौविहितम् । अग्नन्तोष्यनुवृत्तौ० महारण्यवासिन श्ववराहास्तथेतिहारीतोक्तं ॥
वराहकन्द । पुं० वाराह्याम् ॥
वराहकर्णी । स्त्री० अश्वगन्धायाम् ॥
वराहकान्ता । स्त्री० वाराह्याम् । व दराद्रुमे ॥
वराहकाली । स्त्री० सूर्यमणिपुष्पवृ क्षे ॥ सूर्यावर्त्ते ॥
वराहक्रान्ता । स्त्री० लज्जालौ । ति लागस्थिकायाम् । नमस्कार्याम् ॥
वराहनामा । पुं० वाराहीकन्दे॥
वराहपुराणम् । न० वाराहे ॥
वराहव्यूह । पुं० वराहाकृतिवत्सन्त तरचनेव्यूहे ॥ सूक्ष्मसुखपश्चाद्वा ग पृथुमध्योवराहव्यूहोभवति ।

अनेनपार्श्वयोर्भग्नेमतियातव्य मा र्गव्रजेत् ॥

वराङ्गी । स्त्री० हरिद्रायाम् ॥

वराहिका । स्त्री० कपिकच्छौ ॥

वराही । स्त्री० भद्रमुस्तायाम ॥ ग्र कारकान्दे ॥

वरिमा । पु० उरुत्वे । विशालताः याम् ॥ उरोर्भाव । पृथ्वादित्वा दिमनिच् । प्रियस्थिरेति० उरो र्वभाव ॥

वरिव । न० परिचर्य्यायाम् ॥ धने ॥

वरिउसित । त्रि० उपासिते ॥ वरि व कृतम् नमो।वरिवइतिक्यच। त्त क्यस्यविभाषेतिपक्षे यलोप ॥

वरिदसिता । त्रि० नमस्कर्त्तरि ॥

वरिवस्या । स्त्री० शुश्रूषायाम् । से वायाम् ॥ वरिवस कारणम् । व रिवश्शब्द पूजार्थे । नमोव रिवश्चित्रङ क्यच् । अप्रत्ययादि त्य । टाप् ॥

वरिवस्थित । त्रि० उपासिते । वरि वसिते ॥ वरिवस क्यच् । क्त । क्यस्यविभाषेतिपक्षे यलोपाभाव ॥

वरिशी । स्त्री० मत्स्यवेधने ॥

वरिषम् । न० वत्सरे ॥

वरिषा । स्त्री० भूम्नि० वर्षासु । प्रावृषि ॥ #

वरिषाप्रिय । पुं० चातकेखगे ॥

वरिष्ठ । पु० तित्तिरौ ॥ नारङ्गके ॥ न० मरिचे ॥ ताम्रे । त्रि० वरतमे ॥ उरुतमे ॥ अयमेषामतिशयेननर ० उरुर्वा । अतिशायने० इष्ठन् । प्रियस्थिरेति० उरोर्वभाव ॥ वस्मे ॥

वरी । स्त्री० शतावर्य्याम् ॥ नोलोत्प लाकारपुष्पत्वात् । वृणोति । वृ ञ् । पचाद्यच् । गौरादि ॥ सू र्य्यपत्नीषिति ॥

वरीयान् । पुं० विष्कम्भादिष्वष्टादशे योगे । तत्रजातस्यफलयथा । दा तादयालु . सुतरांसुवेश सत्कर्म कर्त्तामधुर स्वभाव : नरोवलीया न् धनवान् जनाढ्योयोगोवरीयान् यदिजन्मकाले ॥ त्रि० अतियूनि ॥ श्रेष्ठे । अतिविस्तारे ॥ अयमन योरतिशयितउरुर्वरोवा । द्विवचने तीयसुनिप्रियस्थिरेति० उरोर्वरा देश ॥

वरीवर्द । पुं० वलीवर्द्दे ॥

वरुट । पुं० म्लेच्छजातिविशेषे ॥ यथा । पुलिन्दानाहलानिष्ठ्या : शवरावरुटाभटा : । मालाभिल्ला किराताश्चसर्वेपिम्लेच्छजातय ॥ इतिहेमचन्द्र ॥

वरुड । पु० अन्त्यजजातिविशेषे ॥ यथा । रजकश्चर्मकारश्चनटोवरु डएवच । कैवर्त्तमेदभिल्लाश्चसप्तैते चान्त्यजा : स्मृता ॥ एतेषांचस्त्रियो गत्वाभुक्त्वाचप्रतिगृह्यच । पतत्य

स्नानतोभिप्रोक्षणात् साम्यन्तु गच्छ ति ॥ इतिश्रम ॥ अस्योत्पत्तिर्य था । कवेर्वर्त्स्यवरुणत्यायाभोभिड का देवमोचिका । सोचिक्यागो भिड्काज्जातोनटोवरुडएवच ॥ इ० प० प० ॥

वरुण । पु० पश्चिमाशापतौ । प्रचे तसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामर्ध्वतेषाराजा वरुणोनामभगवतोविभूति ॥ व्रिय ते०इणोतिवा । वृञ० । कृवृदा रिभ्यउनन् ॥ अप्सु । जले ॥ स्वर श्मिस वरणात् सायङ्गनेसूर्ये ॥ तरु विशेषे । वरणे । सेतौ । तितशा कि । कुमारके । अश्मरीघ्ने । श्वेत इक्षे । तमाले । वरुणा० इ० भा० प्र० ॥ अस्यगुणा । वरुणपित्त लोभेदीश्लेश्मकृच्छाश्ममारुतान् । निहन्तिगुल्मवातास्रकृमींश्चोष्णो ग्निदीपन ॥ कषायोमधुरस्तिक्त कटुकोरुक्षकोलघु ॥ अपिच । वरुणोनिलशूलघ्नोभेदीचोष्णोश्मरी हर । पुष्पं वरुणज याहीपित्तघ्न मामवातजित् ॥ *

वरुणजा । स्त्री० मदिरायाम् ॥

वरुणात्मजा । स्त्री० मदिरायाम् ॥ व रुणालयेपिवरुणः । तस्यात्मजा ॥

वरुणानी । स्त्री० वरुणस्यपत्न्याम् ॥ वरुणस्यस्त्री० । इन्द्रवरुणेतिङी

षानुकौ ॥

वरुणालय । पु० समुद्रे ॥ वरुणस्य आलय ॥

वरूत्रम् । न० प्रावरणे । उत्तरीयव स्त्रे ॥ इणोति । वृञ० । अशित्रा दिभ्यइत्रोत्राविनित्ऊत्रप्रत्यय ॥

वरूत्र । पु० सम्भृतो ॥

वरूथ । पु० रथगुप्तौ । परप्रहरणा भिघातरक्षार्थं रथस्यसन्नाहवद्दारुर णाकद्रव्ये ॥ वरूथोरथगुप्तिर्याति रोधत्तेरथस्थितमितिमथ्यन ॥ पिके ॥ काले ॥ रामदे ॥ त्रि० वरणीये ॥ न० चर्मणि ॥ वर्म णि ॥ वेश्मनि ॥ व्रियतेरथोऽनेन । वृञ् वरणे । जूवृञ्भ्यामूथन् ॥

वरूथाधिपति । पु० सेनान्याम् ॥

वरूथी । त्रि० गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री० सेनायाम् ॥ वरू था सन्त्यस्याम् । इनि ङीप् ॥

वरेण्य । पु० वह्नौ ॥ प्रजापतौ ॥ ध्यानेनसूर्यमण्डलेद्रष्टव्ये पुरुषे ॥ तथाचयोगियाज्ञवल्क्य । वरेण्य वरणीयञ्चजन्मसंसारभीरुभि ॥ आदित्यान्तर्गत यच्चभर्गाख्यं वासु मुक्षुभि । जन्ममृत्युविनाशाय दु खस्यत्रिविधस्यच । ध्यानेनपु रुषोयस्तुद्रष्टव्य सूर्यमण्डलेइति ॥ न० कुङ्कुमे ॥ त्रि० प्रधाने ॥ वरणीये ॥ व्रियते । वृञ० ।

वृ अण्ठ ॥

वरेन्द्री । स्त्री० गौडदेशे ॥

वरेश्वर । पु० सदाशिवे । वराणा मीश्वर ॥

वरोटम् । न० मरुवकपुष्पे ॥

वरोल । ) पु०
वरोली । ) स्त्री० वरटे ॥

वर्क्कर पुं० नर्म्मणि । परिहासे ॥ युवपशौ ॥ छागे । वकरा० इ० भा० प्र० अस्यमांसगुणा' । यथा सद्भिङ्गु नाज्ये नयुतसुपक्वमजासुतस्यामिष मल्पकस्य । एलालवङ्गोषणयोगयो गात्करोतिपुष्टिं जठरानलस्य ॥ अजासुतस्यबालस्यमासं गुरुतरस्मृत म् । हृद्य मृदुतरञ्चैव सुखादुबलद स्मृतम् ॥ वर्क्कायास्तु । सिद्धार्थसम्भवैते लेहृतैवोपस्कारान्विते । साधितस्या प्रसूताया ' पलमाज गुणोत्तमम् ॥ अजाऽप्रसूतासम्भूतमांस पीनस नाशनम् । शुक्रकासारुचेशोफेहित मग्नेश्चदीपनम ॥ अजासुतस्यपीन स्यशोवनस्यस्यसाधितम् । घृतराम ठस युक्तोपस्करैरसवत्पलम् ॥ वा तपित्तहरबल्यं सुखादुरुचिकारक म् । हृद्य पीनसकासाशं ' शोथ घ्न पुष्टिकृत्परम ॥ इतिपिठौरा ॥ अथक्लिन्धिया । स्थूलनिष्कासि तान्त्रस्यमांसकृतमजस्य च । रञ्जित बहुधासूदैराखुरादिकमस्तकम् ॥ त न्मांसमासदबल्य रुच्यं पित्तानिला पहम् । सुखादुमधुरपाकेकिञ्चित्क फकरस्मृतम् ॥ वर्कते । इकाथादा ने । बाहुलकाद्दरन् ॥

वर्क्कराट । पु० कटाक्षे ॥ तरुणादि त्वरोचिषि ॥ नारीपयोधरोत्स ङ्गकान्तदन्तनखक्षते ॥ इतिमेदि निकर ' ॥

वर्ग ' । पु० सजातीयसमूहे । समा नधर्म्मिभि . प्राणिभिरप्राणिभिर्वो पलच्चितेद्वन्द्वे ॥ यथा । कवर्ग पशुवर्ग . । इति ॥ ग्रन्थपरिच्छे दे ॥ यथा । सर्गोवर्गपरिच्छेदोद्- घाताध्यायाङ्कसङ्ग्रहा : । उच्छ्वा स : परिवर्त्तस्तपटल : काण्डम- स्त्रियाम् ॥ स्थानप्रकरणपर्वाह्निक वाश्चग्रन्थसन्धय . ॥ समानाङ्कद्वय स्यपूरणे । कृतौ ॥ वृज्यते । वृजीव र्ज्जने । घञ् । कुत्त्वम् ॥

वर्गोत्तम ' । पुं० नवांशानामध्येस्वां शे ॥ यथाचराणामेषकर्क्कटतुलाम कराशीनाप्रथमोंश . । स्थिराणा वृषसिंहवृश्चिककुम्भानापञ्चमोंश: । द्व्यात्मकानांमिथुनकन्याधनुर्मीना नानवमोंश ' । चराणाप्रथमेचांशे स्थिराणांपञ्चमेतथा । नवमेद्व्यात्म कानाञ्चवर्गोत्तमइतिस्मृत . ॥ अपिच । मेषाद्यामकराद्याश्चतुला द्या ' कर्कटादय : । क्रमान्नवांशा

राशीनांखाश्चावर्गोत्तमा स्मृता.॥ इति ॥

वर्चा · । पुं॰ चन्द्रात्मजे ॥ यथा । रोहिण्यामभवद्वर्चावर्चस्वीयेनचन्द्रमाः। त्रि॰ ॥ न॰रूपे ॥ विष्ठायाम् ॥ तेजसि ॥ वर्चते । वर्चदीप्तौ । सर्वधातुभ्योऽसुन् ॥

वर्चस्क । पु॰ न॰गूथे । पुरीषे · विष्ठायाम् ॥ वर्चते॰वर्च्यतेवा । वर्च॰ । असुन् । कुत्सायांकन् ॥

वर्चस्वी । पुं॰ चन्द्रमसि॥ त्रि॰वर्चोविशिष्टे ॥ अस्मायामेधेतिमत्त्वर्थीयेविनि ॥

वर्जनम् । न॰ हिंसायाम ॥ त्यागे॥

वर्जनीय । त्रि॰ त्यागार्हे । वर्ज्ये ॥

वर्जित. । त्रि॰ परित्यक्ते ॥ वृजेः ॥ क्तः ॥

वर्ज्य · । त्रि॰ त्याज्ये । वर्जनीये ॥

वर्ण · । पुं॰ द्विजादौ · ब्राह्मणादौ । ब्राह्मणे । क्षत्रिये । वैश्ये । शूद्रे ॥ देवेषुवर्णायथा । आदित्या . क्षत्रियास्तेषाविषश्चमरुतस्तथा । अश्विनौचस्मृतौशूद्रौतपस्युग्रेसमास्थितौ । स्मृतास्त्वाङ्गिरसादेवाब्राह्मणाइतिनिश्चय · । अपिच । चत्वार · कथितावर्णाश्रमोअपिसुव्रते । आचाराश्चापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णा · पञ्चप्रकीर्तिता । ब्राह्मण क्षत्रियोवैश्यशूद्र. सामान्यएवच ॥ सामान्योवर्णसङ्कर : ॥ शुक्लादौ ॥ सचबहुविधोयथा । श्वेत १ । पाण्डु २ धूसर ३ । कृष्ण ४ । पीत ५ । हरित · ६ । रक्त · ७ । शोण . ८ । अरुण · ९ । पाटल १० । श्याव · ११ । धूम्र १२ । पिङ्गल १३ । कर्बुर १४ । यथाह्यमर । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डरा । अवदात सितोगौरोऽवलक्षोधवलोर्जुन . ॥ १ ॥ हरिणपाण्डुर पाण्डु २ · ईषत्पाण्डुस्तुधूसर ३ । कृष्णेनीलासितश्यामकालश्यामलमेचका ४ ॥ पीतोगौरोहरिद्राभ ५ पालाशोहरितोहरित् ६ लोहितोरोहितोरक्त ७। शोण कोकनदच्छवि ८ ॥ अव्यक्तरागस्त्वरुण ९ । श्वेतरक्तस्तुपाटल १० । श्याव स्यात्कपिशो ११ धूम्रधूमलौकृष्णलोहिते १२ ॥ कडार कपिल : पिङ्गपिशङ्गौकद्रुपिङ्गलौ १३ । चित्र किर्मीरकल्माषशबलैताश्चकर्बुरे १४ ॥ गुणे शुक्लादय · पुंसिगुणिलिङ्गास्तुतद्वति । इति ॥ यशसि॥ गुणे । गजच्छिन्नकम्बले । प्रवेण्याम् । आस्तरणे ॥ द्वायोकोभून॰ इ॰ भा॰ ॥ स्तुतौ ॥ काञ्चने ॥

न्नते ॥ गीतक्रमे ॥ न० कुङ्कुमे ॥ पु० न० भेदे ॥ रूपे ॥ विलेपने ॥ अक्षरे । अकारादिवर्णे सर्वहिवि ध. । ध्वन्यात्मकोऽक्षरात्मकश्च ॥ अक्षरात्मकस्योच्चारणमुक्तं अरदात्त्ले । यथा । श्रीशिवउवाच । विशेषकथयाम्यद्यप्रोच्चार्यो कण्ठत स्वराः । ऋदयजिह्वयामूर्द्धल्दय जिह्वदन्तजम्॥ मुखस्थानाढ्लोवा च्या अकार. कण्ठघातजइति ॥ चित्रे ॥ शब्दे ॥ तालविशेषे ॥ ष ड्जादिगतौ ॥ षड्गरागे॥ व्रिय तेऽनेन । वृञ्० । कृवृजृसिद्रुपन्य निस्वपिभ्योनिदितिन ' ॥ यद्वा । वह्वेोवर्णा सन् स्य । अर्ष्या यच् ॥ वर्ष्य तेऽर्थोऽनेनवा । व- र्णवर्णने० वर्णप्रेरणेवा । घञ् ॥ वर्णयतिवा । अच् ॥

वर्णकः । पुं० चारणे ॥ मण्डले ॥ न० हरिताले ॥ घृष्टचन्दनादिलि पमात्रे ॥ गात्रानुलेपनयोग्यपिष्टे घृष्टेवासुगन्धिद्रव्ये ॥ चन्दने ॥ पुं० स्त्री० हिङ्गुलहरितालका चनोलीकादौ ॥ पुं० न० चन्दने ॥ विलेपने ॥ त्रि० वक्तरि ॥ वर्णं करोति० वर्णयति० वक्तीतिवा । वर्ण० ॥ ण्वुल् ॥

वर्णखण्डः । पुं० चास्तरणे ॥

वर्णकविः । पुं० ^कुवेरात्मजे ॥

मायुराजे ॥

वर्णका । स्त्री० प्रावर्णभेदे ॥ व र्णंवर्णक्रियाविस्तारगुणवचनेष्विति चौरादिक ' । ततोण्वुल् । वर्णं कातान्तवद्भूतौत्वंम ॥

वर्णकूट । पुं० योटकविशेषे ॥ यथा । चत्वविट्शूद्रविप्रा स्यु क्रमान्मेषादिराशय ' । तत्रवर्णा धिकाकन्यानेवोद्वाह्याकदाचन ॥ दोषस्तु । वर्णज्येष्ठातुयानारीवर्णं हीनस्तुय. पुमान ॥ विवाहयदि कुर्वीततस्याभर्ताविनश्यतीति ॥

वर्णकूपिका । स्त्री० मसीधान्याम् ॥

वर्णक्रिशा । स्त्री० वर्णकरणे ॥ यथा । वर्णस्यकरणेदेयंकुङ्कुमंरक्तचन्दन- म । ताम्बूलं यत्रयद्युक्तं तत्तत्त प्रयोजयेत् ॥ पादेषुगुरुणादेयो- गोल्यजैत्त्रोरजेषुच ॥ शेषेषुपाथ्ययोगेषुधूपयेद्विङ्गुसर्पिषा ॥

वर्णचारकः । पु० चित्रकारे ॥

वर्णज्येष्ठ ' । पुं० ब्राह्मणे ॥ वर्णानां० वर्णेषुवाज्येष्ठ . ॥ त्रि० स्ववर्णापे क्षयोत्तमवर्णे ॥

वर्णतूलि ।<br>वर्णतूलिका । स्त्री० लेखन्याम् ॥<br>वर्णतूली ।

वर्णदम् । न० कालीयके ॥ त्रि० व र्णदातरि ॥

वर्णदात्री । स्त्री० हरिद्रायाम ॥

त्रि० वर्णदातरि ॥

वर्णदूत । पु० लेखे । शाब्दिकहार वे ॥

वर्णधर्म्म । पुं० न० वर्णाधिकृत धर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्म सम्प्रवर्त्तते । वर्णधर्मः सउक्तस्तु यथोपनयन नृपेतिभविष्यपुराणम् ॥ अपिच । यजन याजन दान ब्राह्मणस्यप्रतिग्रह । अध्यापनंचाध्ययन षट्कर्माणिद्विजोत्तमाः ॥ दानमध्ययन यज्ञोधर्म क्षत्रियवैश्ययो । दण्डोयुद्धक्षत्रियस्यकृषिर्वैश्यस्यशस्यते ॥ शुश्रूषैवद्विजातीनाशूद्राणांवर्णसाधनम् । कारुकर्म तथाजीव. पाकयज्ञोपिधर्म्मत ॥ क्षमादमोदयादानमलोभस्त्याग एवच । आर्जव चानसूयाचतीर्थानुसरण तथा ॥ सत्यसन्तोषआस्तिक्य श्रद्धाचन्द्रियनिग्रह । देवताभ्यर्चन पूजाब्राह्मणानांविशेषत ॥ अहिंसाप्रियवादित्वमपैशुन्यमकल्कता । सामासिकमिम धर्म चातुर्वर्ण्येऽब्रवीन मुनि ॥ प्राजापत्य ब्राह्मणानास्मृत स्थान क्रियावताम् । स्थानमैन्द्र क्षत्रियाणा सङ्ग्रामेष्वपलायिनाम् ॥ वैश्यानां मारुत स्थान स्वधर्ममनुवर्त्तताम् । गान्धर्वं शूद्रजातीनांपरिचारेतुवर्त्तताम् । इतिकौर्मे २ अध्या

य ॥

वर्णनम् । न० उपवर्णने ॥ स्तवने ॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना । स्त्री० प्रशसायाम् । गुण कथने । स्तवे ॥

वर्णनीय । त्रि० वर्ण्ये । वर्णितव्ये ॥

वर्णपात्रम् । न० चित्रकारस्यनील्यादिवर्णाधारे ॥

वर्णपुष्प : । )
वर्णपुष्पक : । ) पुं० महासहायाम् । राजतरुणीपुष्पवृक्षे । अम्लाने ॥

वर्णपुष्पी । स्त्री० उष्ट्रकाण्डीपुष्पवृक्षे ॥

वर्णप्रसादनम् । न० अगुरुणि ॥

वर्णमाता । स्त्री० भारत्याम् ॥ लेखन्याम् ॥

वर्णमातृका । स्त्री० सरस्वत्याम् ॥

वर्णमाला । स्त्री० क्रमागताकाराद्यक्षरसमूहे । मातृकायाम् ॥ वर्णानामालेव ॥ तत्रस स्कृतवर्णा ५० । जपमालायाम् ५१ । इङ्गलीयवर्णा. २६ । फरासीया २३ । हिब्रु० अर्थात्इहूदीया २२ । आरबीया २८ । पारसीया : ३१ । तुरस्कीया. ३३ । रूषीया ४१ । ग्रिक० अर्थात्इयुनानीया २४ । लाटिन्देशीया २२ । डच्० अर्थात्ओलन्दाजीया. २६ । स्पान्

देशीया . २७ । हुटेलीदेशीया ' २० । तातारीया ' २०२ । वर्म्म देशीया ' १९ । चीनदेशीयवर्णा शब्दात्मका : तच्छब्दसङ्ख्या : ८०००० ॥ इतिशब्दकल्पद्रुमेरा धाकान्तदेव . ॥

वर्णरेखा । )
वर्णलेखा । ) स्त्री० कठिन्याम् ॥
वर्णलेखिका । )

वर्णवती । स्त्री० हरिद्रायाम् ॥ त्रि० वर्णविशिष्टे ॥ वर्णोस्त्यस्याम् । रसादिभ्यश्चेतिमतुप । उगित्वान् ङीप् ॥

वर्णविक्रिया । स्त्री० वर्णापचारे ॥ +

वर्णविलोडक . । पु० श्लोकस्तेने । काव्यच्छायाहृति ॥ सन्धिचौरे ॥

वर्णसङ्कर । पु० सङ्कीर्णाचरे ॥ मिश्रितजातौ । मूर्द्धाभिषिक्तमाहिष्यकरणाद्यनुलोमप्रतिलोमजातेऽन्तरालजातौ ॥ वर्णयोर्वर्णानावासङ्करोयस्मिन्जनयितव्येसवर्णः सङ्कर ॥ व्यभिचारेणवर्णानामवेद्यावेदनेनच । स्वकर्मणाम्त्यागेनजायन्तेवर्णसङ्करा ॥

वर्णसङ्घात . । पु० अक्षरसमाम्नाये ॥

वर्णसमाम्नाय : । पु० वर्णमालाया म् ॥

वर्णसि . । पुं० जले । वृणोति । वृ अ० । सानसिवर्णसीत्यादिना० असिप्रत्ययेधातोर्नुक्च ॥

वर्णा । स्त्री० आढक्याम् ॥

वर्णाङ्का । स्त्री० लेखन्याम् ॥

वर्णाट : । पु० गायने ॥ चित्रकरे ॥ स्त्रीकृतजीवने ॥

वर्णात्मा । पु० शब्दे ॥

वर्णाश्रमधर्म्म । पु० वर्णाश्रमोभयाऽधिकृतधर्मे ॥ यथा । वर्णत्वमाश्रमत्वञ्चयोधिकृत्यप्रवर्त्तते । सवर्णाश्रमधर्मस्तुमौञ्जीयामेखलायथा ॥ वर्णाश्रमयोर्धर्म्मः ॥ सचोक्त ' श्रीमहानिर्वाणतन्त्रे । यथा । श्रुत्वा धर्मान्बहुविधान्भवानीभवमोचिनी । हितायजगतामाताभूय श ङ्करमब्रवीत् ॥ श्रीदेव्युवाच । श्रुतबहुविध धर्मंमिहामुत्रसुखप्रदम् । धर्मार्थकामदं । शङ्कर निर्वाणकारणम् ॥ साम्प्रत श्रोतुमिच्छामिव्रूहिवर्णाश्रमान्विभो । यत्रयेविहिताचारा कृपयावदतानपि ॥ श्री सदाशिवउवाच ॥ चत्वार कथितावर्णाश्रमाश्चमिसुव्रते । आचाराश्चापिवर्णानामाश्रमाणापृथक्पृथक् ॥ कृतादौ० कलिकालेतुवर्णा पञ्चप्रकीर्त्तिता ' । ब्राह्मणक्षत्रियौवैश्य ' शूद्र सामान्यएवच ॥ एतेषासर्ववर्णानामाश्रमौद्वौमहेश्वरि । तेषामाचारधर्मांश्चम्पूर्ण्वा यौवदामिते ॥ पुरैवकथित तावत्

कलिसम्भवचेष्टितम् । तप स्वाध्यायहीनानान्नृणामल्पायुषामपि । क्लेशप्रयासाशक्तानाकुतोदेहपरिश्रम ॥ ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवआश्रमौद्वौकलौयुगे ॥ गृहस्थस्य क्रिया सर्वआगमोक्ता कलौयुगे । नान्यमार्गैं क्रियासिद्धि कदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेविवेदोक्त दण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौत स स्कृति ॥ शैवस स्कारविधिना ऽवधूताश्रमधारणम् । तदेवकथित भद्रे स न्यासग्रहण कलौ ॥ विप्राणामितरेषाञ्चवर्णानाप्रवलेकलौ । उभयत्राश्रमेदेविसर्वेषामधिकारिता ॥ सर्वेषामेवसस्कारा कर्माणिशैववर्त्मना । विप्राणामितरेषाञ्चकर्मलिङ्ग पृथक पृथक् ॥ जातमात्रोगृहस्थ स्यात्स स्काराद्दाश्रमीभवेत् । गार्हस्थ्यप्रथम कुर्याद्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्ने वैराग्य जायतेयदा । तदासर्वं परित्यज्यस न्यासाश्रममाश्रयेत् ॥ विद्यासुपार्ज्जयेद्बाल्ये धन दारांश्चयौवने । प्रौढे धर्म्याणिकर्माणिचतुर्थे प्रव्रजेत्सुधी ॥ मातर पितर वृद्धभार्याञ्चैवपतिव्रताम् । शिशुञ्चतनयत्यक्त्वानावधूताश्रम व्रजेत् ॥ मातॄ: पितॄन् शिशून् द राज्स्वजनान्वान्धवानपि । य प्रव्रजतिहित्वैतान समहापातकीभवेत् ॥ मातृहा पितृहास्यात्स्त्रीवधीब्रह्मघातक । असन्तर्प्य स्वपित्रादीन्योगच्छेत् भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्नश्चस्वस्ववर्णोक्तस सक्रिया । शैवेनवर्त्मनाकुर्यादेशधर्म कलौयुगे ॥ श्रीदेव्युवाच । कोवाधर्मोगृहस्थस्य भिक्षुकस्यचकि विभो । विप्रस्यविप्रभिन्नानास स्कारादीनिमेवद ॥ श्रीसदाशिवउवाच ॥ गार्हस्थ्यप्रथम धर्म सर्वेषामनुजन्मनाम् । तदेवकथयाम्यादौशृणु कौलिनि तत्त्वत ॥ ब्रह्मनिष्ठोगृहस्थ स्याद्ब्रह्मज्ञानपरायण । यद्यत्कर्म प्रकुर्वीततद्ब्रह्मणिसमर्पयेत् ॥ नमिथ्याभाषण कुर्यात्नचशाठ्य समाचरेत् ॥ देवतातिथिपूजासुगृहस्थोनिरतोभवेत् ॥ मातर पितरञ्चैव साक्षात्प्रत्यक्षदेवताम् । मत्वा गृहीनिषेवेतसदासर्व प्रयत्नत ॥ तुष्टायामातरिशिवेतुष्टे पितरिपार्वति । तवप्रीतिभवेद्देवि परब्रह्मप्रसीदति ॥ त्वमाद्याजगतामातापिताब्रह्मपरात्परम् युवयो प्रीणन यस्मात्तस्मात्कि गृहिणातप ॥ आसन शयन वस्त्र पान भोजनमेवच । तत्तत्समयमाज्ञायमात्रे

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुला वाचोंसर्व्वदाप्रियमाचरेत्। पित्रोरा ज्ञानुसारीस्यात्सत्पुत्र कुलपावन : ॥ औद्धत्य परिहासञ्चतर्ज्जन परिभाषणम् । पित्रोरग्रे नकुर्वीत यदीच्छेदात्मनोहितम् ॥ मातर पितरंवीक्ष्यनत्वोत्तिष्ठेत्ससम्भ्रम । विनाज्ञयानोपविशेत्स स्थित . पितृशासने ॥ विद्याधनमदोन्मत्तो य कुर्यात्पितृहेलनम् । सयाति नरकं घोर सर्व्वधर्म्मवहिष्कृत ' ॥ मातर पितरंपुत्र दारानतिथिसोदरान् । हित्वागृहीनभुञ्जीयात्प्राणै ' कण्ठगतैरपि ॥ वञ्चयित्वागुरूनवन्धून् योभुङ्क्ते स्वोदरम्भर ' । इहैवलोकगर्ह्यो सोपरत्रनारकी भवेत् ॥ गृहस्थोगोपयेद्दारान्विद्या मभ्यासयेत्सुतान् । पोषयेत्स्वजनान्वन्धूनेषधर्म्म ' सनातन ॥ जनन्यावर्ज्जितोदेहोजनकेनप्रपोषित । स्वजनै शिक्षित प्रीत्या सोधमस्तान्परित्यजेत् । एषामर्थे महेशानिकृत्वाकष्टशतान्यपि । प्रीणयेत्सतत शक्त्याधर्मोह्येष सनातन . ॥ सधन्य : पुरुषोलोकेसङ्क्लेपरमार्थवित् । ब्रह्मनिष्ठ सत्यसन्धोयोभवेन्नुविमानव ॥ नभार्यां ताडयेत्क्वापिमातृवत्पालयेत्सदा । नत्यजेद्‌घोरकष्टेऽपियदिसाध्वी



पतिव्रता ॥ स्थितेषुस्वीयदारेषुस्त्रियमन्यानसंस्पृशेत्। दुष्टेनचेतसा विद्वानन्यथानारकीभवेत् ॥ विरले शयन वास त्यजेत्प्राज्ञ परस्त्रिया । अयुक्तभाषणञ्चैवस्त्रियंशौर्यंनदर्शयेत् ॥ धनेनवाससाप्रेम्णाश्रद्धयामृतभाषणै : । सतत तोषयेद्दारान्नाप्रिय क्वचिदाचरेत् ॥ उत्सवेलोकयात्रायातीर्थेष्वन्यनिकेतने । नपत्नीप्रेषयेत्प्राज्ञ . पुत्रामात्यविवर्ज्जिताम् ॥ यस्मिन्नरेमहेशानि तुष्टाभार्यापतिव्रता । सर्व्वधर्म्मकृतं तेनभवतीप्रियएवस . ॥ चतुर्व्वर्षावधिसुतान्लालयेत् पालयेत्पिता । तत षोडशपर्य्यन्त गुणान्विद्या श्चशिक्षयेत् ॥ विंशत्यव्दाधिकान् पुत्रानप्रेरयेन्नृहकर्म्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेह प्रदर्शयेत् ॥ कन्याप्येव पालनीयाशिक्षणीयाति यत्नत ' । देयावरायविदुषेधनरत्नसमन्विता एव क्रमेणभ्रातृंश्चस्वसृभ्रातृसुतानपि । ज्ञातीन्मित्राणि भृत्याश्चपालयेत्तोषयेद्‌गृही ॥ तत स्वधर्म्मनिरतानेकग्रामनिवासिन . । अभ्यागतानुदासीनान गृहस्थ परिपालयेत् ॥ यद्येव नाचरेद्देवि गृहस्थोविभवेसति । पशुरेवसविज्ञेय ' सपापीलोकगर्हित : ॥ निद्रालस्यदेहयत्नकेशवि

न्यासमेव च । आसक्तिमयजेवर्ग्रे-
नातिरिक्तं समाचरेत् ॥ ५१ । यु
क्ताहारोयुक्तनिद्रोमितवाङ् मितमै
थुन । स्वच्छोनम्र शुचिर्दक्षोयु-
क्त स्यात्सर्वकर्मसु ॥ शूर श्र-
द्धोविनीत : स्याद्वान्धवेगुरुसन्नि
धौ । जुगुप्सितान्नमन्येतनावम-
न्येतमानिन ॥ सौहार्द्दं व्यवहारा
श्चप्रवृत्ति प्रकृतिन्नृणाम् । सहवासे
नतर्केश्चविदित्वाविश्वसेत्तत ॥
वसेद्देहे रपिच्छद्रात्सम यवोच्य
बुद्धिमान् । प्रदर्शयेत्स्वप्रभावा-
न्नैवधर्मं विलङ्घयेत् ॥ स्वीय य
श्च पौरुषञ्चगुप्तयेकथितञ्चयत् ।
कृत यदुपकारायधर्मज्ञोनप्रकाशये
त् ॥ जुगुप्सितप्रवृत्तौचनिश्चितेपि
पराजये । गुरुणालघुनाचापियश
स्वीनविवादयेत् ॥ विद्याधनयशो-
धर्मान् यतमानउपार्जयेत् । व्यस
नञ्चासतासङ्गं मिथ्याद्रोहपरित्यजे
त् ॥ अवस्थानुगताश्चेष्टा समया
नुगता क्रिया । तस्मादवस्थास
मय वीच्यकर्म समाचरेत् ॥ योगक्षे
मरतोदक्षोधार्मिक प्रियवान्धव
। मितवाङ्मितहास स्यान्मा-
न्याग्रे तुविशेषत ॥ जितेन्द्रिय
प्रसन्नात्मा शुचिन्त्य स्याद्दृढव्र-
त । अप्रमत्तोदीर्घदर्शी माचास्य
र्थान्विचारयेत् । सत्य मृदुप्रिय
धीरोवाक्यंहितकरवदेत् । आत्मो
त्कर्षं तथानिन्दापरेषापरिवर्ज्जये-
त् । जलाशयाश्चवृक्षाश्चविश्रामगृ
हमध्वनि । सेतु प्रतिष्ठितोयेनतै
नलोकत्रयजितम ॥ सन्तुष्टौपितरौ
यस्मिन्ननुरक्ता सुहृज्जना । गाय
न्तियद्यशोलोकास्तेनलोकत्रयजित
म् ॥ सत्यमेवव्रतयस्यदयादीनेषु-
सर्वथा । कामक्रोधौवशेयस्यतेनलो
कत्रय जितम् ॥ विरक्त परदारे
षु निस्पृह परवस्तुषु । दम्भमात्स
र्यहीनोयस्तेनलोकत्रयजितम् ॥ न
बिभेतिरणाद्योवैसङ्ग्रामेप्यपराङ्
मुख । धर्मयुद्धेमृतोवापितेनलो
कत्रय जितम् ॥ अस शयात्मासुश्र
द्ध शास्त्रवाचारतत्पर । मत्क्रास
मेहितोयस्तेनलोकत्रयजितम् ॥
ज्ञानिनालोकयात्रायैसर्वंचसमदृष्टि
ना । क्रियन्ते येनकर्माणितेनलोक
त्रयजितम् ॥ शौचन्तुद्विविधप्रोक्त-
बाह्याभ्यन्तरभेदत ब्रह्मण्यात्मा
र्पणयत्तच्छौचमान्तरिकस्मृतम् ॥
अद्भिर्वाभस्मभावापिमलानामपक-
र्षणम् । देहशुद्धिभवेद्येनबहि
शौचतदुच्यते ॥ गङ्गानद्योह्रदावा
प्यस्तथाकूपाश्चचुत्तका । सर्वपवित्र
जननसूर्यदीक्षमत प्रिये ॥ भस्माच
याज्ञिकश्रेष्ठ मृत्स्नातुमलवर्जिता
वासोऽजिनतृणादीनिमृहज्जानौ-

ह्विसुव्रते ॥ किमत्र बहुनोक्तेन शौ-
चाशौचविधौ शिवे । मनःपूतभवे
द्यो नरस्त्वस्तत्तदाचरेत् ॥ निद्रा
न्ते मैथुनस्यान्ते त्यागान्ते मलमूत्रयोः।
भोजनान्ते मलैस्पृष्टे वह्नि शौचवि-
धीयते । सन्ध्याचैकालिकी कार्या
वैदिकी तान्त्रिकी क्रमात् । उपास-
नायाभेदेन पूजां कुर्य्याद्यथाविधि ॥
ब्रह्ममन्त्रोपासकानां गायत्रीजपना-
त्प्रिये । स्नानाद्ब्रह्मेति तद्वाच्यस
न्ध्याभवति वैदिकी ॥ अन्येषां
वैदिकी सन्ध्यान् सूर्य्योपस्थानपूर्वक
म् । अर्घ्यदानं दिने गायगाय
त्रीजपनं तथा । अष्टोत्तरसहस्रवा
शतवा दशधापि वा । जपानां निय-
मो भद्रे सर्वत्राह्निककर्म्मणि ॥ शू-
द्रसामान्यजातीनामधिकारोऽस्ति के
वलम् । आगमोक्तविधौ देवि सर्व-
सिद्धिस्ततो भवेत् ॥ प्रातः सूर्य्योद
यः कालो मध्याह्नस्तदनन्तरम् ।
सायं सूर्य्यास्तसमयस्त्रिकालानामयं
क्रमः ॥ श्रीदेव्युवाच ॥ विप्रादि
सर्ववर्णानां विहिता तान्त्रिकी क्रिया।
त्वयैव कथिता नाथ सम्प्राप्ते प्रबले क
लौ ॥ तदिदानीं कथं देव विप्रा वै
दिककर्म्मणि । नियोजयसि तत्स
र्वं विशेषाद्वक्तुमर्हसि । श्रीसदाशि
व उवाच ॥ सत्यं ब्रवीषि तत्त्वज्ञे स
र्वेषां तान्त्रिकी क्रिया । लोकानां भो

गमोक्षाय सर्वकर्मसुसिद्धिदा ॥ कृ
यन्तु ब्रह्मसाविज्ञी यथा भवति वैदि
की । तथैव तान्त्रिकी ज्ञेया प्रशस्तो
भयकर्म्मणि ॥ अतोऽत्र कथितं देवि
द्विजानां प्रबले कलौ । गायत्र्यामधि
कारोऽस्ति नान्यमन्त्रेषु कर्हिचित् ॥
तारोद्यां कमलायां च वाग्भवाद्याय
थाक्रमात् । ब्राह्मणः क्षत्रियविशा सा
वित्री कथिता कलौ ॥ द्विजातीना
प्रभेदार्थं शूद्रेभ्यः परमेश्वरि ।
सन्ध्येयं वैदिकी प्रोक्ता प्रागेवाह्नि
ककर्म्मणाम् ॥ अन्यथा शाम्भवे मा
र्गे केवले सिद्धिभाग्भवेत् ।
सत्यं सत्यं पुनः सत्यं सत्यमेतन्न सं
शय ॥ कालात्ययेऽपि सन्ध्ययक
र्त्तव्या देववन्दिते । ओं तत्सद्ब्रह्म
चोच्चार्य्य मोक्षं प्रभिरनातुरैः ॥
आसनं वसनं पात्रं शय्यां यानं नि
केतनम् । गृह्यकं वस्तुजातञ्च स्व
च्छातच्छ प्रशस्यते ॥ समाप्याह्नि
ककर्म्माणि स्वाध्याय गृहकर्म्म वा ।
गृहस्थो नियतं कुर्य्यान्नैव तिष्ठेन्निरु
द्यमः ॥ पुण्यतीर्थे पुण्यतिथौ ग्रह
णे चन्द्रसूर्य्ययोः । जपं दानं प्रकु
र्व्वाणः श्रेयसां निलयो भवेत् ॥ क
लावन्नगताः प्राणा नोपवासः प्रशस्य
ते । उपवासप्रतिनिधावेकं दानं
विधीयते ॥ कलौ दानं महेशानि स
र्वसिद्धिकरं भवेत् । ततः पात्र

केवलं स्त्री योदरिद्र सत क्रियान्वित ॥ मासवत सरपक्षाणामारम्भ दिनमग्निके । चतुर्द्दश्यष्टमीशुक्ला तथैवैकादशीकुहू ॥ निजजन्म दिन चैव पित्रोमरणवासर । वैधीत सवदिनञ्चैवपुण्यकाल प्रकीर्त्तित ॥ गङ्गानद्यामहानद्यो गुरो सदनमेवच । प्रसिद्धदेवता चैव पुण्यतीर्थं प्रकीर्त्तितम ॥ त्यक्त्वासुध्ययन पित्रो : शुश्रूषा दारसेवणम् नरकायभवेत्तीर्थंती र्थयत्नमतान्नृणाम् ॥ नतीर्थसेवा नारीणांनोपवासादिका क्रिया । नैवव्रतानांनियमोभर्त्तुः शुश्रूष णा विना भर्त्तर्वयोःपितातीर्थं त पोदान व्रत गुरु । तस्मात सर्वा त्मनानारीपतिसेवासमाचरेत ॥ १०१ ॥ पत्यु प्रिय सदाकुर्याद्दच सापरिचर्यया तदाज्ञानुचरीभू त्वातोषयेत पतिबान्धवान् ॥ नेच्छे त्पति क्रूरदृष्ट्या श्रावयेन्नैवदुर्व च : । नाप्रिय मनसावापिचरेन्नर्त्तुं पतिव्रता॥ कायेनमनसावाचासर्व दाप्रियकर्म्मभि । याप्रीणयतिभ र्त्तारं सैवब्रह्मपद लभेत ॥ नान्य वक्त्रनिरीक्षेतनान्ये सम्भाषणा - चरेत । नचाङ्ग दर्शयेदन्यानाभ- र्त्तुराज्ञानुसारिणी ॥ तिष्ठेत पित्रो र्वशेबाल्ये भर्त्तु सम प्राप्तयौवने

वर्णाश्रमधर्म्म .

। वार्द्धक्ये पितृवन्धूनानमूलन्नाभवे त क्वचित ॥ अज्ञातरतिमर्यादा मज्ञातपतिसेवनाम । नोद्वाहयेत पिताबालामज्ञातधर्मशासनाम ॥ नरमासनभुञ्जीयान्नराकृतिपशूंस्त- था । बहुप्रकारकानृगाश्चमासाद्दा न रसवर्ज्जितान् फलोनियाश्च वन्यानिमूलानिविविधानिच । भू मिजातोनिसर्वाणिभोज्यानिखेच्छ याशिवे ॥ १०९ ॥ अध्यापनयाज नञ्चविप्राणाव्रत्तमुत्तमम् । अशक्तौ क्षत्रियविशावृत्तिर्निर्वाहमाचरेत् ॥ राजन्यानाञ्चसद्वृत्त सङ्ग्रामोभू- मिशासनम् । अथाशक्तौवणिग व्र त्त शूद्रवृत्तमथाश्रयेत ॥ वाणिज्या शक्तवैश्यानांशूद्रवृत्तमदूषणम् । शूद्रा णांपरमेशानिसेवा वृत्त विधीयते ॥ सामान्यानान्नुवर्णानांविप्रवृत्त्यन्यत्र त्तिषु । अधिकारोऽस्तिदेवेशिदेहया त्राप्रसिद्धये ॥ अद्वेष्टानिर्मम शा न्त सत्यवाग्जितेन्द्रिय . । नि र्मत्सरोनिष्कपट स्वधर्मोत्रोत्साहो भवेत ॥ अध्यापयेत पुत्रपुत्रांशि ष्यान्सन्मार्गवर्त्तिन । सर्वलोक हितैषीस्यात पक्षपातविनिर्मुक्त ॥ मिथ्यालापमसूयाञ्चव्यसनाप्रिय भाषणम । नीचै प्रसक्ति दम्भञ्च सर्वथाब्राह्मणस्त्यजेत ॥ युयुत्सा गर्ह्हितासन्नोसन्माने . सञ्चितत

मा । भृत्यु जयैवायुक्ते पुराजन्या
जावरानने ॥ बलीभीस्यात् प्रजा
वित्ते गृह्णीयात् सम्मित करम् ।
रक्षन्नङ्गीकृतधर्मं पुत्रवत् पालयेत्
प्रजा ॥ न्याययुक्त तथासन्धि कर्मा
ण्यन्यानियान्चि । मन्त्रिभिः सह
कुर्वीतविचार्यसर्वथान्नृप ॥ धर्म
युक्तेनयोद्रव्य न्यायदण्डपुरस्कृता:
। करणीयायथाशास्त्रंसन्धिकुर्याद्य
थाबलम् ॥ उपायै . साधयेत्कार्यं
युद्धसन्धिस् चमूचभिः । उपाया-
नुगता . सर्वाजयन्ते मविभूतय ॥
श्रान्नीचसङ्गाद्विरत · सदाविद्वज्ज
नप्रिय . । धीरोविपत्तौदक्षश्चो
सवान् सम्मितव्ययी । निपुणोदु
र्गसंस्कारैश्चस्त्रशिक्षाविचक्षण ।
स्वसैन्यभावान्वेषीस्यात् शिक्षयेद्र-
णकौशलम् ॥ नहन्यान्मूर्छिता
न् युद्धेत्यक्तशस्त्रान्पराङ्मुखान्
। बलानीतान् रिपून् देशिरिपुदा
रशिशूनपि ॥ जयलब्धानिवस्तूनिस
न्धिप्राप्तानियानि च । वितरेत ता
निसैन्येभ्योयथायोग्यविभागत ॥
शौर्यवृत्त वयोवृणाद्भ्ये यराज्ञापृथ
क् पृथक् । बहुसैन्याधिप नैक
कुर्यादात्महितेरत । नैकस्मिन्-
विश्वसेद्राजानैकान्यायेनियोजयेत्
। साभ्यंक्रीडापदासक्तनीचै सह
विवर्जयेत ॥ बहुश्रुत स्वल्पभा
षीजितक्रासुश्चानिवानपि । बहुमा
नोऽपिनिर्दम्भोधीरोदण्डप्रसादयो
स्वय वाचारदृष्ट्यावाप्रजाभावानुवि
लोकयेत । एवंस्वजनभृत्यानांभावा
न् पश्येन् नराधिप ॥ क्रोधाद्द-
म्भात् प्रमादाद्वासम्मानशासनतथा
। सहसानैवकर्तव्यस्वामिनातत्त्वद
र्शिना ॥ सैन्यसेनाधिपामात्यव-
निताप्रत्यसेवका . । पालनीया ·
सदोषाश्च द्दण्ड्याराज्ञायथाविधि
॥ उन्मत्तानसमर्थांश्चबालांश्चमृत-
बान्धवान् । ज्वराभिभूतान्वृद्धा
स्वरक्षयेत् पितृवन्नृप · ॥ वैश्याना
कृषिवाणिज्यवृत्तिवृद्धिसनातन-
म । येनोपायेनलोकानादेहया
चाप्रसिध्यति ॥ अत. सर्वात्मनादे
विवाणिज्यकृषिकर्मसु । प्रमादव्य
सनालस्य मिथ्याशाठ्य विवर्जयेत्
निश्चित्यवस्तुतन्मूल्यमुभयो. सम्म
तौशिवे । परस्पराज्ञाकरणक्रय
सिद्धिस्ततोभवेत् ॥ मत्तशिशु
प्रबालानामरियस्तनुणांप्रिये । रो
गविभ्रान्तबुद्धीनामसिद्धौदान
विक्रयौ ॥ क्रयसिद्धिरदृष्टानांगुण
श्रवणतोभवेत् । विपर्यये तद्गुणा
नामन्यथाभवतिक्रय · ॥ कुञ्जरोष्ट्र
तुरङ्गाणांगुणदोषप्रकाशनात् ।
वर्षातीतेपितत्क्रेयमन्यथाकर्तुम
र्हति ॥ धर्मार्थकाममोक्षाणांभाज

न मानव वपु । अत कुलेशित तृक्तियोनसिद्धान्ममशासनात् ॥ यवगोधूमधान्यानालाभो वर्षगते प्रिये । युक्तश्चतुर्थीधातूनामष्टम: परिकीर्त्तित' ॥ स्टर्णं कृषीचवाणि ज्ये तथासर्वेषुकर्मसु । यद्यदङ्गीकृतं मर्त्यैस्तत्कार्यं शास्त्रसम्मतम् ॥ दक्ष: शुचि सत्यभाषीजितनिद्रो जितेन्द्रिय । अप्रमत्तोनिरालस्य' सेवात्तीभवेन्नर प्रभुर्विष्णुसमो मान्यस्तज्जायाजननीसमा। मान्या स्तद्बान्धवाभृत्यैरिहामुत्रसुखेप्सुभि. ॥ भर्त्तुर्मित्राणिमित्राणिजानीयात् तद्दरीनरीन् । सभीति . सर्वदा तिष्ठेत्प्रभोराज्ञाप्रतीक्षयन् । अप मान गृहच्छिद्र गुप्त्यर्थं कथितञ्चय त् । भर्त्तुर्हानिकर यत्नगोपयेदिति यत्नत ॥ अलोभ स्यात्स्वामिधनेसदास्वामिच्छितेरत तत्सन्निधा वसन्नाष क्रीडाहास्य परित्यजेत् ॥ नपापमनसापश्येद्पितद्गृहकिङ्करी । विविक्तशय्यांहास्यञ्चताभि सहविवर्ज्जयेत् ॥ प्रभो . शय्यास न यान वसन भाजनानिच । उपा नन्नूपण शस्त्रनात्मार्थं विनियोजये त् ॥ क्षमाकृतापराधस्तेनप्रार्थयेद् यत्नत प्रभो : । प्रागल्भ्य प्रौढवा दञ्चसाम्याचार विवर्ज्जयेत् ॥ सर्वे वर्णा स्वस्ववर्णैर्ब्राह्मीवाह तथाशनम् । कुर्य्युरिज्जभैरवीचक्रातत्त्व चक्रादृतेशिवे ॥ उभयत्रमहेशानि शैवोद्वाह प्रकीर्त्तित । तथाद्रेचपानेचवर्णभेदोनविद्यते ॥ श्रीदेव्युवाच ॥ गृहस्थानामशेषेणधर्म्मानकथय प्रभो । सन्यासविहितान् धर्म्मान् कृपयावक्तुमर्हसि ॥ श्रीसदाशिवउवाच ॥ अवधूताश्रमोदेविकलौसंन्यासउच्यते। विधिनायेनकर्त्तव्यस्तत्सर्वं शृणुसाम्प्रतम् ॥ ब्रह्मज्ञानेसमुत्पन्नविरतेसर्वकर्म्मणि । अध्यात्मविद्यानिपुणसन्यासाश्रममाश्रयेत् ॥ विहायवृद्धौ पितरौशिशुं भार्यांपतिव्रताम् । त्यक्त्वाऽसमर्थान्बधून्प्रव्रजन्नारकीभवेत् ॥ ब्राह्मण क्षत्रियोवैश्य शूद्र सामान्यएवच । कुलावधूतसंस्कारे पञ्चानामधिकारिता ॥ सम्पाद्यगृहकर्माणिपरितोष्यपरानपि । निर्ममोनिलय ङ्गच्छेन्निष्कामोविजितेन्द्रिय ॥ आहूयस्वजनान्बन्धून्ग्रामस्थान्प्रतिवासिन । प्रीत्यानुमतिमन्विच्छेद् गृहान्निर्गमिषुर्जन : ॥ तेषाम-नुज्ञामादायप्रणम्यपरदेवताम् । ग्राम प्रदक्षिणीकृत्यनिरपेक्षोगृहाद्दियात् ॥ मुक्त ' ससारपाशेभ्य परमानन्दनिर्वृत । कुलावधूत ब्रह्मज्ञ गत्वासम्प्रार्थयेदिदम् ॥ गृ

ह्याश्रमेपरब्रह्मन् ममैतद्विगतंवय । प्रसादकुरुमेनाथसन्न्यासग्रहणं प्रति ॥ निवृत्तगृहकर्माणि विचार्य विधिवद्गुरु । शान्त विवेकिन वीक्ष्यद्वितीयाश्रममादिशेत् तत शिष्य कृतस्नानोयतात्माविहिताह्निक । ऋणत्रयविमुक्त्यर्थं देवर्षीनर्चयेतपितॄनित्यादिविधानेन द्वितीयाश्रम स्वीकृत्य यथातिष्ठेत्तदाह । ततोनिर्द्वन्द्वरूपोऽसौनिष्काम' स्थिरमानस. । विहरेत्स्वेच्छयाशिष्य' साक्षाद्ब्रह्ममयोभुवि ॥ आब्रह्मस्तम्बपर्यन्त सद्रूपेणविभावयन् । विस्मरन्नामरूपाणिध्यायन्नात्मानमात्मनि ॥ अनिकेत क्षमावृत्तोनि शङ्क सङ्गवर्जित । निर्ममोनिरहङ्कार सन्न्यासीविहरेत्क्षितौ ॥ मुक्तोविधिनिषेधेभ्यो निर्योगक्षेमआत्मवित् ॥ सुखदु' खसमोधीरोजितात्माविगतस्पृह' स्थिरात्माप्राप्तदु' खोपिसुखेप्राप्तेपिनिस्पृह' । सदानन्द शुचिशान्तोनिरपेक्षोनिराकुल ॥ नेच्छेज्जनक्षयाज्जीवानांसदाप्राणिहितेरत । विगतामर्षभीर्दाम्भोनिस्पृहस्त्योनिरुद्यम : ॥ शोकद्वेषविमुक्त स्याच्छत्रौमित्रेसमोभवेत् । शीतवातातपसह समोमानापमानयो' । सम' शुभाशुभेतुष्टोयदृच्छाप्राप्तवस्तुना । निस्त्रैगुण्योनिर्विकल्पोनिर्लोभ स्यादसञ्चयी । यथ सत्यमुपाश्रित्यमृषाविश्वप्रतिष्ठति । आत्माश्रितस्तथादेहेजानन्नेवंसुखीभवेत् ॥ इन्द्रियाण्यर्थवर्कुर्वन्ति खलु कर्मपृथक्पृथक् । आत्मासाक्षीविनिर्लिप्तोज्ञात्वैवमोक्षभाग्भवेत् ॥ धातुप्रतिग्रहनिन्दामनृतक्रीडनस्त्रिया । रेतस्त्यागमसूयाञ्चसन्न्यासीपरिवर्जयेत् ॥ सर्वत्रसमदृष्टि स्यात्कीटेदेवेतथानरे । सर्वंब्रह्मेतिजानीयात्परिव्राट्सर्वकर्मसु ॥ विप्रान्न श्वपचान्नं वायस्मात्तस्मात्समागतम । देशकालतथापात्रमश्नीयादविचारयन् ॥ अध्यात्मशास्त्राध्ययनै : सदातत्त्वविचारणै .। अवधूतोनयेत्कालंस्वेच्छाचारपरायण . ॥ सन्न्यासिनामृतंकायदाहयेन्नकदाचन. सम्पूज्यगन्धपुष्पाद्यैर्निखनेद्वाप्सुमज्जयेत् ॥ अप्राप्तयोगमर्त्यानांसदाकामाभिलाषिणाम् । स्वभावाज्जायतेदेविप्रवृत्ति कर्मसङ्कुले ॥ तत्रापितेसानुरक्ताध्यानार्चाजपसाधने । श्रेयस्तदेवजानन्तस्तत्रैवदृढनिश्चया ॥ अत कर्मविधानानिप्रोक्तानिचित्तशुद्धये । नामरूपबहुविधंतदर्थंकल्पितमया ब्रह्मज्ञानादृतेदेविकर्मसन्न्यसनविना । कुर्वन्कल्पशत

कर्मनभवेन्मुक्तिभाग्जान ॥ कुलावधूतसत्त्वज्ञोजीवन्मुक्तोनराकृति । साक्षान्नारायणमत्वागृहस्थस्तम्प्रपूजयेत् ॥ यतिदर्शनमात्रेणविमुक्तः सर्वपातकात् । तीर्थव्रततपोदानसर्वयज्ञफललभेत् ॥ इतिश्रीमहानिर्वाणतन्त्रेऽष्टमोल्लासेवर्णाश्रमधर्मनिरूपणम ॥

वर्णार्ह । पु० मुद्गे ॥

वर्णि । न० सुवर्णे ॥ वर्णैर्लिखिताक्षिरण्यइत्युक्ते । कचिद्रण्येतु०वर्णि ॥

वर्णिक । पुं० लेखके ॥

वर्णिका । स्त्री० कथनस्योत्कर्षे ॥ काठिन्याम् ॥ मसौ ॥ नील्यादिरागे ॥ व्याख्यायिकायाम् । ग्रन्थविशेषस्यव्याख्यायाम् । स्रोत्रकल्पाम् ॥ वर्ण० । चौरादिक । ण्तो ण्वुल् । प्रत्ययस्यादितीत्त्व ॥

वर्णित । त्रि० स्तुतियुक्ते । अभिष्टुते । ईडिते । वर्ण्यते स्म । वर्णवर्णक्रियाविस्तारगुणवचनेषु । क्त ॥

वर्णी । पुं० लेखके ॥ चित्रकरे ॥ ब्रह्मचारिणि ॥ वर्ण । अष्टविधमैथुनाऽभावरूपास्तुति सास्यास्ति । वर्णी ब्रह्मचारिणीति० इनि । त्रि० वर्णवति ॥

वर्णिनी । स्त्री० वनितायाम् ॥ हरिद्रायाम् ॥

वर्णिलिङ्गी । पु० ब्रह्मचारिविशेषवति ॥ वर्णीब्रह्मचारी० तस्यलिङ्गं चिह्नमस्यास्ति । इनि ॥

वर्णु । पुं० सूर्ये ॥ नदविशेषे ॥ वृणोति । वृञ् । अजिवृरीभ्योनिच्चेतिणु ॥ देशविशेषे ॥ वर्णुनदस्समीपदेशोवर्णुः । अदूरभवश्चेत्यर्थे० सुवास्त्वादयणोजनपदेलुबितिलुप ॥

वर्ण्य । त्रि० वर्णनीये । श्लाघ्ये ॥ व्याख्यातव्ये ॥

वर्त्तक । पु० अश्वस्यखुरे ॥ व्याघ्राटपक्षिणि । भारद्व इ० गौ० दे० भा० प्र० ॥ अस्यमांसगुणायथा । वर्त्तकोग्निकर शीतोज्वरदोषत्रयापह । सुरुच्य शुक्रदोबल्योवर्त्तकाल्पगुणाततः ॥ वर्त्ततेवृतुवर्त्तने । ण्वुल् न० वर्त्तलौहे । नीललोहे । विट्र० इ० भा० इ० कोचित् ॥

वर्त्तका । स्त्री० वर्त्तिकायाम् । व्याघ्राटशकुनौ । वटेर० इ० भा० प्र० खगे ॥ वर्त्तकाशकुनौप्राचामितीत्त्व न ॥

वर्त्तकी । स्त्री० अश्वस्यखुरे । व्याघ्राटे ॥

वर्त्तजन्मा । पुं० अम्बुदे । मेघे ॥

वर्त्तन । पु० वामने ॥ न० वृत्तौ । जीविकायाम् ॥ बहवोवर्त्तनोपायाऋषिभि परिकीर्त्तिता ।

सर्व्वेषामपिचैवेषांकुसीदमविकवि ट । विशेष कुसीदेद्रव्य. ॥ वर्त्ततेऽनेन, वृत्+वर्त्तने । ल्युट् ॥ साधारणवर्त्तनि ॥ न० स्त्री० तूल नालायाम् । तर्कुपीठे ॥ जीवने ॥ त्रि० वर्त्तिष्णौ ॥ वर्त्तनशील । वृत्० । अनुदात्तेतश्चेतियुच् ॥

वर्त्तनि । पु० पूर्व्वदेशे ॥ स्त्री० पथि ॥ वर्त्ततेऽनया । वृत्० । वर्तेश्च नि ॥

वर्त्तनी । स्त्री० पथि । वर्त्तने ॥ तर्कुपीठे । पेषणायाम् ॥ कृदिकारादितिङीष् ॥

वर्त्तमान । पु० अतीतानागतभिन्नकाले ॥ आरब्धापरिसमाप्तिर्वर्त्तमान. काल. । यथा । महाभारतपठति । सचतुर्विध' यथा । प्रवृत्तोपरतश्चैव० वृत्ताविरत एवच ॥ नित्यप्रवृत्त. सामीप्यो वर्त्तमानश्चतुर्विध ॥ क्रमेणोदाहरणानि । मासनखादति । अादौप्रवृत्त मांसभोजन निवर्त्तयति० इत्यर्थं । इहकुमारा' क्रीडन्ति० तदानीन्तनक्रीडनाभावेपि पूर्व्वक्रीडानांवृद्धौवर्त्तमानत्वात् । पर्व्वतास्तिष्ठन्ति० नित्यप्रवृत्तत्वात् । किञ्चपर्व्वतानास्थितत्वे वर्त्तमानत्व पिभूतभविष्यत्काला भ्यासम्बन्धविवक्षयापर्व्वतास्तस्थु० स्थास्यन्तीत्यपिस्यात् । सामीप्यो द्विविध । भूतसामीप्ये यथा । कदाआगतोसि० इतिप्रश्ने० अचिरादेवैवर्त्तमानत्वात् ० एषो इमागच्छामि०इत्यागतोपिवदति भविष्यत्सामीप्ये यथा । कदा० गमिष्यसीतिप्रश्ने० एषोहगच्छामीतिगमनक्रियमाणोद्यमोपिवदति० इतिमुग्धबोधटीकायांदुर्गादास ॥ प्रयोगाधिकरणीभूतकालोवर्त्तमान ' कालइतिनैयायिका ॥ अद्यतने । अधुनातने ॥ त्रि० तत्कालवृत्तौ । विद्यमाने । स्थिते ॥ वर्त्तते । वृत्० । शानच् । । मुक् ॥

वर्त्तरुक । पु० दौ : साधिके । द्वारपाले ॥ नदीभेदे ॥ काकनीडे जलावटे ॥

वर्त्तलोहम । न० लोहविशेषे । लोहसकरे । नीललोहे । विहर० इ० भा० प्र० इतिकेचित् ॥

वर्त्ति । स्त्री० वटिकायाम् । भेषजनिर्माणे ॥ नयनाञ्जने । लेखे ॥ गात्रानुलेपन्याम् ॥ दीपकदशायाम् ॥ दीपे ॥ वर्त्तते । वृत्० । सर्व्वधातुभ्य इन् : अचइ : वर्त्ततेऽनया वा वृत्० । इ'पिशिकृषोत्यादिमेनृवा ॥ वृतेश्छन्दसीति० इर्वा । स्वरभेद । वाहुलकाद्धोकेपि ॥

वर्त्तिविशेषे ॥ यथा । कतकस्यफल शङ्ख सैन्धव त्र्यूषण वचा । फेनो रसाञ्जन क्षौद्र विडङ्गानि मन शिला ॥ एषावर्त्तिर्हन्तिकास ति मिर पटल तथेति ॥

वर्त्तिक । पु॰ पक्षिविशेषे । वर्त्तके । बटेर॰ हू॰ भा॰ प्र॰ ॥

वर्त्तिका । स्त्री॰ वर्त्तकायाम् । व्या घ्राटे । बटेर । हू॰ भा॰ प्र॰ खगे ॥ अस्यामासगुणायथा वर्त्ति कामधुराकृच्छाकफमारुतनाशिनी ॥ अजशृङ्ग्याम् ॥ वर्त्तौ । वर्त्तौ॰ हू॰ भा॰ ॥ सापञ्चविधायथा । पद्मसूत्रभवादर्भगर्भसूत्रभवाथवा । शणजावादरीवापिफलकोषोद्भवा यथा । वर्त्तिकादीपकृत्येषुसदापञ्च विधास्मृता ॥ वर्त्तते॰ वर्त्यतेवा । वृतु॰ ण्वुल् । उदीचामतेः प्रत्य यस्थादितीत्वम् ॥ वस्तुतस्तुइतेस्ति कन्निति कन्बोध्य ॥

वर्त्तित । त्रि॰ नीते ॥ निष्पादिते ॥ ग्रथिते ॥

वर्त्तितव्य । त्रि॰ वर्त्तितुमर्हे ॥

वर्त्ती । त्रि॰ वर्त्तिष्णौ ॥

वर्त्तिष्णु । त्रि॰ वर्त्तने ॥ वर्त्तनशी ल । अलंकृञितीष्णुच् ॥ वर्त्ति नि ॥

वर्त्तिष्यमाण । त्रि॰ भविष्यत्काला दौ ॥ वर्त्तनप्रागभावाश्रये ।

वर्त्ती । स्त्री॰ वर्त्तौ ॥

वर्तुल । पुं॰ कलायविशेषे । बाटु ला॰ हू॰ गौ॰ दे॰ भा॰ प्र॰ ॥ यथा । कलायस्यत्रयोभेदाश्चिपु टोवर्तुलोऽङ्कटौ । इतिशब्दमाला ॥ न॰ गृञ्जने ॥ त्रि॰ गोलवस्तु नि । निस्तले । वृत्ते ॥ वर्तते । वृतु॰ । बाहुलकादुलच् ॥

वर्तुला । स्त्री॰ तर्कुपीठ्याम् । टेको रबाटुल हू॰ गौ॰ भा॰ ॥ इति हारावली ॥

वर्त्तुली । स्त्री॰ गजपिप्पल्याम् ॥

वर्त्म । न॰ नेत्रच्छदे ॥ मार्गे । अध्वनि ॥ वर्त्ततेऽनेनास्मिन्वा । वृतु॰ । मनिन् ।

वर्त्मनि । स्त्री॰ पथि ॥ वर्त्तन्तेऽ नया । वृतु॰ । वृतेश्छन्दसि । चान्यत्रापीतिगोवर्द्धन ॥

वर्त्मनी । स्त्री॰ पथि ॥ कृदिकारादि तिङीष् ॥

वर्त्स्यन् । त्रि॰ वर्त्तिष्यमाणे ॥ लृट सद्वेतिसदादेशे॰ वृद्भ्य स्यसनो रितिविभाषयापरस्मैपदम् ॥

वर्द्ध । पु॰ ब्राह्मणयष्टिकायाम् । पूर्त्तौ ॥ छेदे ॥ न॰ सीसके ॥

वर्द्धक । पु॰ ब्राह्मणयष्टिकायाम् । भार्ग्याम् ॥ वर्द्धते । वृधु छेदने । ण्वुल ॥ त्रि॰ पूरके । छेद के ॥

वर्द्धकि । पुं॰ त्वष्टरि । रथकारे तक्षणि । बढ़ई॰ इ॰ तखाण॰ इ॰ भा॰ प्र॰ । वर्द्धते । वर्द्धश्छेदने । अच् । वर्द्धं कषति । कष हिंसायाम् । बाहुलकात् इः ॥

वर्द्धकी । पुं॰ बढ़ई॰ इ॰ भा॰ प्र॰ वर्णसङ्करजातौ । त्वष्टरि । सूत्रधारे । रथकारे । काष्ठतक्षके ॥

वर्धनम् । न॰ वृद्धौ ॥ छेदने ॥ वर्धश्छेदनपूरणयोः ल्युट् ॥ त्रि॰ वर्धिष्णौ ॥ वर्धते तच्छीलः । वृधु वृद्धौ । अनुदात्तेतश्चेति युच् ॥ वर्धयति । नन्द्यादित्वाल्ल्युर्वा ॥

वर्धनी । स्त्री॰ गलन्तिकायाम् । सनालजलपात्रे । बधना॰ बधनी॰ इ॰ भा॰ सम्मार्जन्याम् । बढनी॰ इ॰ भा॰ ॥

वर्धमान । पुं॰ प्रश्नभेदे ॥ शरावे ॥ एरण्डे ॥ वीरजिने । चरमतीर्थकृति । महावीरे ॥ विष्णौ । नारायणे ॥ स्वस्तिके ॥ राजगृहविशेषे ॥ दक्षिणद्वाररहितो वर्द्धमानो धनप्रदः ॥ वर्धते । वर्धश्छेदनपूरणयोः । शानच् ॥ स्वनामप्रसिद्धे देशविशेषे । त्रि॰ वृद्धिमति ॥

वर्धमानक । पुं॰ शरावे ॥ वर्धते । वृधु॰ । शानच् । अप् । मुक् । संज्ञायां कन् ॥ त्रि॰ वृद्धिविशिष्टे ॥

वर्ध्रीपलम् । न॰ नाडीच्छेदने ॥ *

वर्द्धित । त्रि॰ प्रवृद्धे ॥ छिन्ने ॥ पूरिते ॥

वर्द्धिष्णु । त्रि॰ वर्द्धने । वृद्धिशीले ॥ वर्द्धते॰ तच्छीलः वृधु॰ । अलङ्कृञिति इष्णुच् ॥

वर्ध्र । पुं॰ न॰ चर्मणि । सीसे ॥ वरत्रायाम् ॥ वर्द्धते॰ दृढबन्धनेन दीर्घीभवति । वृधु॰ । वृधिवपिभ्यां रन् । लघूपधगुणे रपरः ॥

वर्ध्री । स्त्री॰ नध्राम् । वरत्रायाम् । चर्मरज्जौ । बद्दी॰ इ॰ भा॰ ॥ वर्द्धते । वृधु॰ । रन् । गौरादित्वान् ङीष् ॥ यद्वा । औणादिकः ष्ट्रन् । गुणे रपरः । प्रत्ययतकारस्य॰ झषस्तथोर्धोऽध इति धत्वे॰ षित्वान् ङीष् ।

वर्प । न॰ रूपे ॥ वृणोति । वृङ् सम्भक्तौ । वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् चेत्यसुन्॰ प्रत्ययस्य पुट् ॥

वर्म्मकण्टक । पुं॰ पर्पटे ॥

वर्म्मकषा । स्त्री॰ चर्म्मकषायाम् । सप्तलायाम् ॥

वर्म्मा । पुं॰ क्षत्रियस्य पद्धतौ ॥ यथा । शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ न॰ कवचे

। तनुत्रे ॥ वृणोतिदेहम् । वृञ् व रणे । मनिन् ॥

वर्म्मि । पुं॰ मत्स्यविशेषे । बाँबो॰ बामी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

वर्म्मिक । त्रि॰ वर्मिणि। वर्म्मास्या स्तीति ब्रीह्यादित्वात्॰ ठन् ॥

वर्म्मित । त्रि॰ धृतसन्नाहे । सन्नद्धे । सज्जे । वर्मसञ्जातमस्य । तार कादित्वादितच् ॥

वर्म्मी । त्रि॰ वर्मवति । वर्मिके ॥ व र्म्मास्यास्ति व्रीह्यादित्वादिनि ॥

वर्म्मिमत्स्य । पुं॰ बामीतिख्याते मत्स्ये । वर्मिमत्स्योरुचिदातपि त्ततंरुचिकरोलघुः ॥

वर्म्मुष । पुं॰ वामिरूप॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ मत्स्ये ॥

वर्य्य । पुं॰ कन्दर्पे । स्मरे ॥ त्रि॰ वरेण्ये ॥ वर्यते । वरईप्सायां चुरादावदन्त । अचोयत ॥

वर्य्या । स्त्री॰ पतिवरायाम् ॥ अव द्यपण्यवर्यागर्ह्यपणितव्यानिरोधे- ष्विति॰ अप्रतिबन्धविषये॰ वृङ सम्भक्ताविव्यस्मात॰ यत् ॥

वर्व्वणा । स्त्री॰ वृहन्मक्षिकायाम् । नीलमक्षिकायाम् ॥ वरिति । व णति । वणशब्दे । अच् ॥ यद्वा । वर्वति । वर्वगतौ । युच् ॥

वर्व्वर । पुं॰ पामरे । नीचे ॥ केशे । वक्र केशे । बाबरी॰ इ॰ भा॰ ॥ चक्रले ॥ देशविशेषे ॥ यथा । मायापुरंसमा रभ्यसप्तशृङ्गात तटोत्तरे । वर्वरा ख्योमहादेश प्रोक्त. शौशक्तिसङ्ग मे ॥ पारसिकीजने ॥ वृक्षविशेषे । सुमुखे । गरछे । गन्धपत्रे । का सवावुइ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

वर्वर्त्ति । पुं॰ । यङ लुगन्त । पचाद्यच् ॥ यद्वा । वृणोति । वृ ञ॰ । कृगृशृवृञ्चतिभ्य ष्वर च् ॥ न॰ हिङ्गुलि ॥ पीतचन्दने बोले ॥ हिमवत्प्रान्तेरुइ॰ वङ्ग॰ प्र॰ सूपविशेषे ॥ यथा । जलेना लोडित शालिपिष्टञ्चगुडमिश्रित म् । धाराय पक्वत प्याच्य तद्ववे ह्वर्वराख्यकम ॥ वर्वरवलकृत मद्य श्रेष्ठपित्तानिलापहम् । रोचन कफकृत्स्नोत हृद्य ह्रक्षासनाशन ।

वर्व्वरक । न॰ चन्दनभेदे । स्वेत वर्वरके ॥

वर्व्वरा । स्त्री॰ शाकविशेषे । तुङ् ग्याम् । खरपुष्पायाम् । अजग न्धिकायाम् । बाबुइ॰ इ॰ भा॰ प्र॰ ॥ कृष्णार्जकस्तथा शुक्लोवटप त्रस्तीपर । वर्वराचितयरुच शी त कटु विदाहिच ॥ तीक्ष्णरुचिकर हृद्य दीपन लघुपाकिच । पित्तत्त ल कफवातास्रदद्रुक्रिमिविषापहम् ॥ पुष्पभेदे ॥ वृणोति । वृञ्॰ कृगृशृवृञ्चतिभ्य . ष्वरच् । अनि

ष्य षित्वात् ङीष् ॥

बर्वरी । स्त्री॰ बर्वराऽर्थे ॥ षित्वात् ङीष् ॥

बर्व्वरीक । पुं॰ भार्ग्याम् । ब्राह्म णयष्टिकायाम् ॥ कुटिलकुन्तले । बाबरी॰इ॰भा॰ ॥ अजगन्धिकाया म । बाबुइ॰इ॰भा॰ ॥ यूनि ॥ वृणुते । वृञ॰ । शृपॄवृञाइेरुक् चाभ्यासस्येति॰ईकन् ॥

बर्व्वा । स्त्री॰ बर्बर्य्याम् ॥

बर्व्वि । पु॰ घस्मरे ॥ वृणुते । वृ ञ॰ । बहुलमन्यत्रापीति॰ विन् ॥

बर्व्वुर । पु॰ युगलाख्ये । तीव्रकण्ट के । गोशृङ्गे । कफान्तके । बबूर॰ बबूल॰इ॰प्र॰वृक्षे ॥ बर्बुर कफ कुष्ठाशोकुष्ठकृमिविषापह ।

बर्व्वूर । पुं॰ बर्बुरे ॥ इतिराजनि र्घण्ट ।

वर्ष । पु॰ न॰ भारतादौ ॥ जम्बुद्वी पे ॥ अब्दे । समायाम् । वत्सरे ॥ वृष्टौ ॥ वर्षधरे । मेघे ॥ वर्षणम्॰ वृष्यतेवा । वृषुसेचने । अज्विधौ- भयादीनामुपसङ्ख्यानमित्यच् ॥ वर्षयति॰वर्षतिवा । पचाद्यच् ॥ यद्वा ॥ वृणाति । वृञ्वरणे । वृ- तृवदीतिस ॥ वर्षशब्दोद्विवसप- रोपिदृश्यतेच॰दीर्घसत्राणिवार्षश तिकानि॰वार्षसहस्त्रिकाणिचेति ॥

वर्षकरी । स्त्री॰ झिल्लिकायाम् ॥

वर्षकेतु । पुं॰ रक्तपुनर्नवायाम् ॥

वर्षकोष । पुं॰ दैवज्ञे ॥ मासे ॥ वर्ष . कोषोऽस्य

वर्षज । त्रि॰ वृष्टिजाते ॥

वर्षणम् । न॰ वृष्टौ ॥ वृषुसेचने । ल्युट् ॥ नचाऽचाल्युटोबाध . वृष भोवर्षणादितिभाष्यप्रयोगात्॰ल्यु डपिभवतीतिकैयटादय ॥

वर्षणि । स्त्री॰ वर्तने ॥

वर्षपर्वत । पुं॰ वर्षविकृतौ । भाजकगिरौ ॥ यथा । हिमवान्हेमकूटश्चनिषधोमे रुरेवच । चैत्र : कर्णीचशृङ्गीचसप्त तेवर्षपर्वता ॥ इतिहारावली ॥

वर्षपाकी । पु॰ आम्रातके ॥

वर्षपुष्पा । स्त्री॰ सहदेवीलतायाम् ॥

वर्षप्रिय । पु॰ चातकपक्षिणि ॥

वर्षवर । पु॰ षण्ढे । अत्यन्तान्त- र्गृहचरे । खोजा॰इ॰भा॰प्र॰ ॥ वृणोति॰वरतिवा । वृञ्वरणे॰- वरणावरणेवा । अच् । वर्षवर- र । येत्वल्पसत्त्वा प्रथमक्लीबा- स्त्रीस्वभाविन । जात्यानदु- ष्टा . कार्येषुतेवैवर्षवरा स्मृता ।

वर्षवृद्धि । स्त्री॰ जन्मतिथौ ॥

वर्षा । स्त्री॰ भूम्नि॰॰प्रावृट्काले । नभोनभस्ययो । श्रावणभाद्रयो . ॥ आषाढादिचतुर्मासेषु । यथा । वर्षासुसविष तोयद्दिव्यमप्याश्विन- विनेति ॥ वर्षवर्षणमस्ति ।

अर्श आद्यच् । टाप् ॥

वर्षांश . । पु॰ मासे ॥

वर्षाघोष । पुं॰ महामेके ॥

वर्षाङ्ग : । पुं॰ मासे ॥

वर्षाभव : । पु॰ रक्तपुनर्नवायाम् ॥ त्रि॰वर्षासुजाते ॥

वर्षाभू : । पु॰ भेके । मण्डूके ॥ भूलतायाम् । गण्डूपदे । किञ्चुलुके ॥ इन्द्रगोपे ॥ वर्षासुभवति । भू॰ । भुव · संज्ञान्तरयोरिति क्विप् ॥

वर्षाभू । स्त्री॰ शोथघ्न्याम् । पुनर्नवायाम् ॥ भेक्याम् ॥

वर्षाभ्वी । स्त्री॰ भेक्याम् । वर्षासुभवति । भू॰ । क्विप् । वर्षाभ्वीत्यसाधु : । ङीष् विधायकाभावात् ॥ गौरादित्वाद्वा ङीष् ॥ पुनर्नवायाम् ॥

वर्षार्चि . । पुं॰ कुजे । भौमे ॥

वर्षावसान . । पुं॰ शरत्काले ॥

वर्षिष्ठ · । त्रि॰ अतिवृद्धे ॥ अयमेषामतिशयेनवृद्ध : । इष्ठनि॰ प्रियस्थिरेति॰ वृद्धस्यवर्षि॰ आदेश : ॥

वर्षीयान् । त्रि॰ वृद्धतरे । ज्यायसि ॥ अयमनयोरतिशयेनवृद्ध : । द्विवचनेतीयसुनि॰ प्रियस्थिरेतिवर्षिआदेश : ॥

वर्षुक : । त्रि॰ वृष्टिकारिणि ॥ वर्षतितच्छील : । वृषुसेचने । लषपतपदेत्यादिनोकञ् ॥

वर्षुकाब्द : । पुं॰ वर्षणशीलमेघे ॥

वर्षेज : । त्रि॰ वर्षाकालजाते । वर्षेजे ॥ विभाषावर्षक्षरशरवरादित्यलुक् ॥

वर्षोपल : । पुं॰ करकायाम् ॥ वर्षायाउपल ॥

वर्ष्म् । न॰ देहे ॥ इतिद्विरूपकोष : ॥

वर्ष्म । न॰ देहे । तनौ ॥ प्रमाणे ॥ प्रमाणमाचोन्नतिरितिस्वामी । इयत्तेतिभरत : ॥ अतिसुन्दराकृतौ ॥ वर्षति॰ वृष्यतेवा । वृषु॰ । मनिन् ॥

वर्हम् । न॰ पुं॰ कलापे । मयूरपिच्छे ॥ दले ॥ न॰ ग्रन्थिपर्णे । स्थौणेये ॥ परीवारे ॥ वर्हति । वृहवृद्धौ । पचाद्यच् ॥ वर्हतेवा । वर्ह हिंसायां । घञ् ॥

वर्हणम् । न॰ पर्णे ॥

वर्हि . । पुं॰ पावके ॥

वर्हि : पुष्पम् । न॰ ग्रन्थिपर्णे ॥

वर्हि शुष्मा । पुं॰ अग्नौ ॥ वर्हि : कुश . शुष्मवलमस्येतिविग्रह : ॥

वर्हि । न॰ स्थौणेये । कुकुरौंधा॰ इ॰ भा॰ ॥ वर्हपत्रप्रशस्तमस्य । अतइनि . ॥

वर्हिकुसुमम् । न॰ ग्रन्थिपर्णे ॥

वर्हिचूडा । स्त्री॰ स्वराम्लायाम् । मयूरशिखेतिप्रसिद्धायामोषधौ ॥

बर्हिण : । पुं॰ मयूरे ॥ बर्हमस्त्यस्य । फलबर्हाभ्यामिनच् ॥

बर्हिणवाहन · । पुं॰ षडानने ॥

बर्हिध्वजा । स्त्री॰ पार्वत्याम् ॥

बर्ही । पुं॰ मयूरे ॥ बर्होस्त्यस्य । इनि : ॥

बर्हिपुष्पम् । न॰ ग्रन्थिपर्णे ॥

बर्हिर्ज्योति : । पुं॰ अग्नौ ॥

बर्हिर्मुख : । पुं॰ गीर्वाणे । देवे ॥ बर्हिरग्निर्मुखं यस्यस : ॥

बर्हिषद् । पुं॰ दैत्यदानवादीनांपितृषु ॥ यथा । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्चस्मृताबर्हिषदोत्रिजा : ॥

बर्हिष्ठम् । न॰ वाले । ह्रीवेरे । बाला॰ । इ॰ भा॰ प्र॰ ओषधौ । बर्हिषिकुशेतिष्ठति । सुपिस्थइति क : । अम्बाम्बे तिषत्वम् ॥

बर्हि : । पुं॰ हुताशने ॥ चित्रके ॥ यज्ञे ॥ दीप्तौ ॥ न॰ ग्रन्थिपर्णे ॥ पुं॰ न॰ कुशे । दर्भे ॥ बर्हिर्द्विविधम् । मुख्य गौणञ्च । तत्रमुख्य कुशकाशादिदशदर्भमयम् । गौणन्तु॰तत्सदृश तृणान्तरम् । बृंहति बर्हिर्वृद्धौ । अोष्यादि · । बृहेर्न लोपश्चेति॰ इसि : । बर्हि : सान्त : ॥

बलम् । न॰ सैन्ये ॥

बलक्ष : । पुं॰ शुक्लवर्णे । धवले ॥

त्रि॰ तद्वति ॥ बलते । बलसंवरणे सञ्चरणे च । क्विप् । बलमक्षत्यस्मिन् । अक्षू॰ । घञ् ॥ अवलक्षतेवा । अकारलोप : ॥

बलक्षगु : । पुं॰ चन्द्रे ॥ बलक्षा : गावोयस्यस . । गोस्त्रियोरितिह्रस्व : ॥

बलभी । स्त्री॰ गोपानस्याम् । कुड्यच्छादनार्थं दत्तवक्रकाष्ठे । बडभ्याम् ॥ पटलाधारवंशपञ्जरे ॥ बलति । बल॰ । बाहुलकादभच् । गौरादि : ॥

बलय : । पुं॰ कण्ठरोगे ॥ वेलायाम् ॥ पुं॰ न॰ कङ्कणे । कटके । प्रकोष्ठाभरणे ॥ बल्यते । बल॰ । बलिमलितनिभ्य. कयन् ॥ अस्थिविशेषे ॥ यथा । पार्श्वो : पार्श्वयुगेपृष्ठे वक्षोजठरपायुषु । पादयोरपिचास्थीनिवलयानिबभाषिरे ॥ लघ्वादित्रिकलै॰ । ऽऽ॰ ॥ गुर्वक्षरेपुं॰ ॥

बलयित . । त्रि॰ वेष्टिते । नद्यादिनारुद्धे ॥ बलय जातमस्य । तारकादित्वादितच् ॥ यद्वा । बलयवत्कृतम् । तत्करोतीतिणिच् ॥ क्त . ॥

बला । स्त्री॰ बलायाम् । वाट्यालके ॥ विद्याविशेषे ॥

बलाक : । पुं॰ क्षुद्रबके । बलायाम् ॥

वलाहक : । पुं० वलाहके ॥
वलिकर : । त्रि० वलिकर्त्तरि ॥ वलि करोति । डुकृञ्० । दिवाविभेतिट : ॥
वलित । त्रि० वेष्टिते ॥
वलिर । त्रि० केकरे । निम्नोन्नताक्षि ॥ वलते । वल० । बाहुलकात्किरच् ॥
वलिशम् । ) न०
वलिशि । ) स्त्री० वलिशे । वडिशे ॥
वलिशी । )
वली । स्त्री० मध्यमरेखायाम् ॥ जर्य्याम् ॥ जीर्णत्वचि ॥ गृहदारुणि ॥
वल्क : । पुं० न० त्वचि । वल्कले ॥ शल्के । खण्डे । पुं० पट्टिकालोध्रे ॥ वलते । वल० । शुल्कवल्कोल्कादयश्च ॥ यद्वा । वल्कयति । वल्कपरिभाषणे । पचाद्यच् ॥
वल्कतरु : । पुं० पूगवृक्षे ॥
वल्कद्रुम । पुं० भूर्जवृक्षे ॥
वल्कल । पुं० न० द्रुमत्वचि । वक्कल० हु० भा० प्र० ॥ त्वचे । दालचीनीतिभा० प्र० ॥ वलति । वल० । बाहुलकात्कल : ॥ वल्कलातीतितुस्वामी ॥
वल्कला । स्त्री० शिलावल्कायाम् ॥
वल्कलोध्र : । पुं० पट्टिकालोध्रे ॥
वल्कवान् । पुं० मत्स्ये ॥ त्रि० वल्कयुक्ते ॥

वल्किल : । पुं० कण्टके ॥
वल्ग । पुं० न० अभ्यवहारे । जेमने ॥ वल्गाभोजने । अच् ॥
वल्गन् । त्रि० धावति ॥
वल्गनम् । न० बहुभाषणे ॥ प्लुतगमने ॥
वल्गा । स्त्री० दन्तालिकायाम् । अवधे पद्याम् । अश्वमुखरज्जौ ॥ साचोत्क्षिप्तादिभेदेनचतुर्दशविधोक्तादयलीलावल्याम् । उत्क्षिप्ता शिथिलातथोत्तरवतीमन्दाचवैद्यायसोदिक्षिप्तैककराङ्कलम्बरसमौत् कीर्णाविभक्तातथा । अत्युत्क्षिप्तलीढ्तेखलुतथा व्यागूढगोकर्णिके वाहानाङ्कथिताश्चतुर्दशविधावल्गा प्रभेदाश्चमीति ॥ तल्लक्षणानितुतच्चैवद्रष्टव्यानि ॥ अश्वप्रेरणविशेषे ॥
वल्गाविभागकुशल । त्रि० वाहानां षड्विधप्रेरणाभिज्ञे ॥ यथाहभोज । वाहनप्रतिवाहानांषड्विधंप्रेरणं विदु । रागावल्गाकशापार्ष्णिप्रतोदरवभेदत ॥ वल्गाविभागोविविच्यप्रयोग । तत्रकुशल : ॥
वल्गितम् । न० घोटकस्यविशेषगमने । वेगेनविक्षिप्तोपरिचरणे ॥ गमने ॥ बहुभाषणे ॥ वल्गनम् । वल्गगतौ । भावेक्त ॥
वल्गु : । पुं० छागे ॥ त्रि० मनोज्ञे । सुन्दरे ॥ यथाक्रमम् । छागमाच

मतिवल्गु जगदेतदतिफल्गु। धन
लोभमपहायनमपङ्गनयनाय॥ वलते
। वल ० । वलिगुर्व्यचेल्गु ॥ वाचा
ले ॥

वल्गुकम् । न० चन्दने ॥ विपिने ॥
पणे ॥ त्रि० रुचिरे ॥

वल्गुपच । पुं० वनमुद्गे ॥

वल्गुला । स्त्री० वाकुच्याम् ॥ पक्षि
विशेषे । वल्गुविष्ठायाम् । वादुड०
इतिभाषा ॥

वल्गुलिका । स्त्री० तैलपायिकायाम् ॥

वल्गुली । स्त्री० स्वविष्ठादेपक्षिविशे
षे ॥

वल्भनम् । न० भक्षणे ॥

वल्मीक । पुं० न० वामलूरे। वल्मी
के ॥ तस्मृत्तिकयाशौचनिषेधोयथा
। वल्मीकमृत्तिकोत्खातामृदमन्त
र्जलांतथा। शौचावशिष्टांगेहाच्च
नादद्याल्लेपसम्भवाम् । अन्त :
प्राणवपन्नाश्च हलोत्खातानकर्द
माम् ॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥ वल्लते ।
वल्ल० । क्विप् । ऋच्छति। ऋगतौ
अच् : । वल्ल्चासावरिश्च ॥ मेथि
कायाम् ॥ विषमूले ॥

वल्लव : । पुं० गोदोग्धरि । गोपे ॥
भीमसेने ॥ त्रि० सूपकारे ॥ वल्ल
नम् । वल्लसंवरणसञ्चरणेच ।
वल्लि : सौभोवाप्रीतौ । भावघञ्

। वल्लोस्यास्ति । अन्येभ्योपीतिव :
॥ वल्लयाति० वायतिवा । वागति
गन्धनयो : अोवैशोषणेवा । आ
तोनुपेतिक ॥

वल्लवी । स्त्री० आभीर्याम् । गोपिका
याम् । महाशूद्राम् ॥

वल्लि । स्त्री० वल्ल्याम् । लता
याम् । पृथिव्याम् ॥ वल्लते ।
वल्ल० । सर्वधातुभ्यइन् ॥

वल्लिकण्टकारिका । स्त्री० अग्निद
मनीक्षुपे ॥

वल्लिदूर्वा । स्त्री० मालादूर्वायाम् ॥

वल्लिशाकटपोतिका । स्त्री० मूल
पोत्याम् ॥

वल्लिशूरण : । पुं० अल्पकपर्याम् ॥

वल्ली । स्त्री० व्रतत्याम् । गुडूच्या
दिलतायाम् ॥ याभूमेर्वसमारो
हन्तितावल्ल्य : ॥ अजमोदायाम्
॥ कुसुमान्तरे । वेलाइ० भा० प्र०
॥ कृदिकारादितिङीष् ॥

वल्लीगड । पुं० मत्स्यविशेषे ॥
भोला० वालिकडा० इ० च०
गौ० दे० भाषाप्रसिद्धे ॥

वल्लीजम् । न० मरिचे। वेल्लज ॥

वल्लीबदरी । स्त्री० भूबदर्याम् ॥

वल्लीमुद्ग : । पुं० मकुष्ठके ॥

वल्लीवृक्ष : । पुं० सालवृक्षे ॥

वल्लुरम् । न० शाद्वले ॥ क्षेत्रे ॥
गहने ॥ औषधे । कुञ्जे । मञ्ज

र्थाम् । औषधे । निर्जलस्थाने ॥ विश्वधरणिशब्दरत्नावलिषु० वप्तर- मितिपाठ . ॥

वप्तूरम् । त्रि० आतपादिनाशुष्कमांसे ॥ वनक्षेत्रे ॥ वाहनी ॥ जयरभूमौ ॥ शैलमांसे ॥ वल्लते० वल्लुर्थ तेवा । वल्ल० । खर्जादित्त्वादूर. ॥

वल्लुरा । स्त्री० धात्रीवृक्षे ॥

वल्वजा . । पु० भूम्नि० उलपे । वप्रशी० इ० प्र० तृणा ॥ वलते । वल० । क्विप् । वलति । वलगतौ । च च् । वल्वासौवजश्च । एकोवल्वज इतिभाष्यादेकत्वे पि ॥ यद्वा । वलतेभुवबेष्टयतिविश्वादित्वात्प्रत्यये० वल्व, पर्वत तत्रजाताः वल्वजा । इत्यन्ये । स्वभावा द्बहुत्वेवल्वजाः ॥ अतएव० सुमनोऽपरोवल्वजादेवेतिपाशिकवद्धच्चोऽर्थंक्रमदीश्वरसूत्रम् ॥

वल्वजा । स्त्री० तृणविशेषे । इढपल्याम् । तृणोर्णौ । मौञ्जीपर्णायाम् । सा वेवागे० इ० भा० ॥

वश' । पुं० एकादशवर्णान्तर्गतप्रथमकारणे ॥ तत्रजातस्यफलयथा । वशाभिधानेजननंहियस्यशूरोतिधीरोमनुज ख्यातोस्यात् । पद्मालया तन्निलयेनिवासकरोतिनित्यंसुविचक्षण : स्यात् ॥

वशवद' . त्रि० आयत्तकरवाक्यस्यकारि । इष्टवादिनि ॥ वशवशकरमधुरवदति । प्रियवशेवद खच । मुम् ॥

वश । पुं० कान्तौ । स्पृहायाम् । इच्छायाम् ॥ वेश्यागृहे ॥ आयत्ततायाम् ॥ येयस्यवशमापन्न सतस्य किङ्करः किल ॥ प्रभुत्वे ॥ जन्मनि ॥ न० आयत्तत्वे ॥ इच्छायाम् ॥ प्रभुत्वे ॥ त्रि० आयत्ते ॥ वशनम । वशकान्तौ । वशिरण्योरुपसङ्ख्यानमित्यप् ॥ वष्टि । अज्वा ॥

वशका । स्त्री० वश्यायांनार्याम् ॥

वशक्रिया । स्त्री० वशीकरणे । सवदने ॥ मणिमन्त्रौषधैरायतीकरणे ॥ वशस्यकरणम । कृञ शच ॥

वशगः । त्रि० वशीभूते ॥

वशा । स्त्री० वन्ध्यायाम् ॥ सुतायाम । दुहितरि ॥ योषायाम् । नार्याम् ॥ वन्ध्यगव्याम् ॥ करिण्याम् । हस्तिन्याम् ॥ वष्टि । वश० । पचाद्यच । उश्यतेवा । वशिरण्योरुपसङ्ख्यानमित्यप् ॥

वशाव्यक' । पुं० शिशुमारे ॥

वशापायी । पुं० कुक्कुरे ॥

वशि । न० वशित्वे ॥

वशिक । त्रि० रिक्ते । शून्ये ॥ उश्यते । वश० । सर्वधातुभ्यइन् । सञ्ज्ञायाकन् ॥

वशिका । स्त्री० अगुरौ ॥

वशिता । स्त्री० वशित्वे ॥ वशीस्या त्ति । इति । ३ वशिनोभाव . तल् ॥

वशित्वम् । न० शिवैश्वर्यविशेषे । अ ष्टभूतिष्वेकस्याम् ॥ येनभूतभौति कश्चावश्यमेववशीभवति ॥

वशी । पु० जितेंद्रिये ॥ अव्यसनिनि ॥ स्ववशीकृतकार्यकरणसङ्घाते ॥ स्वतन्त्रे । परमेश्वरे ॥ यतः सर्वं ह्यस्यजगद्वशेवर्त्तते०इतिवशी ॥

वशिनी । स्त्री० शमीवृक्षे ॥वन्दा- याम् ॥

वशिरः । पु० किशिल्याम् । अपामा- र्गे ॥ हस्तिपिप्पल्याम् ॥ चव्ये ॥ वचायाम् ॥ न०अब्धीजे । सामुद्रल वणे ॥ वष्टि । वश० । बाहुलका त्किरच । सम्प्रापूर्वकत्वान्नसम्प्र- सारणम ॥ यद्वा । वशनम् । व- श० । क्त्न । वशिराति । रा० । आतोनुपेतिकः ॥

वशिष्ठ । पु० स्वनामप्रसिद्धेमुनौ । अथर्वनिधौ । अरुन्धतीपतौ ॥ त्रि० वशकर्त्तरि ॥ श्रेष्ठतमे ॥

वशीकरणम् । न० मणिमन्त्रौषधैराय त्तीकरणे । वशक्रियायाम् ॥

वशीकारसञ्ज्ञा । स्त्री० ज्ञानप्रसाद रूपायाहृष्याजिरोधिन्याम्चित्तवृ त्तौ । दृष्टानुश्रविकविषयवितृष्णा स्यवैराग्ये ॥ चीत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपिदृष्टानुश्रवि- कविषयेषुयासञ्ज्ञात्र्यात्पराचीना सावशीकारसञ्ज्ञावैराग्यम । उक्त ञ्चपतञ्जलिना । दृष्टानुश्रविकवि षयवितृष्णस्यवशीकारसञ्ज्ञावैरा- ग्यमिति ॥

वशीकृतः । त्रि० जिते ॥

वशीभूत । त्रि० वश्यताम्प्राप्ते ॥ अवशोवशीभवति । च्वि . । क्त ॥

वशीर । पु० गजपिप्पल्याम ॥

वश्यम् । नलवङ्गे ॥ आयत्तीकरणे ॥ वश्य जनानांसर्वेषाविधेयत्वमुदाहृ तम् ॥ त्रि० प्रणये । प्रवर्त्तयितुं निवर्त्तयितु वाशक्ये ॥ वशमधीन त्वगतः । वश गतइतियत् ॥

वश्यका । स्त्री० वशगायाम ॥

वश्यकूट । पु० वैवाहिकविचारवि शेषे ॥ यथा । सिंहस्यसर्वेवशगा विनालिंविद्यायसिंहंवशिनोनरा णाम् । भक्ष्यास्तथैवाजलराशयस्ते वश्यास्तुलोकव्यवहारतोन्ये ॥ एव वश्यसमावेशेदम्पत्यो प्रीतिरुत्त मा । वश्याभावपिदम्पत्योर्विवाह. कलहप्रद ॥

वश्या । स्त्री० वशगायाम् ॥ टाप् ॥

वश्यात्मा । पु० स्वाधीनान्त करणे ॥ वैराग्यपरिपाकेण० वासनाच येसति०वश्य स्वाधीनोविषयपा

रतन्नाशून्य आत्मा अन्तकार था यस्स : ॥

वषट् । अ० देवहविर्दानमन्त्रे ॥ उह्यतेऽनेन । वह० बाहुलकात्० डषट् ॥

वषट्कार । पु० देवयज्ञे । आहुतौ । होमे ॥ वषट्क्रियाक्रियतेयस्मिन्नधिकरणे घञ् ॥ विष्णौ ॥

वषट्कृतम् । त्रि० हुते । आग्नीध्रक्षिप्ते ॥ अग्नौहुतन्तुयवव्यं तत् स्यात् त्रिषु वषट्कृतम् ॥ वषडितिमन्त्रोपलक्षणम् । वषट् मन्त्रेणाकृतम् ० आग्नीध्रक्षिप्तम् ॥

वष्कय । पुं० तरुणवत्से ॥ एकहायनेवत्से । वष्कते । वष्कगतौ । बाहुलकादयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् । चिरप्रसूतायांगवि ॥ वष्कयस्त्वेकहायनोवत्स इतिशाकटायन । तेननीयते । णीञ् ० । क्विप् । सर्वतोऽक्तिन्नर्थादितिङीष् । गौरादित्वाद्वा । पूर्वपदादितिणत्वम् ॥

वष्कयिणी । स्त्री० वष्कयण्याम् ॥ वष्कयस्तरुणोवत्स '। सोस्त्यस्या । अतइनि । अट्कुप्वाङितिणत्वम् ॥

वसति । स्त्री० वासे । अवस्थाने ॥ यामिन्याम् । निशायाम् ॥ निकेतने । सदने ॥ वसन्त्यस्याम् ० वसन वा । वसनिवबासे । वहिवस्यर्त्तिभ्यश्चिदित्यति ॥

वसती । स्त्री० वसतौ ॥ कृदिकारादितिङीष् ॥

वसनम् । न० छादने । वस्त्रे ॥ अस्यधारणे नक्षत्रादयोयथा । धातानुराधवसुपुष्यविशाखहस्ताश्विनोत्तराश्विपवनादितिरेवतीषु । जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौधार्यं-नववसनमीश्वरविप्रतुष्टाविति समयप्रदीप ॥ वस्यतेऽनेनवा । वस आच्छादने ॥ ल्युट् ॥ निवासे ॥ स्त्रीकटीभूषणे ॥

वसना । स्त्री० स्त्रीकटीभूषणे । सारसने ॥

वसन्त । पुं० ऋतुराजे । पुष्पसमये । कुसुमाकरे । सुरभौ । पिकानन्दे । कामसखे । मधुमाधवयोः । चैत्रवैशाखयोः ॥ वसन्त्यत्रपठनीयस्मा '। वस० । तॄभूवहिवसिभासीतिझच् ॥ अतिसारे ॥ रागविशेषे ॥ तालविशेषे ॥ वसन्ततालेकर्त्तव्योनगणोमगणस्तथा ॥ श्योनाकविशेषे ॥ ऋतुविशेषे ॥

वसन्तक । पुं० श्योनाकप्रभेदे ॥ वसन्ते ॥

वसन्तकुसुम । पुं० शैलुवृक्षे ॥

वसन्तकुसुमाकर '। पुं० औषधवि

श्रेषे ॥ यथा । प्रवालरसमौक्तिका
म्बरमिदंचतुर्भागभाक्पृथक्पृथग
थसूतरजतहेमतीक्ष्णशकौ । अथो
भुजगरङ्गकचिलवकाविमर्दाखिल-
शुभेहनिविभावयेट्भिषगिदंधिया
सप्तश : ॥ द्रवैर्वृषनिशीच्जे . क
मलमालतीपुष्पजै . पय ' कदलि
कन्दजैर्मलयजेष्वनाभ्युद्भवै ' । व
सन्तकुसुमाकरोरसपतिर्हिमशोभि
त समस्तगदहृद्भवेत्खिलनिजानु
पानैरथमितिहृदयेगतरङ्गिणी ॥

वसन्तजा । स्त्री० वासन्तीलतायाम् ॥

वसन्ततिलकम् । न० शर्करीछन्द. १४
प्रभेदे । सिंहोन्नतावृत्ते ॥ यथा ।
उक्तं यवसन्ततिलकातभजाजगौग : ।
यथा फुल्लवसन्ततिलकतिलकश्ना
ल्याली।लापरपिककुलंकलमच्चरौति ।
वात्यत्रपुष्पसुरभिर्मलयाद्रिवातो-
यातोहरि ' समथुरांविधिनाहता
स्म . ॥ पुष्पविशेषे ॥ औषधविशे
षे ॥ यथा । अजारज,दहनसैन्धववि
षव्यश्च पूर्णकरञ्जसहितमथितेनपी
तम । नैवप्ररोहतिपुनर्गुदज ' स्व
हैतोस्मैवसन्ततिलकोरपिकल्पक
ल्पम् ॥

वसन्ततिलका । स्त्री० वसन्ततिलके ॥
यथा । उक्तावसन्ततिलकातभजा
जगौग : ॥

वसन्तदूत ' । पुं० चैत्रे ॥ पिके पञ्च
मरागे ॥ आम्रे ॥

वसन्तदूती । स्त्री० पाटलीवृक्षे ॥ अ
तिमुक्ता । माधवीलतायाम् ॥ ग
णिकायाम् । कोकिलायाम् ।
पिक्याम ॥

वसन्तद्रु : । } पुं० आम्रवृक्षे ॥
वसन्तद्रुम ।

वसन्तमालिका । स्त्री० विषमवृत्तप्र
भेदे ॥ यथा । विषमेससजागुरूस
मेचेत्सभरायवसन्तमालिकासा॥

वसन्तसख : । पुं० कामदेवे ॥

वसन्तोत्सव : । पुं० होलाकायाम् ॥

वसा । स्त्री० मांसप्रभवधातुविशेषे
कायस्नेहे । मेदसि । वपायाम् ॥
वसति० वस्ते वा । वसनिवासे०
वसआच्छादनेवा । पचाद्यच्० भि
दाद्यङ्वा ॥ मांसरोहिण्याम् ॥

वसाढ्य : । पुं० शिशुमारे ॥

वसादनी । स्त्री० सिन्धुमुख्याम् ॥ वा
सकी ॥

वसान ' । त्रि० आच्छादयति ॥ वस०
। शानच् ॥

वसापायी । पुं० कुक्कुरे ॥

वसि । ' पुं० वसने ॥ वस्ते ० वस्त्रेवा
वसआच्छादने । खनिकष्यज्यसी
त्यादिनाइ : ॥

वस्तिरम । न० पचौवे । सामुद्रलव
णे । वशिरे वस्ते वस० । बा
हुलकात्किरच् ॥ यद्वा । वसनम् ।

। वसुस्तम्भे । इन् । वसिंराति । राट्।ने । आतोनुपेतिक । करि पिप्पल्याम् ॥

वसिष्ठः । पुं॰ वसिष्ठमुनौ । अरुन्धती जानौ । अरुन्धतीनाथे ॥

वसु । पुं॰ देवभेदे । गणदेवता विशेषे ॥ यथा । धरोध्रुवश्चसोमश्च विष्णुश्चैवानिलोऽनल । प्रत्यूष श्चप्रभासश्चवसवोष्टौक्रमात्स्मृता: ॥ धनाधिपे ॥ आयाम् । दीप्तौ ॥ अग्नौ ॥ ये.क्त्रे ॥ वकवृक्षे । शिवमल्ल्याम् । पाशुपते ॥ राजनि ॥ साधौ ॥ पीतमुद्गे ॥ शिवे ॥ सूर्ये ॥ अष्टसङ्ख्या याम् ॥ धनिष्ठानक्षत्रे ॥ पुष्करिण्याम् ॥ क्लीवे ॥ वृद्धौषधे ॥ अश्वे ॥ विष्णौ ॥ वसन्तिसर्वभूता न्यत्र॰तेष्वयमपिवसतीतिवावसु ॥ न॰रत्ने ॥ धने । राथि ॥ हाटके॥ जले ॥ स्त्री॰दीप्तौ । वृद्धौषधे ॥ त्रि॰मधुरे ॥ शुष्के ॥ वसतिसर्व-त्र॰उष्यतेवागुणै सर्वैरोष्यतेऽने नवा॰वस्ते॰वस्यतेवा । वसनिवासे॰वसआच्छादनेवा । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिवन्धिमनिभ्य श्चेत्यु ॥

वसुक : । पु॰ शिववल्ल्याम् । वकपुष्पे । सुरेष्टे ॥ अर्कपर्णे । रक्तार्के । मन्दारे ॥ न॰रौमके । साम्भरिजवणे ॥ पांशवे ॥ वासूके ॥ स्वार्थेकन् ॥ वसुकायतिवा । कै॰ । आतोनुपेतिक । वस्तेव । यावादित्वात्कन्वा ॥ वसस्त्यस्मिन् । व्रीह्यादित्वाट्ठक् । इसुस्तिति कोवा ॥

वसुकीट : । पुं॰ याचके ॥

वसुचरणम् । न॰ भगणे॰ऽ ॥ ॰ ॥

वसुच्छिद्रा । स्त्री॰ महामेदावृक्षे ॥

वसुद । पुं॰ धनाधिपे । कुबेरे ॥ हरौ ॥ त्रि॰धनदातरि ॥ वसुदयते । देङ्पालने । वसुददातिवा । डुदाञ्॰ । आतश्चतिक : ॥

वसुदान । त्रि॰ सर्वफलदे ।

वसुदेव । पुं॰ श्रीकृष्णजनके । आनकदुन्दुभौ । शूरे ॥ वसुसुधनेषुदीव्यतिमोदते । दिवु॰ । पचाद्यच् ॥

वसुदेवता । स्त्री॰ धनिष्ठानक्षत्रे ॥

वसुदेवभू । पु॰ श्रीकृष्णे ॥

वसुधा । स्त्री॰ क्षितौ ॥ वसुदधाति । डुधाञ्॰ । आतश्चतिक ॥

वसुधाखर्ज्जूरिका । स्त्री॰ भूखर्ज्जूरिकायां ॥

वसुधाधिप : । पुं॰ भूपतौ ॥ जगणे॰ । ऽ । ॰ ॥

वसुधान : । पुं॰ कोशे ॥ वसुधीयतेस्मिन ॥

वसुधारा । स्त्री॰ वृद्धिश्राद्धपूर्वकर्त्तव्यचेदिराजवसूद्देश्यककुड्यालग्नघृत

धारायाम् ॥ यथा । कुड्यलग्नाव सोर्धारासप्तवारान् घृतेनतु । कार येत्पञ्चवारान्वानातिनीचांनचो च्छ्रिताम् ॥ आयुष्मानितिशान्त्य र्थंजप्तातत्रसमाहित । अड्भ्य. पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ इतिकात्यायन: । अपिच । देह- स्थानाभिमाचार्यांप्रादेशपरिमाण- त: । सप्तवापञ्चवाबिन्दून्दद्यात् सिन्दूरचन्दनै: । प्रत्येकाबिन्दुंम- तिमान्काममायारमांस्मरन् । घृ तधारामविच्छिन्नादद्यातच्चवसुयजि त् ॥ कुवेरपुर्याम् ॥ धनसन्ततौ ॥ जिनशक्तिविशेषे । तारायाम् ॥ व सो:खेदिराजस्यधारा ॥ भौमेतीर्थ- विशेषे ॥

वसुनन्दक । पुं० खेटके । धनवृद्धि जीवके ॥

वसुन्धरा । स्त्री० गोचायाम् । उर्व्यां म् ॥ वसूनिधारयति । सञ्ज्ञायांभृ तृवृजिधारीतिखच् । खचिक्रस.। अरुद्विंषदितिमुम् ॥

वसुप्राण: । पुं० वह्नौ ॥

वसुमती । स्त्री० भुवि ॥ यथासप्तद्वी- पावसुमतीति । वसुधनमस्त्यऽस्या म् ॥ मतुप् । ङीप् ॥

वसुमना: । पुं० विष्णौ ॥ वसुशब्दे नप्रशस्त्य लक्ष्यते । वसुप्रशस्त मनो यस्य । रागद्वेषादिभि. क्लेशैर्म

द्वादिभिरुपक्लेशैश्चयतोनकलुषि त चित्त ततस्तन्मन प्रशस्तम् ॥

वसुरोचि । न० यज्ञे ॥ वसव रोचन्तेऽस्मिन् । रुचदीप्तौ । वसौ रुचे: सञ्ज्ञायामिति॰ इसिन् ॥

वसुल: । पुं० देवतायाम् ॥

वसुश्रेष्ठम् । न० रूप्ये ॥

वसुसेन । पुं० कर्णे । अङ्गाधि पे ॥

वसुस्थली । स्त्री० कुवेरपुर्य्याम् ॥

वसुहट्ट: । पुं० वकद्रुमे ॥

वसूक । पुं० वकवृक्षे ॥ न० साम्भ रिलवणे ॥

वसूत्तम । पुं० भीष्मपितामहे ॥

वस्कय: । पुं० वत्सतर्ये ॥

वस्कयणी । )<br>वस्कयिनी । ) स्त्री० वत्सविशिष्टाम्।

चिरप्रसूतायांधेनौ ॥ वस्कयिन्या स्त्रिदोषघ्नतर्पणबलकृत्पय ॥

वस्कराटिका । स्त्री० वृश्चिकायाम् । कालिकापुपे ॥

वस्त । पुं० छागे ॥ वस्तयते । वस्त अर्दनेचुरादि । पचाद्यच् ॥

वस्तकम् । न० कृत्रिमलवणे ॥ वस्त इव । अजगन्धित्वात् । इवेप्रति कृताविति कन् ॥

वस्तकर्ण: । पुं० शालवृक्षे ॥

वस्तगन्धा । स्त्री० अजगन्धायाम् ॥ वस्तस्यैवगन्धोऽस्या: । वस्तशब्द

स्वगन्धेलाक्षणिक ॥

वस्तमोदा । स्त्री॰ अजमोदायाम् ॥ वस्तं मोदयति । मुद॰ । ण्यन्तः । कर्मण्यण् ॥

वस्तान्त्री । स्त्री॰ छगलान्त्रीक्षुपे । वृषगन्धायाम् । मेषान्त्र्याम् ॥ वस्तस्येवान्त्रमस्याः । गौरादि ॥

वस्ति । पुं॰ स्त्री॰ नाभेरधोभागे । नाभिलिङ्गयोरन्तरे ॥ मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयते ॥ नाभेरधस्तादलाबूसदृशमधोनालमनेकच्छिद्रं मूत्रभाजनं वस्तिरुच्यते ॥ अस्यालक्षणं यथा । विस्तीर्णामांसलास्निग्धावस्तिः पुंसाप्रशस्यते । निर्मांसाकर्कशारूक्षाद् खदारिद्र्यदास्मृता ॥ गोमायुसदृशायस्य खरोष्ट्रमहिषस्य च । सभवेद्दुःखितो नित्यं धनहीनश्च मानवः ॥ वसति मूत्रमत्र । यद्वा । वस्ते॰ वस्यते वा । वस॰ निवासे॰ आच्छादने वा । वस्यतिवा । वसुस्तम्भे । वसेस्तिः ॥ चिकित्साविशेषे ॥ यथा । वस्तिर्द्विधानुवासाख्योनिरूहस्ततःपरः । यः स्नेहैर्दीयतेसस्यादनुवासननामकः ॥ कषायक्षीरतैलैर्योनिरूहः सनिगद्यते । वस्तिभिर्दीयतेयस्मात्तस्माद्वस्तिरितिस्मृतः ॥ वस्तिभिः मृगादीनां मूत्राशयैः ॥ भूम्नि॰ वस्तयः --

वस्त्रान्तावयवेषु ॥ दशासु ॥

वस्तिकर्माढ्य । पुं॰ अरिष्टवृक्षे । फेनिले ॥

वस्तिमलम् । न॰ मूत्रे ॥

वस्तु । न॰ द्रव्ये ॥ पदार्थे ॥ जगति वस्तुद्वयं भावोऽभावश्चेति न्यायशास्त्रम् ॥ वस्तु॰ सच्चिदानन्दाद्वयं ब्रह्मेति वेदान्तशास्त्रम् ॥ वसति । वस॰ । वसेस्तुन् ॥ लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिर्भवतीति व्याख्यातारः ॥

वस्तुकम् । न॰ वास्तूके ॥

वस्तुकी । स्त्री॰ श्वेतचिल्लीशाके ॥

वस्तुपरिच्छेद । पुं॰ सजातीयभेदो विजातीयभेदः स्वगतभेदश्चेति त्रिविधभेदे ॥ जीवेश्वरभेदः॰ जीवजगद्भेदः॰ जीवपरस्परभेदः॰ ईश्वरजगद्भेदः॰ जगत्परस्परभेदश्चेति पञ्चविधभेदे ॥ वस्तुनः परिच्छेदः परिच्छिन्नत्वम् ॥

वस्तुविवेक । पुं॰ अनित्यान्नित्यस्य पृथक्करणे ॥ नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् । एवं योनिश्चयः सम्यग्विवेको वस्तुनः स वै ॥ वस्तुनोविवेकः ॥

वस्ता । पुं॰ वास्तव्ये ॥ वसति । वस॰ । तृच् ॥

वस्थम् । न॰ निशान्ते । गृहे ॥ वसनम् । वस॰ वसेस्थ ॥ तद्वसा

धुरितिशत् ॥ यद्वा । अवस्याय ति । छ्यैस्त्यै शब्दसङ्घातयो । आतश्चोपसर्ग इतिक । वष्टीस्य लोप ॥

वस्त्रम् । न० आच्छादने । वाससि । चैले । वसने । अंशुके । कपडा० इ० भा० प्र० ॥ वस्त्यतेऽनेन । व सआच्छादने । सर्वधातुभ्य ष्ट्रन् ॥

वस्त्रकुट्टिमम् । न० वस्त्रआलये । त बूटी० इ० भा० प्र० ॥ वस्त्रस्यकु ट्टिममल्पगृहम् ॥ छत्रे ॥

वस्त्रगृहम् । न० पटवेश्मनि । प टवापे । पटमये । दूष्ये । स्थले । तम्बू० इ० भा० प्र० ॥ वस्त्रस्य गृहम् ॥

वस्त्रग्रन्थि । पुं० उत्तये । नीव्याम् । परिधान वस्त्रस्यग्रन्थने ॥

वस्त्रपञ्जल । पुं० कोलकन्दे ॥

वस्त्रपुत्रिका । स्त्री० वस्त्रनिर्मितपुत्त लिकायाम् । गुडिया० इ० भा० ॥

वस्त्रभूषण : । पुं० शाकसण्डवृक्षे ॥

वस्त्रभूषणा । स्त्री० मञ्जिष्ठायाम् ॥

वस्त्रयोनि । पुं० स्त्री० वसनोत्पत्ति कारणे त्वगादौ । त्वक फलकृमिरो मम् ॥ वस्त्रस्ययोनि: कारणम् ॥

वस्त्ररञ्जकम् । न० कुसुम्भे । वह्निशि खे ॥ वस्त्राणांरञ्जकम् ॥ त्रि० व स्त्राणांकुसुम्भादिनारञ्जनकर्त्तरि ॥

वस्त्ररञ्जन : । पुं० कुसुम्भे ॥

वस्त्ररञ्जनी । स्त्री० मञ्जिष्ठा याम् ॥

वस्त्वाभास । पुं० मायामयेरज्जुस र्पादौ० क्षणोगौरोदीर्घोऽहमहमिति व्यवहारे ॥ वस्तुधर्मिद्रव्यम्० त दद्वभासते० इतितथा ॥

वस्न : । पुं० मूल्ये । अवक्रये ॥ न० वेतने ॥ वस्त्रे ॥ धने ॥ मू ल्ये ॥ मृतौ ॥ द्रव्ये ॥ त्वचि ॥ वसत्यनवा । वस० । धाप्वस्यज्य तिभ्योन : ॥

वस्नम् । न० कटिभूषणे ॥

वस्नसा । स्त्री० वायुवाहिन्यांनाड्या म् । स्नायौ ॥ वस्तेशरीरम् । व सआच्छादने । धाप्वस्यज्यतिभ्यो न । वस्नयम० स्यति । षोऽन्तक र्मणि । आतोनुपसर्ग इतिक: । टाप् ॥

वस्निक । त्रि० वस्नजीवातौ ॥ व स्नेनमूल्येनजीवति । वस्नक्रय विक्रयाट्ठन् । यद्वा । वस्नंमू ल्य हरति० वहति० आवहतिवा । वस्नद्रव्याभ्यांठन्कनाविस्यार्थीय ठन् ॥

वस्तोकसारा । स्त्री० अलकायाम् । कुबेरपुर्याम् ॥ कुबेरनलिन्याम् ॥ मानसोत्तरशिखरवर्त्तिन्यामिन्द्रस्य नगर्याम् । इन्द्रपुर्याम् ॥ इन्द्रन लिन्याम् ॥

वल्मीकसारिका । स्त्री० वल्मीकसारा-याम् ॥

वहलिह्' । पु० गवि ॥ वह स्कन्ध स्त लेढि । लिह० । वहाभ्रे लिहह्न तिखश् । मुम् । खशोडित्त्वान्न-गुण. ॥

वह. । पु० वृषभस्कन्धे ॥ वाहे । ह्ये ॥ गन्धवहे । वायौ ॥ पथि ॥ नदे ॥ वहतियुगमनेन । वहप्राप णे । गोचरसञ्चरेतिसाधुः ॥

वहत. । पुं० वृषे ॥ पान्थे ।

वहति' । पु० गवि ॥ सचिवे ॥ वायौ ॥ वहति । वह० । वहिवस्य र्तिभ्यश्चिदित्यति ॥

वहतु. । पु० पथिके ॥ वृषभे ॥ वह ति । वह० । एधिवह्योश्चतुः ॥

वहनम् । न० प्रापणे ॥ डोङ्गे । तरा न्धौ । कुडि०डु०गो०भा०प्र०नौका विशेषे ॥ वह० । ल्युट ॥

वहन्त. । पुं० वायौ ॥ त्रि० बालके । वहति । वह० । तृभूवहिवसी-त्यादिनाझच्षित् ॥

वहलम् । न० वार्वटे पोते ॥ त्रि०व हुले ॥ दृढे ॥

वहलगन्धम् । न० शम्बरचन्दने ॥

वहलचक्षु: । पुं० मेषशृङ्गाम ॥

वहलत्वच: । पुं० श्वेतलोध्रे ॥

वहला । स्त्री० शतपुष्पायाम् ॥ स्थू-लैलायाम् ॥

वहा । स्त्री० नद्याम् ॥ वहति । व ह० । अच् ॥

वहि कुटीचर । पुं० तिर्यग्याने । कुलीरे ॥

वहि प्रज्ञ । पु० विप्रश्मिन् । व्युत्यु पहितचैतन्य ॥ वहि स्वात्मव्यति रिक्ते विषयेप्रज्ञायस्यस: ॥

वहित. । त्रि० अवहिते ॥ अवधीय-तेस्म । डुधाञ् । क्त । दधाते र्हि. । भागुरिमतेऽल्लोप ॥

वहित्रम् । न० पोते । वार्वटे ॥ व हति । वह० । अग्निचादिभ्यइत्रो-चावितिइत्रप्रत्यय ॥

वहित्रकम् । न० जलयाने । यान पात्रे ॥

वहिर्द्वारम् । न० द्वारवाह्यभागे । तो रणे ॥ वहिर्द्वारात् । वहिर्गतद्वार-स्येतिवा ॥

वहिर्द्वारप्रकोष्ठकम् । न० प्रघाणे ॥

वहिर्भूत: । त्रि० वहिर्गते ॥

वहिर्मुख । त्रि० विमुखे ॥ यथा । शैवोवावैष्णवोवापियोवास्यादन्य-पूजक । सर्वपूजाफलहन्तिशिव-रात्रिवहिर्मुख ॥

वहिश्चर: । पु० कर्कटे ॥

वहिष्ठ: । त्रि० वहिर्भवे । वहि: स्थिते ॥

वहिष्पवमान: । पुं० याज्ञिकस्तो-त्रे । सामगानासूक्तत्रयगानसाध्ये

स्तोर्वे ॥

वहि । अ० वाह्ये ॥ वहति । वह० । वृस् ॥

वहुल । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० आकाशे ॥ सितमरिचे ॥ त्रि० प्राज्ये । प्रचुरे ॥ कृष्णवर्णे ॥ वहून् अर्थान् लाति । ला० । आतइति-क ॥ वहति । वह० । वाहुलका दुलच् ॥ वहुलायांजातौ ॥ सन्धिवे लाद्यृतुनक्षत्रेभ्योऽण् । तस्यश्रविष्ठा षाढेति लुक् ॥

वहुला । स्त्री० नीलिकायाम् ॥ एलाया म् ॥ गवि ॥ मानसाचलस्थदेवी-विशेषे ॥

वहुलाः । स्त्री० भूम्नि० कृत्तिकासु ॥

वहेडुकः । पुं० विभीतकवृक्षे । व हेडा० इ० भा० प्र० ॥

वह्नि । पुं० वैश्वानरे । चीतिवृक्षे । धनञ्जये । अग्नौ ॥ स्वाहादेवीवह्नि पत्नी ॥ चित्रकाख्यौषधौ ॥ भल्लात के ॥ निम्बुके ॥ वहतिहव्यम् । देवे भ्योहवि । प्रापयतिवा । वहप्राप णे । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्इति० नि० ॥

वह्निकरी । स्त्री० धातकीपुष्प्याम् । धा तक्याम् ॥

वह्निकाष्ठम् । न० दाहागुरुणि । दा हकाष्ठे ॥

वह्निगन्धः । पुं० यक्षधूपे ॥

वह्निगर्भः । पुं० वंशे ॥

वह्निगर्भा । स्त्री० शमीद्रुमे ॥

वह्निचक्रा । स्त्री० कलिकारीवृक्षे ॥

वह्निज्वाला । स्त्री० धातकीवृक्षे ॥ वह्नेरिवज्वालाऽस्याः । वह्नेर्ज्वालेव वा । रक्तपुष्पत्वात् ॥

वह्निदमनी । स्त्री० अग्निदमनीक्षुप

वह्निदीपकः । पुं० कुसुम्भे ॥

वह्निदीपिका । स्त्री० अजमोदायाम् ।

वह्निनामा । पुं० चित्रके ॥ भल्लात के ॥

वह्निनी । स्त्री० जटामांस्याम् ॥

वह्निपुष्पी । स्त्री० धातक्यां ॥

वह्निभोग्यम् । न० घृते ॥

वह्निमन्थः । पुं० गणिकारिकावृ क्षे ॥

वह्निमन्थकः । पुं० अग्निमन्थे ॥

वह्निमारकम् । न० जले ॥

वह्निमित्रः । पुं० वायौ ॥

वह्निरेताः । पुं० शिवे । कृशानुरेत सि ॥ वह्नौरेतोऽस्य ॥

वह्निलोहकम् । न० कांस्ये ॥

वह्निवल्ला । स्त्री० कालिकायाम् । लाङ्गल्याम् ॥

वह्निवधूः । स्त्री० अग्नाय्याम् । स्वाहायाम् ॥

वह्निवर्णम् । न० रक्तोत्पले ॥

वह्निवल्लभः । पुं० सर्जरसे । धूनके ॥ अग्निके ॥ वह्नेर्वल्लभः ॥

वह्निबीजम् । न० निम्बूके ॥ स्व र्णे ॥

वह्निशिखम् । न० कुसुम्भे ॥ वह्नि वत्० शिखाऽस्य ॥

वह्निशिखर. । पुं० लोचमस्तके ॥

वह्निशिखा । स्त्री० अनन्तायाम् ॥ फलिन्याम् ॥ कलिकार्याम् ॥ धातक्याम् ।

वह्निसञ्ज्ञ : । )
वह्निसञ्ज्ञक । ) पुं० चित्रकाख्यौ षधौ ॥ वह्नि सञ्ज्ञायस्य ॥

वह्निसख : । पुं० वायौ ॥ जीरके॥

वह्यम् । न० वाहने ॥ शकटे ॥ वहन्त्यनेन ॥ वह० । वह्यकरण मितियत् ॥

वह्या । स्त्री० मुनिपत्न्याम् ॥

वह्लीक : । देशविशेषे ॥ वह्लते । व ह्लप्राधान्ये । वाहुलकादीकन् ॥

वा । विकल्पे ॥ उपमायाम् । उप माने ॥ वितर्के ॥ पादपूरणे ॥ समुच्चये ॥ विस्मये ॥ नानार्थे ॥ अतीते ॥ एवार्थे ॥ अवधारणे वाति । वागतिगन्धनयो. । क्वि प् ॥

वाश ' । त्रि० वशसम्बन्धिनि ॥

वाशिक : । पुं० वशीवादके । वैण विके ॥ वशीवादन शिल्पमस्य । ठक् ॥ भोरभूतान्व शान्वहति ० वहति० आवहतिवा । तद्वहति वहतीत्यादिनाठञ् ॥

वांशी । स्त्री० वशरोचनायां ॥

वा: किटि । पुं० शिशुमारे ॥ कु म्भीरे ॥ वारीजलस्थकिटि'शूकरः॥

वा ' सदनम् । न० जलाधारे ॥ ज लान्तस्थगृहे । जलमन्दिर० इ० भा० प्र० ॥

वाक । पु० वाचि ॥ उच्यतेऽनये ति । वचपरिभाषणे । करणेघञ् ॥ न० वकसमूहे ॥ वकानासमू ह, तस्यसमूहइत्यण् ॥ त्रि० व कसम्बन्धिनि ॥ वकस्यावयवोवि कारोवा । प्राणित्वादञ् ॥

वाकी । त्रि० वाग्विशिष्टे ॥ वाकोवि द्यतेऽस्य । अतइनि ॥

वाकुची । स्त्री० ओषधिविशेषे । सो मराज्याम्॥ सुप्रभायाम् । काम्बो ज्याम् । पूतिगन्धायाम्॥ वाकु चीमधुरातिक्ताकटुपाकारसायनी । विष्टम्भहृद्धिमारुच्यासरास्रश्वास पित्तनुत् ॥ कुष्ठाह्वश्वासकुष्ठमे हज्वरकृमिप्रणुत् । तत्फल पित्त ल कुष्ठकफानिलहरकटु ॥ केश्य त्वच्य कृमीश्वासकासशोथामपाण्डु हृत् ॥ वातसङ्कोचयति । कुचश ब्दतारे । मूलविभुजादित्वात्क पृषोदरादि : ॥

वाकुलम् । न० वकुलफले ॥ वाकु लंमधुरग्राहिदन्तस्थैर्यकरपरम् ॥

वाकोवाक्यम् । न० तर्कशास्त्रे ॥ उक्तिप्रत्युक्तिरूपेवैदिकग्रन्थे ॥ यथा किंस्विदावपनमहत्० भूमिरावपनमहदिति ॥

वाकोर. । पुं० श्यालके ॥

वाक्छलम् । न० छलविभेदे । वाक्यव्याजे ॥ यथा । अविशेषाभिहितेर्थेवक्तुरभिप्रायादर्थान्तरकल्पना-वाक्छलम ॥ यत्रशक्यार्थद्वयेसम्भवति० एकार्थनिर्णायकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेनदूषणाभिधानतद्वाक्छलम् । लक्षणातु० शक्यैकार्थशाव्दबोधतात्पर्यकशब्दस्यशक्त्यार्थान्तरतात्पर्यकत्वकल्पनयादूषणाभिधानम् । यथा । नेपालादागतोयनवकम्वलवत्त्वादित्युक्ते० कुतोस्यनवसङ्ख्याकाः कम्बलाइति ॥ एवगौर्विषाणीत्युक्ते० कुतोगजस्यशृङ्गम प्रर्येतोधावतीतिश्वेतरूपवदभिप्रायेणोक्ते० श्वतोनधावतीत्यभिधानमित्यादिकमूह्यम् ॥

वाक्पतिः । पुं० वृहस्पतौ ॥ वाचापतिः ॥ त्रि० वागीशे । पटुवचने ॥

वाक्पारुष्यम् । न० अप्रियवाक्योच्चारणे । तत्तुसप्तधाव्यसनान्तर्गतव्यसनविशेषः । यथा । मृगयाद्यास्त्रियः पानंवाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतत्क्षितेर्व्यसनसप्तकम् ॥ तल्लक्षणमाहनारदः । देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थंवाक्पारुष्यं तदुच्यतइति ॥ देशादीनामाक्रोशन्यङ्गसंयुतम् । उच्चैर्भाषणमाक्रोशः० न्यङ्गमवद्यम्० तदुभययुक्तं यत्प्रतिकूलार्थमुद्वेगजननार्थंवाक्यंतद्वाक्पारुष्यं कथ्यते ॥

वाक्यम् । न० परस्पराकाङ्क्षोपितपदचये० तिङ्सुवन्तचये । तिङन्तानाचयेयथा । पचतिपश्येत्यादिवाक्यम् । सुवन्तानाञ्चयेयथा । प्रकृतिसिद्धमिदंहिमहात्मनामित्यादि ॥ कारकान्वितक्रियायाम् ॥ धात्वर्थक्रिया० कारकैः कर्त्रादिभिरन्विताम्स्वकार्याकारकान्विता० अन्वितत्वञ्चक्रियाकारकाणामाकाङ्क्षायोग्यतासन्निधिवशाज्ज्ञेयम्०तिङ्सुवन्तचयात्मकेपिसम्बन्धार्थताबोध्या० असम्बन्धार्थस्याप्रयोगात्० अतएवपरस्पराभिसम्बन्धः पदसमूहोवाक्यमितिवृद्धाः । कारकान्वितोक्रियायथा० घटमानयेत्यादि॥ वाक्यस्वरूपमाह । वाक्यंस्याद्योग्यताकाङ्क्षासत्तियुक्ताः पदोच्चयः । वाक्योच्चयोमहावाक्यमित्थं वाक्यं द्विधामतम् ॥ उक्तञ्च । स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।

वाक्यानामेकवाक्यत्वपुनः सम्भूय जायतइति ॥ अवबाक्य यथा । शून्यवासगृहमित्यादि । महावाक्ययथा । रामायणमहाभारतरघुवंशादि । इति ॥ पुनश्चतद्द्विविधम् । लौकिक वैदिकञ्चेति । वैदिकमीश्वरोक्तत्वात्सर्वमेवप्रमाणम् लौकिकन्त्वाप्तोक्त प्रमाणम् । अन्यदप्रमाणम् ॥ समभिहारोवाक्यम् । समभिहारश्चसाध्यत्वादिवाचकद्वितीयाद्यभावेपिवस्तुत. शेषशेषिवाचकपदयोः सहोच्चारणम् । यथा । यस्यपर्णमयीजुहूर्भवतिनसपापश्लोकश्रृणोतीत्यत्र॰ पर्णताजुह्वो . समभिहारादेवपर्णतायाः जुहूङ्गत्वम् । नचानर्थक्य जुह्वाः सिद्धत्वादितिवाच्यम् । जुहूशब्देनतत्साध्यापूर्वलक्षणात् तथाचवाक्यार्थः॰ पर्णतयाऽवन्नहविर्धारणद्वाराजुहूपूर्वंभावयेदिति । एवञ्चपर्णतयार्थदिजुह्न . क्रियतेतदैवतत्साध्यमपूर्वंभवतिनान्यथेतिगम्यते॰ इतिनपर्णतायावैयर्थ्यम् । अवन्नहविर्धारणद्वारेतिचावश्य वक्तव्यम्॰ अन्यथास्रुवादिष्वपिपर्णतापत्तेः ।सैयपर्णता॰ अनारभ्याधीतापिसर्वप्रकृतिष्वेवान्वेतिनविकृतिषु ॰ तत्रचोदकेनापितत्प्राप्तिसम्भवात् पौनरुक्त्यापत्तेः । तदिदंवाक्यं प्रकरणादिभ्योबलवत् । अतएवैन्द्राग्नीइदंहविरित्यादेरैकवाक्यत्वाद्दर्शाङ्गत्वम् । नतुप्रकरणाद्दर्शपूर्णमासाङ्गत्वम् ॥ उच्यतेइतिवाक्यम् । वचेर्ण्यत् । चजोरितिकुत्वम् । शब्दसंज्ञात्वात्॰ वचोऽशब्दसंज्ञायामितिनिषेधेन ॥ शुभाशुभवाक्यानितु । नैवराज्येनमहतानचैवार्थस्वराशिभिः । प्राप्यतेज्ञानकथनपरलोकसुभाषितम् ॥ स्वर्गापवर्गसिद्ध्यर्थंभाषितयत्सुशोभनम् । वाक्यमुनिवरैःशान्तैस्तद्विज्ञेयसुभाषितम् ॥ रागद्वेषानृतक्रोधकामतृष्णानुसारियत् वाक्यंनिरयहेतुत्वात्तदभाषितमुच्यते ॥ संस्कृतेनापिकिन्तेनमृदुनाललितेनवा । अविद्यारागवाक्येनससारक्लेशहेतुना ॥ यच्छ्रुत्वाजायतेपुण्यंरागादीनाञ्चसङ्क्षयः । विरूपमपितद्वाक्य विज्ञेयमतिशोभनम् ॥ इतिवह्निपुराणम् ॥

वाक्यलक्षणवित् । पुं॰ मीमांसाशास्त्रज्ञे ॥

वाक्याध्याहारः । पुं॰ आकाङ्क्षितैकदेशपूरणे ॥ वाक्यस्यअध्याहारः ॥

वाक्याभिधायी । त्रि॰ पृष्ठमांसादे ॥ वाक्यभिधायीपुरुष पृष्ठमांसादइत्यतइतिचिकाण्डशेषः ॥

वागधिपः । पुं॰ बृहस्पतौ ॥ वाचा

अधिप : ॥

वागर : । पुं॰ गतातङ्के । परित्यक्तभये । मुमुक्षौ ॥ वारवेष्टके ॥ विशारदे । पण्डिते ॥ विषाणे ॥ निर्णये ॥ वारके ॥ शाणे ॥ वाडवे ॥ वृके ॥

वागात्त । त्रि॰ आशाहन्तरि ॥ यथा । आशांबलवतींहन्तायोहन्तिपिशुनोजन । सजीवासोपिवागात्तुर्थो॰दानुस्तुदातरि ॥ इतिशब्दमाला

वागाशनि : । पुं॰ बुद्धे ॥

वागाशी : । पुं॰ शुभवाचि ॥ वाचिआशीर्यस्य : ॥

वागीश : । पुं॰ जीवे । वृहस्पतौ ॥ त्रि॰ वाक्पतौ ॥

वागीशा । स्त्री॰ सरस्वत्याम् ॥ वाचामीशा ॥

वागीश्वर : । पुं॰ ब्रह्मणि ॥ वृहस्पतौ ॥ ऋग्वेदादिरूपाणांवाचामीश्वर : । मञ्जुघोषे ॥ त्रि॰वाचामीश्वरे ॥

वागीश्वरी । स्त्री॰ सरस्वत्याम् ॥

वागुजी । स्त्री॰ सोमराज्याम् ॥ वाचंगुञ्जति । गुजिअव्यक्तेशब्दे । मूलविभुजादित्वात्क । पृषोदरादि: ॥

वागुण : । पुं॰ कर्मरङ्गे ॥

वागुरा । स्त्री॰ मृगबन्धनार्थंजाले । मृगबन्धन्याम् ॥ खावल॰खावली॰ इ॰जाल॰इ॰च॰भणा ॥ अवागुरते । गुरीङ्सायाम । इगुपधेतिक : । वष्टिभागुरीत्यवाकारलोप ॥

वागुरिक : । पु॰ व्याधविशेषे । जालिके ॥ वागुरयाचरति । चरतीतिठक् ॥

वाग्गुद । पुं॰ पक्षिविशेषे । वागुड॰ वाड॰इ॰भा॰प्र॰ ॥

वाग्गुलि । पुं॰ ताम्बूलिनि । राज्ञाताम्बूलदातरि ॥ जातिविशेषे ॥

वाग्गुलिक : । पुं॰ ताम्बूलदे ॥

वाग्जालम् । न॰ शास्त्रमात्रे ॥ यथा । परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि । नोपकारात्परोधर्मोनापकाराद्घपरम् ॥

वाग्दरिद्र । त्रि॰ वाग्ये । मितभाषिणि ॥ वाचादरिद्र : ॥

वाग्दलम् । न॰ दन्तवाससि । ओष्ठाधरयो ॥

वाग्दुष्ट । पुं॰ व्रात्ये ॥ त्रि॰ वाचादूषिते । परुषभाषिणि ॥ वाचादुष्ट : ॥

वाग्देवता । ) स्त्री॰ सरस्वत्याम् ॥
वाग्दशी । )

वाग्बन्ध : । पुं॰ पर्णे । समये ॥ *

वाग्मी । पुं॰ सुराचार्ये ॥ त्रि॰ पटौ ॥ वक्तरि । विविधशास्त्राभ्यासाधिवासितप्रशस्तवाग्युक्ते ॥ वाग्मीसत्य

वाग्भवतीतिनिश्चितोर्थं ॥ प्रश स्तावागस्य । वाचोग्मिनि । गका दोच्चारण प्रत्ययेभाषायामित्यनुना सिकाभावाय । उत्तरसूत्रस्यबहुभा षिणीत्यस्यापिसम्बन्धात् । सम्यग्बहु भाषिणि॰वाग्मीतिदीध्यम् ॥

वाग्य । त्रि॰ निर्वेदे ॥ कल्पे ॥ वा ग्दरिद्रे ॥

वाग्यत । त्रि॰ यतवाचि । मौनिनि ॥ वाचियत . ॥

वाग्याम । त्रि॰ योद्धशक्त्यादिनावा चयच्छतितस्मिन ॥

वाग्वज्र . । पु॰ शापे ॥ वागेववज्रोहिं सकत्वात् ॥

वाग्वित् । त्रि॰ वैयाकरणे । वाक्यवो विदे ॥ वाच विन्दति॰वक्त॰वि वेकञ्चजानातिवा । सत्सूद्विषेत्या दिनाक्विप् ॥

वाग्विसर्गः । पुं॰ वाचः प्रयोगे ॥

वाङ्क । पुं॰ काचङ्गले । समुद्रे ॥

वाङ्मती । स्त्री॰ नदीविशेषे ॥ यथा । हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूतावाङ् मतीनदी । भागीरथ्याः शतगुण पवित्रतज्जलस्मृतम् ॥

वाङ्मयः । त्रि॰ वाक्यात्मके । यथा । व्यस्तजभ्रूगैर्लान्तैरेभिर्देशभिरच्च रैः । समस्तवाङ्मयव्याप्तं त्रैलो क्यमिवविष्णुना ॥

वाङ्मयी । स्त्री॰ परापश्यन्तीमध्यमा वैखरीरूपायांवाण्याम् । सरस्वत्या म ॥

वाङ्मात्रा । स्त्री॰ वाचोमात्रायाम् ॥ यथा । निमेषोन्वेषणा पुंसामङ् गुल्याछोटिकाथवा । गुर्वक्षरोच्चार णा वावाङ्मात्रेयस्मृताबुधैः ॥

वाङ्मुखम् । न॰ वचनोपक्रमे । उप न्यासे ॥ वाचोमुखमिवमुखम्॰उप क्रम ॥

वाक् । स्त्री॰ वाण्याम् । भारत्याम् । अर्थपरिज्ञानफलायाम् । सर्वस्यार्थ स्यप्रकाशिकायासंस्कारवाण्याम् ॥ येनार्थं सम्यगवबुध्यतेतेनैवसासम्य कृश्रुताभवति । प्रत्यक्षेणशब्दस्वरू पमुपलभमानोऽपिअर्थापरिज्ञानान्न पश्यतिनशृणोतीत्यनुभवात् ॥ शब्द सामान्ये ॥ वचने । वाक्ये ॥ तोच्चा नाद्युदावृत्ति . कर्मशान्तप्रतापव त् । नोपतापिमन . सोष्मवागेका वाग्मिन सत ॥ कण्ठताल्वादि स्थाने॰इन्द्रिये ॥ जिह्वामूलादिष्वष्ट सुस्थानेषुविपत्तेवाग्नेयेवर्णानामभि व्यञ्जकेकरणे ॥ अकारादिवर्णेषु ॥ वर्णाःस्वार्थसङ्केतपरिच्छिन्नाएतावन्तए वक्रमप्रयुक्ताद्भुत्येवतदभिव्यङ्ग्य शब्द . पदवागित्युच्यते ॥ वृत्तिभा ष्यम् ॥ वक्तीति॰उच्यते॰ऽनयावा । वचपरिभाषणे । क्विबवचीत्यादि नाक्विप्॰दीर्घोऽसम्प्रसारणञ्च ॥

वाच । पुं॰ मत्स्यविशेषे । वाचा॰ इ॰गौ॰दे॰भा॰ ॥

वाचयम । पुं॰ मुनौ । मौनव्रतिनि ॥ वाचयच्छति।यमउपरमे । वाचि यमोव्रतइतिखच् । वाचयमपुरन्दरौचेत्यमन्तत्वम् ॥

वाचक । पुं॰ शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचकः। शास्त्रेव्याकरणादौयेवाचक ' साधुशब्द ' सएवनिरुपपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावाचकत्वमिच्छन्तिवैयाकरणा । वर्णानांप्रत्येकवाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादितिकैयट ॥ कथके। पुराणादिपाठके॥सचब्राह्मणएवभवति । यथा । ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकंव्रजेदिति ॥ त्रि॰वक्तरि ॥ वक्ता ॥

वाचक्नवी । स्त्री॰ वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न॰ कथने ॥ पठने ॥ यथा । शुद्धेनानन्यचित्तेनपठितव्यप्रयत्नत । नकार्यासत्तमनसाकार्थंस्तोत्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न॰ प्रहेलिकायाम् ॥ वायने ।व्रतोद्यापने । यूपविशेषे ॥

वाचनिकः । त्रि॰ वचनप्राप्ते ॥ वचनादागतः । ठक् ॥

वाचनीय । त्रि॰ वाचयितुमर्हे ॥

वाचस्पति । पुं॰ जीवे । बृहस्पतौ ॥ वाच , समस्तविद्यारूपस्यवचसपति ' । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्विति सत्वविधानात् ०षष्ठ्याअलुक् ॥

वाचस्पतिवल्लभ ' । पुं॰ पुष्परागमणौ । पैखराज॰इतिभाषाप्र॰ ॥

वाचस्यत्यम् । न॰ वाग्मित्वे ॥ ब्राह्मणादित्वात्ष्यञ् ॥

वाचा । स्त्री॰ वाचि । वाण्याम् ॥ क्विबन्ताद्वाचो॰भागुरिमतेटाप ॥

वाचाट । त्रि॰ जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सितं बहुभाषते । आलजाटचौबहुभाषिणि । कुत्सितइतिवक्तव्यमितिवाक्शब्दादाटच् ॥ सुबहुभाषिण्यपिजल्पाकवाचाटवाचालावसन्ति । वाचाटोवाचालोजल्पाक ' सुबहुभाषीस्यादितिशब्दार्णवपर्यायैर्वोपालित ' । नित्यप्रगल्भवाचालामुपतिष्ठे सरस्वतीमितिमुरारिश्च ॥

वाचारम्भणम् । न॰ अनृतजडानात्मरूपे ॥ निरूप्यमाणेऽसत् सत्ताहीनमपियद्परैर्व्यवहारगोचरतयागम्यतेतदित्यर्थः ॥

वाचाल । त्रि॰ वाचाटे ॥ कुत्सितं बहुभाषते । वाचोबह्वोऽस्यसन्तिवा। आलजाटचौबहुभाषिणि । कुत्सित

इतिवक्तव्य मितिवाचयालच् ॥
वाचिकम् । न० सन्देशवाचि ॥
वाचोव्याहृतार्थाया मितिठक् ॥
वाचिकंतत्ववेद्यत्रदूतत्वे नाभिश सन मितिशब्दरत्नावली ॥ पुं० वाक्यारम्भे ॥ यथा । आलापश्चविलापश्च स लापश्चविलापकः । अनुलापो पलापश्चसन्देशश्चातिदेशिकः ॥ अपदेशोपदेशौचनिर्देशोव्यपदेशकः । कीर्त्तितावचनारम्भा द्वादशामीमनीषिभिरित्युज्ज्वलनीलमणिः ॥ त्रि०वाचा०वचसाकृते ॥ यथा । कायिकवाचिकवापिमानसवायथामति । आराधनेपरेशस्यभावशुद्धिर्विधीयते ॥
वाचिकहारकः । पुं० लेखे । वर्णदूते ॥
वाचोयुक्तिः । त्रि० वाग्मिनि ॥ वाचोवचस युक्तिः सयुक्तिकत्वम् । वाकदिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति षष्ठ्याअलुक् ॥
वाचोयुक्तिपटु । त्रि० सुवक्तरि । वाग्मिनि । वाचोयुक्तिषुपटुः ॥
वाच्यम् । न० प्रतिपादने । दूषणे ॥ त्रि०कुत्सिते । हीने ॥ वचनार्हे ॥ अभिधेये ॥ यस्माच्छब्दान्नियमतः प्रतीयते०तत्तस्यवाच्यम् । यथा । गामानयेत्यस्मिन्वाक्ये०गोशब्दस्यगोत्वम् ॥ उच्यते । वचपरिभाषणे । ण्यत् । वचोऽशब्दसंज्ञायामितिकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्चव्यङ्ग्यश्चेतित्रिधामतः । वाच्योर्थोभिधयाबोध्योलक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रःशब्दस्यशक्तयः ॥
वाच्यमान । त्रि० प्रस्तूयमाने ॥ वचेर्ण्यन्तात्कर्मणिलट् शानच् ॥
वाज । पुं० निस्वने । शब्दे ॥ पक्षे ॥ शरपक्षे ॥ वेगे ॥ मुनौ ॥ न० घृते । यज्ञे ॥ अन्ने ॥ वारिणि ॥ वजत्यनेन । वजगतौ । हलश्चेतिघञ् । निष्ठायांसेटत्वान्नकुत्वम् ॥ वाजयतिवा । ण्यन्तः । पचाद्यच् ॥
वाजपेय । पुं० न० अन्नसुराप्रधाने यागविशेषे ॥ वाजपेयप्रतिपादके ग्रन्थे ॥
वाजपेयिक । पुं० वाजपेययागविदितरि ॥ वाजपेयप्रतिपादकग्रन्थाध्येतरि ॥ वाजपेयमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥
वाजभोजी । पुं० वाजपेययज्ञे ॥
वाजश्रवा । पुं० अन्नदानादिनिमित्तयशोविशिष्टे । वाजमन्नंतद्दानादिनिमित्तश्रवोयशोयस्य ॥
वाजश्रवस । पुं० वाजश्रवसोपत्ये ॥
वाजसनेयः । पुं० जनमेजयकृतवदा

र्थग्रन्थे ॥ सतुवैशम्पायनशापाद्धिन्न : ॥

वाजसनेयी । पुं॰ यजुर्वेदिनि ॥

वाजिगन्धा । स्त्री॰ अश्वगन्धायाम् ॥

वाजिता । स्त्री॰ अश्वत्वे ॥ पक्षे ॥

वाजिदन्त ' । पुं॰ वासके ॥ वाजीदन्तोऽस्य॰ वाजिदन्ताभकेशरत्वात् ॥

वाजिदन्तक : । पुं॰ वेद्यमातरि । अटरूषे ॥ स्वार्थेक ।

वाजी । पु॰ अश्वे ॥ पक्षिणि । खगे ॥ वाणे ॥ वाजा पक्षा ' सन्त्यस्य । अतइनि : । पूर्वंह्यश्वा सपक्षाआसन् । तथाचशालिहोत्रम् । सपक्षावाजिन : पूर्वंसञ्चाताव्योमचारिण : गन्धर्वैश्चोयथाकामगच्छन्तिचसमन्ततइति ॥ अवश्यंवजति । वजगतौ । आवश्यकेतिणिनिर्वा ॥

वाजिनम् । न॰ आमिक्षाजले ॥ घनीभूत. पिण्डआमिक्षा॰ जलवाजिनमितिव्यवहारात् ॥

वाजिनी । स्त्री॰ अश्वगन्धायाम् ॥ अश्वायाम् । वडवायाम् ॥

वाजिपृष्ठ ' । पुं॰ अम्लानवृक्षे ॥

वाजिभक्ष ' । ) पुं॰ चणके ॥ वाजिवाजिभक्ष्य ' । ) नोभक्ष्य . ॥

वाजिभोजन ' । पुं॰ मुद्गे ॥

वाजिसान । पुं॰ पटोले ॥

वाजिवाहन । पु॰ गन्धर्वे ॥

वाजिशाला । स्त्री॰ मन्दुरायाम् । घुडशाल॰ कू॰ भा॰ ॥ वाजिनाशाला ॥

वाजीकर . । त्रि॰ वाजीकरणे ॥

वाजीकरणम् । न॰ वीर्यवर्धकद्रव्ये ॥ येनस्त्रीषुविषयेवाजीवनर ' सामर्थ्यंप्राप्नोति । अस्यलक्षणन्तु । यद्द्रव्यंपुरुषंकुर्यात्वाजिवत्सुरतक्षमम् । तद्वाजीकरमाख्यातमुनिभिर्भिषजांवरैरिति ॥ वाजीकरणतन्त्रंनाम॰ अदुष्टविशुद्धक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तंप्रहर्षजननार्थंचेतिसुश्रुत: ॥ विधिमाह । नरोवाजीकरान्योगान्सम्यक्शुद्धोनिरामय ' । सप्तत्यन्तंप्रकुर्वीतवर्षादूर्ध्वंतुषोडशात् ॥ नचवैषोडशादर्वाक्सप्तत्या परतोनच । आयुष्कामोनर : स्त्रीभि ' सयोगकर्तुमर्हति ॥

वाञ्छनम् । न॰ वाञ्छायाम् ॥

वाञ्छा । स्त्री॰ इच्छायाम् । काङ्क्षायाम् । स्पृहायाम् । वाञ्छनम् । वाञ्छिइच्छायाम् । गुरोश्च ' । टाप ॥ आत्मवृत्तिगुणविशेषइतिनैयायिका । साद्विविधा ॥ यथा । उपायविषयिणी॰ फलविषयिणीवा । फलंसुखंदु ' खा

भावश्च । तत्र॰ फलेच्छाप्रतिफल ज्ञानंकारणम् । उपायेच्छाप्रति॰ इष्टसाधनताज्ञानकारणमितिसि- द्धान्तमुक्तावली । ननाकपृष्ठनच सार्वभौमनपारमेष्ठ्यं नरसाधिपत्य म । नयोगसिद्धीरपुनर्भवंवावा ञ्छन्तितत्पादरज प्रपन्ना ॥

वाञ्छितम । त्रि॰ अभिलषिते ॥

वाञ्छिनी । स्त्री॰ वाञ्छनीयायाना र्याम् । लञ्जिकायाम् । कलतू लिकायाम ॥

वाट ' । पुं॰ पथि । मार्गे ॥ वृत्ति स्थाने । वृत्तौ । वाड॰ द्वि॰ भा॰ ॥ न॰ वरण्डे ॥ अङ्गे ॥ अन्नप्रभे दे ॥ पुष्पादिवाटिकायाम् ॥

वाटधन । पु॰ भूर्जकण्टकोष्ठस द्धीर्णजातौ ॥

वाटरम् । न॰ मधुविशेषे ॥ वटरे . जातम् । क्षुद्राभ्रमरवटरेत्यञ् ॥

वाटशृङ्खला । स्त्री॰ पथरोधकशृङ्ख लायाम् लभायाम् ॥

वाटिका । स्त्री॰ हिङ्गुपत्र्याम् ॥ कु ट्याम् ॥ वास्तुनि ॥ वाट्यालके ॥ गृहोद्याने ॥ वध्यते । वटवेष्टने । सञ्ज्ञायामितिण्वुल् । टाप् । प्र त्ययस्थादितीत्वम् ॥

वाटी । पु॰ वाट्याले ॥ त्रि॰वेष्टित- स्थले ॥

वाटी । स्त्री॰ कुट्याम् ॥ वास्तौ ॥ गृ- होद्याने । पूगपुष्पादिलतोपवने ॥ वाट्यालके ॥

वाटीदीर्घ । पुं॰ इत्कटतृणे ।

वाट्टकम् । न॰ भृष्टयवे ॥

वाट्यपुष्पी । स्त्री॰ वाट्यालके ॥

वाट्या । स्त्री॰ बलायाम् । वरिष्ठा- रा॰द्वि॰भा॰ ॥

वाट्याल । पु॰ वाट्यायाम् ॥

वाट्यालक ' । पुं॰ क्षुपविशेषे । वा ट्यायाम् ॥ वाटीमलति । अलभू षणादौ । कर्मण्यण् । स्वार्थेकन् । वलुत्वा ॥ वाट्याआलकोवा ॥

वाट्याली । स्त्री॰ वाट्यालके ॥

वाड । पु॰ वेष्टने ॥

वाडव । पु॰ ब्राह्मणे ॥ वडवानले ॥ न॰ स्त्रीणांकरणे ॥ घोटकौघे ॥ पुं॰ न॰ पाताले ॥ वडवायां भव ' । तत्रभवइत्यण् ॥ वडवा यांजात ' । तत्रजातइत्यण्वा ॥ वडवानांसमूह ' । खण्डिकादि भ्यश्चेत्यञ् ॥

वाडवाग्नि । पुं॰ वाडवाग्नौ ॥ वा डवश्चासावग्निश्च ॥

वाडवाग्र्य । पुं॰ ब्राह्मणश्रेष्ठे ॥

वाडवेय । पु॰ अश्विनीसुते ॥ वीजा श्वे ॥ वडवायाअपत्य ' । वडवा याअपत्यं॰इतिढक् ॥

वाडवेयौ । पु॰ द्विवचनान्त : नासत्य यो : ॥

बाडव्यम् । न० विप्रवृन्दे ॥ बाडवानासमूहः । ब्राह्मणमाणववाडवाद्यन् ॥ बाडवतायाम् ॥ बाडवस्यकर्म भावोवा । ब्राह्मणादित्वात् ष्यञ् ॥

बाड्शलि । पु० वाग्वादस्यापत्ये ॥ अपत्ये० अतइञ् । बाचोवादेडस्व बलभावश्चोत्तरपदस्ये ञि ॥

बाढम् न० दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि० अतिशयिनि ॥ श्राविष्टवी ॥ बाहते । बाहृप्रयत्ने० औहादि । गत्यर्थेतिक्तप्रत्यये० क्षुब्धस्वान्तेति निपातितम् ॥ उह्यतेस्मवा । वहप्रापणे । क्त । क्षुब्धस्वान्तेति साधुः ॥

बाढम् । अ० स्वीकारे । अङ्गीकृतौ ॥

बाण । पु० काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । कलम्बे । मार्गणे ॥ गोस्तने ॥ केवले ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यविशेषे । बलिज्येष्ठपुत्रे ॥ कविवरे ॥ मुञ्जे ॥ नीलझिण्ट्याम् ॥ ध्वनौ ॥ त्रि० ध्वनियुक्ते ॥ बाणयति० रोषमुत्पादयतिशत्रूनम् । वणशब्दे । स्वार्थेण्यन्त । पचाद्यच् ॥ वण्यते । कर्मणिघञ्वा ॥ वणनम् । भावेघञ्वा ॥ बाणः शब्दोऽस्त्यस्य । अर्शआद्यच्वा ॥

बाणगङ्गा । स्त्री० रावणबाणनिर्भिन्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणे भागे बाणेनाद्रिं विभिद्य वै । रावणेन प्रकटिता जलधारातिपुण्यदा ॥ बाणगङ्गेति विख्याता या स्नानाद्घहारिणी ॥ स्नात्वातु बाणगङ्गायां दृष्ट्वा बाणे-श्वरं विभुम् । गङ्गास्नानफलप्राप्य मोदते देववद्दिवि ॥

बाणदण्ड । पुं० वापदण्डे । वेमनि ॥

बाणपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

बाणपुरम् । न० देवीकोटे । शोणितपुरे ॥ बाणस्यासुरविशेषस्य पुरम् ॥

बाणभट्ट । पु० ग्रन्थकारविशेषे ॥

बाणयुद्धम् । न० बाणासुरेणसह श्रीकृष्णस्य युद्धे ॥ शरैर्युद्धे ॥

बाणलिङ्गम् । न० नर्मदानद्युद्भवशिवलिङ्गे ॥ यथा । नर्मदाजलमध्यस्थं बाणलिङ्गमिति स्मृतम् । बाणलिङ्गं स्वयंभूतं चन्द्रकान्ताद्वयस्थितम् ॥ चान्द्रायणशतस्यैकं शस्तोनैवेद्यभक्षणात् । ग्राह्यं ग्राह्यं विभा-गीयं बाणलिङ्गं न विद्यते ॥ तदर्पितं जलं बाह्यं ग्राह्यं प्रासादसंज्ञया । शिवनाभमयं लिङ्गं सदा पूज्यं महे-र्षिभिः ॥ यतश्च सर्वलिङ्गेभ्यस्त-द्विशिष्टं पूज्यतमं मतम् । चतुरङ्गुल

मुक्तायरस्य वेदिकयायुतम् ॥ उत्त म लिङ्गमाख्यातपञ्चसूत्रसुसाधित म् । तदर्धंमध्यम प्रोक्तं तदर्धं मवरस्मृतम् ॥ तस्मान्न्यूनपूजनीय मकदापिनतत्फलम् ॥ रुद्राच शि वलिङ्गस्यस्थूलस्थूल प्रशस्यते । शा लग्रामेनार्मदस्यसूक्ष्मसूक्ष्मोविशि ष्यते ॥

बाणवार । पु॰ भटादेर्घोलाकृतिस न्नाहे । वारबाणे । चोलके ॥

बाणवारक । पु॰ कञ्चुके॰ बाणस्य वारक॰ ॥

बाणसुता । स्त्री॰ ऊषायाम् ॥ बाण स्यसुता ॥

बाणहा । पु॰ विष्णौ ॥

बाणा । स्त्री॰ बाणमूले । पु॰ स्त्री॰ नीलझिण्टाम् ॥ बण्यते । बणश ब्दे । कर्मणिघञ् ॥

बाणाह्य । पुं॰ मुञ्जे ॥ बाणहूत्या ह्वयास्य ॥

बाणाश्रय । पुं॰ धनुषि ॥

बाणासनम् । न॰ धनुषि ॥

बाणि । स्त्री॰ वस्त्रादेर्वयनक्रियाया म् । व्यूतौ ॥ वयने ॥ वायदण्डे अम्बुदे । मूल्ये ॥ सरस्वत्याम् ॥ बाणनम् । बण॰ । चुरादि । अचइ॰ ॥

बाणिनी । स्त्री॰ मत्तंक्याम् ॥ मत्ता ङ्गनायाम् ॥ विदग्धवनितायाम् ॥

अवश्यवणाति । वण॰ । आवश्यके तियद्वादित्वाद्वाणिनि ॥ षष्टिस ङ्ककछन्द १६ प्रभेदे ॥ नजभजरै र्यदाभवतिवाणिनीगयुक्तै ॥ यथा । स्फुरतुममाननेऽयनतुवाणिनी- तिरस्य तवचरणप्रसादपरिपाकत: कवित्वम् । भवजलराशिपारकार णममुकुन्दसततमहस्तवे स्वर चितेस्तबानिनिश्चम् ॥

बाणी । स्त्री॰ सरस्वत्याम् । भारत्या म् ॥ बायक्रियायाम् । व्यूतौ ॥ वचने ॥ बण्यते । बण॰ । सर्वधा तुभ्यइन्निति॰ इन् । कृदिकारादक्तिनइतिङीष् ॥

वात: । पुं॰ पवने । श्वसने । वायौ ॥ निमित्तभेदेनास्यगुणायथा । अ जनस्यानिलस्त्वाखेदमूर्च्छाश्रमा पहः ॥ तालवृन्तभवोवातस्त्रिदो षशमनोमत: ॥ वंशव्यजनज. सो ष्णोरक्तपित्तप्रकोपन. । चामरोव स्त्रसम्भूतोमायूरोवैत्रजस्तथा ॥ ए तेदोषजितावाता स्निग्धोहृद्यास्तु पूजिता ॥ वाति । वागतिगन्ध नयो: । हसिसृधिणा वाऽमिदमि लूपूधूर्विभ्यस्तन्निति तन् ॥ स्वाति नक्षत्रे ॥ रोगविशेषे ॥ हेमन्तवर्षा शिशिरेषुवायो प्रकोपोभवति । यत. । मार्गेपौषेतथामाघे आषा ढे श्रावणेपिच । भाद्रेमासेविशि

स्याच्चे वीतीराज्ञाप्रकोर्त्तितद्गति ॥

वातकः। पुं० शीतले। अपराजि तायाम्। शणपर्ण्याम ॥ वातक रोति। डुकृञ०। अन्येभ्योपी तिड ॥

वातकर्म्म। न० मरुत्क्रियायाम। पर्द्दने ॥

वातकी। त्रि० वातरोगयुक्ते। वात रोगिणि ॥ वातोऽतिशयितोऽस्य। वातातीसाराभ्यांकुक्चेतीनि ॥

वातकुम्भ। पुं० गजकुम्भाधोभागे ॥

वातकेतुः। पुं० पांशौ। धूलौ ॥

वातकेलि। पुं० कलालापे। चर्च्चरी के ॥ विड्गदन्तक्षते ॥

वातखुडा। स्त्री० वात्यायाम् ॥ पि च्छिलस्फोटे ॥ वामायाम्॥ वात शोणिते ॥

वातगुल्म। पुं० वातूलि ववण्डर० वबूला० इतिभाषाप्रसिद्धे ॥

वातघ्नम्। न० तैले ॥ त्रि० वातना शकर्त्तरि ॥ वातहन्ति। हन०। अ मनुष्यकर्त्तृकेचेतिटक्॥

वातघ्नी। स्त्री० अश्वगन्धायाम्॥ शा लपर्ण्याम् ॥ शिमडीक्षुपे ॥

वातचक्रम्। न० आषाढ्यावायुविचारे ॥ तच्चोक्तंवाराहाभट्टोत्पलेन। य था। आषाढपौर्णमास्यामुपयदेशा नोनिलोभवेत्। अस्तं गच्छतितौ क्ष्णांशौसस्यसम्पत्तिरुत्तमा ॥ पूर्वं

पूर्वसमुद्रवीचिशिखरप्रस्फालनाघू र्णितश्चन्द्रार्कांशुसटाकलापकलि- तोवायुर्यदाकाशत। नैकान्तस्थि तनीलमेघपटलाशारदसवर्द्धितावा सन्तोत्कटसस्यमण्डिततलासर्वा महीशोभते॥ यद्यात्यग्नौवायुर्वह्निति गगनेखण्डिततनु . स्ववत्यस्मिन्नृयोगे भगवतिपतङ्गे प्रवसति। तदाग्नि ज्वालोद्दीप्ताज्वलनशिखरालिङ्गिततला स्त्रगीयाषाष्मोच्छ्रासैर्वमतिवसुधाभस्म निकरम् ॥ तालीपत्रलताविताना तरुभि शाखामृगान्नर्त्तयन्नृयोगेस्मि न्नूनबतिध्वनि सुपरुषोवायुर्यदाद्द क्षिण। तद्योगसमुत्थितस्तुगज वत्तालाङ्कग्रैर्दंष्ट्रिताः क्वीनाशा श्रुवमन्दवारिकणिकामुञ्चन्तिमेघा स्तदा ॥ सूक्ष्मैलालवलीलवङ्गनि चयान्व्याधूर्ण्ययन्सागरेभानोरस्त मयेसवस्त्वबिरतोवायुर्यदानैर्ऋतः। क्षुत्तृष्णाग्रतमानुषास्थिशकल प्रस्तारभारच्छदामत्याग्रेतवधूरिवो ग्रचपलाभूमिस्तदालक्ष्यते ॥ (*) यदारेणूत्पातैः प्रविचलसटाटोप चपलः प्रवात पश्चाच्चेद्दिनकर करापातसमये। तदासन्नोपिताम्र वरनिकरावद्दसमराक्षिति स्थान स्थानेष्वविरतवसामांसरुधिरा ॥ आषाढीपर्वकालेयदिकिरणपतेर स्तकालोप्रपत्तौ वायव्योवायवेग:

पवनघनवपु . पन्नगार्धानुकारी । जानीयाद्वारिधाराप्रमुदितमुदितां मुक्तमण्डूककण्ठोल्लसत्प्रोद्भासकण्ठि ह्रीमुखबहुलतया भाग्यसेनामिवोर्वीम् ॥ मेरुयस्तमरीचिमण्डलतसैग्रीष्मावसानेरवौ वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदाचोत्तरः । विद्युत्कान्तिसमस्तकान्तिकलनाम्मत्तास्तदातोयदाउन्मत्तादूवनष्टचन्द्रकिरणागांपूरयन्त्यम्बुभि ॥ इतिवातचक्रनामाध्याय । १७ ॥ इत्तायामाषाढ्याकृष्णचतुर्थ्यामजैकपादर्क्षे । यदिवर्षतिपर्जन्य . प्राबृट्शस्तानचेन्नतत ॥

वातचटक । पुं॰ वार्त्तिकीखगे । बटेर॰ इ॰ भा॰ ॥

वाततूलम् । न॰ मरुद्धूलौ । वृद्धसूत्रे । आकाशे॰ उड्डीयमानसूत्रे । ग्रीष्महासे ॥

वातधुडा । स्त्री॰ वातखुडा र्थे ॥

वातध्वज . । पुं॰ मेघे ॥

वातपित्तजशूलम् । न॰ शूलरोगविशेषे ॥ तस्यौषध यथा । मातुलुङ्गस्यनिर्यास गुडाढ्येनसमन्वितम । वातपित्तजशूलानिहन्तिवैपानयोगत ॥

वातपुत्र : । पुं॰ महाधूर्ते ॥ भीमसेने । हनूमति ॥

वातपोत । ) पुं॰ पलाशे ॥
वातपोतक . । )

वातपोथ । पुं॰ पलाशे । त्रि शुष्के । पर्णे । बीतु॰ इ॰ भा॰ प्र॰ वृत्त्वे ॥ वात पोथयति । पुथहिंसायाम् । कर्मण्यण् ॥

वातप्रमी । पुं॰ स्त्री॰ वातमृगे । वाताटहरिणे । नि शृङ्गमृगाकृतौ ॥ वात प्रमिमीते॰ वाताभिमुखधावनात् । माङ्माने । वातप्रमीत्यादिसूत्रेणमाङईप्रत्यय . कित् । खीत्वेकृदिकारादितिवाङीषिल्वे वे । अन्येतुकारग्रहणस्तत्परार्थत्वाद्दीर्घान्तान्ङीष्नेत्याहु भद्रिकारग्रहणं केवल ग्रहणमितिमुनित्रयेणपरिभाषितम् । अतएव॰ वातप्रमीश्रीलक्ष्मीतिपद्मे भ्रान्ता · सुसाधवद्वतिरचित · ॥ अश्वे ॥ नकुले ॥

वातफुल्लान्त्रम् । न॰ पुपफुसे

वातमज । पुं॰ वातप्रमी । वाताटहरिणे ॥ वातमजति । अजगतिक्षेपणयो । वातशुनीतिलवर्षैव्जधेटतुदजहातिभ्यउपसङ्ख्यानमितिखश् । अरुर्द्विषदितिमुम् ॥

वातमजा । स्त्री॰ वातमृग्याम् ॥

वातमण्डली । स्त्री॰ वायुसहतौ । वात्यायाम् ॥

वातमृग । पुं॰ वातमजी । वातप्रमी ॥ वातद्रव॰ वातस्यवामृग ॥

वातरक्तम् । न॰ रोगविशेषे ॥

वातरक्तघ्न । पु॰ कुक्कुरे । ग्रन्थिपर्णे ॥

वातरक्तारि । पु॰ पित्तघ्नाम् । गुडूच्याम् ॥

वातरङ्ग । पु॰ अश्वत्थे ॥

वातरथ । पु॰ मेघे ॥ वातोरथोऽस्य ॥ गन्धे ॥

वारशन । त्रि॰ दिग्वाससि । दिगम्बरे ॥

वातरायण : । पुं॰ उन्मत्ते ॥ निष्प्रयोजनपुरुषे ॥ काण्डे । सायके ॥ करपत्रे । क्रकचे ॥ कूटे ॥ शरसङ्क्रमे ॥ परसङ्क्रमे॰ इ॰ मेदिनी ॥ सरलद्रुमे ॥

वातरूष । पुं॰ वातूले ॥ शक्रधनुषि । उत्कटे । इ॰ मेदिनी ॥ उत्कोचे । इ॰ हेमचन्द्र ॥

वातरोग पुं॰ वायुव्याधौ । चलातङ्के । अनिलामये ॥

वातरोगी । त्रि॰ वातरोगयुक्ते । वातकिनि ॥ वातरोगोऽस्यास्ति । इत्यद्योपतापितीनि ॥

वातर्षि । पुं॰ काष्ठलौहोभयनिर्मितपात्रे । काष्ठलौह्याम् ॥

वातल : । पुं॰ चणके ॥ त्रि॰ वायुकारके ॥ वातलाति । ला॰ । क॰ ॥

वातलमण्डली । स्त्री॰ वात्यायाम् ॥

वातवैरी । पु॰ वातादे ॥ त्रि॰ वातहरे ॥ वातस्यवैरी ॥

वातव्याधि । पुं॰ वातरोगे । कृष्णामल्लिकायां । उद्भवे ॥

वातशीर्षम । न॰ वस्तौ ॥

वातशोणितम् । न॰ वातरक्तरोगे ॥

वातष्ठीला । स्त्री॰ वातव्याधिविशेषे ॥ यथा । नाभेरधस्तात्सञ्जात : सञ्चारीयदिवाचल । अष्ठीलावद्घनोग्रन्थिरूर्ध्वमायतमुन्नत । वातष्ठीलांविजानीयाद्वहिर्मार्गनिरोधिनीम् ॥

वातसह । त्रि॰ अत्यन्तवायुयुक्ते ॥ वातूले ॥

वातसारथि : । पु॰ अग्नौ ॥

वातस्कन्ध । पुं॰ आकाशस्यभागविशेषे ॥

वातहा । त्रि॰ वातघ्ने । वायुनाशकौषधौ ॥

वातहुडा । स्त्री॰ वातगुडायाँ ॥

वातह्न । पु॰ वायुप्रस्ताङ्गे ॥ वातह्न पारदारिक ॥

वाताट । पु॰ सूर्यघोटके । वातमृगे ॥

वाताण्ड । पु॰ मुष्करोगविशेषे ॥ तल्लक्षणं यथा । कुपथोदूषयेद्वायुर्मेघ्माणायस्यसंवृत. । तस्यमुष्कस्यलक्ष्येकोरोगोवाताण्डसञ्ज्ञक ॥

वातात्मज । पु॰ हनुमति ॥

वाताट:। पुं० वदामपादपे। मेचो
पमफले॥ वाताटस्था: सुस्निग्धो
वातघ्न: शुक्रकृद्गुरु:। वाताटम
ज्जामधुरोवृष्य: पित्तानिलापह:॥
स्निग्धोष्ण: कफकृन्नेष्टोरक्तपित्त
विकारिणाम्॥ वातमत्ति। अद०।
कर्मण्यण्॥

वाताध्वा। पुं० वातायने॥

वातापि:। पुं० इल्वलभ्रातर्यसुरवि
शेषे॥ वातमाप्नोति। आप्नृ०। फ
लेग्रहिरात्मम्भरिश्चेतिचकारादिन्॥

वातापिद्विट्। } वातापिसूदन। } वातापिहा। } पुं० अगस्त्यमुनौ॥

वाताम: पुं० वातादे॥

वातायन:। पुं० एकशफे। अश्वे।
हये॥ न० गवाक्षे॥ ईयतेऽनेन।
इण्०। करणेल्युट्। वातस्य अ
यनम्॥ त्रि० शीघ्रगे॥

वातायु:। पुं० मृगे। कुरङ्गे। हरि
णे॥ वातमयते। अय०। बाहुल
कादुण्॥

वातारि:। पुं० रक्तैरण्डे॥ सयथा।
वातारिबीजं प्रस्थञ्च चतुष्पक्कं निस्तु
षीकृतम्। क्षीरद्रोणार्द्धसंयुक्तं
भिषक् मन्दाग्निनापचेत्॥ घृत
प्रस्थार्द्धसंयुक्तं खण्डप्रस्थद्वयं क्षिपेत्।
त्र्यूषणञ्चचतुर्जातग्रन्थिकवह्निचि
त्रकम्॥ छवासिसौमटीविश्व दी
प्यमीरीनिशायुगम्। अश्वगन्धा
बलपाठाह्वपुषावेरपौष्करम्॥ श्व
दंष्ट्रारास्वधादारुवेल्लजबालकबरी।
एतानिपिचुमात्राणिचूर्णयित्वावि
नि. क्षिपेत्॥ वातव्याधिसशूलञ्च
राजयक्ष्मातथोदरम्। आनाहव
र्ध्मगुल्मञ्चआमवातकटिग्रहम्॥ ज
रुग्रह तथाहिक्काश्वासकासहृदाम
यान्। अर्दितार्द्धपविश्वाचीगृध्र
सीमपतन्त्रकम्॥ पक्षाघातपाण्डु
वातभक्तं दण्डापतानकम्। मन्या
स्तम्भहनुस्तम्भ नाशयेदपिवेगतह्नु
ति॥ पुत्रदात्रीलतायाम्॥ यवा
न्याम्॥ शेफालिकायाम्॥ कु
क्ष्याम्॥ भार्ग्याम्॥ विडङ्गे॥ शू
रणे॥ भल्लातके॥ जतुकायाम्॥
शतमूल्याम्॥

वाताली। स्त्री० वातसंहतौ। वा
त्यायाम्॥

वाताश्व। पुं० कुलीनाश्वे। हयोत्त
मे। जात्ये। आजानेये॥

वातासह। त्रि० वातुले॥

वाति। पुं० अनिले। वायौ॥ सू
र्ये॥ सोमे॥ वाति। वागतिगन्ध
नयो:। क्तिच्। वातेर्निदिश्य
तिर्वा॥

वातिक:। पुं० वायुजव्याधौ॥ न०
वातस्यशमने॥ वातस्यकोपने॥
वातपित्तश्लेष्म: शमनकोपनयो:

रूपसङ्ख्यानमितिठञ् ॥
वातिग. । पुं० भण्टाक्याम् ॥ त्रि० धातुवादिनि ॥
वातिगम । पुं० वार्त्ताकौ ॥
वातिङ्गणः । पुं० वार्त्ताकौ । भव्य० भटा०द्रू०च०प्र०फलशाके ॥
वातीयम् । न० काञ्जिके ॥
वातुलः । पुं० वात्यायाम् ॥ त्रि० वायुरोगिणि ॥ वातसुखसेवनयोर दन्त' । वाहुलकादुलच् ॥ उ न्मत्ते ॥
वातुलिः । स्त्री० सरुतूलिकायाम् । वादुड०द्रू०भा० ॥
वातूल. । पुं० वात्यायाम् ॥ त्रि० वातासहे । मारुतासहे ॥ वातानांस मूह' । वातनसहतेवा । वातात् समूहेचेत्यूलः । चात्तदसहने ॥ यद्वा । वाता: सन्त्यस्मिन्नृषा । सिध्मादित्वाल्लच् । वातदन्तबलल लाटोनामूङ्चेत्यूङ् ॥ उन्मत्ते ॥
वाता । पुं० वाते ।' वाति । वागति गन्धनयोः ॥ तृच ॥
वातोना । स्त्री० गोजिह्वाक्षुपे ॥ त्रि० वायुहीने ॥
वातोर्म्मी । स्त्री० त्रिष्टुप्छन्दः ११ प्रभेदे ॥ तल्लक्षणादियथा । वातो र्म्मीयंगदितांभौतगोगः । यथा ॥ ध्यातामूर्त्तिः क्षणमप्यच्युतस्यश्रे णीनांत्वागदिताङ्कलयापि । ससा रेऽस्मिन्दुरितंहन्तिपुंसांवातोर्म्मी पोतमिवाम्भोधिमध्ये ॥
वात्या । स्त्री० वातसमूहे । वाताल्या म् ॥ वातानांसमूह. । पाशादिभ्यो यः ॥
वात्सकम् । न० वत्सानांवृन्दे । वत्सा नांगणे ॥ वत्सानांसमूह. । गोत्रो क्षोष्ट्रेतिवुञ् ॥
वात्सल्यः । पुं० रसविशेषे ॥ न०प्रेम् णि ॥ त्रि०तद्वति ॥
वात्सल्यता । स्त्री० कृपालुत्वे ॥
वात्सीपुत्रः । पुं० नापिते ॥
वात्स्यः । पुं० मुनिविशेषे ॥ वत्सस्य गोत्रापत्यम् । गर्गादिभ्योयञ् । ब हुत्वे०वत्साः । यञञोश्चेतिलु क् ॥
वात्स्यायन' । पुं० शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमितिकल्प नापरेत्रृषिविशेषे । मल्लनागे । प क्षिले । स्वामिनि ॥
वाद. । पुं० यथार्थबोधेच्छोर्वाक्ये ॥ अरिविजिगीषुरहितयोः कथायाम् ॥ व्य क्तवाक्ये ॥ भगवद्विभूतिविशेषे ॥ यथोक्तंभगवद्गीतायांवादः प्रवद तामहमिति । अस्यार्थः । प्रवद तावादिनांसम्बन्धिन्योवादजल्पवि तण्डाख्यास्तिस्र' कथाः प्रसिद्ध धाः० तासामध्येवादोऽहम । यत्र द्वाभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्षः

स्थापयति॰ परपक्षञ्छलजातिनिग्रह स्थानैर्दूषयति स जल्पो नाम। यस्त्वेकः स्वपक्षं स्थापयति॰ अन्यस्तु॰ छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति॰ न तु स्वपक्षं स्थापयति॰ सा वितण्डा नाम कथा तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्ति परीक्षामात्रफले॰ वादस्तु वीतराग योः शिष्याचार्य्ययोरन्ययोर्वा तत्त्व निरूपणफलः। अतोऽसौ श्रेष्ठत्वा न्मद्विभूतिरित्यर्थः॥ इति श्रीधर स्वामिनः॥ अस्य लक्षणं गौतमो क्तं यथा। प्रमाणतर्कसाधनोपाल म्भः सिद्धान्ताविरुद्धः॥ १। ४१॥ अत्र च॰ वाद इति लक्ष्यनि र्देशः॰ पक्षप्रतिपक्षौ विप्रतिपत्ति कोटी॰ तयोः परिग्रहस्तत्साधनो द्देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भः तावन्मात्रञ्च कथान्तरसाधारणम तआह॰ प्रमाणेत्यादि। प्रमाण तर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनो पालम्भौ यत्र स तथा। उभयत्रापि प्रमाणादिसद्भावकोटिद्वयस्यापि सि द्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामि ति। ज्ञानमनाहार्य्यं विवक्षितम्॰ उपालम्भो दूषणम्॰ जल्पादौ तु प्र माणाभासत्वादिना ज्ञाताभ्यामपि साधनोपालम्भौ भवत इति तद्वारणं तथा॰ इतरथा तु तद्धेतोरेव दुष्टत्व म्॰ इत्यत्र च प्रमाणाभासत्वप्रका रकज्ञानविषयकरणकसाधनोपाल म्भयोग्यान्यत्वे सतीत्यर्थः। तेन ताद्दशजल्पविशेषेणातिव्याप्तिः। तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धा न्तेत्यादिविशेषणद्वयम् अन्ये तु तदपि लक्षणघटकमेव॰ तदर्थश्च॰ तावन्मा त्रनिग्रहस्थानयोग्यत्वम्॰ तावद तिरिक्तनिग्रहस्थानोपन्यासायोग्य त्वं वा॰ निग्रहस्थानप्रतिज्ञाहान्या दीनामेकं धृत्वा॰ तदुपन्यासायोग्य त्वमिति निष्कर्षः। तेनोक्तजल्प विशेषवारणमित्याहुः। सिद्धा न्ताविरुद्ध इत्यनेनापसिद्धान्तो द्भावनम्॰ पञ्चावयवोपपन्न इत्य नेन न्यूनाधिकोद्भावने। अवयवा॰ भासस्य हेत्वाभासत्वात् सिद्धान्तेनैव उद्भावनम्॰ प्रमाणेत्यनेन च प्रमाणाभासत्वेन हे त्वाभासानां तर्काभासस्य चोपन्यासो नियम्यते तथा चात्र हेत्वाभासन्यूनाधि कापसिद्धान्तरूपनिग्रहस्थानचतुष्ट योद्भावनमिति वदन्ति। वस्तुतस्तु वाद स्य वीतरागकथात्वेन॰ तत्त्वनिर्णयस्यो द्देश्यतया पुरुषदोषस्याविज्ञातार्थादे रिव न्यूनाधिकयोरपि नोद्भावनमुचि तम्। अत एव पञ्चावयवावश्यकत्व मपि भाष्यकारेणानुमेने। हेत्वाभा साद्युद्भावनेनापि च तदेव कथाविच्छे दाय दिहेत्वन्तरेणापि साधयितुं नश

क्यते॰ इतरथातु तद्दर्षे तोरेव दुष्टत्वम् । इत्यञ्चपञ्चावयवोपपन्न इति प्रायिकत्वाभिप्रायेणेति तत्त्वम् । वादाधिकारिणस्तु तत्त्वबुभुत्सवः॰ प्रकृतोक्तिकाः॰ अविप्रलम्भका .॰ यथाकालस्फूर्त्तिकाः ॰ अनाक्षेपकाः युक्तिसिद्धप्रत्येतार · । अनुविधेयस्थेय · सभ्य पुरुषवतीजनतासभा अनुविधेयो राजादि · स्थेयान्मध्य · साचवादेनावश्यकोवीतरागकथात्वादिति ॥ १ । ४१ ॥ अपिच । वादफलस्य तत्त्वनिर्णयस्यदुर्दुरूढवादिनिराकरणेन॰ संरक्षणार्थं विजगीषुकथे जल्पवितण्डे॰ जयपराजयमात्रपर्य्यन्ते । तदुक्तम् । तत्त्वाध्यवसाय संरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवदिति ॥ छलजातिनिग्रहस्थानै . परपक्षोदूष्यते॰ इति जल्पे वितण्डा च · यात्र्यसमानम् । तत्र वितण्डायामेकेन स्वपक्षस्थाप्यतएव॰ अन्येनचसदूष्यतएव । जल्पेतु॰ उभाभ्यामपि स्वपक्ष स्थाप्यते • उभाभ्यामपिपरपक्षोदूष्यतइतिविशेषः । तदुक्तम् । यथोक्तोपपन्नश्छलजातिनिग्रह स्थानसाधनोपालम्भोजल्पः ॥ १ । ४२ ॥ सप्रतिपक्षस्थापनाहीनोवितण्डेति । १ ॥ ४३ ।



अतोवितण्डादेय शरीरत्वाज्जल्पोनामसैककथा॰ किन्तुशक्त्यतिशयज्ञानार्थं समयबन्धमात्रेणप्रवर्त्तत इतिखण्डनकाराः ॥ तत्त्वाध्यवसायपर्यवसायित्वेनतुवादस्य श्रेष्ठत्वमेव ॥ सङ्घातादिवादेषु ॥ तेचोक्ताः रामगीतोत्सवेयथा । सङ्घातवादोलौकायतिकानांनास्तिकानाम् । अनादीच्छिकेलोकेनेश्वरादिरपेक्ष्यते । प्रत्यक्षसङ्घातभेदशक्तिभिः सर्वं सिद्धित ॥ यथौषधानां सङ्घाते मादोरागोरसायनम् । तथैव भूतसङ्घाते चैतन्यकान्यजीवता ॥ १ ॥ यथाचारम्भवादस्तार्किकाणामीमांसकानाञ्च । आत्माकाशाणुसुखतः कारणं पूर्वमिष्यते । कुलालादिवदण्डन्तुघटवज्जन्मनाशभाक् ॥ पृथिव्यम्भोग्निवायूनाकर्मसंयोजिताणव · । दाणुकादिक्रमेणाण्डमारभन्तइदमहत् ॥ २ ॥ यथाचपरिणामवाद · साङ्ख्यपातञ्जलपाशुपतानाम् । गुणसाम्यप्रधान स्याद्गुणाः सत्त्वरजस्तम. । सुखदुःखमोहरूप इत्यतेहिस्फुटजगत् ॥ प्रधानस्यान्महान्सोऽहङ्कारोऽसौत्रिधात्मना । जायतेपञ्चतन्मात्राण्यक्षाण्येकादशापिवत् । तन्मात्राणितुभूतानि जायन्तेतत्रसङ्ख्यया । चतुर्विंशति

वाद :

रेतानितथात्मापञ्चविंशति : ॥ स
देवकार्यमुत्पत्ते : पूर्वंकारकरूप
कम् । आविर्भावतिरोभावौजन्म
नाशावुदीरितौ ॥ ३ ॥ यथाचजी
वोत्पत्तिवाद : पाञ्चरात्राणाम् ।
ब्रह्मणोवासुदेवाख्याज्जीव : सङ्कर्ष
णाभिध : । जायतेचमनस्तस्मात्प्र
द्युम्नाख्यतत : पुन : ॥ अहङ्कारोऽ
निरुद्धाख्यस्तत्कारोविश्वरूपका ।
वासुदेवाराधनार्थंजायतेबन्धमोक्ष
णम ॥ ४ ॥ यथाचक्षणिकविज्ञा
नातिरिक्तभावाभाववादोवौद्धाना
म् । विज्ञानबुद्धिरितिनार्थान्तर
म् । यदन्तर्ज्ञेयतत्त्व तद्बहिर्वद्व
भासते । स्वप्नवज्जागरेसुप्तावभाव.
स्फुटएवहि ॥ ५ ॥ यथाचवाह्या
स्तित्ववादोवौद्धैकदेशिनाम् । समु
दायोऽणुसम्भूतोवाह्योभूम्यापगादि
क. । आन्तर : स्कन्धजश्चित्तचै
त्यरूपश्चतौजगत् ॥ स्वदम्बुवह्निवा
यूनांखरस्निग्धोष्णचञ्चला . । चतु
र्द्धाणव : पञ्चस्कन्धारूपादिभेद
त . ॥ रूप : शब्दादयस्तेषांव्यक्ति
र्विज्ञानमुच्यते । वेदनासुखदु : खे
स्त : संज्ञाडित्यादिनामयत् ॥ स
स्कारोवासनाचैवमुक्तसङ्घतया
त्मकम् । जगत्प्रत्यक्षत . सिद्ध
क्षिमन्यपरिकल्पनै : ॥ ६ ॥ यथा
चसाप्तभङ्गवादआर्हतानाम् । जी

वाद :

वाजीवात्मकंविश्वचेतन : स्वशरी
रवत् । परिणामावयववानऽजीव :
षड्विध : स्मृत : ॥ मत्तोधर्मादिरे
क : स्यात्पञ्चधाचास्तवादिक . ।
आस्रव : सवरोनिर्जरोबन्धोमोक्ष
एवच ॥ इन्द्रियाणिविवेकादि : की
र्तितस्त्वादिभिस्तप : । जन्मान्यूर्द्ध्व
गतिश्चेतिपञ्चानामर्थउच्यते ॥ स्या
दस्तीत्यादिनासप्तभङ्गीन्यायेनवा
दिन : । सप्तैवक्रमशोऽपास्यस्वमत
साधयेत्सुधी : ॥ सत्त्वासत्त्वोभयाऽ
वाच्यवादिन : स्युश्चतुर्विधा : । द्वि
धाऽऽद्याश्चावाच्यत्रिकावादिन . स
प्तकीर्तिता . ॥ ७ ॥ एतेषांवादा
नांप्रमाणानपेक्षत्वाच्छ्रमात्रमूलत्वा
द्वक्ष्यमाणप्रमाणबाधितत्वाच्चनसाम
ञ्जस्यम् । तथाहि । तावत्सङ्घा
तवादोनयुक्तिसह : । घटोपलब्धि
वत्सङ्घोपलब्धिर्भवतेस्फुटम् ।
साजीवोममदेहोयमितिभेदानुभूति
त . ॥ योगिनश्चाथमृतादेर्देहान्तर
गति : स्फुटम् । आत्माभावेकृत
ध्वंसोह्यकृताभ्यागमस्तथा ॥ क्षणि
कात्मनोर्थजन्मसम्बन्धायप्रतीक्षि
णा । सहकारिप्रतीक्षायांक्षणिक
त्वं पराहतम् ॥ ईशानुमाजन्तुपुष्प
दन्त . समर्थयामास । यज्जन्मानो
लोका : किमवयववन्तोधिजलतास्
धिष्ठातारंकिमवधिभिरनादृत्यभ

वति । अनौश्रीवाक्कुर्याद्युवनजनर्मि
क्ष : परिक्रीयवेमन्दात्सुप्रथमरव
रस श्रीरतद्भमे ॥ इति । यतोवाइमा
निभूतानिजायन्ते येनजातानिजीव
न्तियत्प्रयन्त्यभिसंविशन्तितद्ब्रह्म
त्यादिश्रुतयस्तु खतन्त्रमेवप्रमाणम्
॥ १ ॥ आरम्भवादोपिनयुक्तिस
ह : । यथा । अणुस योजकं कर्म
निर्निमित्त यदाभवेत् प्रलयस्तर्हि
नभवेत्सनिमित्तंकथ वद ॥ शरी
राभावतस्तत्रप्रयत्नादेरसम्भवात् ।
नित्यत्वादीशयत्नोपिकादाचित्कोऽ
हितोनहि ॥ जीवात्मसमवेतत्वाद
दृष्ट नाणुष्वक्कचित् । एवमादिवि
चारेणदुष्टाणुपरिकल्पना ॥ कुला
लवत्तटस्थस्ते दीश्वरस्तर्हिमत्सम:
। शरीरोपस्करावाङ्छीविषमोनि
र्घृणस्तथा ॥ ईशेवेद : प्रमाणञ्चेत्त्वा
न्यातर्हितटस्थता ॥ यत:स्फुट निरा
बाधंमायित्वतत्रवर्ण्यते ॥ अखण्डस
च्चिदानन्दोजगद्रूपेणभासते । मा
यायांदुर्घटं नास्तिकिञ्चितत्तद्रूप
णाहिसा ॥ परमाण्वादिकल्पना
विरोधिन्य : श्रुतय : । एकोऽहं
बहुस्यांप्रजायेयेति । एतस्मादात्म
नथाकाश सम्भूत : आकाशाद्वा
युर्वायोरग्निरग्नेराप : अद्भ्य : पृ
थिवीति । मायांतुप्रकृतिं विद्या
न्मायिनन्तुमहेश्वरमिति । इन्द्रो



मायाभि : पुरुरूपईयते । इत्थं च
मायाचसङ्ख्याताएव । एवंस्मृ
तीतिहासवाक्यान्यपि । २ ॥ परि
णामवादोपिनयुक्तिसह : । यथा ।
विचित्रजगतोहेतुर्नप्रधानमचेतन
म् । चेतनोपिहिनिर्ब्रह्मोनेसहाय
त्वमर्हति ॥ गुणकार्यंसुखादीना
मान्तरत्वस्यनिश्चयात् । घटादावन्व
येनास्तिकथमव्यक्तकार्यता ॥ किं
च्चापरिणतेतस्मिन्कार्यंत्यपि
नयुज्यते । परिणामेतन्नाश :
कार्यस्यापिनिराश्रयात् ॥ नचप्र
धानकल्पनायाम् । अजामेकांलो
हितशुक्लकृष्णामित्यादिश्रुति प्र
माणम् । तस्या : यदग्नेरोहितं
रूप तेजसस्तद्रूप यच्छुक्ल तदपांय
त्कृष्णं तदन्नस्येतिच्छान्दोग्योक्तवे
जोबन्नात्मकप्रकृतिपरत्वेनभाष्यपर
त्वेनापिसूरिभिर्व्याख्यातत्वात् । ए
वमन्यत्स्वयसमाधेयम् । ३ ॥ जीवो
त्पत्तिस्तनयुक्तिसहा । यथा । जीवोत्प
त्तिर्नयुक्तेतिजीवस्यानादिताश्रुता ।
विनाशिकृतनाश : स्यादकृताभ्या
गमस्तथा ॥ ४ ॥ विज्ञानवादोपि
नयुक्तिसह : । यथा । जागरेबाध्य
तेस्वप्नोजागरोनैवबाध्यते । तवत
द्बाधकाभावाद्बाह्यमस्त्युपलम्भित
॥ बहिर्वदितितेप्युक्तिर्वाह्यमर्थं
प्रसाधयेत् । एव नयुज्यतेबुद्धे

बाद :

अंगदाकारतातव ॥ स्थिरचेतन
राशित्वात् स्वयञ् चचयिकसूत :
। स्र् त्यादिव्यवहारस्यलोपस्ततव
दारुण : ॥ ममतु॰नागरादिममा
धिष्ठानमखाखण्डबोधानन्दरूपब्रह्म
ह्मण साचात्कारोबाधकोस्ति ॥
५ ॥ बाह्यास्तित्ववादो ऽ पिनयुक्ति
सह . । यथा । स्थिरचेतनराशित्वा
त् स्वयञ् चाचेतनत्वत । मस्त
ध्यामामण् नांबासमुदायोऽत्रयुज्य
ते ॥ ६ ॥ सप्तपदार्थोवादसनयु
क्तिसह . । यथा । एकस्मिन् सदस
त्वादिविरुद्धप्रतिपादनात् ।
अपन्याय : सप्तभङ्गीमचजीवस्यसा
धता ॥ अस्यार्थ : । स्यादस्ति १
। स्यान्नास्ति २ । स्यादस्तिचनास्ति
च ३ । स्यादवक्तव्य : ४ । स्याद
स्तिचाऽवक्तव्य : ५ । स्यान्नास्तिचा
वक्तव्य ६ । स्यादस्तिचनास्तिचा
वक्तव्यश्चेति ७ । सप्तभङ्गीवाक्यानि
। तेषुचस्याच्छब्द ' ईषदर्थवाचो
निपात : । तदर्थ चपूर्वपचस्योक्तो
क्तानांसद्भावासद्भाव्,भयमाव्यनिर्व
चनीयवादयसदनिर्वचनीयवादा,
भयानिर्वचनीयवादिनांमतानि ।
क्रमेणाभिहितानि । तेचवादिन :
समागत्याहन्त प्रतिक्षिन् त्वन्मते
मोचोस्तीत्यादिस्वस्वमत क्रमेणपृ
च्छन्ति । तचाहन् तान् प्रतिप्रत्ये

बाद .

क क्रमेणतान्येववाक्यानोषत् तन्म
तान्युपगमनार्थवानिपृथक् पृथगे
वोत्तरत्वेनब्रूते । तावतासर्वे
वादिनोनिर्विण्णा : ' सन्तोनो
त्तर प्रतिपद्यन्तेएवंविधस्तेषामस्त
मङ्गीरूपोय न्यायोऽपन्याय एव॰
अपकृष्टोन्यायोन्यायाभ्यास एवे
त्यर्थ . । कुतइत्यतआह ।
एकस्मिन्निति । एकस्य जीवप
दार्थस्यसत्त्वादिनप्रतिसद्रूपत्वम्॰
असत्त्वादिनं प्रत्यसद्रूपत्वञ्चेत्येवमा
दिविरुद्धधर्म्मप्रतिपादकत्त्वात् ।
नचजीवस्यसावयवत्त्व युज्यते॰ श
रीरादिवदनित्यत्वप्रसङ्गात् । तद
नित्यत्वे मोच . कस्यपुरुषार्थ . स्या
त् । तस्मान्न्यायाभासेनसप्तभङ्ग्याख्य
नजीवादिपदार्थानानसिद्धिरिति
॥ ततश्चपारिशेष्याज्जगतोमायाम
यत्वसिद्धि ' । तदुक्तम् । ततोनि
रवद्यानन्दे विवर्त्तोजगदिष्यताम् ।
अवस्थान्तरभानन्तुविवर्त्तोरज्जुसर्प
वत् ॥ मायाशक्ति . कल्पिकास्या
दिन्द्रजालिकशक्तिवत् । शक्ति श
क्तात्पृथङ् नास्तितद्दृष्टे नचाभि-
दा ॥ प्रतिबन्धस्यादृष्टत्वाच्छक्त्यभावे
तुकस्यस ' । शक्ति कार्यानुमेयाया
अनिर्वाच्यत्वमिष्यताम् ॥ इति ॥
वदनम् । वदव्यक्तायाम्वाचि ।
च्च ॥

बादकः । त्रि॰ वाद्यकरे ॥ वक्तरि ॥
बादनम् । न॰ वाद्ये ॥ शिवागारेभ्स
ल्लकत्सूर्यागारेचशङ्खकम् । दु
र्गागारेवंशिवाद्यमधुरोंश्चनवादयेत्।
बादफलम् । न॰ तत्त्वनिर्णये ॥
बादरम् । न॰ कृष्णालाबीजे । काका
चिञ्च्याबीजे ॥ दक्षिणावर्त्तश
ङ्खे ॥ वीरे ॥ काकचिञ्चायाम्
॥ भारत्याम् ॥ क्रमिजे ॥ जले ॥
कार्पासीफले ॥ वदरायाविकार:
फलम् । अवयवेचेत्यण् । तस्यफ
लेलुक् । वदरस्यविकार: । तस्य
विकारइत्यण् ॥ त्रि॰ कार्पासी
निर्मितवस्त्रादौ ॥
बादरङ्ग: । पुं॰ अश्वत्थवृक्षे ॥
बादरा । स्त्री॰ कार्पास्याम् ॥
बादरायण: । पुं॰ व्यासदेवे ॥
बादरायणि: । पुं॰ शुकदेवे । व्यास
तनये । बादरायणस्यापत्यम् । अ
तइञ् ॥ व्यासदेवे ॥
बादलम् । न॰ मधुयष्टिकायाम् ॥
बादवादी । पुं॰ जिनभेदे। आर्हते ॥
बादवित् । त्रि॰ धातुवादीमब्धवाद
र्थं स्यादयोवादानस्तुभूतानवन्नीति
वादवि ॥ कल्पनेवैषा॰ ताम्रादि
मावेष्विलैनष्टे स्वर्णकादिस्वभावा
सम्भावात् । मन्त्रवादेपि॰ कालद
ष्टोनजीवति । अकालदष्ट: स्वय
मेवोत्थास्यतीत्यभ्युपगमात्॰ व्या
मोहमात्रमेव ॥ वादज्ञे ॥
बादान्य । त्रि॰ बहुदातरि । बहु
प्रदे ॥
बादमम् । न॰ वादामे । वातादे ॥
बादाल: । पुं॰ मत्स्यप्रभेदे । सहस्र
दंष्ट्रे । बोयालि॰ इ॰ गौ॰ दे॰
भाषाप्रसिद्धे ॥
बादि: । त्रि॰ विदुषि ॥ वक्तरि ॥ वा
दयति । वद॰ । वसिवपियजिरा
जिव्रजिसदिहनिवाशिवादिवारिभ्य
इञ् । सूत्रेवादीतिस्यन्तोनिर्दि
ष्ट: । बाहुलकादण्यन्तादपि । त
थाचभूवादिसूत्रे॰ वदन्तीतिवाद
योवाचकाइतिन्यासकारादय: ॥
बादित्रम् । न॰ वातोद्ये । वाद्ये ॥
वाद्यते॰ अन्यते । वदेर्ण्यन्तात् ।
भूवदिगृभ्योणित्रन्॰ इति॰ णि
त्रन् ॥
बादी । त्रि॰ वक्तरि । वदनशीले ॥
अर्थिनि । विवादकर्त्तरि । पुका
ह॰ मादू॰ इ॰ मा॰ प्र॰ पूर्व्वप
क्षवर्थरि । वादोऽस्यास्ति। इनि ॥
बादिरम् । न॰ वदरीसदृशसूक्ष्मफल
द्रव्ये ॥
बादिराट् । पुं॰ पूर्वजिने । मञ्जु
घोषे ॥
बादिराज . । त्रि॰ वादिश्रेष्ठे ॥ वा
दिनांराजा । टच् ॥ पुं॰ मञ्जु
घोषे ॥

वाद्यम्

वादित्र: । त्रि॰ साधुवादिनि ॥
वाद्यम् । न॰ वादनीये । वादित्रे । आतोद्ये ॥ वाद्यते॰ध्वन्यते । वदेर्ण्यन्तात् यत् ॥ तच्चतुर्विधं यथा । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥ अथवा द्वानि । तालेनराजतेगीतं ताले वादित्रसम्भव । गरीयस्तेनवादित्रं तच्चतुर्विधमुच्यते ॥ ततं सुषिरमानद्धं घनमित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं सुषिरन्तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम् ॥ तत्र ततं यथा । अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी । विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ॥ हस्तिका कुब्जिका कूर्मी शारङ्गी परिवादिनी । त्रिशवी शतचन्द्री च नकुलौष्ठी च ढक्कवी ॥ औडुम्बरी पिनाकी च निःशङ्कः शुष्कलस्तथा । गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः ॥ कपिलासो मधुस्यन्दी घोषा स्यादिति तद्भवेत् ॥ अलावणी यथा । कनिष्ठिकापरिध्यक्षेमध्यच्छिद्रेण संयुतः । हस्तयष्टिमितो दण्डः खादिरो वेणवोऽथवा ॥ अथ . करभबानूर्वच्छायावच्छाभिशोभितः । न वाङ्गुलादधश्छिद्रोपरि चन्द्रार्द्धसन्निभाम् ॥ निवेश्य तुम्बिकां भद्रालाबु

वाद्यम्

खण्डं निवेशयेत् । द्वादशाङ्गुलविस्तारदृढपक्वमनोहरम् ॥ तुम्बिका वेधमध्येन दण्डच्छिद्रे तु निर्मिताम् । अलाबुमध्यगां डोरीं कृत्वा तस्या न्तु काष्ठिकाम् ॥ तथा सवेष्ट्य तन्मध्ये काष्ठिका भ्रामयेत्ततः । यथा स्यान्निश्चलालाबुर्वंश्यश्चकरभोपरि ॥ पश्चाङ्गुलिपुसम्बध्यालाबुस्तस्याश्चबध्येत् । कौशान्तनिर्मितापट्टसूत्रकृताथवा ॥ समासूक्ष्मादृढा तवतवदेयाविचक्षणैः । एतल्लक्षण संयोग्यान्यालावणी प्रकीर्त्तिता ॥ विन्दुनानससमुपेत तुम्बनि' चिप्य वक्षसि । मध्यमानामिकाभ्याञ्च वाद्यादक्षिणपाणिना ॥ तारेमन्द्रे चघोषेचविस्थानेविन्दुरिष्यते । तुम्बीमूलसमुत्पस्थवामाङ्गुष्ठेन धारयेत् ॥ ततस्ताभिस्तुसर्वाभिः स्वरव्यक्तिर्विधीयते । विस्वरोद्दिष्ट ' पार्थिवामस्तच्चतुः स्वरः ॥ अलावण्यांस्थिताज्ञेया ' समषड्जाद्य ' स्वराः । रागव्यक्तिर्यथारागेभवेत् षड्जादिभेदतः ॥ अंशन्यासविभेदाश्चतथाचापिविधीयते । कूर्ममलावणीप्रोक्तामन अवधारणौ ॥ प्रत्यचामारदादेवीवीणा रूपेषसंस्थिता । कूर्मलावणी ॥ अन्ये षालक्षणं विस्तरभयान्नोक्तम् ॥ सुषिरं यथा । वंशीयपारीमधु

रीतिस्तिरीशङ्खकाहला । तीडखी
मुरलीबुक्का शृङ्गिकास्वरनाभय ॥
शृङ्गं कापालिकं च शम्बमं च शस्तथा
पर । एते शुषिरभेदास्तु कथिता :
पूर्वसूरिभि ॥ वर्तुल . सरलश्चै
कपर्वदोषविवर्जित । वैणव .
खादिरो वापि रक्तचन्दनजोऽथवा ॥
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयो
ऽपिवा ॥ राजतस्ताम्रजो वापि लौह
ज स्फाटिकोऽथवा । कनिष्ठाङ्गुलि
तुल्येन गर्भरन्ध्रेण शोभित . शि
ल्पविद्याप्रवीणेन वंश : कार्यो म
नोहर . ॥ वंशेने वमतोऽपीति मतङ्ग
मुनिनोदितम् । ततोऽन्येऽपि तदा
काराश एव प्रकीर्तिता ॥ तत्र
त्यस्याशिरोदेशा दधोहित्वमितमङ्गु
लम् । फूत्काररन्ध्रं कुर्वीतमित
मङ्गुलिपर्वणा ॥ पश्चाङ्गुलानि सन्
त्यज्य तावद्रन्ध्राणि कारयेत् । कु
र्यात् तथान्यरन्ध्राणि सप्त सङ्ख्या
निकौशलात् ॥ बदरीबीजतुल्यानि
सम् त्यज्यार्द्धाङ्गमङ्गुलम् । प्रा
न्तयोर्व्यन्तं कार्यं स्वराद्यैर्नादहेतवे
॥ सिक्थकेन कलादेयात्तेन सुस्वरता
भवेत् । पश्चाङ्गुलीयं वंश : स्या
देकैकाङ्गुलिवर्धित : ॥ षडङ्गु
लानि नामास्याद्यावदष्टादशाङ्गु
लम् । फूत्कारताररन्ध्रस्य यावद
ङ्गुलिमन्तरम् ॥ तदेवनामवंश



स्यावांशिके . परिकीर्त्यते । एका
ङ्गुलो द्व्यङ्गुलश्चत्र्यङ्गुलश्चतुर
ङ्गुल ॥ अतितारतरत्वेन वांशि
कै : समुपेक्षित . । त्रयोदशाङ्गु
लो वीणापर : । निन्दितो वंशतत्त्व
ज्ञै स्तथा सप्तदशाङ्गुल . ॥ महान
न्दस्तथा नन्दो विजयोऽथ जयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनि
सम्मता . ॥ दशाङ्गुलो महानन्दो
नन्द एकादशाङ्गुल : । द्वादशा
ङ्गुलमानस्तु विजय : परिकीर्ति
त . ॥ चतुर्दशाङ्गुलमितो जयइ
त्यभिधीयते । ब्रह्मा रुद्रो रविर्विष्णु
क्रमादत्र व्यवस्थिता : ॥ नैविड्य
प्रौढता चापि सुस्वरत्वञ्च शीघ्रता
। माधुर्यमिति पञ्चामी फूत्कृतेषु
गुणा स्मृता : ॥ शीत्कारबहुल
स्तब्धो विस्वर . स्फुटितो लघु . ।
अमधुरश्च विज्ञेया : षड्दोषा :
फूत्कृते क्रमात् ॥ ह्रस्वप्रयोगबाहु
ल्यमल्पता गीतवादने । एभिर्दोषै
र्युतो तो वनिन्दितो वांशिको मत
॥ स्थानकादिलयाभिज्ञो गमकाढ्य
स्फुटाक्षर । शीघ्रहस्त : कलाभि
ज्ञो वांशिको रक्त उच्यते ॥ प्रमुक्ति
र्वमुक्तिश्च युक्तिश्चेत्यङ्गुलेर्गुणा :
। सुस्थानत्वं सुस्वरत्वमङ्गुलीसा
रणक्रिया ॥ समस्तगमकज्ञानं राग
रागाङ्गवेदिता । क्रियाभाषाविभा

ष । सुदक्षता गीतवादने ॥ स्वस्थाने वादितुं स्थानेनादनिर्माणकौशलं । गातृणां स्थानदातृत्वं तद्दोषाच्छादनं तथा ॥ वाद्यिकस्य गुणा एते मया सङ्क्षिप्य दर्शिता । इति च ॥ ॥ काहलास्त्री निषङ्ग । तोडही मुरली वंशाद्यास्ते च स्त्रियांसमस्वराणां नाभिविस्वरनोभिं स्त्रियां वर्त्तते । इतरेषां विस्तरभयान्नोक्तम् ॥ ॥ आनद्धं यथा । आनद्धे मर्द्दलः श्रेष्ठो यानद्धस्य तु भरतादिभिः । अपि च । मुरजपटहढक्काविश्वकोदर्पवाद्यपणवघनसरुञ्झालावजाडिमिरत्य । करटकमठभेरीश्चात्कुडुक्काहुडुक्काझनसमुरलीझल्लीढक्कालीदौण्डिमाना ॥ डमरुटमुकिमड्डुकुण्डलीस्तुमामारणमभिघटवाद्यं दुन्दुभीचरमप । क्वचिदपि टुटुकौश्चाहर्दुरं चाप्युपाङ्गप्रकटितमनवद्यवाद्यमित्यं जगत्याम् ॥ त्रिपुरमथनकर्त्तुस्ताण्डवे तत्प्रयाणे ततसुखसुषिरस्थानवमित्य घनस्य ॥ ॥ मर्द्दलस्य खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः । रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः ॥ सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते । चतुर्दशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥ दक्षिणञ्च भवेदेवं न्यूनमेकेनार्द्धाङ्गुलेन

वाद्यम्

षा । करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥ पञ्चमांसीयो भवेद्धस्तस्तक्षमर्करणं मतम् । मृत्तिकानिर्मितस्यैव मृदङ्गः परिकीर्त्तितः ॥ पातयेत् खरलिं वाद्यमादनार्थं स्वमर्द्दले । विभूतिर्गैरिकं भक्तं कैन्दुकिनचसंयुतम् । यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टं तल्लेपं खरलिरुच्यते ॥ वामास्ये पूरिकां कृत्वा लेपं दद्यात् दक्षिणे ॥ एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमोत्तमः ॥ अस्य संयोगमासाद्य सर्ववाद्यं शोभते । एतदङ्गे बीजकाष्ठे दलमर्द्धाङ्गुलं विदुः ॥ तधिधोंमिति निर्ज्ञेयाः पाटवर्णाः मृदङ्गजाः । थोंदं ढें धिक्कटस्तद्धीताकं द द थों ग धि धि ॥ खर्भिंभिं न गट दंथाकूटपाटामताचमी । तथि थोंढें तक्कधोंदों द द धिगणांतत तधि ॥ तक्कत धधिदोंताधि पाटखण्डे त्वयं क्रमः ॥ तथा च यतिमाने पाटखण्डं । द्रगतथें जाद्रगतथें जांधोधेधिकताधि कथें जांथें जातकतताधिकधोता द्रगततधिधिधिधिकतताकडना घेधिकथें जाधेताद्रगततान्द्रतता धि । इति यतिमाने पाटखण्डं ॥ ॥ यतिरोद्धाप्यवच्छेदो गजरोकूपकं ध्रुवम् । गलप सारिगीणीचनाद

## वाद्यम्

सकथितं तथा ॥ प्रकरणं छन्दनघ
प्रबन्धाद्वाद्यसम्मता : । यथा । द
थातद्रुत्यं कताख्यांयति : ॥ चोढ
वाद्यंयथा । द्रांतथेतधिकतधिक
द्यंथाद्याथेधिथेधितत्ततथथिथ
विदिथ्यांदिथ्यांटट्नकिटट्नकित
दटङ्गतटंदगथवटङ्गथवटङ्गत
गिनगितगिनगिद्रांद्रांदद्रंद्रौंद्रौंदता
नथा । इत्योढवाद्यम् ॥ चचत्पुटं
वाद्यंयथा । दथात : दथात : धि
क्किधिक्किदिगणं दथात : । इत्यव
च्छेदवाद्यम् ॥ ॥ गजावाद्यं
यथा । थोकटेंअनेअढेंङेंगथेगथे
ङ्गटेंक्कथेगतक्किधिकटेंक्कनधिधि
कटतकथेकतधिकटतक्कतथेग
तद्धीम् । इत्थंकताख्यांगजर. ॥
रूपकवाद्ययथा । तकधिक्तक
धिक्कथवितक्किथवितक्किधिक्कदथात:
। इतिरूपकवाद्यम् ॥ भुवकवा
द्यंयथा । तक्कतक्कटधिक्कधिक्कट ।
इतिनिसारताभिभ्रुवक : ॥ ॥
गजपेयथा । तधिद्धिधिक्किकतकतधि
गलग थाथादेंतथाढेंनञ ॥ इत्थं
कताख्यांगजप : ॥ ॥ सारिगो
चीयथा । थोङ्गटेंअ्तक्कधिक्कत
कधिक्तकथेदटङ्गनदटङ्गनथे
गनथे ' । इतिप्रथमखण्ड : ॥ ॥
टेंअथे : धिथोव : टेंअटेंअदक्
कतगदक्कधिक्कतदिदक्कदंगदं

## वाद्यम्

गथेगथेक्क तकतक धिकत धिकत
थेटेंअथेटेंअथटेंगलखेगगलखे
गखेदटगेंटगेंखेदटञ । इत्यच्छ
न्दनम् । इतिसारिगोणी ॥ ॥
नादोयथा । द्रांकारचितयपूर्वं द्रां
धिगिति ततच्चयम् । द्रांद्रांधिक
चयचद्दितिनाद : शचीप्रिय . ॥
इतिनाद ' ॥ ॥ द्रुत मानसमार
व्य शुद्ध कूटविनिर्मितम् । सम
खण्डमयंवाद्यंकथितंतदिहोच्यते
॥ द्रुतमानस्वात्प्रतितालेयथा ।
ततततत्ततक्कितक्किदिद्धि
गनथेधिगनथेधिक्कधिक्कधिक्क
धिक्कधिक्कनगिनगमिथेथेधिधि
धि : द्रांद्रांधिक्कथेथेथेदथोव
नञिथेनञिथेथोव्थोवर्क ढिक्के
ढिथेदथेदतटितटितट्कगौंगौंध
गिधगितततधेततधेततगिञो
अञोथेगथेगथोथेगगथेगथेतत्ता
ता । इतिसमपदान्याङ्. कथित वा
द्यपण्डितै : । प्रतितालेमतालेन
पादवर्णसमासत : ॥ गन्धर्वपति
नापूर्वं मूर्वं शीलास्यनर्तने । सुध
मारम्भार्थंसुकथित प्रकटीकृतम्
॥ ॥ प्रकरणं यथा । थेगक्कक
'तद्धिकथागकटगगौंदंथेगदिद्
धिकधिक्कदिकटेंञ । इत्थंकता
ख्यांप्रकरणम् ॥ ॥ वाद्यंविमुच्य
तेयेनछन्दमनंतन्निगद्यते । यथा ।

वाद्यम्

तद्विधिर्थादिभटैअतन्न : । इति
च्छन्दनम् ॥ ॥ कलासीविकलास
घटाकलीचार्द्धटाकली । जीला
टाकलिकाचैव गोमुखीमुरजस्तथा
।' अलावुजवाद्यञ्च वाद्यम् ।
मर्द्दलस्तयोरग्राङ्गुलवाममुखोद्दाद
शाङ्गुलदक्षिणमुख. । मुरजस्त्वष्टा
दशांगुलवाममुख ' सप्तदशांगुलद
क्षिणमुख : । मर्द्दलमुरजयोरयभे
द ॥ ॥ घनयथा । अनुरक्त विर
क्तञ्चद्विविधघनवाद्यकम् । गीता
नुगमनुरक्त विरक्ततालसंश्रयम् ॥ कर
ताल ' कांस्यवतीजयघण्टोथशुक्ति
का । कण्ठिकापटवाद्यञ्चपट्टा
तोघस्वघर्घरम् ॥ झञ्झातालश्च
मञ्जीरकर्त्तर्युर्दृङ्गरकृत्यपि । द्वादशै
तेमुनीन्द्रैश्चकथिताघनसञ्ज्ञका : ॥
चयोदशाङ्गुलव्यासौशुद्धकांस्यवि
निर्मितौ । मध्यमुखौस्तनाकारौत
न्मध्ये रज्जुगुम्फितौ । पद्मिनीपत्र
सदृशौकराभ्यारज्जुयन्त्रितौ । कर
तालावुभौवाद्यौपाटैर्भर्नटकैरि
ति ॥ यद्वाचयोदशयवव्यासवक्रय
वोन्मितम् । यवपञ्चकगम्भीरमध्ये
चयवसम्मकम् ॥ बिम्बसवर्त्तुलनि
म्नं यवत्रयमित ततः । पृष्ठतोमध्य
देशेचशिवलिंगसमाकृतिम् ॥ च
त्यम्लपै ष्टौनिर्दिग्धशुद्धकांस्यवि
निर्मितम् । स रन्ध्राङ्गुलिमुखि

वाद्यम्

गधसुदीर्घमधुरध्वनिम् ॥ घनानि
साविसरक्त दृढ शुष्कमनोहरम् ।
काश्मीरादिसमुद्भूत तालमाहुर्मनी
षिण : ॥ सुनादंदक्षिण ताल ततो
हीनञ्च वामकम । कुर्वीततद्द्व
यकार्यैतर्जन्यङ्गुष्ठयोगत. ॥ वा
महस्तस्थतालस्यमध्यम सन्निनादि-
तम् । तिर्यग्दक्षिणतालस्यपरि
व्य शेनतालयेत् ॥ तालादीवादये
च्चैवम्नुतदीर्घलघुद्रुते. । इतिक
रतालविशेष ' । कर्त्तरीघनविशे
ष. । डङ्कुरश्चघनविशेषोऽदन्तरेफा
न्तपुंल्लिङ्ग अन्येषांलक्षणविस्तर
भयान्नोक्तम ॥ ॥ रुक्मिण्या : स
त्यभामाया : कालिन्दीमित्रविन्द
यो : । जाम्बवत्यानाग्निजित्याल
क्ष्मणाभद्रयोरपि ॥ कृष्णस्याष्टमहि
षीणापुरोद्वाहमहोत्सवे । ततंशुषिर
मानद्धघनञ्चयुगपज्जना: ॥ अवा
दयन्नसङ्ख्यातमितिपौराणिकी-
श्रुति ' । ततवाद्यन्तुदेवानांगन्ध
र्वाणाञ्चशौषिरम् ॥ आनद्धं
राक्षसानान्तुकिन्नराणांघनंविदु . ।
निजावतारेगोविन्द : सर्वमेवानय
त्क्षितौ ॥ यावन्तिवाद्यभांडानि
रामरावणयोर्युधि । तावन्त्योनाभ
वन्सेना: कुरुपाण्डवसङ गरे॥ ॥
किञ्च । निलिम्पकलम्पनतोम
रेश्वरणे सुरारिमर्थनात्सुरैण । च

भूत्ततादृग्यैरपिसिंहनादैः साप अपशब्दोतिकणादवाद'॥ युद्धे सैन्यानांयोऽहङ्कारख : ससिंहनाद । ततादिभिरेभिश्चतुर्भिर्वाद्यैर्यम् नांसिंहनादैश्चपञ्चशब्दीवाद्यमभूत्। सिंहनादेनसहवाद्यं पञ्चविधं भवतीत्यर्थः॥ इतिसङ्गीतदामोदरः॥ शिवागारेभल्लकं अथसूर्यागारेचशङ्खकम्। दुर्गागारेवंशीवाद्यं माधुरीञ्चनवादयेत्॥ भाल्लकंकांस्यनिर्मितकरतालम्। इतियोगिनीतन्त्रम्॥ मत्स्यपुराणेपि। गीतवादित्रनिर्घोषं देवस्यायेचकारयेत्। शिरिसे घण्टेढक्कांघण्टांतस्मीशिवेजेत्॥ घण्टाभवेद्यशक्तस्तुसर्ववाद्यमयीयतः॥

वाद्यभाण्डम्। न॰ वादनीयपात्रे॥

वाद्यकरः। त्रि॰ वादित्रकर्त्तरि। बजनीतिभाषाप्रसिद्धे॥

वाधनम्। न॰ बाधायाम्॥

वाधुक्यम्। न॰ विवाहे॥

वाधूः। पुं॰ वधिरे॥

वाध्रीणसः। पुं॰ खड्गी। गण्डके॥ वार्ध्रीणसे॥ पक्षिविशेषे॥ यथा। रक्तग्रीवोरक्तशिराः श्वेतपक्षोविहङ्गमः। स वै वाध्रीणसः प्रोक्तइत्येवानैगमीश्रुतिः॥

वानम्। न॰ शुतिकार्म॰ वि। सौवने॥ कटे॥ गतौ। गमने॥ जलस्यस्रुतवातोर्म्याम्॥ सुरुङ्गायाम्॥ सौरभे॥ गोचीरजीतवचीरे॥ वाजिनागतौ॥ त्रि॰ शुष्कफले॥ शुष्के॥ वनजे॥ वनसम्बन्धिनि॥ वायतिस्म। पैशोषेशोषणे। गत्यर्थाकर्मकेतिक्तः। ओदितश्चेतिनत्वम्॥ वन्यते। वनुयाचने। घञ्वा॥

वानप्रस्थः। पुं॰ मधूकवृक्षे। गुडपुष्पे। किंशुके। पलाशवृक्षे॥ तृतीयाश्रमे॥ सचकलौनाश्चैव॥ वनमिवप्रस्थोवनस्यवाप्रस्थ. प्रदेशः। वनप्रस्थेवनैकदेशेभवः। तत्रभवः इत्यण्॥

वानरः। पुं॰ मर्कटे। कपौ। प्लवङ्गे। शाखामृगे। वन्दर॰ इ॰ भा॰॥ वनेभवम्॰ फलादि॰ वानम्। अण्। वानंराति। रा॰। आतोनुपसर्गेकः॥ यद्वा। वानम्। वा॰। सम्पदादित्वात्क्विप। वा॰ गमनेपि॰ नृणाति॰ वालकम्। नृनये। पचाद्यच्॥

वानरप्रियः। पुं॰ चौरिवृक्षे॥

वानराक्षः। पुं॰ वनच्छागे॥

वानराघातः। पुं॰ लोध्रवृक्षे॥

वानरी। स्त्री॰ मर्कट्याम्। वान्दरी इ॰ भा॰॥ वानरस्यस्त्री। ङीष॥ शूकशिम्ब्याम्॥ वानरीङ्कवर्विवि

घचेष्ट। इतुत्वात् ।

वानरेन्द्र । पुं॰ सुग्रीवे । वानराणा मिन्द्र ॥

वानल । पुं॰ वायवे । कालीवायु इ॰इ॰ भा॰ ॥

वानस्पत्य : । पुं॰ पुष्पजातफलवृक्षे ॥ वानस्पत्य : फलै ' पुष्पादित्य मर : ॥ वनस्पति : । पारस्करा दित्वात्सुट् । वनस्पतीभव · । दित्यदित्या। दित्यपत्युत्तरपदाण्य' वनस्पतिसमूहे । तस्यसमूहइत्यर्थे ॰पूर्वेण॰ण्य ' ।

वाना । स्त्री॰ वर्त्तिकापक्षिणि ॥

वानायु : । पुं॰ हरिणे ॥ वनवनमु वमयति । यय॰ । बाहुलकादुण् ॥ भारतवर्षस्योत्तरपश्चिमस्थेदेशविशे षे ॥ बहुवचनान्त : ॥

वानायुज' । पुं॰ हयविशेषे ॥ वनायु षुजात : । सप्तम्यांजनेर्ड : । सए व । प्रज्ञादाण् ॥

वानीर ' । पुं॰ वेतसे । वञ्जुले ॥ वायति । मैप्रोवैशोषणे । क्विप् वांशुष्कभासमन्तान्नीरमस्य ॥

वानीरक : । पुं॰ मुञ्जतृणे ॥

वानीरजम् । न॰ कुष्ठे । कुठइ॰ प्र॰ ओषधौ ॥

वानेयम् । न॰ कैवर्त्तीमुस्तके । मो थाख्ये ॥ वनेपानीयेजायते । नद्या दिभ्योढक् ॥

वान्तम् । न॰ उद्गीर्णे ॥ त्रि॰ कृतव मने ॥

वान्ताद : । पुं॰ कुक्कुरे ॥ वान्तम त्ति । अण् ॥

वान्ताशी । त्रि॰ उद्गीर्णाशिनि ॥ पुं॰ शुनि ॥

वान्ति : । स्त्री॰ उल्लेखने । वमने ॥

वान्तिकृत् । पु॰ मदनद्रुमे । मयनफ ल॰इ॰भा॰प्र॰ ॥ वान्तिकरोति । डुकृञ्॰ । क्विप् । तुक् ॥

वान्तिदा । स्त्री॰ कटुक्याम् ॥

वान्या । स्त्री॰ वनसमूहे ॥

वाप । पुं॰ क्षेत्रे ॥ उप्यतेस्मिन् । डु वप्घञ् ॥ वपने ॥

वापक : । त्रि॰ वपनकारयितरि ॥

वापदण्ड: । पु॰ तन्तुवायदण्डे । वेम नि ॥ वपनम् । डुवप्॰ । घञ् । वापस्यदण्ड . ॥

वापि . । स्त्री॰ वापिकायाम् ॥ उप्य तेपद्मादयस्याम् । डुवप्बीजसन्ता ने । वसिवपियजिराजिव्रजिसदिह निवाशिवादिवारिभ्यइञ् ॥ भावे इञ्॰वपादिभ्यइतीञ्वा ॥

वापिका । स्त्री॰ वाप्याम् ॥

वापित : । त्रि॰ मुण्डिते ॥ बीजाकृ ते । उप्तकृष्टे ॥ न॰धान्यविशेषे । वीयाधान॰इ॰भा॰ ॥ वापितंशुक् तद्धान्यकिञ्चिद्बीजमवापित ॥

वापी । स्त्री॰ दीर्घिकायाम् ॥ बदृधसी

पानकूपे ॥ पाषाणैरिष्टिकाभिर्वा बद्धकूपाद्वहत्तरा । ससोपानाभवे द्वापीप्राहु: शास्त्रविशारदा ॥ प परिभाषेनद्रोणदशगुणावापीति । यथा । नव्यवर्द्धमानधृतीवशिष्ठ: । शतेनधनुभिः पुष्करिणी० चि भि: शतैर्दीर्घिका० चतुर्भिर्द्रोणः पञ्चभिस्तडाग: द्रोणाद्दशगुणावा वापी । तेनचतुर्दिक्षु पञ्चचि शद्ध स्तान्यूनतायाद्वादशशतहस्तान्तरा न्यूनत्वे नदीर्घिका ॥ चतुर्दिक्षुच त्वारिंशद्धस्तान्यूनतायाषोडशश तहस्तान्तरान्यूनत्वे नद्रोण: । चतु र्दिक्षु चि शद्धिकशतहस्तान्यून तायाम्षोडशसहस्रहस्तान्तरान्यून त्वेनवापीतिजलाशयोत्सर्गतत्त्वम्॥ योवापीमथवाकूपंदेशेवारिविवर्जि ते । खानयेत्सदिवंयातिविन्दौ विन्दौशतंसमा: ॥ तज्जलगुणा स्तु । वाप्यंगुरुकटुक्षारंपित्तलकफ वातजित्० इ० ॥ उप्यतेपद्मादिक मस्याम् । डुवप० । वसिवपीत्या दिना० इञ् । तत: कृदिकारा तिपाक्षिकोङीष् ॥ याचायोगा न्तरे ॥ यथा । एकान्तरगतेलग्ना च्छुभेखेटेऽथवाऽशुभे । वापीयो गस्त्वविज्ञाततिमिरौघदिवाकर ॥

वापीह: । पुं० चातकखगे ॥

वाप्यम् । न० कुष्ठौषधे । पारिभा व्ये ॥ वाप्यांभवम् । दिगादिभ्यो यत् ॥ वापीजले ॥ वाप्यवारियदि क्षारपित्तकृत्कफवातहृत् । तदे वमिष्टकफकृद्वातपित्तहरंभवेत् ॥ चि० वापीभवे ॥

वाभ्रवी । स्त्री० चण्ड्याम् । दुर्गाया म् ॥ वभ्रोरपत्यंस्त्री । अण् । ङीप् ॥ वभ्रोर्विष्णोरियंवा ॥

वाम् । अ० युवामित्यर्थे ॥

वाम । पुं० उमानाथे । हरे ॥ कामदेवे । पयोधरे ॥ न० धने ॥ वास्तूके ॥ पुण्यकर्मफले ॥ चि० वल्गौ । चारौ । शोभने । प तिसुन्दरे ॥ प्रतीपे । प्रतिकूले ॥ सव्ये ॥ वमति० वम्यतेवा । टु वमउद्गिरणे । ज्वलितिकसन्तेभ्योण: भावेघञ्वा ॥ यद्वा । वाति । वागतिगन्धनयो: । अर्त्तिस्तुसि तिमन् ॥

वामदृक् । स्त्री० वनितायाम् ॥ वामामनोहराह्दृक् दृष्टिर्यस्या सा॥

वामदेव । पुं० शिवे ॥ वामयति० दुष्टानामर्दमितिवाम: । टुवम० । णिजन्तात्पचाद्यच् । वामश्चासौ देवश्च ॥ लोकविपरीतत्वात्० सुन्दरत्वाद्वावाम: । सचासौदेव श्च ॥ ऋषिविशेषे ॥

वामदेव्यम् । न० सामविशेषे ॥ वामदेवेनदृष्टम् । वामदेवात्

ङ्गतृङ्गौ ॥

वामन । पुं॰ अच्युते । हरौ ॥ मन्व न्तरेप्यसम्प्राप्तेतथावैवस्वतेद्विज । वामनः कश्यपाद्विष्णुरदित्यांस म्बभूवहेतिविष्णुपुराणम् ॥ अङ्कोठवृक्षे । दक्षिणाशास्थ॥दिग्गजे॥ मुमुक्षुभिः सम्भजनीये ॥ त्रि॰ष तिखर्वे । ह्रस्वे । नीचा॰हि॰भा प्र॰ ॥ खर्वत्त्वाद्वामन वामयति त्याजयतिमदम् । टुवम्॰ । नन्द्या दित्वाल्ल्युः ॥ वामशब्दादस्त्यर्थे पामादित्वान्नो वा ॥ न॰ अयुतवामना न्यङ्कसंख्यु क्तसङ्ख्याविशिष्टे महापुराणविशेषे ॥

वामनतीर्थम् । न॰ तीर्थविशेषे ॥ त त्रकौशिकीदेवीतिष्ठति ॥

वामनीः । पुं॰ परमेश्वरे निरञ्जनेपुरु षे ॥ वामानिपुण्यकर्मफलानि॰पु ण्यानुरूपंप्राणिभ्योनयतिप्रापयती तितथा ॥

वामनी । स्त्री॰ खर्वायांगवि ॥ वमन प्रदौषधिप्रभेदे ॥

वामनेत्रम् । न॰ सव्येचक्षुषि ॥ नेत्र स्याधः स्फुरणममङ्गलतूसङ्गरेभङ्गहेतु र्नेत्रोपान्तेहरतिनयनंनेत्रमूलेच मृत्युः । नेत्रस्योर्द्धंहरतिसकल मानसंदुःखजातंवामेचैवफलम विकलंदक्षिणेवैपरीत्यम् ॥

वाममार्ग्गः । पुं॰ पुनःपुनर्गम नागमनवर्ज्जितेविद्यावतांमार्गे । देवयानाख्येऽर्चिरादिमार्गे शुक्लकृष्णे गतीह्येतेजगतः शाश्वतेमते । एकयायात्यनावृत्तिमन्ययावर्त्तते पुनः ॥ दक्षिणादुत्तमं वाममित्युक्तकुलार्णवे ॥ अग्नेनयसुपथेति मन्त्रे॰सुपथेतिविशेषणं दक्षिणमार्गनिवृत्त्यर्थम्॰ निर्विण्णोऽहंदक्षिणेनमार्गेणगतागतलक्षणेन॰अतो याचेत्वांपुनःपुनर्गमनागमनव र्ज्जितेनशोभनेनपथानयेत्याचार्य्य भाष्यम् ॥

वामलूर । पुं॰ नाकौ । वल्मीके । बांबी॰ हि॰ भा॰ प्र॰ ॥ वामैर्वं मैः॰ लूयते । लूञ छेदने । बा हुलकाद्रक् ॥

वामलोचना । स्त्री॰ उत्कृष्टस्त्रीविशे षे ॥ वामः कामोलोचनेयस्यालोच ने॰ नेत्रे वा॰ यस्याः यद्वा । वा मेसुन्दरेलोचनेचक्षुषीयस्याः ॥

वामशील । त्रि॰ वक्रस्वभावे ॥ सु न्दरस्वभावे ॥

वामा । स्त्री॰ नार्याम् । वनितायाम् ॥ वमतिरूपम् । टुवम्॰ ज्व लादित्वाण्णः ॥ यद्वा वामःका मोस्त्यस्याः । अर्शआद्यच् ॥ दुर्गायाम् ॥ वामंविरुद्धरूपन्तुविप रीतन्तुगीयते । वामेनसुखदादेवी वामातेनमताबुधैः ॥ पक्षिविशेषे ॥

वामाक्षी । स्त्री० वामलोचनायाम् ॥ वामेमनोहरेअक्षिणीयस्याः । षच् । ङीष् ॥

वामाचार । पुं० देवयानमार्गसाधकोदक्षिणाचारादुत्तमेसद्धाभिरीताचारविशेषे ॥ वामश्चासावाचारश्च॥

वामापीडन । पुं० पीलुवृक्षे ॥

वामिका । स्त्री० चण्डिकायाम् ॥

वामी । पुं० वामाचारयुक्ते ॥ वाम. सव्य सुन्दरीवादक्षिणादुत्क्षत्वा दाचार '० सोऽस्यास्ति । अतइनि ठनावितीनि ' । नतत्दक्षिणाया स्तिनाविहासत्तपरस्मिन ' । तत्रत्यालोके ॥

वामिल । त्रि० दाम्भिके । वामे ॥

वामी । स्त्री० शृगाल्याम् ॥ वडवायाम् ॥ रासभ्याम् ॥ करभ्याम् वामयति । टुवम् ०स्वार्थण्यन्त. । मिताकस्यइत्यत्रवमेरनुवृत्तेर्न ह्रस्व ॥ यद्वा । वमनमामति । अमगत्यादौ । कर्मण्यण् । घञ्वा । गौरादि ' ॥

वामोरू: । स्त्री० नारीविशेषे ॥ वामौसुन्दरौऊरूयस्याः ' । सहितशफलक्षणवामादेश्च ऊङ् ॥

वायक । पुं० गणे । समूहे ॥ तन्तुवायविशेषे ॥

वायदण्ड. । पुं० वेमनि । वायदण्डे । वयनम् । वेञ्तन्तुसन्ताने । भावेघञ् । आतोयुक् । वायस्य दण्ड ॥

वायनम् । न० प्रतीपायने । प्रहेणके । वायना० इ० भा० प्र० पूपादिद्रव्ये ॥

वायवी । स्त्री० वायुकोणे ॥

वायव्यम् । न० वायुदेवताकहविषि ॥ वायुदेवताकेऽस्त्रविशेषे ॥ वायुर्देवतास्य । वाय्वृतुपित्रुषसोयत् । गुणावादेशौ । त्रि० वायुसम्बन्धिदिगादौ ॥ न० षट्शतश्लोकाधिकचतुर्विंशतिसहस्रश्लोकात्मकेमहापुराणविशेषे ॥ वायव्यषट्शतानिचचतुर्विंशतिसङ्ख्यातद्दितिदेवीभागवतोक्तेः ॥

वायस । पुं० अगुरुवृक्षे ॥ श्रीवासे ॥ ध्वाङ्क्षे । काके ॥ वयते । वयगतौ । वयश्चेत्यसच् । णित् ॥ वायससमूहे । तस्यसमूह इत्यण् ॥

वायसविद्दतम् । न० शकुनविशेषे ॥

वायसादनी । स्त्री० तेजोवत्याम् ॥ महाज्योतिष्मत्याम् ॥ काकतुण्ड्याम् ॥

वायसाराति: । पुं० पेचके ॥ वायसस्यकाकस्यआराति: ॥

वायसाव्हा । स्त्री० काकनामनि ॥ काकमाच्या ॥

वायसी । स्त्री० काकोदुम्बरिकाया

म् ॥ काकमाच्याम् । महाज्योतिष्मत्याम् ॥ काकनामनि ॥ काकातुण्ड्याम् ॥ वायसानामियम् । तस्येदमित्यण् । ङीप् ॥ काक्याम् ॥

वायसेक्षुः । पुं० काशे । दुग्धगन्धायाम् ॥

वायसोलिका । स्त्री० काकोल्याम् ॥

वायसोली । स्त्री० काकोल्याम् ॥ वायसान् ओलण्डयति । ओलण्डि उत्क्षेपे । अन्येभ्योऽपीति ड । शकन्ध्वादि० ॥

वायुः । पुं० श्वसने । स्पर्शने । मातरिश्वनि । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रादुत्पन्नः शब्दस्पर्शगुणो सर्वदा चलनस्वभावो रूपरहितस्पर्शवति मारुते ॥ शरीरान्तर्वायुभेदेन वायुर्दशविधो यथा । प्राणः ॥ १ ॥ तस्य कर्म बहिर्गमनम् । अपानः ॥ २ ॥ तस्य कर्माधोगमनम् । व्यानः ॥ ३ ॥ तस्य कर्म कुञ्चनप्रसारणादि । समानः ॥ ४ ॥ तस्य कर्माऽशितपीतादीनां समं नयनम् । उदानः ॥ ५ ॥ तस्य कर्म० ऊर्द्ध्वनयनम् । उद्गारे नागः ॥ ६ ॥ आख्यातः कूर्मः ॥ ७ ॥ उन्मीलने स्मृतः । कृकरः ॥ ८ ॥ क्षुत्करो ज्ञेयो देवदत्तो ॥ ९ ॥ विजृम्भणे ॥ न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः ॥ १० ॥ अन्यदप्युक्तं यथा । द्वितीयं मारुतो भूतं त्वगध्यात्मञ्च विश्रुता । स्प्रष्टव्यमधिभूतञ्च विद्युत्तत्राधिदैवतम् ॥ अस्य गुणा यथा । स्पर्शस्त्वगिन्द्रियञ्चापि लघुतास्पन्दनन्तथा । चेष्टा सर्वशरीरस्थवायोरेते गुणा मता ॥ अपि च । वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता । बलं शैघ्र्यं च मोक्षञ्च कर्मचेष्टात्मता भवः ॥ इ० म० भा० मोक्षधर्मे० । अस्यार्थः । अनियमस्पर्श० अनुष्णाशीतस्पर्शः ॥ १ ॥ वादस्थानम्० वागिन्द्रियगोलकानि ॥ २ ॥ स्वतन्त्रता० गमनादौ ॥ ३ ॥ बलम् ॥ ४ ॥ शैघ्र्यम् ॥ ५ ॥ मोक्षः सूत्रादेः ॥ ६ ॥ कर्म० उत्क्षेपणादि ॥ ७ ॥ चेष्टा० श्वासप्रश्वासादि ॥ ७ ॥ आत्मता० प्राणरूपेणेन्द्रियाधिष्ठातृत्वम् ॥ ८ ॥ भवः जन्ममरणे ॥ १० ॥ इति तट्टीका ॥ न्यायमतेऽस्य गुणादिर्यथा । अपाकजानुष्णाशीतस्पर्शस्तु पवनो मतः । तिर्यग्गमनवानेषञ्च स्पर्शादिलिङ्गकः ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् । प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ॥ वायुं निरूपयति० अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वात्० अपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तम्० अनुष्णाशीत इति । एतेन

वायोर्विजातीयस्पर्शोदिर्मितः । त त्जनकतावच्छेदकं वायुत्वमितिभाव:।एषवायु स्पर्शादिलिङ्गकः।वायुर्हिस्पर्शशब्दधृतिकम्पैरनुमीयते। विजातीयस्पर्शेन•विलक्षणशब्देन • तृणादीनांधृत्या•शाखादीनांकम्पनेनच•वायोरनुमानात् । तथा •च वायुर्नप्रत्यक्षः । वायुर्निर्त्योऽनित्योवा•परमाणुरूपोनित्यस्तदन्योऽनित्यः समवेतश्च । सोऽपित्रिविध शरीरेन्द्रियविषयभेदात् । अत्रशरीरमयोनिज पिशाचादीनाम् । देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रिय त्वक् । तच्च वायवीयम् रूपादिषुमध्ये स्पर्शस्यैव व्यञ्जकत्वात् । अङ्गस सर्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् । विषय दर्शयति•प्राणादिरितिषय्यप्यनित्योवायुश्चतुर्विधः तच्चचातुर्विध्यंप्राणादिना• वृक्षतृणमाकरे । तथापिसङ्क्षेपाद्वचनं विध्यमुत्तमम् • प्राणस्त्वेकएवत्वादिनानास्थानवशाञ्च्युत्वनिर्गमादिनानाक्रियावशाच्च•नानासंज्ञांलभतइत्यर्थः : ॥ ॥ सप्तवायवीयथा । भूवायुराव हइत्प्रवहस्तदूर्ध्वः स्यादुद्वहस्तदनुसंवहस्त्रितश्च । अन्यस्ततोपिसुवहः परिपूर्वकोऽस्मादवाह्य : परावह इमेपवना: प्रदिष्टाइतिशिरोमणिः

॥ प्रावाहोनिवहश्चैवउद्वह : संवहस्तथा । विवह . प्रवहश्चैवपरिवहस्तथैव च ॥ अन्तरीक्षेचवाह्येतेपृथङ्मार्गविचारिण : । महेन्द्रप्रविभक्ताङ्गामरुत : सप्तकीर्त्तिता : ॥ ॥ वायो : सप्तस्कन्धायथा । वायुस्कन्धा : सप्ततेषामेकैका सप्तसप्तभि : । आमेयादेवावहादिरुपर्युपरिसंस्थिता : ॥ आवहप्रवहानुवहउद्वहइ•पाठान्तरम् स वहविवहपरावहाश्चपरिवहेति पाठान्तरम् वतर्मेतिभेदात्सप्तवायो• स्कन्धा : ॥ तथाचपुराणम् । आवाह . प्रवहश्चैवतथाचैवोद्वह : पर : । सवहोविवहश्चैवतदूर्ध्वंस्यात्परावह: ॥ तथापरिवहश्चोर्ध्वंवायोर्वैसप्तमेमयइति ॥ तेषास्थानानियथा । मध्येभूमेघयोर्वायुरावह : प्रवहस्त त: । मेघभास्करयो : सूर्यशशिनोरुद्वहस्तत : ॥ चन्द्रनक्षत्रयो : संवहोविवहस्तत : । नक्षत्रग्रहमध्यस्थोग्रहसप्तर्षिमध्यग : ॥ परावह • परिवह : सप्तर्षिध्रुवमध्यग: ॥ इत्थंवंवायव : सप्त वहन्तिभुवनत्रयमिति ॥ वाति । वा॰ । कृवापाजीत्युण् । आतोयुगितियुक् ॥ वायुरायुर्वा वायुर्वायुर्धाता शरीरिणाम् । वायुर्विश्वमिदं सर्वंप्रभुर्वायु : प्रकीर्त्तित : ॥ वायुम

खडलचक्रेषुयथाराजाप्रशस्यते । तथाशरीरमध्येपिवायुरेकः परोविभु. ॥ वायोः पत्नीस्त्रिदेवी ॥
वायुकेतु । पुं॰ चितिकर्णे । धूलौ॥
वायुगण्ड । पु॰ अजीर्णे ॥
वायुगुल्म : । ) पुं॰ आवर्त्ते । अम्भसा
वायुगुल्मक ) 
रूभ्रमे ॥
वायुग्रस्त । त्रि॰ विचिप्तचित्ते ॥
वायुदारु । पुं॰ व्योमधूमे । मेघे ॥
वायुपुत्र । पु॰ भीमसेने ॥ हनूमति ॥
वायुफलम् । न॰ शक्रकार्मुके ॥ जलदोपले ॥
वायुभक्ष्य : पुं॰ सर्पे ॥ त्रि॰ वातभक्षके ॥
वायुवर्त्म । न॰ ख । नभसि ॥ वायोर्वर्त्म ॥
वायुवाह : । पुं॰ धूमे ॥
वायुवाहन । पुं॰ विष्णौ ॥ बहुत: सप्त॰ आवहादीन्वाहयतीतिव्युत्पत्तिः ॥
वायुवाहिनी । स्त्री॰ वायुसञ्चारिण्यां शिरायाम् ॥
वायुष : । पुं॰ मत्स्यविशेषे । कालवायुषपीना॰ सु॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वायुषोहृद्योहृष्योमधुरो धातुवर्द्धन : ॥
वायुसख : । पुं॰ पावके । वह्नौ ॥ वायोः सखा । राजाह॰ सखिभ्यष्टच् ॥
वायुसखा । पुं॰ अनले ॥ अग्नौ ॥ वायु सखास्येतितथा । टजभावादनडसाविश्यनङ् ॥
वाय्वास्पदम् । न॰ आकाशे ॥
वा : । न॰ जले ॥ वारयति । वृञो ण्यन्तात्क्विप् ॥
वार । पु॰ सूर्यादिवासरे ॥ यथा । रवि : सोमोमङ्गलश्चबुधोजीव सित : शनि । एतेषांनामतोवाराविख्याता : सर्वकर्मसु ॥ सितेन्दुबुधजीवानांवारा : सर्वत्रशोभना : भानुभूसुतमन्दानांशुभकर्मसुकेष्वपि ॥ द्वारे ॥ हरे ॥ कुजद्रुमे ॥ निवहे । वृन्दे ॥ अवसरे ॥ वारे॰ वारयति॰ व्रियतेवा । वृञ्॰ । पचाद्यच् । घञ्वा ॥ यद्वा । वार्यते॰ आच्छाद्यतेऽनेन । वृञ्शुरादे॰ पु॰ सौतिघ : ॥ स्यन्दने ॥ न॰ मदिरापात्रे ॥
वारक । पुं॰ अश्वगतौ ॥ अश्वविशेषे ॥ न॰ कष्टस्थाने ॥ ह्रीवेरे ॥ त्रि॰ वार्य्यनिषेधके ॥ वारयति वृञ्॰ । ण्वुल् ॥
वारकी । पुं॰ शत्रौ ॥ निषादिने ॥ पर्णाश्म ॥ जीवे ॥ पर्णाजीविनि पयोधौ ॥ सु॰ मेदिनिकर : ॥
वारकीर : । पुं॰ श्याले ॥ द्वारपालि

षि ॥ वाडवे ॥ यूकायाम् ॥ वेधि
वेधिन्याम् ॥ जलौकायाम् ॥ नी
राजितहये ॥

वारङ्कः । पुं॰ पक्षिणि ॥

वारङ्गः । पुं॰ खड्गादिमुष्टौ ॥ वा
र्यते॰ ध्रियतेवा । हञ् । स्तव
ओर्द्धविस्त्यङ्गच् ॥

वारटम् । न॰ क्षेत्रे ॥ क्षेत्रसमूहे ॥

वरटा । स्त्री॰ हंस्याम् ॥

वारण । पुं॰ मतङ्गजे । गजे ॥
सन्नाहे ॥ न॰ प्रतिषेधे । प्रवृ
त्तिविघाते ॥ नदेवगुरुविप्राणांदी
यमानन्तुवारयेत् । नचात्मानंप्रशं
सेद्वापरनिन्दाञ्चवर्ज्जयेत् ॥ वार
यतिशत्रुबलम् । वृञ् आवरणे ।
ल्युः ॥

वारणवल्लभा । स्त्री॰ कदल्याम् ॥

वारणबुसा । स्त्री॰ कदल्याम् । र
म्भायाम् ॥ बुस्यते । बुसउत्सर्गे ।
इगुपधज्ञाप्रीकिरः कः । वारणा
नांबुसा ॥

वारणसी । स्त्री॰ वाराणस्याम् । का
श्याम् ॥ वरणातद्नद्याः वरान
श्रेष्ठोदकम् । तस्यअदूरभवा । अ
दूरभवश्चेत्यण् । वृद्धिः । ङीप्
। पृषोदरादिः ॥

वारप्रवृत्तिः । स्त्री॰ रेखादेशस्थलोका
नांसूर्य्यावलोकनसमये ॥ रेखाभूमौ
दिनाद्यप्रवृत्तिर्भवति । रेखाभूमि
स्थ॰ लङ्कासुमेरुपर्वतयोर्मध्यसूत्रग
तोदेशः । यथा । यल्लङ्कोज्जयनीपु
रोपरिकुरुक्षेत्रादिदेशान्स्पृशन्
सूत्रं मेरुगतं बुधैर्निगदितासामध्य
रेखाभुवः । यादौप्रागुदयोऽपरत्रवि
षयेपश्चाद्विरेखोदयात् स्यात्त
स्मात् क्रियतेतदन्तरभुवखेटैर्धृण
स्वंफलम् ॥ इतिसिद्धान्तशिरोमणि
॥ अपिच । रेखोक्तासूर्यसिद्धा
न्तेयथा । रेखामधिकृत्य । राक्ष
सालयदेवौकशैलयोर्मध्यसूत्रगाः
। रोहितकमवन्तीचतथासन्निहितं
सरः ॥ अस्यार्थः । लङ्कासुमेरुप
र्वतयोर्मध्यसूत्रगादेशारेखासंज्ञि
ताः । तान्देशानाह । रोहितक
देशोऽवन्तीदेशः सन्निहितसरः कु
रुक्षेत्रमित्यर्थः । रेखायाः पूर्व
देशे॰ परदेशेच॰ यथासङ्ख्यसूर्यो
दयकालात्परकालम्॰ पूर्वकाल
ञ्च॰ वारप्रवृत्तिः स्यादित्यर्थः । प
तेनैतदुक्तं भवति॰ रेखासंज्ञकदेशस्थ
लोकायदासूर्यंपश्यन्ति॰ तदैवसर्व
देशेवारप्रवृत्तिरित्यर्थः । तत्र॰ रे
खापूर्वस्थाः सन्निहितत्वादादौ
सूर्यंपश्यन्ति॰ तदनन्तरं रेखास्थाः
। अतोरेखापूर्वे॰ सूर्योदयात् पर
वारः । तथारेखास्थैः सूर्येदृष्टेस
ति । पश्चात् रेखापरस्थाः पश्यन्ति
अतोरेखापरदेशेसूर्योदयात् पूर्ववारः

कृत्यर्थः । तत्कालपरिमाणमाह । रेखातोयावन्तिदेशान्तरयोजनानि॰ तत्परिमिताभिर्विघटीभिः पलैः पादहीनाभिः चतुर्थभागहीनाभिर्वारप्रवृत्तिः स्यादित्यर्थः । देशान्तरसाधनप्रकारस्तु सूर्यसिद्धान्ते॰ उक्तः ॥ रामदैवज्ञोप्याह । पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयोदिनार्द्धतः । ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्द्ध्वं तथाधोदिनपप्रवेशनमिति ॥

वारमुख्या । स्त्री॰ जनैः सत्कृतायां वेश्यायाम् ॥ वारे॰ वेश्यावृन्दे मुख्या ॥

वारम्वारम् । अ॰ पौनःपुन्ये ॥

वारम्वारेण । अ॰ शश्वदर्थे ॥

वारयिता । पुं॰ भर्त्तरि ॥ त्रि॰ निषेधके ॥

वारल्वः । पुं॰ वरल्वचिनाकृतेयन्त्रे ॥ कृतेयन्त्रद्रव्यम् ॥

वारला । स्त्री॰ गन्धोल्याम् । वरटायाम् ॥ हंसकान्तायाम् ॥

वारलीकः । पुं॰ बल्वजायाम् । वाव्‌इ॰ इ॰ भा॰ ॥

वारवधूः । स्त्री॰ वेश्यायाम् ॥ वारस्य॰ समूहस्य वधूः साधारणत्वात् ॥

वारवन्तीयम् । न॰ सामविशेषे ॥ वारवन्तशब्दोऽस्मिन्नस्ति । मतौच्छसूक्तसाम्नोरितिच्छः ॥

वारवाणः । पु॰ न॰ लोहचर्मणि । कवचे । कञ्चुके । चोलकाकृतिसन्नाहे ॥ वाणं वारयति॰ वृणोति वा । वृञ्॰ ण्यन्तो वा । कर्मण्यण् । राजदन्तादित्वात् परनिपातः ॥ वारमाच्छादकं वानमस्य वा । पूर्वपदादितिणत्वम् ॥

वारराशिः । पु॰ वशीवादके । उत्तमगायके ॥ धर्मध्वजे ॥ सम्बत्सरे ॥

वारवाणि । )
वारवाणी । ) स्त्री॰ वेश्यायाम् । शून्यायाम् । भर्म्मरायाम् ॥

वारविलासिनी । स्त्री॰ वेश्यायाम् ॥ वारे॰ जनसमूहे॰ विलासिनी॰ विलसनशीला ॥

वारवेला । स्त्री॰ यामार्द्धविशेषे ॥ यथा । चतुः सप्तद्विपञ्चाष्टत्रिषट् सूर्यादिवारतः । यामार्द्धं वारवेला स्यान्नशुभाशुभकर्मसु ॥ अपि च । कृतम् नियमशरमङ्गलरामस्तु शुभास्करादियामार्द्धे । प्रभवति हि वारवेलानशुभाशुभकार्यं करणाय ॥ इति ॥

वारसिद्धा । स्त्री॰ वासरविशेषेण नन्दादितिथौ ॥ यथा । वारे नन्दा पूर्वदेवार्चिताङ्ग्रे भद्राविद्याऽऽरेजया॰ सौरिरिक्ता । पूर्णागीर्णा पेशवन्द्ये

ऽखिलेषु कर्म्मस्वेव मन्दोषवत्यपि सिद्धा ॥ भौमादिवारे एता एव नेष्टा यथा। सर्वारम्भे भूमिदायादभान्वोर्नन्दा॰गुर्विन्दूश्च भद्रा जयार्क्के। रिक्ताधिष्ण्ये॰ हेलिसूनौ हि पूर्णा॰ ह्येता याम्या गारदा॰कालविद्भिः॥

वारसुन्दरी। स्त्री॰ वेश्यायाम्। मञ्जिकायाम्॥ वारस्य जनतायाः सुन्दरी॰स्त्रीसामान्यत्वात्॥

वारस्त्री। स्त्री॰ गणिकायाम्। वेश्यायाम्॥ वारस्य वृन्दस्य स्त्री। साधारणत्वात्॥

वारानिधिः। पुं॰ अम्बुधौ। समुद्रे॥

वाराणसी। स्त्री॰ विश्वनाथनगर्याम्। काश्याम्। तपस्थल्याम्। महाश्मशाने॥ अविमुक्ते। आनन्दकानने॥ मोक्षसुदुर्लभंमत्वा॰संसारस्यातिभीषणम्। अश्मनाचरणौ हत्वा वाराणस्यां वसेन्नरः॥ वरणायास्तथा चास्या मध्ये वाराणसी पुरी। वाराणस्यां महादेवाज्ज्ञानं लब्ध्वा विमुच्यते॥ वरणासी च नद्यौ हि पुण्ये पापहरे उभे। तयोरन्तर्गता या तु सैषा वाराणसी स्मृता॥ विशेषोऽस्याः काशीशब्दे द्रष्टव्यः॥ वरश्च तत् अनश्च वरानः श्रेष्ठोदकम्। तस्य अदूरे भवा। अदूरभवश्चेत्यण्। आदिवृद्धिः। ङीप्। पूर्वपदात् संज्ञायामगद्गुतिणत्वम्॥

वाराणसीचेचम्। न॰ सिद्धक्षेत्रविशेषे। काश्याम्॥

वाराणसेयः। त्रि॰ वाराणसीभवे॥ वाराणस्यां जातादिः। नद्यादिभ्यो ढक्॥

वारासनम्। न॰ जलालये। वाः सदने॥

वाराहः। पुं॰ महापिण्डीतकवृक्षे॥ वराहार्थे॥ वराह एव। अण्॥ त्रि॰ वराहसम्बन्धिनि॥ न॰ चतुर्विंशतिसहस्रश्लोकात्मके महापुराणविशेषे॥ चतुर्विंशतिसाहस्रं वाराहं परमाद्भुतमिति भागवतोक्तेः॥

वाराहकर्णी। वाराहपत्री। स्त्री॰ अश्वगन्धायाम्॥

वाराहाङ्गी। स्त्री॰ दन्तीवृक्षे॥

वाराही। स्त्री॰ मातृप्रभेदे॥ योगिनीविशेषे॥ तीर्थविशेषे वराहदेवस्य शक्तौ श्यामापक्षिणि॥ विष्वक्सेनप्रियायाम्। वृष्टिभेषजी। गेंठी॰ इ॰ भा॰॥ अस्या गुणा यथा। वाराही पित्तला बल्या कट्वी तिक्ता रसायनी। आयुःशुक्राग्निकृन्मेहकफकुष्ठानिलापहा॥ वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसञ्ज्ञकः। वाराहीकन्द एवान्यैश्चर्म्मकारालुको मतः॥ अनूपे सम्भवेद्देशे वाराह इव लोमवान्॥ वराहस्येयम्। प्रियत्वात्। तस्येदमित्यण्॥

वाराह्या । स्त्री॰ शूकर्याम् ॥ वराहस्यापत्य स्त्री । यतञ्ञ् । तस्य॰ यञिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे॰ इतिष्यङादेशः ॥

वारिः । स्त्री॰ शचि । सरस्वत्याम् । गजवन्धनभूमौ ॥ वन्द्याम् । वारयति॰ वार्यते ऽनयावा । वसिवपियजिराजीतीञ् ॥ न॰ वालके । ह्रीवेरे ॥ अम्बुनि । जले । नीरे ॥ रसोरसेन्द्रियग्राह्यः स्नेहस्य गुरुतातथा । सत्द्रवसमूहश्च वारिगुणाःस्मृताः ॥

वारिकण्टकः । पुं॰ शृङ्गाटके ॥ सिघाडा॰ इ॰ भा॰ ॥

वारिकर्णिका । स्त्री॰ कुम्भिकायाम् । खमूलिकायाम् ॥

वारिकर्पूरः । पुं॰ इल्लिशमत्स्ये ॥

वारिकुब्जः } पुं॰ वारिकण्टके । शृङ्गाटके ॥
वारिकुब्जकः }

वारिक्रिमिः । पुं॰ जलमक्षिकायाम ॥

वारिचत्वरः पुं॰ कुम्भिकायाम् ॥

वारिचरः । पुं॰ मत्स्ये ॥ यादोमात्रे ॥

वारिचामरम । न॰ शैवले ॥

वारिजः । पुं॰ शङ्खे ॥ शम्बूके ॥ न॰ पद्मे ॥ द्रोणीलवणे ॥ गौरसुवर्णे ॥ लवङ्गे ॥

वारितस्करः । पुं॰ सूर्ये ॥ मेघे ॥

वारिदा । स्त्री॰ अङ्गमकुट्याम । दाजमूले॰ वारिवस्तेमे॰ चलती तम्बू॰ इ॰ भा॰ यथा । जलधाजङ्गमकुटीमावारीम् अवमंपर्णीति हारावली । छत्रे ॥

वारिदः । पुं॰ जलदे । मेघे ॥ मुस्तके ॥ वारिददाति । डुदाञ्॰ । आतोनुपसर्गेकः ॥ न॰ वालायाम् । ह्रीवेरे ॥

वारिधरः । पुं॰ मेघे ॥

वारिधारः । पुं॰ अद्रिविशेषे ॥

वारिधारा । स्त्री॰ जलधारायाम् ॥

वारिधिः । पुं॰ समुद्रे । अकूपारे । अर्णवे ॥ वारीणिधीयन्तेऽत्र । डुधाञ्॰ । कर्मण्यधिकरणे चेति॰ किः ॥

वारिनिधिः । पुं॰ वारिधौ ॥

वारिपथिकः । त्रि॰ जलपथेनागते ॥ जलपथगामिनि ॥ वारिपथेनाहृतम्॰ तेनगच्छतिवा॰ । ठक् ॥

वारिपर्णिका । स्त्री॰ वारिपर्ण्याम् ॥

वारिपर्णी । स्त्री॰ कुम्भिकायाम् । खमूल्याम् । वारिपर्णीहिमातिक्तालघ्वीस्वादीसरापटुः । दोषजयकरीरूक्षाशोषितज्वरशोफहृत् ॥ वारिणिपर्णान्यस्याः ॥ पाककर्णेतिङीष । यद्वा वारिणिपर्णिः । पू॰ । पाप्रबन्धस्त्यतिश्येनः । वादिरितिङीष् ॥

वारिपालिका । स्त्री॰ खमूल्याम् ॥

वारिप्रवाह : । पुं० निर्झरे । झरे । उत्सान्निर्गतजलप्रवाहे । वारिणः प्रवाहः ॥

वारिप्रश्नी । स्त्री० कुम्भिकायाम् ॥

वारिबदरम् । न० प्राचीनामलके ॥

वारिभवम् । न० स्रोतोञ्जने ॥

वारिमसि : । स्त्री० पाथोदे । मेघे ॥

वारिमुक् । पुं० खतमाले । मेघे ॥

वारिमूली । स्त्री० वारिपर्ण्याम् ॥ वारिणिमूलं यस्याः । पाककर्णेति ङीष् ॥

वारिरथ : पुं० नावि । तरिके ॥

वारिराशि : । पुं० समुद्रे ॥

वारिरुहम् । न० कमले ॥ वारिणि रोहति । रुह० । इगुपधेतिकः ॥

वारिलोमा । पुं० अप्पतौ । वरुणे ॥

वारिवल्लभा । स्त्री० विदार्याम् ॥

वारिवास : । पु० सुराजीविनि । शौण्डिके ॥

वारिवाह : । पुं० जलदे । मेघे ॥ वारि वहति । वह० । कर्मण्यण् । सुखोपम् ॥

वारिवाहक : । पुं० बलाहके । मेघ ॥ वारिणोवाहकः ॥

वारिवाहन : ॥ पुं० वारिदे ॥

वारिश : पुं० विष्णौ ॥

वारिशिरीषिका । स्त्री० शिरीषिकायाम् ।

वारिसम्भव : । पुं० वानमालकारी ॥

न० उशीरे ॥ लवङ्गे ॥ सौवीराञ्जने ॥

वारी । स्त्री० गजबन्धन्याम् । हस्तिशालायाम् ॥ कलस्याम् ॥ वार्यतेऽनया । वृञ् । यञन्तः । वसिवपि यजिराजीत्रीञ् । वह्नादित्वात् ङीष्वा ॥

वारीट : । पुं० गजे । हस्तिनि ॥

वारीश : । पु० समुद्रे ॥

वारु : । पुं० विजयकुञ्जरे ॥

वारुठ : । पु० शवशय्यायाम् ॥

वारुडकि । पुं० वरुडापत्ये ॥ व्याकरणबरुडस्यादिनेञ् । अकङादेशश्च ॥

वारुण । पुं० भारतवर्षीयोपद्वीपविशेषे ॥ न० उपपुराणविशे ॥ शतभिषर्क्षे ॥ जले ॥ त्रि० वरुणसम्बन्धिनि ॥

वरुणकर्म । न० जलाशयखननादौ ॥

वारुणव्रतम् । न० नृपतेर्नियमविशेषे ॥ यथा । वरुणेनयथापाशैर्बद्धएवाभिदृश्यते । तथापापान्नि गृह्णीयाद्व्रतमेतद्धिवारुणम् ॥

वारुणि : । पुं० अगस्त्यमुनौ ॥ वसिष्ठे ॥

वारुणी । स्त्री० गण्डदूर्वायाम् ॥ पश्चिमायाम् । प्रतीच्यान्दिशि ॥ इन्द्रवारुण्याम ॥ दूर्वायाम् । शतभिषानक्षत्रे ॥ तिथिविशेषे ॥ वा । [illegible]

श्चयोदशी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥ वरुण + शतभिषा ॥ इयमेव शनिवारयुक्ता चेन्महा वारुणीति शुभयोगयुता चेन्महामहावारुणीति संज्ञां लभते । यथा । शनिवारसमायुक्ता सा महावारुणी स्मृता । गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा ॥ शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥ सुराधिदेवतायाम् । प्रथमाभिमानिन्यां महत्यां देवतायाम् ॥ मन्त्रो वारुणीति श्रुतेः ॥ ६ ॥ अन्नमय्यां सुरायाम् । पैष्ट्याम् ॥ पुनर्नवा शालिपिष्टैर्विहिता वारुणी स्मृता । संहितैस्तालखर्ज्जूररसैर्या सापि वारुणी ॥ सुरावद्वारुणी लघ्वी पीनसाध्मानशूलनुत् ॥ वरुणप्रेरितवृन्दावनस्थकदम्बतरुकोटरनिःसृतायां बलदेवपीतवारुण्याम् ॥ यथा । पराशर उवाच । वने विचरतस्तस्य सह गोपैर्महात्मनः । मानुषच्छद्मरूपस्य शेषस्य धरणीभृतः । निष्पादितोरुकार्य्यस्य कार्य्येणोर्वीविचारिणः । उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ॥ अभीष्टा सर्व्वदा यस्य मदिरे त्वं महौजसः । अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ॥ इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् वृन्दावनवनोत्पन्नकदम्बतरुकोटरे ॥ विचरन् बलदेवोऽपि मदिरागन्धमुत्तमम् । आघ्राय मदिरातर्षमवापाथ पुरातनम् ॥ ततः कदम्बात् सहसा मद्यधारां स लाङ्गली । पतन्तीं वीक्ष्य मैत्रेय प्रययौ परमां मुदम् ॥ पपौ च गोपगोपीभिः समवेतो मुदान्वितः । उपगीयमानो ललितं गीतवाद्यविशारदैः ॥ इति विष्णुपुराणे पञ्चमांशे २५ अध्यायः ॥ अत्राधिकारिणं प्रति श्रीसदाशिवः । सम्यग्विधिविधानेन सुसमाहितचेतसा । पिबन्ति मदिरां मर्त्त्या अमर्त्त्या एव ते क्षितौ ॥ इयन्तु वारुणी देवी निपीता विधिवर्ज्जिता । नृणां विनाशयेत् सर्व्वं बुद्धिमायुर्यशो धनम् ॥ इति कुलार्णवे ॥ अपि निसङ्गो निर्भयो वीरो निर्लज्जो निष्कुतूहलः । निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेदिति ॥ वरुणस्येयम् । तस्येदमित्यण् । ङीप् ॥

वारुणीवल्लभः । पुं॰ वरुणे । वारुणीवल्लभायस्य सः ।

वारुण्ड । पुं॰ फणिनां राज्ञि । पुं॰ न॰ सेकपात्रे । नौस्थजलनिःसारणभाजने । नेत्रमले ॥ कर्णमले ॥

वारुण्डी । स्त्री॰ द्वारपिण्डाम् ॥

वारूढः । पुं॰ वस्त्राञ्चले ॥ कपाटे ॥ अग्नौ ॥ पञ्जरे ॥ शम्बले ॥

इतिमेदिनिकर : ॥

वारेन्द्र । वि० वरेन्द्राजाते । यथा ॥

वरेन्द्री । स्त्री० देशविशेषे । राजसाही० इतिगौडदेशभाषाप्रसिद्ध ॥

वार्ध्म । न० वने ॥ वृक्षाणांसमूहः । तस्यसमूहइत्यण् ॥ त्रि० वृक्षसम्बन्धिनि ॥

वार्क्षदुर्गम् । न० वृक्षैः समन्ताद्वेष्टितेपुरेपुराद्बहिः सर्वतोयोजनमात्रंव्याप्यतिष्ठतिमहावृक्षकण्टकिगुल्मलताद्याचितैराचीनासस्थाने ॥

वार्चौ । स्त्री० स्त्रीविशेषे । इतिमहाभारतम् ॥

वार्ज्जम् । न० पद्मे ॥

वार्णव : । त्रि० वर्णदेशजे ॥ कच्छादित्वाद्वुञ् ॥

वार्णिक : । त्रि० लेखके ॥

वार्त्तम् । न० निस्सारे ॥ आरोग्ये । पाटवे । स्वास्थ्ये ॥ त्रि० वृत्तिमति । वृत्तिशालिनि ॥ नीरोगे ॥ वृत्तिरस्यस्य । वृत्तेर्णित्य ॥

वार्त्तक । पुं० पक्षिविशेषे । बटेर इ० भा० । वर्त्तके ॥ न० वर्त्तकानागणे ॥ वर्त्तकानांसमूहः । तस्यसमूहइत्यण् ॥

वार्त्ता । स्त्री० वर्त्तने ॥ वार्त्तिकार्ये ॥ वार्त्ताक्याम् ॥ कृष्यादौवृत्तौ ॥ यथा । कृषिवर्णिज्यातद्वद्वृतीयंपशुपालनम् । विद्यादेतामहाभागवार्त्तावृत्तिनयाश्रया ॥ चतुर्विधापिसाप्रोक्ताकृषिर्नपितरंप्रति । कृषिवर्णिज्यागोरक्षाकुसीदन्तुर्यमुच्यते । इति ॥ जनश्रुतौ ॥ उदन्ते ॥ वृत्तान्ते ॥ वृत्तिर्जीवनंसमं तदस्त्यस्याम् । वृत्तेर्णित्यादिति प्रज्ञादिण् ॥ दुर्गायाम् ॥ यथा । पश्वादिपालनाद्देवीकृषिकर्मान्तकारणात् । वर्त्तनाधारणाद्वापिवार्त्तासापरगीयते ॥

वर्त्ताक : । पुं० वार्त्ताकी ॥ वार्त्तिकार्ये । वनभण्टा० इतिख्याते ॥ वार्त्तमारोग्यमाकयति । अकक् टिलायाकृतौ । अक्त : कर्मण्यण् । वार्त्तफलाअकयक्षा ॥ वार्त्तक पक्षिणि ॥

वार्त्ताकी । स्त्री० हिंगुल्याम् । भण्टाक्याम् ॥ गौरादित्वान्ङीष् । बृहत्याम् ॥ वार्त्तिकार्ये । वनभण्टा० इतिभा० ॥

वार्त्ताकु : । स्त्री० हिंगुल्याम् । भण्टाक्याम् । बृहत्याम् । अस्यागुणा यथा । अग्निप्रदामारुतनाशिनीच शुक्रप्रदाशोणितवर्द्धिनीच । वृत्ता सकासारुचिनाशिनीचवार्त्ताकुरेषागुणसम्प्रयुक्ता ॥ सामान्यतोऽपि वार्त्ताकीमध्ये शुक्लापित्तनाशिनी । सदाफलाचिदोषघ्नीरक्तपित्तप्रसादनी ॥

अङ्गारपक्वावार्त्ताकु . किञ्चित्पित्त
करीमता । कफमेदोऽनिलश्वासघ्ना
लघुतरापरा॥ पुंल्लिङ्गोपीतिचिन्त्या
गडशेष ' ॥ वर्त्तते । वृतु॰ । वृतेर्वृ
द्धिश्चेतिकाकु ' ॥ बाहुलकादुक्का
रस्याल्वे वार्त्ताकमपि ॥

वार्त्तायन : । पुं॰ हेरिके । गूढपुरुषे
। प्रवृत्तिज्ञे । प्रणिधौ । चरे ॥
वृत्तिर्हेमचन्द्र : ॥

वार्त्तावह : । पुं॰ कृषिवाणिज्यादि
जीवे । वैश्यधिके ॥ वार्त्तायाव
ह . ॥

वार्त्ताहारी । पुं॰ चारे । यथार्हव
र्णे ॥

वार्त्तिक : । पुं॰ वर्त्तिके । बटेर॰
इ॰ भा॰ ॥ वार्त्तिकोमधुरोवृष्य :
शीतश्चकफपित्तनुत् ॥ वार्त्तीकौ॥
चरे । स्पशे ॥ क्लीब्ये । न॰ उक्ताऽ
नुक्तदुरुक्तार्थव्यञ्जकसूत्रे ॥ उक्ता
नुक्तदुरुक्तार्थचिन्ताकारितुवार्त्तिक
मितिहेमचन्द्र . ॥ वृत्तिमधीते॰
वेद वा । उक्थादित्त्व ठक् ॥ वृ
त्तौसाधुर्वा ' कथादिभ्यष्ठक् ॥

वार्त्तिका । स्त्री॰ वर्त्तिकायाम् ।
विषाणिकायाम् । बटेर॰ इ॰ भा॰
॥ वर्त्तिकेतिशब्दावली ॥

वार्त्रघ्न : । पुं॰ पार्थे । अर्ज्जुने ॥ वृ
त्रघ्नोऽपत्यम् । अण् ॥ अयन्त्रि॰
वृत्रघ्नसम्बन्धिनि ॥

वार्द्दल । पु॰ मेघानन्दायाम् ॥
न॰ दुर्द्दिने । बादला॰ इ॰ भा॰
॥ मस्याम् ।

वार्द्धकम् । न॰ वृद्धसङ्घाते ॥ वृ
द्धानासमूह । वृद्धाच्चेतिवक्त
व्यमितिवुञ् ॥ वृद्धस्यभावकर्म
णी ' । वृद्धत्वे । यौवनात्पराव
स्थायाम् ॥ यथा । तिथिवर्षमत
वाल्य चिं ग्रहवर्षन्तुयौवनम् । मु
ख्य गौण द्विधाभिन्न वार्द्धकन्तुतत .
परम् ॥ वृद्धस्यकर्म्मभावोवा ।
मनोज्ञादित्त्वाद्वुञ् ॥ वार्द्धकेतप
आतिष्ठेदितिशास्त्रोदित वच ' ॥

वार्द्धक्यम् । न॰ वृद्धत्वे । वार्द्धके ॥
वृद्धसङ्घाते ॥ वार्द्धकमेव । चतु
र्वर्णादित्त्वात्॰ स्वार्थेष्यञ् ॥

वार्द्धि : । पु॰ समुद्रे ॥ वारीणिधीय
न्तेऽत्र । कर्मण्यधिकरणे चेतिधा
ञ : कि : ॥

वार्द्धिभवम् । न॰ द्रोणीलवणे ॥ *

वार्द्धुषि । त्रि॰ वृद्ध्याजीवे॥ वृद्ध्य
र्थं द्रव्य वृद्धि ' तत्प्रयच्छति ।
प्रयच्छतीतिगर्ह्यमितिठक् । वृ
द्धेर्वृधुषिभाव : ॥ पृषोदरादि
त्वात्कलोप ' ॥

वार्द्धुषिक । त्रि॰ कुसीदिके । वृद्
ध्याजीवे । वार्द्धुषौ । वहुरा॰ इ॰
भा॰ ॥ तल्लक्षणं यथा । समर्घं धा
न्यमादायमहार्घं य : प्रयच्छति ।

सर्वं वार्द्धुषिकोनाम हव्यकव्यबहि
ष्कृत . ॥ तस्य वृद्धिग्रहणनियमो
यथा । अशीतिभागं गृह्णीयान्मा
साद्वार्द्धुषिक: शतात् । द्विकं शतं
वा गृह्णीयात्सतांधर्ममनुस्मरन् ॥
द्विकं शतम्वागृह्णानोनभवत्यर्थकि
ल्बिषीति । शतस्यार्थपर्ण्यऽशीति
भागं विशतिपणा । द्विकं पुराण
द्वयम् । एव विध नियममतिक्रम्य
अनापदि० स्वयमन्यद्वारावासाच्छ
न्द्येनयोव्यवहरतितस्यैवप्रायश्चित्त
म् । आपदितुस्वयङ्करणे० नियमा
तिक्रमेपनदोष : । इतिप्रायश्चित्त
विवेक ॥ वृद्ध्यर्थं द्रव्यवृद्धि .
। तांप्रयच्छति । प्रयच्छतिगर्ह्यमि
तिठक् । वृद्धेर्वृधुषिभावोवक्त
व्य : ॥

वार्द्धुष्यम् । न० धान्यवर्द्धने ॥

वार्धेयम् । न० द्रोणीलवणे ॥

वार्द्ध्रम । न० स्त्री० चर्म्मणि ॥ व-
ध्र्यैवृदम् । चर्मणोऽञ् वि० वध्रे
स्यविकारे । तस्यविकारइत्यण् ॥

वार्ध्री । स्त्री० चर्मरज्ज्वाम् । वडी० इ०
भा० । वाध्रान् ०डीष् ॥

वार्ध्रीणस : । पुं० वाध्रीणसे । छाग
विशेषे ॥ यथा । त्रिपिवस्त्विन्द्रिय
क्षीणं श्वेत वृद्धमजापतिम् । वा
र्ध्रीणसमितिप्राहुर्याज्ञिका. पित्रक
र्मणीतिनिगमे । एकचरे । गण्ड
के । मेंडा० इ० भा० ॥ पक्षिविशे
षे । यथा । नीलग्रीवोरक्तशीर्ष :
कृष्णपाद सितच्छद : । वार्ध्रीण
स : स्यात्पक्षीशोममविष्णोरतिप्रि
य । ॥ रोहितस्यतुमत्स्यस्यमांसैर्वा
र्ध्रीणसस्यच । तृप्तिमाप्नोतिवर्षाणा
शतानिचौणिमत्प्रिया ॥ मत्स्या
च्चखड्गानांरुधिरै : शतवार्षि
कीम् । तृप्तिमाप्रोतिपरमांशार्दूल
रुधिरैस्तथा ॥ इतिकालिकापुरा
णे ६६ ऽध्याय : । वार्ध्रीवनासि
काऽस्य । अत्र्नासिकायाइत्यच्०
नसादेशश्च । पूर्वपदाद्दितिणत्त्वम् ॥

वार्भट । पुं० नक्र । कुम्भीरे । वा
रिजलि० भट : ॥

वार्म्मणम् । न० वर्मसमूहे ॥ वर्मणां
समूह । भिक्षादिभ्योण् ॥

वार्म्मिणम् । न० वर्मिणासमूहे ॥

वार्मुक् । पुं० अम्भोदे । मेघे ॥
वा . मुञ्चति । मुच्छ० । क्विप् ॥

वार्य्य . । पु० ऋत्विजि ॥ व्रियते ।
वृङ्सम्भक्तौ । यत् । क्यप्तु० वृ
ञएव ॥ —*— ॥

वार्य्य . । त्रि० वरणीये ॥ वारिसम्ब
न्धिनि ॥

वार्य्युद्भवम् । न० पद्मे । त्रि० जलजे ।

वाराशि : । पुं० समुद्रे । इतिपुरा
णम् ॥

वार्ब्वट । पुं० वहित्रे ॥

वार्ष्वणा । स्त्री॰ वर्वणायां ॥

वार्षकम् । न॰ सुश्रुत्तक्तपृथिवीद्ग्रभागान्तर्गतभागविशेषे ॥

वार्षगण्य । पुं॰ पतञ्जलौ ॥ वृषगणस्यगोत्रापत्यम् । गर्गादित्वात्यञ् ॥

वार्षभाणवी । स्त्री॰ वृषभाणुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर. कृष्णस्तथैव वार्षभाणवीति पद्मपुराणम् ॥

वार्षलम् । न॰ वृषलकर्मणि ॥ यथा । नकथञ्चनकुर्वीतब्राह्मणः कर्म्मवार्षलम् । वृषल. कर्मचत्रात्र पतनीयेष्विितयोः ॥

वार्षिकम् । न॰ त्रायमाणायाम् । वलभद्रिकायाम् ॥ वृष्टिजले ॥ यथा । वार्षिकं तदृहवृष्टभूमिष्ठमहित जलम् । विरावमुषित ततु प्रसन्नममृतोपमम् ॥ त्रि॰वर्षाभवे ॥ वर्षासुभवम् । जातम्॰साधुवा । वर्षाभ्यष्ठक । ठञेक ॥ वर्षभवे वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकाश्चतुरोमासा दुर्गमाः पथिसर्वदा । तस्मादेकत्र विवुधैः स्थातव्यमितिनिश्चयः ॥ षष्ठोमासांस्तुप्रवसेत्सदाकार्यवशाद्विज. । वर्षाकालेनगन्तव्य प्रवासेसुखमिच्छतीतिभागवते नारद ॥

वार्षिकी । स्त्री॰ त्रायमाणायादमोषधौ ॥ वेलङ्ग॰ प्र॰ पुष्पविशेषे ॥ यथा । श्रीपद्मोषट्पदानन्दावार्षिकीमञ्जवम्मनेतिभावप्रकाश । वार्षिकीशीतलालघ्वीतिक्तादोषत्रयापहा । कर्णाक्षिमुखरोगघ्नो॰तत्तैलतद्वणस्मृतम् ॥ इतिच ॥ वर्षकर्त्तव्यपूजादौ ॥ वर्षासुभवा । ठक् । ङीप् ॥ कालाट्ठञ्वा ॥

वार्षिला । स्त्री॰ करकायाम ॥

वार्ष्णेय । त्रि॰ वृष्णिवंशोद्भवे ॥

वार्हतम् । न॰ वृहतीफले ॥ वृहत्याफलम् । प्लक्षादिभ्योण् विधानसामर्थ्यात्तस्यफलेनलुक् ॥

वार्हद्रथ । वार्हद्रथि । पुं॰ नृपे ॥ वृहद्रथस्यापत्यम् । अण् इञ्वा ॥

वार्हस्पत्य. । पुं॰ नास्तिके ॥ यथा । स्याद्वादवाद्यार्हत स्या॰ च्छून्यवादीतुसौगत । नैयायिकस्त्वक्षपादो॰ योग साङ्ख्यस्तुकापिल वैशेषिक स्यादौलूक्यो॰ वार्हस्पत्यस्तुनास्तिक. । चार्वाकोलौकायतिकश्चैतेषडपितार्किका. ॥ मैत्रेये ॥ कश्याश्चिद्विद्यायामेवयोवृहस्पते. शिष्य ॥ न॰ नीतिशास्त्रे ॥ वृहस्पतिदेवताके त्रि॰ वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देवताऽस्य॰ वृहस्पतेरिदंवा । दित्य

दिच्यादिच्यपच्युत्तरपदाख्य ' ॥

वालक । पु० न० पारिहार्ये ॥ त्रि० अङ्गुरीयके ॥ वालकोऽस्त्रीपारिहार्ये० त्रिपुस्यादङ्गुरीयके । इ० मेदिनि ' ॥ वालके ॥

वालव : । पु० द्वितीयकरणे । तत्र जातस्य फलयथा । कार्यं स्वकर्तास्वजनस्य भर्तासिनाप्रणेताकुलशीलयुक्त ' । उदारबुद्धिर्बलवान्मनुष्य स्त्रोहालवाख्ये जननप्रियस्य ॥

वाल्काम् । न० क्षौमादिवस्त्रे ॥ त्रि० वल्कभवे ॥ वल्कस्य वल्कलस्य० विकार : । तस्य विकारइत्यण् ॥

वाल्कलम् । त्रि० वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।

वाल्कली । स्त्री० मदिरायाम् ॥

वाल्मिकि ।
वाल्मीका : । पु० } कविश्रेष्ठे ॥
वाल्मीकि ।

प्राचेतसेभृगुवंशीयमुनिविशेषे ॥

वाव । अ० अवधारणार्थे ॥ प्रसिद्धौ ॥

वावदूक ' । त्रि० वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्वादिषु वावदूकशब्दपाठसामर्थ्यादिदेरूक ॥ यद्वा पुन पुनरतिशयेनवावदति० इति० वदेर्यङ्लुकात्० उलूकादयश्चेत्यूक ' ॥

वावय : । पुं० तुलसीविशेषे । वावुच०

इ० भा० ॥ इतिशब्दचन्द्रिका ॥

वावृत ' । त्रि० वृतवरणे । वृते । वृतौ । स्वयंवरादिनास्वीकृतवरादौ ॥ वावृत्यतेस्म । वावृतुवर्तने । क्त ॥

वाशा । स्त्री० वासके ॥ वाश्यते । वाशृशब्दे । गुरोश्चेत्य' । टाप् ॥

वाशि । पुं० क्रन्दनसाधने । कुठारप्रभेदे ॥ अग्नौ ॥ वाश्यते । वाशृ० । वसिवपीत्यादिना इञ् ॥

वाशिका । स्त्री० वासके ॥ वाश्यते । वाशृ० । गुरोश्चहलइत्य : टाप् । क ' । यद्वा । उश्यते । वशकान्तौ । सञ्ज्ञायामित्यनेन० ण्वुल् ।

वाशितम् । न० पशुपक्ष्यादिशब्दे । ॥ वाशनम । वाशृ० भावेक्त ॥

वाशिनायनि : । पुं० वाशिनोपत्ये ॥ उदीचांवृद्धादगोत्रादिति० फिञ् दाण्डिनायनेति० निपात्या भाव ॥

वाशिष्ठ । त्रि० वशिष्ठसम्बन्धिनि ॥

वाशिष्ठी । स्त्री० । गोमत्याख्याम् ॥ तीर्थविशेषे ॥ चर्मण्वत्यां कुल्या तीर्थम् ॥ वशिष्ठसम्बन्धिन्याम ॥

वाशुर : । पुं० गर्दभे ॥ वाश्यते । वाशृ० । मन्दिवाशिमथिचतिचङ्काङ्किभ्यउरच् ॥

वाशुरा । स्त्री० रात्रौ ॥ वाश्यतेऽस्याम् । वाशृ० । मन्दिवाशी

ष्युरच् । टाप् ॥
वाश्र . । पु॰ दिवसे ॥ शकुनौ ॥
रासभे ॥ न॰ मन्दिरे ॥ चतुष्पथे ॥
वाश्यते । वाशृ॰ । स्फायितञ्चिव
ञ्चीत्यादिना - रक् ।
वाष्पः । पु॰ न॰ नेत्रजले । भाफङ्॰
भा॰ प्र॰ ॥ ऊष्मणि ॥ वायति ।
ओवैशोषणे॰ वातिवा । वागस्था
टौ । खष्पशिल्पशष्पवाष्परूपपर्प
तल्पा . इतिसाधु । बाधतेर्नेत
मितिवा । वाधतेः षोनिपातना
त् ॥ लोहे ॥ इतिमेदिनीकारः ॥
वाष्पक । पु॰ मारिषे । यथा । मा
रिषोवाष्पकोमार्ष श्वेतोरक्तश्चस
स्मृत . ॥
वाष्पका । स्त्री॰ हिङ्गुपत्र्याम् ॥
वाष्पायमाण . । त्रि॰ वाष्पमुद्वमति ॥
वाष्पिका । स्त्री॰ हिङ्गुपत्र्याम् । कार
व्याम् ॥ वाष्पमिव इवेप्रतिकृता
विति कन् ॥
वाष्पी । स्त्री॰ वाष्पिकायाम् ॥
वाष्पीका । स्त्री॰ त्वक्पत्र्याम् । वाष्पि
कायाम् । रांधुनी॰ इ॰ गौ॰ दे॰
भा॰ प्र॰ ॥ वाष्पमिव । कन् ।
टाप् । पृषोदरादि ॥
वास : । पु॰ वेश्मनि ॥ अवस्थाने ॥
वासके ॥ वसव्यच । वसनिवासे ।
वसंतिघञ् ॥ लघ्वादिविक
ल॰ । ८ ॰ ॥

वासकोष . । पु॰ वस्त्रपेटके ॥
वासक । पु॰ वैद्यमातरि । वृषे ।
अटरूषे । सिंहास्ये । वासा॰ वासू
टी॰ इ॰ भा॰ प्र॰ वृत्ते ॥ अस्य
गुणायथा । वासकोवातकृत् स्वर्य
कफपित्तास्रनाशन । तिक्तस्तुवर
कोहृद्योलघु . शीतस्तृडर्त्तिहृत्
॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया
पह , ॥ गानाङ्गविशेषे ॥ त्रि॰ गन्ध
कृति ॥ वासयति । ण्वुल ॥ यद्वा
। वस्त्र॰ आच्छादयति । वसआ
च्छादने । ण्वुल् ॥
वासकर्णी । स्त्री॰ यज्ञशालाया
म् ॥
वासकसज्जा । स्त्री॰ स्वीयादिनायिका
भेदे ॥ अद्यमेप्रियवासर . ॰ इत्य
निश्चित्य॰या॰ सुरतसामग्रींसज्जी
करोतिसा॰ वासकसज्जा । वास
कोवासरः ॥
वासका । स्त्री॰ वासकवृक्षे ॥
वासगृहम् । न॰ गर्भागारे । गृहमध्य
भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥
वासाय॰ वासस्य वागृहम् ॥
वासतेयी । स्त्री॰ रात्रौ ॥ वसनम्॰
वसति . वसतीसाधु : । पथ्यति
थिवसतिस्वपतेर्ढञ् ॥
वासनम् । न॰ धूपने ॥ वारिधान्या
म् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे
॥ ज्ञाने ॥ त्रि॰ वसनेनक्रीते ॥

शतज्ञानविंशतिकासहस्रवसनाद
या ॥

वासना । स्त्री० प्रत्याशायाम् ॥ ज्ञाने
॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारे
। दुर्गायाम् ॥ यथा । वसस्यहष्टा
सर्वेषुभूतेष्वन्तर्हितायच । चातुर्व
सनिबासितोवासनातेनसास्मृतेति
॥ स्मृतिहेतौ । संस्कारे । भाव
नायाम् ॥ धर्माधर्मरूपेजीवगत
संस्कारविशेषे ॥ वासनाद्विविधा ।
मलिना० शुद्धाच । शुद्धा०
दैवीसम्पत् ० शास्त्र संस्कारप्राब
ल्यात्तत्त्वज्ञानसाधनत्वेनैकरूपै
व । मलिनातु० त्रिविधा ।
लोकवासना० शास्त्रवासना० देह
वासनाचेति । सर्वेजनायथा ननि
न्दन्ति० तथैवाचरिष्यामीति०अश
क्यार्थाभिनिवेशो लोकवासना ।
तस्यास्त्वलोकमाराधयितुम्सम
र्थइतिन्यायेन०सम्पादयितुमशक्य
त्वात् ० पुरुषार्थानुपयोगित्वाच्चम
लिनत्वम् । शास्त्रवासनातु०त्रिवि
धा । पाठव्यसनम् ० बहुशास्त्रव्य
सनम् ० अनुष्ठानव्यसनञ्चेति ।
क्रमेण० भरद्वाजस्य० दुर्वाससो०
निदाघस्यचप्रसिद्धा । मलिनत्व
स्यास्या : क्लेशावहत्वात्०पुरुषार्था
नुपयोगित्वात् ० दर्पहेतुत्वात् ०
जन्महेतुत्वाच्च । देहवासनापित्रि

विधा । आत्मत्वभ्रान्ति ० गुणा
धानभ्रान्ति ० दोषापनयनभ्रान्ति
श्चेति । तत्रात्मत्वभ्रान्तिर्विरोच
नादिषुप्रसिद्धा० सार्वलौकिकी
। गुणाधान द्विविधम्० लौकिक०
शास्त्रीयञ्च । समीचीनशब्दादिवि
षयसम्पादनम् लौकिकम्० गङ्गा
स्नानशालग्रामतीर्थादिसम्पादनं
शास्त्रीयम् । दोषापनयनमपिद्वि
विधम् ० लौकिक ०शास्त्रीयञ्च ।
चिकित्सकोक्तैरौषधैर्व्याध्याद्यपन
यन लौकिकं० स्नानाचमनादिभि
रशौचाद्यपनयनंवैदिकम् एत
स्याश्चसर्वप्रकाराया मलिनत्वम्०
अप्रामाणिकत्वात्०अशक्यत्वात्०
पुरुषार्थानुपयोगित्वात्०पुनर्जन्म
हेतुत्वाच्चशास्त्रप्रसिद्धम् । तदेत
ल्लोकशास्त्रदेहवासनात्रयमविवेकि
नामुपादेयत्वेनप्रतिभासमानमपि
० विविदिषोर्वेदनोत्पत्तिविरोधि
त्वात्० विदुषोज्ञाननिष्ठाविरोधि
त्वाच्च०विवेकिभिर्हेयम् । तदेव
बाह्यविषयवासना० त्रिविधानिरू
पिता । अभ्यन्तरवासनातु०काम
क्रोधदम्भदर्पाद्यासुरसम्पद्रूपासर्वा
नर्थमूल मानसीवासनेत्युच्यते ।
तदेव बाह्याभ्यन्तर वासनाचतुष्टय
स्य०शुद्धवासनयाक्षय : सम्पाद
नीयोविवेकिभि : ॥ अत्रवशिष्ठ

॥ शुभाशुभाभ्यामार्गाभ्यांवहन्तीवा सनासरित् । पौरुषेणप्रयत्नेनयोज नीयाशुभेपथि ॥ अशुभेषुसमाविष्टं शुभेष्वेवावतारयेत् । स्वमनः पुरु षार्थेनबलिनांबलिनांवर ॥ अशुभा च्चालितं यातिशुभं तस्मादपीतरत् । अन्योऽस्तिचित्तशिशुवत् तस्मात् तच्चालयेद्बलात् ॥ अपिच । वास नानापरित्यागेयदिययत्नकरोष्यलम् । ततत्तेशिथिलतांयान्तिसर्वाधिव्या धयः क्षणात् ॥ पौरुषेणप्रयत्नेन बलात्सन्त्यज्यवासनाः । स्थिति बध्नासिचेत्तर्हिपदमासादयस्यल मिति ॥

वासनाक्षय । पुं॰ वासनानाशे ॥ यथा । पूर्वापरपरामर्शमन्तरेण॰ सहसोत्पद्यमानस्यक्रोधादिवृत्तिवि शेषस्य॰ हेतुश्चित्तगत संस्कार विशेषोवासना । पूर्वपूर्वाभ्यासेन॰ चित्तेवासमानत्वात् । तस्याः क्षयोनाम॰ विवेकजन्यायांचित्तप्र शमवासनायांदृढायांसत्यपिबाह्ये निमित्ते क्रोधाद्यनुत्पत्तिः । तत्र॰ तत्त्वज्ञानेसति॰ मिथ्याभूतेजगति ॰ नरविषाणादाविव॰ धीवृत्त्यनुद यात्॰ आत्मनश्चद्रष्टृत्वेन॰ पुनर्दृ श्यनुपयोगात॰ निरिन्धनाग्निवन् मनोनश्यति॰ नष्टेचमनसि॰ संस्का रोद्बोधकत्वाभावात् निमित्ताभावप्र तिपत्तौ॰ वासनाक्षीयते । एवं क्षीयमाणायांवासनायां॰ हेत्वभावे नक्रोधादिवृत्त्यनुदयात् मनोनश्य ति॰ नष्टेचमनसि॰ शमदमादिसम्प त्त्या॰ तत्त्वज्ञानमुदेति॰ एवमुत्पन्ने तत्त्वज्ञाने॰ रागद्वेषादिरूपावासना क्षीयते॰ क्षीणायाञ्चवासनायांप्रति बन्धाभावात् तत्त्वज्ञानोदय इति परस्परत्वदृशनीयम् ॥ वासनाया क्षय ॥

वासनाक्षयाभ्यास । पुं॰ वासनाक्ष यस्याभ्यासे ॥ यथा । इत्यासनभ र्वेषेनरागद्वेषादितानवे । रति घ्नेनोदितायासौब्रह्माभ्यासः सउ च्यते ॥

वासनात्याग : । पुं॰ पूर्वसंस्कारो पेक्षायाम् ॥ वासनायाः त्या गः ॥

वासनापरित्याग । पुं॰ मनोनियह णोपायविशेषे ॥ यस्तु॰ विद्यामदा दिदुर्वासनयापीड्यमानोनसाधून नुवर्तितुमुत्सहते॰ तस्यविवेकेन वासनापरित्यागएवोपायः ॥ वास नायाः परित्यागः ॥

वासनिक । पुं॰ निवासी । मार्गे निवासी ॥

वासन्त । पुं॰ परपुष्टे । कोकिले ॥ करभे । उष्ट्रे ॥ विटे ॥ मुद्गे ॥ कृष्णमुद्गे ॥ मदनवृक्षे ॥ त्रि॰ वस

ति ॥ वसन्तोद्भवे ॥ वसन्ते भव
सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥
वासन्तक । त्रि० वसन्तसम्बन्धि
नि ॥
वासन्तिक । पु० विदूषके । कैलि
किले । त्रि० वसन्तोत्सवे ॥
वसन्तसहचरिताध्ययनवति ॥ वस
न्तमधीते वेद वा । वसन्तादिभ्यष्ठ
क् ॥
वासन्ती । स्त्री० लताविशेषे । माध
व्याम् ॥ यूथ्याम् ॥ पाटलायाम्
॥ स्मरोत्सवे । नेवालयाम् ।
मधूत्सवे । गणिकायाम् ॥ पुष्प
लताविशेषे । प्रहसन्त्याम् । वसन्त
जायाम् । नवमल्लिकायाम् । नेवा
रा० निवारी० इ० प्र० पुष्पवृक्ष
विशेषे ॥ यथा । नेपाली कथिता
तज्ज्ञैः सप्तला नवमालिका ।
वासन्ती शीतला लघ्वी तिक्ता दोषत्रया
पहा । वसन्ते पुष्प्यति । का
लात् साधुपुष्प्यत् पच्यमानेष्वि
त्यण् ॥ शर्करीच्छन्दः १४ प्रभेदे
॥ तल्लक्षणं यथा । मात्तौ नौ गौ
यदि गदिता वासन्तीयम् । यथा ।
भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीते
श्रीखण्डाद्रेर्मृदुपवनैर्मन्दान्दो
ला । लीलालोलापल्लवविलसद्धस्तो
ल्लासैः कंसारातेर्नृत्यति सदृशी
वासन्तीयम् ॥ वासन्तीदुर्गापूजा

प्रमाणं यथा । चैत्रे मासि सिते पक्षे
सप्तम्यादिदिनत्रये । पूजयेद्विधिवद्दु
र्गां दशम्यान्तु विसर्जयेत् ॥ अपिच
। श्रीनारायण उवाच । पुरा स्तुता
सा गोलोके कृष्णेन परमात्मना ।
। सम्पूज्य मधुमासे च प्रीतेन रासम
ण्डले ॥ मधुकैटभयोर्युद्धे द्वितीये
विष्णुना पुरा । तत्रैव काले सा दुर्गा
ब्रह्मणा प्राणसङ्कटे ॥ इति ब्रह्मवैव
र्ते प्रकृतिखण्डे ६२ अध्याय ॥
वासयोग । पुं० चूर्णायाम् । पाट
वासादिशब्दे । गन्धचूर्णे ॥ वासि
सुगन्धीकरणे योगरूपायः ॥
वासर । पुं० न० अह्नि । दिने ॥
रागप्रभेदे ॥ वासयति वसतेर्ण्य
न्तात् । अर्त्तिकमिभ्रमीत्यादिनाऽ
रः ॥
वासरच्छविः । स्त्री० प्रकाशे । आत
पे ॥
वासवः । पुं० इन्द्रे । मरुत्वति ।
मघोनि । देवाधिपतौ । वसुदेवा
नामध्ये भगवतो विभूतिः ॥ वसवो
देवाः । वसुनि रत्नानि वा अस्य स
न्ति । ज्योत्स्नादित्वादण् ॥ वासि
रपत्य वा ॥ दैत्यानां वासवानि
वा अमितयस्य येषां ॥ मातृकुपसर्गे
कः । त्रि० वसुदेवताके । सास्य
देवतेत्यण् ॥ वसुमद्भाल्लक्षणि
कः प्रमाणण् वा ॥

वासवदत्ता । स्त्री॰ गद्यरूपे॰ आख्यायिकाग्रन्थविशेषे ॥ वासवदत्तामधिकृत्यकृता॰ आख्यायिका । वृद्धाच्छ . । तस्यलुक् ॥

वासवानुज . । पुं॰ उपेन्द्रे ॥ वासवस्यअनुजः ॥

वासवी । स्त्री॰ व्यासमातरि । सत्यवत्याम् । दासेय्याम् । उपरिचरस्यवसोर्वीर्यजातायाम् ॥ वसोराज्ञःअपत्यम् । अण् । ङीप् ॥ इन्द्राण्याम् ॥

वासवेयः । पुं॰ व्यासे । पाराशर्ये ॥ वासव्याअपत्यम् । स्त्रीभ्योढक् ॥

वास । न॰ वस्त्रे ॥ वस्त्रतेऽनेनवा॰ वस्ते शरीरंवा । वसआच्छादने । वसेर्णिदित्यसुन् ॥

वाससज्जा । स्त्री॰ नायिकाप्रभेदे ॥

वासा । स्त्री॰ अटरूषे । वासके ॥ वासायांविद्यमानायामाशायांजीवितस्यच । रक्तपित्तक्षयीकासीकिमर्थमवसीदति ॥ वासयति । वसनिवासे । णयन्तः । पचाद्यच् ॥

वासागारम् । न॰ भोगगृहे । कन्याटे ॥ वासस्यआगारम् ॥

वासिः । पुं॰ कुठारभेदे । छेदनसाधने । वसूला॰ इ॰ भा॰ ॥ वास्नादीनामिवकरणानांकाष्ठव्यापार्यत्वनियमादितिवैशेषिकाः ॥ वसति वस्तेवा । वसनिवासे॰ आच्छादनेवा । वसिवपियजीत्यादिना॰ इञ् ॥

वासिका । स्त्री॰ वासके । वासैव । स्वार्थेकन् । प्रत्ययस्थादितीत्वम ॥

वासितम् । न॰ रुते । खगाऽऽरावे ॥ ज्ञानमात्रे । त्रि॰ सुरभीकृते । धूपितव्यञ्जनादौ । भाविते ॥ वस्त्रच्छन्ने ॥ वासःसंजातम् । वासअपलादौ । चुरादि । क्त । वासउपशेवायामवा ॥ ख्याते ॥

वासिता । स्त्री॰ करिण्याम । नार्याम् ॥ वासयति । वसनिवासे॰ णयन्तः । वासितागामवा । क्त : । टाप् ॥

वासिनी । स्त्री॰ सितझिण्ट्याम् ॥

वासिष्ठः । पुं॰ वसिष्ठापत्ये ॥ अण्य । बहुत्वे॰ वसिष्ठाः ॥ न॰ रुधिरे ॥ उपपुराणविशेषे ॥ वसिष्ठकृतेयोगशास्त्रादौ ॥ त्रि॰ वसिष्ठसम्बन्धिनि ॥

वासी । स्त्री॰ तक्षण्याम् । वसूली॰ इ॰ भा॰ प्र॰ ॥

वासुः । पुं॰ विष्णौ । नारायणे ॥ वसतिसर्वभूतेषु जीवरूपेणात्मयामिरूपेणवा॰ वासयतिसर्वाणिभूतानिस्वात्मनिवा । वस॰ । बाहुलका

दुण् ॥ पुनर्वसौ ॥ विश्वरूपे ॥
वासुकिः । पुं॰ अहिराजे । सर्पराजे । सर्पजातिभेदानांमध्ये॰ भगवतोविभूतौ ॥ वसु रत्नं कमूर्द्धि यस्य । वसुकायतिवा । कैशब्दे । आतोनुपसर्गेकः । वसुकस्यापत्यम् । अतइञ् ॥
वासुकेयः । पुं॰ अहिराजे ॥
वासुकेयस्वसा । स्त्री॰ विषहर्याम् । मनसादेव्याम् ॥ आस्तीकस्यमुनेर्माताभगिनीवासुकेस्तथा । जरत्कारुमुने · पत्नी मनसादेविनमोस्तुते ॥
वासुदेवः । पुं॰ चित्ताधिष्ठातरि । विष्णौ । नारायणे ॥ वृष्णीनांमध्ये॰ वसुदेवपुत्रत्वेनप्रसिद्धे॰ऽर्जुनोपदेष्टरिभगवद्विभूतौ ॥ तस्येश्वरस्यापिविभूतित्वन्तु : पाठसंनद्धेपाचिन्तनार्थः । एवरामादावप्यवगन्तव्यम् ॥ वसुदेवस्यापत्यम् । ऋष्यन्धकेत्यण् ॥ यद्वा । वसतीति वासुः । वस॰ बाहुलकादुण् । वासुश्चासौदेवश्च ॥ विष्णुपुराणे नामव्युत्पत्तिर्यथा । सर्वत्रासौ समस्तञ्चवसत्यत्रेतिवैयतः । ततोसौ वासुदेवेतिविद्वद्भिः परिगीयते ॥ इतिविष्णुपुराणम् ॥ यद्वा । वस आच्छादयति॰ स्वमाययाआवृणोतिजगदितिवासुः । वसेरौणादिकउः । अन्येषामपिदृश्यतइतिव सुशब्दाकारस्यदीर्घः । बाहुलकादुण्प्रत्ययोवा । दीव्यतिप्रकाशतइति देवः वासुश्चासौदेवश्च ॥ छादयामिजगत्सर्वंभूत्वासूर्यइवांशुभिरितिमोक्षधर्मेभारतम् ॥ अवदत्रच स्वयथा । दृष्टिवत्तुकरेचक्रधस्तात्पद्ममेवच । वामेशङ्खगदाधस्ताद्वासुदेवस्यलक्षणमित्यग्निपुराणम् ॥
वासुदेवप्रियङ्करी । स्त्री॰ शतावर्याम् ॥ श्रीकृष्णप्रियकारिण्याम् ॥
वासुदेववरीयसी । स्त्री॰ शतावर्याम्
वासुपूज्य. । पुं॰ जिनविशेषे ॥
वासुभद्रः । पुं॰ श्रीकृष्णे ॥
वासुरा । स्त्री॰ वासितायाम् ॥ रात्रौ ॥ भुवि । वासतेयभूमौ ॥
वासूः । स्त्री॰ नाट्योक्त्याबालायाम् ॥ वाश्यते॰ शब्दे । वसिर्वान्ताद्बाहुलकादूः ॥
वासौकः । न॰ शयनाश्रये । वासमन्दिरे ॥
वास्तवम् । न॰ परमार्थभूते । परमात्मनि ॥ वस्त्वेव । स्वार्थेऽण् ॥ जीवे ॥ वस्तुनोंऽशत्वात् ॥ मायायाम ॥ वस्तुनः शक्तित्वात् ॥ जगति वस्तुनः कार्यत्वात् ॥
वास्तविकः । त्रि॰ परमार्थभूतेवस्तुनि ॥
वास्तव्यः । त्रि॰ वस्तरि । वासकर्त

रि ॥ वसति । वस० । वसेस्तव्यत्
कर्त्तरिणिच्चेतितव्यत् ॥ वासयो
ग्ये ॥ पु०वसती ॥

वास्तु । न० वास्तुकशाके । वास्तूके ॥
पुं०न०पुर्याम् ॥ सीम्नि ॥ सुरङ्गा-
याम ॥ गृहार्थभूमौ । वेश्मभूमौ ॥
वसन्त्यत्र । वसनिवासे । वसेस्तुन् ।
अगारेणिच्च ॥ पु० दैत्यविशेषे ॥
जलाशयगृहारामसेतुसङ्क्रमशा-
खिनाम् । देवतानाप्रतिष्ठायावा
स्तुदैत्य प्रपूजयेत् ॥ अनर्चयित्वा
यो वास्तु कुर्यात्कर्माणिमानव ।
विघ्नं तस्यचरेद्वास्तु, परिवारगणैः
सहेतिनिर्वाणतन्त्रम् ॥ अपिच ।
मारीभयेरोगभयेडाकिन्यादिभयेत
था । औत्पातिकेमत्यदोषेव्यालिर
क्षोभये पिचेति ॥ ध्यात्वाचपू
जयेद्वास्तु सर्वशान्तिस्ततो भवेदि-
त्युक्त ॥

वास्तुकम् । न० वास्तूकशाके । वथु
वा० दू० भा० प्र० ॥ यथास्यगुणा
। लघुदीर्घपत्रभेदाद्वास्तुकद्वितयं
मतम् । वास्तुकद्वितयस्वादुक्षारंपा
केकटूदितम ॥ दीपनंपाचनंरु
च्य लघुशुक्रबलप्रदम् । सरंप्लीहा
स्रपित्तार्श, क्रमिदोषत्रयापहम
॥ वास्तौभवम् । अध्यात्मादित्वा
ट्ठञ् । इससुक्तान्तात्क ॥

वास्तुकी । स्त्री० चिल्लीशाके । क्षुद्र
वास्तुके ॥

वास्तुपुरुष । पुं० वास्तुरक्षसि ॥ पू
र्वमासीन्महद्भूतंसर्वभूतभयङ्करम्
। तद्देवैर्निहतंभूमौसवास्तुपुरुष
स्मृत ॥

वास्तुविद्या । स्त्री० वास्तुविधानशा
स्त्रे ॥ पद्मवाराहीमन्यत्रच ॥

वास्तूकम् । न० वास्तुके । बथुआ०
इ०प्र०शाके ॥ वसतिर्देहेचिरम्०
गुणावाऽस्मिन्वसन्ति । वस० । उ
लूकादयश्चेतिसाधु ॥

वास्तेयम् । त्रि० वस्तिसदृशे ॥ वस्ति
रिव । वस्तेढञ् । ङीपि०वा-
स्तेयी ॥

वास्तोष्पतिः । पु० सुरपतौ । बला
रातौ । इन्द्रे ॥ वास्तोर्गृहस्य०
पतिरधिष्ठाता । वास्तोष्पतिगृहमे
धाच्छचेतिनिपातनादलुक्०षत्व
सूत्रेके । इयः परत्वात्०क-
स्कादिषुचेतिषत्वम ॥ देवे ॥

वास्तोष्पतीयम् । न० वास्तोष्पतये०
हविषि ॥ वास्तोष्पतिर्देवताऽस्य ।
द्यावापृथिवीत्यादिनाछ ॥

वास्तोष्पत्यम् । न० वास्तोष्पतीये ।
वास्तोष्पतिर्देवताऽस्य । द्यावापृ
थिवीत्यादिनायत् ॥

वास्त्र । त्रि० वस्त्रावृतरथे ॥ वस्त्रे
णपरिवृतोरथ परिवृतोरथइत्यण् ।

वास्य । त्रि० जलस्थे ॥

वाह्यः । त्रि॰ आच्छाद्ये ॥ वसनाच्छा
दने । कर्म्मणि ण्यत् ॥

वाहः । पुं॰ भुजे ॥ धान्यमानप्रभे
दे ॥ यथाहुः । पलं प्रकुञ्चकं मुष्टिः
कुडवस्तच्चतुष्टयम् । चत्वारः कु
डवाः प्रस्थश्चतुःप्रस्थमथाढकम् ।
अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प
उच्यते । सार्द्धसूर्पो भवेत् खारी द्वे
खार्य्यौ गोण्युदाहृता ॥ तामेव भा
रमानीयाद्वाहो भारचतुष्टयमिति
॥ अश्वे ॥ वृषे ॥ वायौ ॥ वहति
वहप्रापणे । हलश्चेति घञ् ॥ उ
ह्यतेऽनेन वा । वहिः कर्म्मणि
करणे वा घञ् । वाह्यते वा । ण्य
न्तात् अच् ॥ वाहयते । वोढुं प्र
यतते । अच् ॥ रथादौ ॥ त्रि॰ व
हनकर्त्तरि ॥

वाहकः । त्रि॰ वहनकर्त्तरि ॥ वह
ति । वह॰ ण्वुल् ॥

वाहद्विषन् । पुं॰ महिषे ॥ वाहानां
द्विषन् । वाहोऽश्वः द्विषन्यस्य वा । सम
मीतियोगविभागात्समासः ॥

वाहनम् । न॰ हस्त्यश्वरथादौ । याने
युग्ये । पत्रं । धोरणे ॥ देव्यास्ता
वाहनानि यथा । सिंहो ब्रह्मशिवे दे
वैश्यां प्रेतो वामन्मथौ । सितप्रेतो
महादेवे पङ्कजं च पङ्कजः ॥ ह
रिर्वैरस्तु निर्ज्ञेयो वाहनानि महौज
सः । स्वमूर्त्त्या वाहनत्वन्तु तेषां यस्मा

त्प्रयुज्यते ॥ तस्मान्मूर्त्त्यन्तरं कृत्वा
वाहनत्वं गतास्त्रयः । यस्मिन् य
स्मिन् महामाया प्रीणाति सततं शि
वा ॥ तेन तेन वहन्त्येतामासनान्यभ
वंस्त्रयः । इति कालिकापुराणम्
॥ वहत्यनेन । वह॰ । करणे ल्यु
ट् । वाहनमाहितादिति निपातना
द्दीर्घः ॥ यद्वा । वाहयति । वहिः
स्वार्थण्यन्तात् कर्त्तरि ल्युट् ॥ वा
हनाप्रेरणे ॥ यथा । वाहनप्रति
वाहनाभिघ्नप्रेरणा विदुः । रागाव
वल्गाकषापार्ष्णिप्रतोदरवभेदतः ॥
चतुर्थं भवने ॥

वाहनश्रेष्ठः । पुं॰ अश्वे । हये ॥

वाहना । स्त्री॰ निर्वाहयितृत्वे ॥ ण्या
सश्रन्थो युच् ॥

वाहवेग । पुं॰ पशुभेदे ॥

वाहाः । पुं॰ अनडुहि ॥ वहति ।
वह॰ । वहिहाधाञ्भ्यश्छन्दसीत्य
सुन् । णित् । श्रोणादृत्वान्न वाह
सा ॥

वाहसः । पुं॰ अजगरे । शयौ ।
शयालौ ॥ जलनिर्याणे ॥ सुनिष
ण्णके ॥ वहति । वह॰ । वहि
युभ्यां णिदित्यसच् । णित्वाद्वृद्धिः
॥ वाह गति अस्तीति वा । मोन्तक
र्म्मणि । धातोर्नुपेक्षितः ॥

वाहा । स्त्री॰ वाहौ । भुजे ॥ अजा
दित्वाट्टाप् ॥

वाहिकः । पुं० ढक्कायाम् ॥ गोवा
हे । शकटादौ ॥

वाहितः । त्रि० लङ्घिते ॥

वाहित्थम् । न० हस्तिकुम्भाधोभागे ॥
कुम्भोऽत्रवातकुम्भः । वाहित्थं वा
तकुम्भाधइतिभागुरिः । सचलला
टाधोभागः । अवश्यंवहति । वह०
। आवश्यकेणिनिः । सतिष्ठत्यत्र ।
घञर्थेकः । पृषोदरादित्वात्स
त्वम् ॥

वाहिनी । स्त्री० तरङ्गिण्याम् । शैव
लिन्याम् ॥ सेनायाम् ॥ सेनावि
शेषे । त्रिगुणगणेषु ॥ यथा । इभाः
८१ । रथाः८१ । अश्वाः २४३ ।
पदातयः ४०५ । एतत्परिमाण
परिमितायांसेनायामित्यर्थः ।
समस्तसङ्ख्या ८१० ॥ वहति ।
वह० । ग्रह्यादित्वात् णिनिः ॥
वाहाःसन्त्यस्यांवा । इनिः ॥

वाहिनीपतिः । पुं० सेनापतौ । से
नान्याम् ॥ समुद्रे ॥ वाहिन्याः
सेनायाः ० वाहिनीनांनदीनांवा
पतिः ॥

वाहीकः । पुं० देशविशेषे ॥ जर्ति
कजातौ जाट० जट० इ० भा०
प्र० जातौ ॥ यथोक्तंकर्णपर्वणि
२० अध्याये । तत्रत्व पुराव
त्ताः कथा, कश्चिद्० द्विजोत्तमः
। वाहीकदेशंमद्रांश्चकुत्सयन्वाक्य

मब्रवीत् ॥ पञ्चानांसिन्धुषष्ठाना
मन्तरयेसमाश्रिताः । तान्धर्म
बाह्यानशुचीन्वाहीकान्परिवर्ज
येत् ॥ शाकलंनामनगरमापगा
नामनिम्नगा । जर्तिकानामवाही
कास्तेषांवृत्तंसुनिन्दितमिति ॥
शतद्रुविपाशैरावतीवितस्ताचन्द्र
भागेतिपञ्चनद्यः सिन्धुः षष्ठः
तन्मध्यदेशोवाहीकइतिव्याख्याता
रः ॥ म्लेच्छप्रभेदे ॥ गवि ॥ वाह
के ॥ वहति । वह० । अलीकादि
त्वात्कीकन्० वहतेर्वृद्धिश्च ॥
त्रि० वाह्ये ॥ प्राग्दीव्यतीयेष्वर्थे
षु० ईकक्चेतिवार्तिकेन० ईकक्
० बहिषष्टिलोपश्च ॥ वाहीकाः
पुं० भूम्नि० देशविशेषे । टक्कनाम
सु ॥ वाहीकाष्टक्कनामानोवाह्ली
कावह्लिकाह्वयाइतिहेमचन्द्रः ॥

वाहुदारः । पुं० श्लेष्मातके । बहु
वारे ॥

वाह्यम् । न० याने । युग्ये । पत्ते ।
वाहने । शय्ये ॥ त्रि० वहनीये ।
बलीवर्दादौ ॥ बहिरर्थे ॥ बहिर्भ
वे ॥ वाहयितुंयोग्यः । वहेर्ण्यत्
॥ बहिर्भवोवा । बहिषष्टिलोपोय
ञ्चेतियञ् ॥

वाह्यप्रपञ्चः । पुं० आन्तरप्रपञ्चाति
रिक्ते ॥ सयथा । पृथिव्यादिपञ्च
भूतत्मकब्रह्माण्ड तदन्तर्भूतोप

र्ध्व्युपरिविद्यमानभूर्भुवः स्वर्महर्ज्जनस्तपः सत्यनामकाधोधोविद्यमानातलवितलसुतलतलातलमहातलरसातलपातालनामकचतुर्द्दशभुवनतन्निष्ठजरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामसमुदायो यथायोग्य विविधनाम रूपगुणधर्म्मशक्त्याश्रयो० बाह्यप्रपञ्च ॥ *

बाह्यमान : । त्रि० पृष्ठेनोह्यमाने ॥

बाह्यवृत्ति : । पुं० श्रोत्रवागादौ ॥

बाह्यास्तित्ववाद · । पुं० बौद्धैकदेशिनांवादे ॥ सयथा । समुदायोऽणुसम्भूतोबाह्योभूम्यापगादिकः । आन्तर : स्कन्धजश्चित्तचैत्यरूपश्च तौजगत् ॥ मृदम्बुवह्निवायूनां खरस्निग्धोष्णचञ्चला । चतुर्द्धाणव · पञ्चस्कन्धारूपादिभेदत : ॥ रूपशब्दादयस्तेषाव्यक्तिर्विज्ञानमुच्यते । वेदनासुखदु · खेस्त संज्ञाडित्थादिनामयत् ॥ संस्कारोवासनाचैवमुक्तलङ्घयालक्षम् । जगत्प्रत्यक्षत . सिद्धक्किमन्यपरिकल्पनैरिति ॥ नायवादोयुक्तिसह : । यत · । यथा । स्थिरचेतनराहित्यात्सपञ्चाचेतनत्वत · । नस्कन्धानामणूनाञ्चसमुदायोऽत्रयुज्यते ॥

बाह्येन्द्रियम् । न० श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेषु ॥ वाक्पाणिपादपायूपस्थेषु ॥

बाह्येन्द्रियविषयम् । न० श्रोत्रादिविषयेषु ॥ यथाहु । बुद्धीन्द्रियाणितेषांपञ्चविशेषाविशेषविषयाणि । वागभवतिशब्दविषयाशेषाणितुपञ्चविषयाणि ॥ अस्यार्थ · । तेषांदशानामिन्द्रियाणांमध्ये० पञ्च० विशेषाविशेषविषयाणि० विशेषा · ० स्थूला शब्दादय : शान्ताघोरामूढा: पृथिव्यादिरूपा ० अविशेषा · तन्मात्राणि० सूक्ष्मा : शब्दादय. । तन्मात्रग्रहणेन० स्थूलभूतभावमपाकरोति० विशेषाश्चअविशेषाश्चविशेषाविशेषा ० तएवविषयाथेषाबुद्धीन्द्रियाणातानि० तथोक्तानि । तत्रोर्द्ध्वरेतसांयोगिनाञ्चश्रोत्रम्० शब्दतन्मात्रविषयस्थूलशब्दविषयञ्च० अस्मदादीनान्तुस्थूलविषयमेव । एवत्वेषात्वक्० स्थूलसूक्ष्मस्पर्शविषया० अस्मदादीनान्तुस्थूलस्पर्शविषयैव । एवञ्चक्षुरादयोपि० तेषामस्मदादीनाञ्चरूपादिषुस्थूलेषुद्रष्टव्या एवकर्मेन्द्रियेषु मध्ये० वागभवतिशब्दविषया० स्थूलशब्दविषया० तद्धेतुत्वात्० नतुशब्दतन्मात्रस्यहेतु ० तस्याहङ्कारकार्य्यत्वेन० वागिन्द्रियेणसहैककारणत्वात् । शेषाणितुचत्वारि० पाणिपादपायूपस्थानि० पञ्चविषयाणि० पाण्य

याहार्याापटादीनापत्त्यशब्दा-
यात्मकत्वात् ॥

वह्लि : । पुं॰ अश्वयोनौदेशविशेषे ॥

वाह्लिक : । पुं॰ वाह्लीकदेशे ॥ वा
ह्लीकदेशोत्पन्नेऽश्वे ॥ न॰ धीरे ।
कुङ्कुमे ॥ हिङ्गुनि ॥ वह्लिकदेशे
भव : । कोपधादित्यण् ॥

वाह्लिज । पुं॰ वाह्लिदेशोत्पन्नेतु
रगे ॥

वाह्लीक : । पुं॰ बलख॰ हु॰ भा॰
प्र॰ देशविशेषे ॥ यथोक्तंशक्तिस
ङ्गमे । काम्बोजदेशमारभ्यमहा
म्लेच्छात्पूर्वके । वाह्लीकदेशोदे
वेशिअश्वोत्पत्तिपरायण ' ॥ तद्दे
शोत्पन्नाश्वे ॥ न॰ हिङ्गुनि ॥ धी
रे । कुङ्कुमे ॥ उच्यते॰ वहतिवा ।
वहप्रापणे । अलीकादयश्चेतिसा
धु ' ॥ यद्वा वह्लति । वह्लप्राधान्ये ।
बाहुलकादीकन् ॥ त्रि॰वह्लीकदेशो
द्भवे ॥ वह्लीकदेशेभव' कच्छादिभ्य
श्चेत्यण् ॥ पुं॰ गन्धर्वविशेषे ॥

वि । अ॰ निग्रहे ॥ नियोगे ॥ पदपूर
णे ॥ निश्चये ॥ सहने ॥ हेतौ ॥
अव्याप्तौ ॥ विनियोगे ॥ ईषदर्थे ॥
परिभवे ॥ शुद्धावलम्बने ॥ वि
वादे ॥ श्रेष्ठे ॥ अतीते ॥ विग
ते ॥ विशेषे ॥ गतौ ॥ आलस्ये ॥
पालने ॥ नानार्थे ॥ गते ॥ वि
रुद्धे ॥



वि । पुं॰ स्त्री॰ पक्षिणि । वातिगन्धनयो । वातेर्डिच्चेतीण् ॥

विश । त्रि॰ विंशते पूरणे विंशतितमे ॥ तस्यपूरणेडट् ॥

विशक : । त्रि॰ विंशतौ ॥ विंशत्या क्रीते ॥ विंशतित्रिंशद्भ्यांड्वुन्नसञ्ज्ञायाम् । तिविंशतेर्डितीति-लोप ॥

विंशति । स्त्री॰ सङ्ख्याविशेषे । एकाऽधिकोनविंशतौ ॥ सङ्ख्यार्थे॰एकद्विबहुवचनान्त । ।सङ्ख्येये॰एकवचनान्त । यथा । विंशत्याद्या ' सदैकत्वे सर्वा , सङ्ख्येयसङ्ख्ययो । सङ्ख्यार्थेद्विबहुत्वेस्तस्तासुचानवति स्त्रिय ॥ द्वौदशतौपरिमाणमस्य । पङ्क्तिविंशतीतिनिपातनात्॰प्रकृतेर्विन्भाव : शतिप्रत्ययश्च ॥

विंशतिक : । त्रि॰ विंशत्याक्रीतम् त्याद्यर्थे ॥ विंशतित्रिंशद्भ्यांड्वुन्नसञ्ज्ञायामित्यत्रयोगविभागात्कन् ॥

विंशतितम ' । त्रि॰ विंशे ॥ विंशते पूरण ॥ तस्यपूरणेडट् । विंशत्यादिभ्यस्तमडन्यतरस्याम्॰इतिडटस्तमडागम ॥

विंशी । पुं॰ विंशतौ ॥

विक्वम् । न॰ सद्य , प्रसूताया : गो' क्षीरे ॥ यथा । क्षीरसद्य प्रसूताया पेयूष : पालनविक्वमितिशब्द

चन्द्रिका ॥

विकङ्कट । पुं० गोक्षुरे ॥ इतिशब्दमाला ॥

विकङ्कत । पुं० स्वादुकण्टके । स्रुवावृक्षे । ग्रन्थिले । व्याघ्रपादि । कट्फले । बङ्ग च० कु० गौ० दे० भा० प्र० ॥ विकङ्कते । कङ्कगतौ । अतच्प्रत्ययः ॥ विकङ्कतफलंपक्वमधुरंसर्वदोषजित् ॥

विकङ्कता । स्त्री० अतिबलायाम् ॥

विकच । पुं० क्षपणे । केतुग्रहे ॥ त्रि० प्रकाशे । केशशून्ये । विकसिते । स्फुटिते ॥ कचति । कचबन्धने । पचाद्यच् ॥ विगतः कचोऽस्मात् ॥

विकचा । स्त्री० महाश्रावणिकायाम् ॥

विकच्छः । त्रि० कच्छरहिते । मुक्तकच्छे ॥

विकट । पुं० विस्फोटके । सोमकल्कवृक्षे ॥ त्रि० उरौ । विशाले । पृथुले । पृथौ । विकराले । रम्ये । सुन्दरे । दन्तुरे । कटाभावे । विकटति । कटे वर्षावरणयोः । पचाद्यच् ॥ यद्वा । सम्प्रोदश्चेतिचकाराद्वेरपिकटच् ॥

विकटा । स्त्री० बौद्धदेव्यन्तरे । मायादेव्याम् । मारीच्याम् । विमुखायाम् । वज्रकालिकायाम् । वज्रवाराह्याम् । गौर्याम् । पीवरायाम् ॥

विकटानन । पुं० राक्षसान्तरे ॥ त्रि० भीषणास्ये ॥

विकण्टक । पुं० विकङ्कते ॥ दुरालभायाम् ॥ विगताः कण्टका अस्य ॥

विकत्थन । न० मिथ्याश्लाघायाम् ॥ यथा । श्लाघाप्रशंसार्थवादः सातुमिथ्याविकत्थनम् । कु० हेमचन्द्र ॥ विकत्थ्यते । कत्थ श्लाघायाम् । भावेल्युट् । त्रि० तच्छीले ॥ ताच्छीलिकेषु वासरूपविधिर्नास्तीत्यस्य प्रायिकत्वात् वीकषलसेतिघिनुण्विषये चलनशब्देतियुच् ॥ स्वगुणश्लाघनादौ ॥

विकत्थी । त्रि० विकत्थनशीले ॥ विकत्थते । तच्छील । कत्थ० । वीकषलसकत्थस्रम्भः । इतिघिनुण् ॥

विकथा । स्त्री० अध्ययनेऽनुपयुक्तायां कथायां ॥

विकनीनिकः । त्रि० काणे ॥ विगताकनीनिकातारायस्मात् ॥

विकम्पितः । त्रि० विशेषेणकम्पविशिष्टे ॥

विकर । पुं० रोगे । विकीर्यते । कृ० । ऋदोरप् । त्रि० करशून्ये ॥

विकरालः । त्रि० भयानके ॥

विकर्णः । पुं० विदिशि । कोणे ।

हयोर्मध्ये ॥ यथा । श्रक्रादीनापु रेलिजनस्पृशर्य्यपपुरत्रयम् । विकर्णोहो॰विकर्णस्तस्तीन्वोयान्हेपुरेतथेतिविष्णुपुराणम ॥ दुर्योधनानुजे ॥ त्रि॰कर्णरहिते ॥

विकर्णिक । त्रि॰ कर्णिकारहिते ॥ पु॰भूमि॰सारस्वतदेशे ॥ यथा । काश्मीरःस्तुमाधुमता सारस्वता विकर्णिका । इतिहेमचन्द्रः ॥

विकर्णी । स्त्री॰ श्रयाङ्कुशेशरे॰उदारेऽन्नहारिणि ॥

विकर्त्तन । पुं॰ श्रर्के । मार्त्तण्डे । सूर्य्ये ॥ विकर्त्तयतिभक्तरागात् । कृतीछेदने । णिजन्तात्ल्युट् ॥ यद्वा । विशेषेणकर्त्तनं यस्य । विश्वकर्मणोयन्त्रोल्लीढत्वात् ॥ श्रर्कवृक्षे ॥

विकर्म्मकृत् । त्रि॰ निषिद्धकर्मकारिणि ॥

विकर्म्म । न॰ शास्त्रप्रतिषिद्धे॰व्यापारे ॥

विकर्म्मस्थ । त्रि॰ निषिद्धकृति । श्रीहदैहिकसकर्मणोविरोधीनियानिकर्माणि॰अगस्त्यागमनादीनितत्कारिणि ॥

विकर्ष । पु॰ । बाणे ॥ विकर्षणम् । कृष॰ । घञ् ॥ बाणे ॥

विकर्षणम् । न॰ श्राकर्षणे ॥

विकच । त्रि॰ जने ॥ विकसिते ॥ स्वभावछिन्ने । विगतकचास्य ॥ शिरोरुहे ॥

विकलपाणिक । पु॰ कुणी । कुणके । विकृतकरे ॥ विकलं पाणिर्यस्य ॥

विकला । स्त्री॰ ऋतुहीनायाम् ॥ राश्यादिकलाया षष्टितमांशे ॥

विकलाङ्ग । त्रि॰ स्वभावतोन्यूनाधिकाङ्गे । श्रपोगण्डे ॥ विकलमङ्गमस्य ॥

विकली । स्त्री॰ ऋतुहीनायाम् । गौरादित्वान्ङीष् ॥

विकल्प । पु॰ भ्रमे । भ्रान्तौ ॥ कल्पने ॥ सङ्कल्पविपर्य्ययै ॥ वितर्के ॥ संशये ॥ तुल्यबलरूपविरोधे विकल्पोभवति ॥ शब्दज्ञानानुपातीवस्तुशून्योविकल्पः ॥ विकल्पनम् । कृपूसामर्थ्ये । भावेघञ् ॥ विविधकल्पे ॥ विशिष्टकल्पे ॥

विकल्पक । त्रि॰ निर्मातरि ॥

विकल्पित । त्रि॰ विपरीतत्वेनकल्पिते ॥

विकषा । स्त्री॰ मांसरोहिण्याम् ॥ मञ्जिष्ठायाम् ॥ विकषति । कषहिंसायाम् । पचाद्यच् ॥

विकस । पु॰ सिन्धुनन्दने ॥ चन्द्रे ॥

विकसत् । त्रि॰ जृम्भमाणे ॥

विकसनम् । न० स्फुटने ॥

विकसा । स्त्री० मञ्जिष्ठायाम् ॥ विकसति । कसगतौ । अच् ॥

विकसित : । त्रि० उज्जृम्भिते । विनिद्रे । दलानामन्योन्यविश्लेषे । दलिते ॥ व्यकासीत् । कस० । गत्यर्थेतिक्त ॥

विकस्वर । त्रि० विकसनशीले । विकाशिनि ॥ विकसति । कस० । स्थेशभासपिसकसोवरच् ॥

विकस्वरा । स्त्री० रक्तपुनर्नवायाम् ॥

विकार । पुं० प्रकृतेरन्यथाभावे । विकृतौ ॥ स्वरूपपरित्यागेनरूपान्तरापत्तौ । कार्ये ॥ पञ्चमहाभूतान्येकादशेन्द्रियाणीतिषोडशकोगणे॥जन्मादिनाशान्तपरिणामे । सचयास्केनपठितोयथा। जायते॰अस्ति॰वर्द्धते॰विपरिणमते॰अपक्षीयते॰विनश्यतीतिषट्भावविकारा.वृत्ति ग्रान्तंज्योति कथमनुदितानस्तनिर्ग्रम्प्राणं निश्चेत्यत्तौव्रजतिविकृति निष्काल'निर्मंलञ्च । अश्वत्थोत्पलदलकमलमब्वोत्पलोनाप्रादुर्भाविभवतिनभस 'कोदृशोवाविकार ॥ विकरणम् । कृञ्० । घञ् । रुजि । रोगे ॥

विकारहीन । त्रि० निर्विकारे । जायतेऽस्तीत्यादिषड्भावविकारशून्ये ॥

विकारावर्त्ति । न० निर्गुणे॰भगवद्रूपे ॥ विकारेषुनवर्त्ततद्रूतितथा॥

विकारी । पुं० षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ विषमस्थ जगत्सर्वं विरोधिभयसम्प्रवम् । विकारीसर्वतोऽपायोममवाक्यन्तुनान्यथा ॥ ३३ ॥ त्रि० उपचयादिमति । परिणामिनि ॥ विकारोऽस्यास्ति । इनि : ॥ षड्भावविकारयुक्तेदेहवति ॥ तथाहि । ब्रह्मादिहरपर्यन्तादेहवन्तोविकारिण । किंविष्णु किंशिवोब्रह्मामघवाकिं बृहस्पति । देहवान्प्रभवत्येवविकारी । स युत । सदेतिव्यास ॥

विकार्य्य : । पुं० सांख्यमते॰ कामक्रोधादौ ॥ विक्रियते । डुकृञ्० । विभाषाकृवृषोरितिक्यपभावे॰ऋहलोर्ण्यत् । वृद्धि : । आदृगुणे ॥ विविध कार्यमस्य । सचत्रिविध : । तामसोराजससात्त्विकश्चेतिभेदात् । तत्रतामसाज्जडानिभूतसूक्ष्माणिजायन्ते॰ राजसाद्बहिर्मुखानिदशेन्द्रियाणि॰ सात्त्विकान्मनइन्द्रियदेवताश्चजायन्ते ॥

विकाल । पुं० दिनान्ते । सायाह्नि ॥ दैवपैत्र्यादिकर्मण्यनिसदृश : काल : ॥

विकालक : । पुं० विकाले ॥

विकालिका । स्त्री० ताम्राम् । मा

नरन् प्रायाम् । ताबी० द्र० गौ दे० भा० प्र० बाध्यं ॥

विकाश:। पुं० विजने । रहसि ॥ प्रकाशे । व्यक्ते ॥ विकाशनमस्मि न वा । काशृदीप्तौ । भावेहलश्चे त्यधिकरणेवाघञ् ॥ यद्वा । विक शनमथवा कशशब्दे । पूर्ववद्घ ञ् ॥ विजृम्भणे ॥

विकाशनम् । न० विकाशे ॥

विकाशी । त्रि० विकस्वरे । विकास शीले ॥ विकाशोऽस्यास्ति । अतइ नि • ॥

विकाषी । त्रि० विकाशिनि ॥ वीक षेतिघिनुण् ॥

विकास.। पुं० विकस्वरे ॥

विकासी । त्रि० विकस्वरे । विकसति । कसगतौ ॥ वीकषेतिघिनुण् । पृषोदरादि . ॥ विकासोऽस्यास्ति वा । अतइनि . ॥

विकिर. पुं० खगे । पक्षिणि । वि किरति । कृविक्षेपे । इगुपधेति क ॥ कूपे ॥ पूजासमयेविघ्नो त्सारणार्थंक्षेपणीयलाजादौ । य था । लाजाचन्दनसिद्धार्थभस्मदू र्वांकुशाक्षता: । विकिराइतिस न्दिष्टा: सर्वविघ्नौघनाशका . ॥ चर्मनदग्धादीनांपिण्डदाने ॥ न० जलविशेषे ॥ यथा । नद्यादिनिक टे भूमिर्यभवेद्वालुकामयी । उद्धा

व्यतीततोयस्तु तज्जल विकिरं विदु ॥ विकिरंशीतलस्वच्छनिर्दोषं ल घुचस्मृतम् । तुवरं स्वादुपित्तघ्न मनाक्कफकरं स्मृतम् ॥

विकीरण:। पुं० रक्तार्कवृक्षे ॥ वि किरति । कृविक्षेपे । कृवृभृतिक्यु न् । इत्वरपरत्वम् । बाहुलकाद्दी र्घ: ॥ विक्षेपणे । अर्करणा० द्र० भा० ॥ विहिंसने । विज्ञाने ॥

विकीर्ण. । त्रि० विस्तीर्णे । लुलिते कीर्णे । विक्षिप्ते । विखराइति ख्याते ॥ विललापविकीर्णमूर्द्धजे ति० कुमारसम्भव • ॥ विकीर्यते स्म । कृ० । क्त • ॥

विकीर्णरोम । न० स्थौणेये । कुकु रौंधा० द्र० भा० प्र० चोषधौ ॥ विकीर्णानिरोमाण्यस्मिन् ॥

विकीर्णसञ्ज्ञम् । न० स्थौणेये ॥ *

विकुण्ठित । त्रि • कुण्ठीकृते ॥

विकुर्वाण । त्रि० हर्षमाणे । हृष्ट चित्ते ॥ विकुरुते । करोतेस्तानश् ० शानज्वा ॥ विक्रियमाणे ॥ वि कृते ॥

विकुस्र । पुं० चन्द्रे ॥ विकसति । वौकसेरितिरक • उस्रोपधाया ॥

विकूणिका । स्त्री० नासिकायाम् ।

विकूननम् । न० आश्यगतविकारे । विरावना० कृटक्षढावना० क्षील ना० इत्यादिभाषाप्रसिद्धे ॥

विकृतम् । न० विकारे । रामचन्द्र यथा । कौशिकेयादिभिर्यज्ञोच्यते स्वविवर्जितम् । क्षयत्येचेष्टयं वेद विकृतं तद्विदुर्बुधा ॥ पु० वत्सर विशेषे ॥ तत्फलंयथा । सर्वा ज्जा प्रणीड्यन्ते व्याधि ... क सुजायते । शिरोवक्षोदरे गात्रपा पादे विविकृतेजना ॥ ७४ ॥ त्रि० बीभत्से ॥ रोगिते ॥ असंस्कृते ॥ बीभत्साख्यरसान्विते ॥ विका रणा विकृतम्० जुगुप्साप्रभवत्वात् ॥ विक्रियतेस्मेत्यर्था । क्त ॥

विकृतिः । स्त्री० विकारे ॥ रुजि ॥ डिम्बे ॥ यज्ञसमग्राङ्गोपदेश सा विकृतिरिति मीमांसकाः० यथा सौर्यादि । तत्प्रकृतिपथाऽङ्गाना मतिदेशेनापिप्राप्तत्वात् ॥ मद्यादौ ॥ विकरणम् । कृञ : क्तिन् ॥

विकृष्टः । त्रि० दीर्घे ॥ आकृष्टे ॥ विकृष्यतेस्म । कृषविलेखने । क्तः॥

विकेश । त्रि० केशरहिते ॥

विकेशी । स्त्री० केशशून्यायाम् ॥ पटवस्त्रेमि ॥

विकोक । पुं० वृकासुरपुत्रे ॥

विकोष । त्रि० कोषरहिते । निष्कोषे ॥

विक्क । पुं० करिशावके । कलभे ॥

विक्रमः । पुं० पादविन्यासे ॥ आक्रमे । क्रान्तिमात्रे ॥ शक्तिसम्पत्तौ । यथा । प्रमत्तं व्यभियुक्तेषु दैवेनप्रहतेषु च । विक्रमास्तत्रसिद्ध्यन्ति परीक्ष्यविधिनाकृता ॥ कृतियुद्धकाण्डे रावणं प्रति विभीषणवाक्यम् ॥ शौर्यातिशये ॥ चरणे ॥ शिक्षाभ्यासप्रयोगकौशले ॥ लग्नात्तृतीयभवने ॥ प्रभवादिषु चतुर्दशवर्षे ॥ यथा । जायन्ते सर्वशस्यानिमेदिनीनिरुपद्रवा । सर्वमधुगव्यसमहार्घ्यं विक्रमेप्रिये ॥ विक्रमादित्यभूपतौ ॥ विक्रमणम् ० क्रमेणधा । क्रमुपादविक्षेपे । घञ् ॥ त्रि० क्रमात् च्युते ॥

विक्रमादित्यः । पुं० स्वनामख्यातप्रसिद्धे नृपतिश्रेष्ठे । साहसाङ्के । शकारौ ॥ विक्रमेणादित्यइव ॥ अथविक्रमार्कवर्णनम् सन्दधाति- ज्योतिर्विदाभरणसमाप्तौ श्रीकालिदासः । वर्षे श्रुतिस्मृतिविचारविवेकरम्ये श्रीभारते खधृतिसम्मित१८० देशपीठे । मत्तोऽधुनाकृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत् ॥ प्रथमनृपसभाया पण्डितवर्गं वर्णयति । शङ्कुसुवाग्वररुचिर्मणिरंशुदत्तो जिष्णुस्त्रिलोचनहरीघटखर्पराख्यः । अन्येपिसन्तिकवयोऽमरसिंहपूर्वा यस्यैवविक्रमनृपस्य सभासदोऽमी ॥

सप्तीवराहमिहिर श्रुतसेननामाश्री
बादरायणमणित्थकुमारसिंहा .
। श्रीविक्रमार्कनृपस सदिसन्ति
चैतेश्रीकालतन्त्रकवयस्त्वपरे मद्दा-
द्या ॥ धन्वन्तरि क्षपणकोऽमर
सिंहशङ्कु वेतालभट्टघटखर्परका-
लिदासा । ख्यातोवराहमिहिरो
नृपते सभायांरत्नानिवैवररुचिर्न
वविक्रमस्य । अथपरिजनान् वर्ण
यति । अष्टौयस्यशतानिमण्डलध
राधीशा . सभायामदस्यु सस
तृपरिणाङ्ककोटिसुभटा ' सत्पण्डि
ता षोडश । दैवज्ञादशचणमि
ता॰भिषजो॰भट्टा॰स्तथा॰ठङ्कि
नो॰वैदज्ञारसचन्द्रमा १६ विजयते
श्रीविक्रम ' सोऽधिभू ॥ अथास्य
सैन्यवर्णयति । यस्याष्टादशयोज
नानि कटके॰पादातिकोटित्रयम्
३००००००० वाहानामयुतायुतम्
१००००००० च॰नवतीस्त्रिघ्ना । ह
स्ति २४३०० ह'स्तिनाम । नौकाल
क्षचतुष्टय • विजयिनोयस्यप्रयाणे
भवेत्•सोय विक्रमभूपतिर्विजयते•
नान्योधरित्रीबली । अथास्यशाकप्र
वृत्ति दर्शयति । येनास्मिन वसुधा
तलेधनगणान् सर्वादिश , सङ्गरे
त्वापद्मनवप्रमान् ५५५५५५५५५
कलियुगेशाकप्रवृत्ति कृता ।
श्रीमद्विक्रमभूभुजाप्रतिदिन मुक्ता



मणिस्वर्ण गौमग्रोभोज्यपयस्त्रीजेनवि
हितोधर्म सुवर्णानन ॥ अथा
स्यदिग्विजयमाह । उद्यमद्रविडद्रु
मैकपरशुलाटाटवोपावकोमल्लाद्रुम
भुजङ्गराजगरुडोगौडाब्धिकुम्भोद्भव
। गर्ज्जकुञ्जरराजसिंह गह्वरधीरा
न्धकारार्यमाकाम्बोजाम्बुजचन्द्र
माविजयतेश्रीविक्रमार्कोनृप ' ॥
अथास्यप्रभुत्वादिगुणान् वर्णयति
। येनाप्ययमहोधरायविषयेदुर्गाख्य
सद्धान्यहीनोत्त्वायानिनतोक्षताश्च
दधिपाद्त्तानितेषापुन । इन्द्रा
श्रोऽध्यमरद्रुमस्मरसुरध्माभृद्गुणैर्ना
त्मस'श्रीमद्विक्रमभूभृताखलजनाम्भो
जेदुनामण्डले ॥ अस्यपुरीवर्णय
ति । यद्राजधान्युज्जयिनीमहापुरी
सदामहाकालमहेशयोगिनी । स
माश्रितप्राप्यपवर्गदायिनी श्रीवि
क्रमार्कोऽवनिपोजयत्यपि ॥ गौरू
मदेशाधिपति शकेश्वर जित्वाहवे
त्वोज्जयिनीमहाहवे । आनीयस
भ्राम्यसुमोचतन्नृहेश्रीविक्रमार्क :
समसह्यविक्रम ॥ तस्मिन् सदा
विक्रममेदिनीशेविराजमानेसमव
न्तिकायाम् । सर्वप्रजामण्डलसौ
ख्यसम्पद्बभूवसर्वत्रचवेदकर्म ॥ श
ङ्क्वादिपण्डितवरा कवयस्त्वने
केज्योतिर्विदः सममवश्चवराहपू-
र्वा. । श्रीविक्रमार्कनृपस सदिमा

रक्तत्वेनारोपितः तेनतादृशकथा
विच्छेदोविक्षेपः । तेनराजपुरुषा
दिभिराकारणं गृहजनादिभिर्वा
कस्मिंश्चित्कार्यार्थमाकारणं स्वगृह
दाहादिकं पश्यतोगमनेवा शिरो
रोगादिनाप्रतिबन्धेवा नविक्षे
पः । ननुकार्यव्यासङ्गेनावर्त्त
कृतः सभाक्षोभादिनाचेत् अन
नुभाषणमेव उत्तराप्रतिपत्त्याचे
त् अप्रतिभैवेतिचेन्न । उत्तरान्त
राभावात् । वस्तुतस्तूत्तरस्फू
र्त्तावपि तदनुबन्धसत्त्वात्कथावि
च्छेदपत्ताशात । यथाहितिः सक
र्त्तृकाकार्यस्त्वादित्युक्ते अङ्कुरे
व्यभिचारस्तावन्मयोद्भाव्यः तच्च
पदर्थपक्षसमत्वं ब्रूयात् तदाने
किमुत्तरम् यतोऽयमर्थावलि
खितमयाचविचारितम् किन्त्व
कार्यमुद्भाव्यगृहेगत्वाहशयते इ
त्थं नविक्षेपसम्भवादिति ॥ वि
क्षेपणम् । क्षिप । भावे घञ् ॥
विक्षेपशक्तिः । स्त्री॰ अज्ञानसाम
र्थ्यं । मायाशक्तिः ॥ यथा रज्ज्व
ज्ञानं स्वावृतरज्जौ स्वशक्त्या
सर्पादिकमुद्भावयति । एवम् अ
ज्ञानमपि स्वावृतात्मनि तथा
विक्षेपशक्त्या आकाशादिप्रपञ्च
मुद्भावयतितादृशसामर्थ्यम् । वि
क्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तंजग

तसृजेदित्युक्तेः । विविधस्वरूपेण
भवनविक्षेपशक्तिः ॥
विक्षेपसहभुव । पुं॰ अन्तरायविशे
षः ॥ तेचयोगसूत्रे यद्दर्शिताः ।
यथा । दुःखदौर्मनस्याङ्गमेजयत्वश्वा
सप्रश्वासाविक्षेपसहभुव इति ॥
अस्यार्थः । कुतश्चिन्निमित्तादुत्प
न्नेषु विक्षेपेषु एते दुःखादय
प्रवर्त्तन्ते । तत्र दुःखंचित्तस्य राज
स परिणामोबाधनालक्षणः य
दाघात्प्राणिनस्तदुपघाताय प्रवर्त्त
न्ते । दौर्मनस्यंबाह्याभ्यन्तरैः
कारणैर्मनसोदौःस्थ्यम् । अङ्ग
मेजयत्वं सर्वाङ्गीणोवेपथुः आसनमन
स्थैर्यस्यबाधकः । प्राणोयद्बाह्यंवा
युमाचामतिसश्वासः । यत्कौ
ष्ठ्यंवायुं निःश्वसितिसप्रश्वासः
। तएतेविक्षेपैः सहप्रवर्त्तमाना
यथोदिताभ्यासवैराग्याभ्यांनिरोद्ध
व्याः समाहितचित्तस्यैतेनभवन्ति
विक्षिप्तचित्तस्यैवभवन्तीतिविक्षे
पसहभुवोऽन्तरायाएव । एतेऽभ्या
सवैराग्याभ्यांनिरोद्धव्याः ईश्वर
प्रणिधानेनवा ॥
विखः । त्रि॰ विगतनासिके ।
विखना । पुं॰ स्रष्टरि । ब्रह्मणि ॥
विखुः । त्रि॰ गतनासिके ॥ विगता
नासिकाऽस्य । खुखौचवक्तव्याविति
तिनासिकायाः खुः ॥

विखुर । पु॰ राक्षसे ॥ चौरे ॥

विखिद । त्रि॰ गतमोहे ॥ विगत खेदोस्य ॥

विख्य । त्रि॰ विखौ ॥ विगतानासिकाऽस्य । ख्यशब्दे तिनासिकाया ख्यादेशोऽच प्रत्ययश्च ॥

विख्यात . त्रि॰ प्रसिद्धे । ख्याप्ता पन्न ॥ विपूर्वात्ख्याते क्तः ॥

विख्याति । स्त्री॰ अतिप्रसिद्धौ ॥ विख्यानम् । ख्याप्रकथने । स्त्रियां क्तिन् ॥

विख्यापनम् । न॰ व्याख्याने ॥ प्रकाशने

विखु । त्रि॰ विख्य ॥ विगतानासिकास्य । खुखौचवक्तव्याविति नासिकायाः खु ॥

विगणनम् । न॰ ऋणमुक्तौ । ऋणादिनिर्यातने ॥

विगत .। त्रि॰ निष्प्रभे । अरोके । प्रभारहिते ॥ बीते । गते ॥ विगच्छतिस्म । गम्लृ गतौ । गत्यर्थेति क्तः ॥ च्युते ॥

विगतकल्मष . । त्रि॰ निर्गतमले । निर्मले । स्वच्छे ॥ संसारहेतुधर्माधर्मरहिते ॥

विगतक्लम । त्रि॰ शरीरक्लमशरहिते ॥

विगतज्वर . त्रि॰ ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहिते ॥ ज्वरहीने ॥

विगतशोक । त्रि॰ निःशोके । शोकरहिते ॥ विगताशोकोयस्य ॥

विगतस्पृह : । त्रि॰ देहजीवितभोगेष्वपिशाङ्कारहिते । सर्वद्रव्येषुदोषदर्शनेन॰नित्यबोधपरमानन्दरूपमोक्षगुणदर्शनेनच॰सर्वतोविरक्ते ॥ स्पृहारहिते ॥ विगतास्पृहायस्य ॥

विगतार्त्तवा । स्त्री॰ निष्कलायाम् । पञ्चपञ्चाशदब्दे भ्योनिवृत्तरजसिस्त्रियाम् ॥ विगत आर्त्तवरजोऽस्या ॥

विगन्धक । पु॰ इङ्गुद्याम् ॥

विगन्धिका । स्त्री॰ हबुषायाम् ॥

विगम :। पु॰ नाशे ॥ यथा । एकदलिङ्गनोविद्याग्निनस्तु॰यदुपाध्यनवच्छिन्नस्यब्रह्मणोविशुद्धरूपता॰ताद्दशो-पाधिविगमएवकैवल्यम् । चिद्लिङ्गनस्तु॰आनन्दमयपरमात्मनि॰जीवात्मनोलयोमोक्षः । जीवात्मपरमात्मनोरभेदेपि॰उपाधिविशेषविशिष्टस्यात्मनोजीवरूपतया॰तस्यौपाधिक परमात्मभेद । इतिभेदकोपाधिविगमएवजीवस्यपरमात्मनिलय . । यथाघटाकाशस्यघटविगमएवशुद्धाकाशेतस्यलयः । लिङ्गशरीरावच्छिन्नस्यैवात्मनोजीवभाव . इतिलिङ्गशरीरनाश

एवपथ्यं वसितीमोच : । इतिमु
क्तिवाद . ॥

विगर्हणम् । न० विगर्हणायाम् ॥

विगर्हणा । स्त्री० निन्दने । भत्सनायाम्

विगर्हित: । त्रि० जुगुप्सिते । निन्दिते ॥ निषिद्धे ॥

विगलित । त्रि० सुखलिते ॥ यथा । विगलितवसन परिहृतवसन घटय जघनमपिधानम् । किशलयशयने पङ्कजनयनेनिधिमिवहर्षनिधानम् ॥

विगाढ । त्रि० प्रविष्टे ॥ विगाहते स्म । गाहूविलोडने । क्त : ॥ कठिने ॥ प्रवृद्धे ॥ स्नाते । अवगाहिते ॥

विगाथा । स्त्री० मात्राच्छन्दप्रभेदे । यथा । गाथाद्वितीयतुर्यौ •पादौभवतोयदाचविपरीतौ । सेयं भवतिविगाथा •फणिनायकपिङ्गलेनोक्ता॥ यथा । छन्दारण्यविहारी•बल्लवनारीमनोहारी । गोपालीकरताली•नर्त्तनशालीपुनातुवनमाली ॥

विगानम् । न० निन्दायाम् ॥ परदेवते ॥ विरुद्धगानम् ॥

विगाहनम् । न० स्नाने ॥

विगाह्यमान : । त्रि० प्रविश्यमाने ॥ विगाहते । गाहू० । शानच् । मुक ॥

विगीत । त्रि० निन्दिते ॥

विगुण । त्रि० गुणवैपरीत्यविशिष्टे ॥ यथा । यथामनोमनावष्टने च मातातथामम । विगुणेष्वपिपुत्रेषुनमाताविगुणाभवेत् ॥ अङ्गविकले ॥

विगूढ । त्रि० गर्हिते ॥ गुप्ते ॥

विगृह्यवाद । पुं० जयपराजयप्रधानेजल्पन्याये ॥

विग्न । त्रि० भीते ॥

विग्र । त्रि० गतनासिके ॥ विगतानासिकाऽस्य । वेर्ग्रोवक्तव्य . । प्रादिभ्योधातुजस्येतिसमास . ॥

विग्रह : । पुं० काये । शरीरे ॥ विभागे ॥ विस्तारे ॥ समासवाक्ये । विस्तरे । व्युत्पत्तिबोधकवाक्ये ॥ पुं० न० राज्ञांगुणभेदे । वैरे । रणे । युद्धे । कलहे । सङ्ग्रामे ॥ समज्यायोभ्यांसन्दधीत० हीनेनविगृह्णीयात् । यथा । बालोवृद्धोदीर्घरोगी तथाज्ञातिबहिष्कृत : भीरुकोभीरुकजनोलुब्धोलुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैवविषयेष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्चदेवब्राह्मणनिन्दक : ॥ दैवोपहतश्चैवदैवचिन्तकएवच । दुर्भिक्षव्यसनोपेतोबलव्यसनसयुत . ॥ अदेशस्थोबहुरिपुर्युक्तःकालविपर्यय : । सत्यधर्मव्यपेतश्चविंशति पुरुषा

भमा: ॥ एते: सन्धिं न कुर्वीत विगृह्णीयात् केवलम् वृतिकामन्द कीर्तिः ॥ विरुद्ध विविध वा॰ ग्रहणम् । ग्रह॰ । ग्रहादित्वात् अप् ॥ विविधैर्व्याधिभिर्गृह्यतेवा । अप् ॥ विविध सुखदुःखादिगृह्णाति वा । अच् ॥ त्रि॰ ग्रहयुक्ते ॥

विग्रहावरम् । न॰ पृष्ठे ॥

विग्लापनम् । न॰ श्रमहेतौ ॥ विग्लापयति । ग्लै॰ । ल्युट् ॥

विघटनम् । न॰ विरुद्धनिर्माणे ॥

विघटिका । स्त्री॰ पले ॥

विघटितः । त्रि॰ नाशिते ॥

विघटी । स्त्री॰ पले ॥

विघट्टनम् । न॰ सङ्घर्षे ॥

विघट्टितः । त्रि॰ अभिहते ॥ विशेषेणाचालिते ॥ विपूर्वात् ॰ घट्टतेः क्तः ॥ कृट् ॥

विघसः । पु॰ भुक्तशेषे । अतिथिगुर्वादिभुक्तावशेषे ॥ विशिष्टं घस्यते । अद॰ उपसर्गेऽदः घसादेशः अप् । घञपो सेतिघसल ॥ आहारे ॥ न॰ सिक्थके ॥

विघसाशी । त्रि॰ अतिथिगुर्वादिभुक्तशेषभुज ॥ विघसं भुक्तशेषमश्नाति । अश॰ । णिनि ॥ विघसाशीभवेन्नित्य नित्य वाऽमृतभोजनः । विघसोभुक्तशेषन्तु यज्ञशेष तथामृतम् ॥

विघातः । पुं॰ मारणे ॥ हनन घात । विशिष्टोघात ॥ व्याघाते । आघाते ॥

विघाती । त्रि॰ निवारके ॥ घातके ॥

विघूर्णम् । त्रि॰ भ्रमति ॥ घूर्णच् घूर्णभ्रमणे । अनुदात्तेत्वप्रयुक्तात्मनेपद॰ श्चिडोदित्त्वेनाविकृत्वज्ञापनात् परस्मैपदम् ॥ ॥

विघ्नः । पु॰ अन्तराये । प्रत्यूहे । समाप्तिप्रतिबन्धकादृष्टे ॥ विहननम्॰ विघ्नन्तिमनांस्यस्मिन्वा॰ विहन्यतेऽनेनवा । हन॰ । घञर्थे कः ॥

विघ्नकारी । त्रि॰ घोरदर्शने ॥ विघातिनि । विघातस्यकारके ॥

विघ्नचतुष्टयम् । न॰ लयविक्षेपकषायरसास्वादलक्षणं चतुष्टयम् ॥ निर्विकल्पसमाधौक्रियमाणेचैतेचत्वारोविघ्नाः सम्भवन्ति ॥ विघ्नानाचतुष्टयम् ॥

विघ्ननायकः । पु॰ गणेशे । विघ्नानां नायकः ॥

विघ्ननाशकः । पुं॰ विनायके । गणेशे ॥ विघ्नानांनाशकः ॥

विघ्ननाशनः । पु॰ गणेशे ॥

विघ्नराजः । पुं॰ विनायके । गणाधिपे ॥ विघ्नानांराजा । राजाह॰ सखिभ्यष्टच् ॥

विघ्नविनायकः । पुं॰ श्रीगणेशे ॥

विचारोऽथ समाप्यते ॥ त्रि॰ वि
चारोत्पन्न । विचाराज्जाते ॥ त-
मी॰ । ड ॥

विचारणम् । न॰ विचारे ॥ चरस ग
श्येष्वादि ' युच् ॥

विचारणा । स्त्री॰ विचारे । चर्चाया
म् ॥ मीमांसाशास्त्रे ॥ चरस ग्रये॰
चरादि । ण्यासश्रन्थोयुच् ।
टाप् ॥

विचारणीयम् । न॰ शास्त्रे ॥ त्रि॰
विचार्ये ॥

विचारित . । त्रि॰ कृतविचारे । वि
न्न । विर्ण ॥ विचार्यतेस्म । चर
गतौ॰ण्यन्त । क्त ॥ विचार '
सञ्जातोस्यवा । तारकादित्वादि
तच् ॥

विचार्य्यः । त्रि॰ विचारयोग्ये । वि
चारितव्ये । विचारणीये ॥

विचार्य्यमाण . । त्रि॰ चिन्त्यमाने ॥
ज्ञान स्ये यतथाज्ञानाञ्चितय भाति
मायया । विचार्यमाणे चितयेषा
तर्कैर्वैकोऽवशिष्यतइतिश्रीमच्छनि
र्णीतत्वम् ॥

विचाल : । पुं॰ न॰ चन्तरे । चभ्यन्त
रे । चन्तराले ॥ रूपान्तरापत्तौ ॥
यथापयसोदध्यादिरूपताविचाल ॥

विचि : । पुं॰ स्त्री॰ चल्पतरङ्गे ॥

विचिकित्सा । स्त्री॰ संशये । वितर्का
मैकाकोत्थयगादिज्ञाने ॥ विचिकि
त्सनम् । कितसग्रये । गुप तिज्
कित्सा . सन् । तत ' चप्रत्ययो
दित्यकारप्रत्यय । टाप् ॥

विचिकित्सित : । त्रि॰ संशयिते ।
सन्दिग्धे ॥ विचिकित्सासञ्जाता
स्य । तारकादित्वादितच् ॥

विचिकिल । पुं॰ त्रिपुटायांमल्लिका
याम् ॥ दमनके । श॰र॰चन्द्र. ॥

विचित '। त्रि॰ चन्विष्टे ॥

विचित्त । त्रि॰ उन्मत्ते ॥

विचित्रम् । न॰ कर्बुरवर्णे ॥ पुं॰
न॰चलङ्कारविशेषे ॥ विचित्र स्रवि
रुद्धफलस्याश्यात्समुद्यमइतिल
क्षणात् ॥ त्रि॰विचित्रवर्णयुते ॥
नानाविधे ॥

विचित्रक : । पुं॰ भूर्जद्रुमे ॥

विचित्रदेह '। पुं॰ मेघे ॥ त्रि॰चाश्च
र्यशरीरे । नानावर्णदेहे ॥

विचित्रवीर्य्य '। पुं॰ चन्द्रवंशीयनृ
पतिविशेषे ॥

विचित्रवीर्य्यसू '। स्त्री॰ सत्यवत्या
म् ॥

विचित्रा । स्त्री॰ मृगेर्वारौ ॥ चित्रा
ख्यनागाङ्गाम् ॥

विचित्राङ्ग : । पुं॰ किकिनि । मयूरे ।
व्याघ्रे ॥ त्रि॰चाश्चर्यशरीरे ॥ वि
चित्राणि॰चङ्गानियस्य . ॥

विचिन्वन् । त्रि॰ मृगयमाणे । च
न्विष्यति ॥

नि । प्रलापी । रहसि ॥ यथा । आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः ॥ अवस्थाल्ले प्रकाश ॥ आदावन्ते च मध्ये च जनोऽयंश्चित्रविद्यते । येनैदसततव्यापाप्तदेशोऽविजन स्मृतः ॥ विगतो जनो ऽस्मात् ॥

विजननम् । न॰ प्रसवे ॥ पुं॰सूतिमासे । विजायतेऽस्मिन् । जनी॰ । करणेतिल्युट् ।

विजन्मा । पु॰ मेषे । सुधन्वाचार्य्ये।

विजपिलम । न॰ पिच्छिले ॥

विजय । पुं॰ जये । शत्रुपराजयनिमित्तवत्कर्षे ॥ पार्थे । अर्जुनपाण्डवे ॥ विमाने ॥ विष्णुनुचरविशेषे ॥ कृतार्हत्पितरि ॥ जिनबलदेवे ॥ यमे ॥ काश्यिनुर्पे ॥ वत्सरविशेषे ॥ तत्फलयथा । अश्वतोथास्त्रयामेघावर्ष्न्तिखण्डमण्डलि । नश्यन्तिसर्वशस्त्राणि विजयेनाथसम्‌ये ॥ २७ ॥ यात्रायोगान्तरे ॥ यथा । दिग्गीशोद्दिक्सवीचेत्स्यात्त्रिशत्सुयदि । विजयीनामयोगोय यातराजाजयीभवेत् । समयात्रायोगे ॥ गुरौवीर्य्येकेन्द्रयुतेबुधे वाभृगुनन्दने । विजयोनामयोगोयं यातुर्विजयदः सदा ॥ विजयनम् । जिजये । एरण्‌ ॥ एकादशेमुहूर्ते ॥ चतुर्दिग्द्वारगृहे ॥ परमे

श्वरे ॥ विजयसैष्वाभ्यंवराम्येश्वर्यादिगुणे विंशम् । जिपूर्वाज्जयते पचाद्यच् ॥

विजयक । पु॰ विजयिकुशले ॥ आकर्षादित्वात्कन् ॥

विजयकुञ्जर । पु॰ राजवाह्ये मातङ्गे ॥

विजयच्छन्द । पु॰ पञ्चशतमौक्तिकहारे ।

विजयनन्दन । पु॰ इक्ष्वाकुवंशजराजविशेषे ॥ जये ॥ अभिमन्यौ ॥ विजयस्यनन्दन ॥

विजयमर्दल । पुं॰ ढक्कायाम् । जयढाक॰ इ॰ भा॰ ॥

विजयसख । पुं॰ श्रीकृष्णे ॥ विजयस्यसखा । राजाह॰ सखिभ्य-ष्टच् ॥

विजया । स्त्री॰ उमायाम् । आख्यायन्याम् । दुर्गायाम् ॥ यथा । जिजिश्रपद्मनामानदैत्यराजमहाबलम् । विजयातेनसादेवीलोकेचैवापराजितेतिदेवीपुराणम् ॥ उमासख्याम् ॥ तिथिविशेषे ॥ यथा । इषमासिसिताद्दशमीविजयाशुभकर्मसुसिद्धिकरीकथिता । श्रवणर्क्षयुतासुतरांशुभदानृपतेस्तुगमेजयसन्धिकरी ॥ अस्यानीलकण्ठदर्शनविधिर्यथा । द्रष्टव्योराजनराजाबलवद्योयथाबलम् । शोभनखञ्ज

मपश्चेत्जलगोगोष्ठसन्निधौ ॥ द
र्शनानन्तरतन्नमस्कारमन्त्रोयम् ।
शीलयीवशुभयीवसर्वकामफलप्रद
। पृथिव्यामवतीर्णोसिखञ्जरीटन
मोस्तुते ॥ त्वयोगयुक्तोमुनिपुङ्गव
स्त्वमहश्यतामेषिशिखोद्गमेन । त्व
हश्यसेप्राह्वषिनिर्गतायांत्वखञ्जना
स्वर्यमयोनमस्ते ॥ द्रव्यविशेषोपरि
स्थितस्यतस्यदर्शनफलंयथा ॥ प
द्मे पुगोषुगजवाजिमहोरगेषु राज्य
प्रद ' कुशलद शुचिशाद्वलेषु ।
भस्मास्थिकेशनखलोमतुषेषु दृष्टो-
दु ' खददातिबहुश खलुखञ्ज
रीट . ।। अशुभदर्शनेप्रायश्चित्तंय
था । अशुभखञ्जनदृष्ट्वादेवब्राह्म
णपूजनम् । दानंकुर्वीतकुर्याश्च स्ना
नसर्वौषधीजलैरिति ॥ मादकद्रव्य
विशेषे । भङ्गायाम् ॥ तस्यानाः
मानिगुणाश्चयथा। भङ्गागञ्जा
मातुलानीमादनीविजयाजया ।
भङ्गाकफहरीतिक्ताग्राहिणीपाच
नीलघु . । तीक्ष्णोष्णापित्तलामोह
मदवाग्वह्निवर्द्धनी कुतिभावप्र
काश . ।। अपिच । मक्तामनतुती
क्षोष्णमोहकृत्कुष्ठनाशनम् । बल
मेधाग्निकृच श्लेष्मदोषहारिरसाय
नम् ॥ जातामन्दरमन्थनाज्जलनि
धौपीयूषरूपापुरा त्रैलोक्ये विजय-
प्रदेतिविजयाश्रीदेवराजप्रिया ॥ लो

कानांहितकाम्ययाक्षितितलेप्राप्ता
नरै कामदासर्वातङ्कविनाशहर्ष
जननीयै सेवितासर्वदा ॥ इतिरा
जवल्लभ ' ॥ वचायाम् ॥ यमभार्या
याम् ॥ हरीतक्याम् ॥ अलाबुप
त्राविजयैतिलस्मृताम् ॥ जयन्त्या
म् ॥ शेफालिकायाम् ॥ मञ्जि
ष्ठायाम् ॥ शमीभेदे ॥ अग्निमन्थे
। गणिकार्याम् ॥ अष्टमधाहाद
श्यन्तर्गतहाद्शोविशेषे ॥

विजयासप्तमी । स्त्री॰ सप्तमीतिथिप्र
भेदे ॥ सायथा । शुक्लपक्षस्य सप्तम्यां
सूर्यवारोयदाभवेत् । सप्तमीविज
यानामतत्रदत्तमहाफलम् ॥

विजयी । त्रि॰ विजयशीलि ॥ विशेषे
णजेतुशीलमस्य । जिहक्षीत्यादि
ना॰ इनि . ॥

विजर . । पुं॰ वेदान्तवेद्यपरमात्मनि ॥
त्रि॰ जरारहिते ॥ विगताजरा
यस्य ॥

विजलम् । न॰ विजिले । पिच्छिले
इतिहेमचन्द्र . ॥ त्रि॰ जलशून्ये ॥

विजल्प . । पुं॰ वाक्यविशेषे ॥ यथा
। व्यक्तयाऽसूययागूढमानमुद्रान्तरा
लया । अघद्विषिकटाक्षोक्तिर्वि ज
ल्पोविदुषांमत : ॥ इत्युज्ज्वल
नीलमणि ॥

विजात. त्रि॰ विकृते ॥ जाते ॥

विजाता । स्त्री॰ जातापत्यायाम् ।

प्रजातायाम् ॥

विजातीय . । त्रि॰ विभिन्नधर्माक्रान्ते ॥ विलक्षणे । भिन्ने ॥ यथाह चाद्विजातीय : भिन्नादि ' ॥

विजिगीष ' । त्रि॰ जयेच्छौ ॥

विजिगीषा । स्त्री॰ विजयेच्छायाम् ॥ क्षोदरपूरणासक्तिनिमित्तकनिन्दात्यागेच्छायाम् ॥

विजिगीषाविवर्जित ' । त्रि॰ आदू मे । औदरिके ॥ क्षोदरपूरणासक्तिनिमित्तकनिन्दात्यागोविजिगीषा॰व्यवसाय : कश्चित्प्रकर्षोवा॰ आलस्यात्तेनविहीनोय : केवलमुदराधीनवृत्तिभाव : ॥

विजिगीषु : । त्रि॰ जयेषिणि । जयेच्छाशीले । प्रतिवादिजयकामे ॥ यथा । जेतुमीषणशीलस्यविजिगीषुरितिस्मृत । इति ॥ मन्नस्यापि विजिगीषो ' कार्यसाधनंप्रधानम्॰ अन्यत्समयरक्षणाद्यप्रधानमेतिनीति : ॥ विजेतुमिच्छाधातो . कर्मणइतिसन् । सनाशंसभिक्षउ . ॥

विजिघत्स : । त्रि॰ विगताशनेच्छे ॥ विगताजिघत्साक्षुधायस्य ॥

विजिज्ञासितव्य ' । त्रि॰ स्वसंवेद्यतामापादयितव्ये॰निजात्मनि ॥ विशेषेणज्ञातुमेष्टव्य ' ॥

विजित . । त्रि॰ पराजिते ॥ विजीयतेस्म । जिषभिभवे । क्त ' ॥

विजितात्मा । त्रि॰ स्ववशीकृतदेहे ॥ वशीकृतान्त करणे ॥ विजित आत्मादेहो॰मनोवायेन ॥

विजिताश्व । पुं॰ पृथो : पुत्रे ॥ त्रि॰वशीकृततुरगे ॥

विजिति । स्त्री॰ विजये ॥ यथाह दण्डी । चितिविजितिस्थितिविहितिव्रतरतय : परगतय : । उरुरुरुधुगुरुदुधुवुयुधिकुरव . स्वमरिकुलम् ॥ इति ॥

विजिलम् । त्रि॰ पिच्छिले । मण्डयुक्तजलयुक्तव्यञ्जनयो . ॥ विजन विजि । ओविजीभयचलनयो : । इगुपधात्किदितीन् । विजिलाति । ला॰ । आतोनुपसर्गेक : ॥

विजिवल : । त्रि॰ विजिले ॥ इतिहेमचन्द्र : ॥

विजिहीर्षा । स्त्री॰ विहर्तुमिच्छायाम् ॥

विजिह्म ' । त्रि॰ कुटिले । वक्रे ॥ विशेषेणजिह्म : ॥

विजुल ' । पुं॰ शाल्मलीकन्दे ॥

विजृम्भणम् । न॰ विभ्रमे ॥ विकासे ॥ जृम्भणे ॥

विजृम्भितम् । न॰ चेष्टायाम् ॥ त्रि॰ विकस्वरे । विकासनशीले ॥ अवस्फूर्जिते ॥ उल्लसिते ॥ जृम्भायुक्ते ॥ विजृम्भासञ्जातास्य । तारकादित्वादितच् ॥

विजोहा । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । यत्पदद्वितयं दृश्यते सुन्दरम् । सर्पराजोदिता सा विजोहा मता ॥ यथा । आलिवर्गे घरे कामकेलीपरे । क्लिमया साधितं मौनमारोपितम् ॥

विज्जलम् । न॰ तीरे । सायके ॥ चि॰ पिच्छिले ॥

विज्जिलम् । न॰ विजिले ॥

विज्जुलम् । न॰ गुडत्वचि । त्वचे ॥

विज्जुलिका । स्त्री॰ जतुकायाम् ॥

विज्ञः । चि॰ निपुणे । अभिज्ञे । शिक्षिते । प्रवीणे ॥ विजानाति । ज्ञा अवबोधने । आतश्चोपसर्गे इति कः ॥

विज्ञप्तिः । स्त्री॰ विज्ञापने ॥ विज्ञाने ॥

विज्ञबुद्धिः । स्त्री॰ जटामास्याम् ॥ चि॰ सुशिक्षिते ॥

विज्ञातः । चि॰ विश्रुते ॥ ख्याते ॥ निश्चिते ॥ अर्थपरिज्ञानात् सर्वं विज्ञातं भवति ॥ ज्ञाते । विशिष्य ज्ञातेर्थे ॥ व्यज्ञायि । ज्ञा॰ । क्त । यद्वा । विजानाति । मतिबुद्धीति क्तः ॥

विज्ञाता । चि॰ अनुभवितरि ॥

विज्ञानम् । न॰ ज्ञाने । कर्मणि ॥ विज्ञानं ज्ञानकर्मणोरिति मेदिनी ॥ कार्मणं । विज्ञानं कार्मणं ज्ञाने इति हेमचन्द्रः ॥ निश्चये । संशयविपर्ययरहितेज्ञाने ॥ चित्तस्मा विज्ञप्तिरूपेब्रह्मणि ॥ अपरोक्षज्ञाने । ब्रह्मात्मैक्यानुभवे । विज्ञप्तौ ॥ यच्चादिकर्मकौशले ॥ विवेकबुद्धौ ॥ उपासने । शास्त्रार्थविषयज्ञाने । शिल्पबुद्धौ । शिल्पकर्मणि ॥ विज्ञायतेऽनेन । ज्ञा॰ । करणेल्युट् ॥ विवेकेन ज्ञानं वा । मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरित्यमरः । अस्यार्थः । विशेषेण सामान्येन च॰ अववोधो मोक्षोमुक्तिः शिल्पं चित्रादि॰ शास्त्रं व्याकरणादि । मोक्षे॰ शिल्पे॰ शास्त्रे च याधीः सा॰ ज्ञान॰ विज्ञान चोच्यते॰ एषा विशेषप्रवृत्तिः । अन्यत्र॰ घटपटादौ॰ याधीः सापिज्ञानं विज्ञानञ्चोच्यते । एषा सामान्यप्रवृत्तिः । मोक्षे धीर्ज्ञानं॰ विज्ञानं यथा । ज्ञानान्मुक्तिरिति॰ साया चिताच विज्ञानतुष्टाः स्वर्गं प्रयच्छतीति । अन्यत्र यथा । ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे॰ इति । घटस्य प्रकारकज्ञानमिति । येकेचित्प्राणिनो लोके सर्वे विज्ञानिनो मता इति । ब्रह्मणोनित्यविज्ञानानन्दरूपत्वात्॰ इति । एवं चित्रज्ञानं व्याकरणज्ञानं घटपटविज्ञानमित्यादिकं प्रयुज्य

तएवतद्विगमे॰ गरुत्मदादिशब्दवत्॰ गरुत्मच्छब्दोऽपि गरुडपक्षिमात्रे प्रवर्त्तते। मोक्षव्यतिनिमित्तसमग्नौ॰ मोक्षनिमित्तं शिल्पशास्त्रयोर्धीर्ज्ञानमुच्यते। तन्निमित्ततोऽन्यनिमित्तं॰ यातयोर्धीः साविज्ञानमिति केचित्। मोक्षविषया मोक्षफलाधीर्ज्ञानम्॰ अन्यधीर्विज्ञानम्। ज्ञानं च व्याहुशिल्पशास्त्रयोरिति केचित्। अववोधद्व्यथ्याहृत्य॰ मोक्षविषये॰ अववोधोधीर्ज्ञानम्॰ अन्यच्च घटपटादिविज्ञानं शिल्पशास्त्रविषये विज्ञानमिति केचिदिति भरत ॥

विज्ञानतत्त्वम्। न॰ महत्तत्त्वे ॥

विज्ञानपाद। पुं॰ वेदव्यासे ॥ इति केचित् ॥

विज्ञानमय। पुं॰ पञ्चसु कोषेषु चतुर्थे। ज्ञानेन्द्रियैः सहितायां बुद्धौ। ज्ञानशक्तिमति कर्तृरूपे॰ बुद्धिमये। लीनाः सुप्तौ॰ वपुर्धीर्धि॰ व्याप्नुवाद्यानवाप्यगाः। चिच्छायोपेतधीरात्मा विज्ञानमयशब्दभाक् ॥

विज्ञानमातृक। पुं॰ बुद्धे। सुगते ॥

विज्ञानवान्। त्रि॰ निपुणे। विवेकविशिष्टे ॥ विज्ञानमस्त्यस्य। तदस्यास्तीति मतुप् ॥

विज्ञानवाद। पुं॰ बौद्धानां क्षणिकविज्ञानातिरिक्तभावाभाववादे। विज्ञान। बुद्धिरिति नार्थान्तरम्। यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते। स्वप्नवज्जागरे सुप्ताभावः स्फुटप्रथि ॥ अयस्त्रवादो न युक्तिसहः। तथाहि। जागरे बाध्यते स्वप्नो जागरो न बबाध्यते। तत्र तद्बाधकाभावाद्बाह्यमप्युपलभ्यते ॥ बहिर्वदिति तेऽप्युक्तिर्बाह्यमर्थं प्रसाधयेत्। एवं न युज्यते बुद्धेर्जगदाकारतात्र। स्थिरचेतनराहित्यात्स्वयञ्च क्षणिकत्वतः। स्मृत्यादिव्यवहारश्चलोपस्तवदारुणः ॥ मम तु जागरादिसमाधिष्ठानस्याऽखण्डबोधानन्दरूपस्य ब्रह्मणः साक्षात्कारो बाधकोऽस्ति ॥

विज्ञानवादी। पुं॰ बौद्धविशेषे। तेषां भ्रान्तिस्तु। एकैकावासनात्तत्प्रतिक्षणविनाशिनीम्। आहुः क्षणिकमात्मानं बौद्धा विज्ञानवादिनः ॥ तां च॰ बुद्धौ॰ वासनां तद्धेतुभूतां वृत्तिमिति यावत् ॥

विज्ञानस्कन्ध। पुं॰ आलयविज्ञानसन्तानौ। रूपस्कन्धाभिव्यक्तौ। अहमित्याकारो रूपादिविषयकेन्द्रियजन्यो दण्डायमानो विज्ञानस्कन्ध इति वाचस्पतिमिश्राः। अहमित्याकारमालयविज्ञानमिन्द्रियादिजन्यं॰ रूपादिविषयकज्ञानमेतद्द्वयं॰ दण्डायमानं॰ प्रवाहापन्नविज्ञानस्कन्धः

स्यर्द्रुतिकस्यतद । अहमितिप्रत्य येविज्ञानस्कन्धस्तूत्वानन्दगिरि ॥

विज्ञानावसित । त्रि० विज्ञानेननि श्चिते ॥

विज्ञानिक । त्रि० वैज्ञानिकी । प्रवी ण ॥ विज्ञानमस्त्यस्य । ब्रीह्यादि त्वान्मत्वर्थीयठन् ॥

विज्ञापनम् न० बोधने । अमावना० बुभा।वना० इ० भा०प्र० ॥ विपूर्वाण् ययन्तज्ञानातेर्ल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । इदमेवमितिविस्पष्ट ज्ञानार्हे ॥ विज्ञातुयोग्य:। ज्ञा० । अचोयत् । इत्यति ॥

विज्यम् । न० निर्गुणेधनुषि ॥ विग ताज्यायस्मिन्०दक्षाद्या०तत् ॥

विज्वर । त्रि० विगतज्वरे ॥ विगत मनस्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर . । त्रि० विषमे ॥

विझामरम् । न० चक्षुष शुक्लाक्षिर्गे ॥ द्रुतिकश्चित् ॥

विञ्झोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विट । पुं० षङ्गौ ॥ लवणविशेषे ॥ षिङ्गे । स्नैणे ॥ मूषिके ॥ खदि रे ॥ कामुकानुचरे ॥ धूर्त्ते ॥ काम तन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वे टति । विटशब्दे । इगुपधलक्षण क: ॥

विटका । स्त्री० वीटिकायाम् ॥ द्रुति कश्चित् ॥

विटङ्क । पुं० न० गृहप्रान्ते रचितप क्षिस्थाने । कपोतपालिकायाम् ॥ विशेषेणटङ्क्यतेऽत्र । टङ्कबन्धने । हलश्चेतिघञ् ॥ तोरणस्तम्भयोरुप रितर्यङ्निहितदारुणि ॥ त्रि० सु न्दरे ॥ यथा । तस्मिन्नतीक्ष्णमनय पङ्कसञ्चमाना . कचा : समाजम यसावयसममायाम् । देवावनचयत गृहीतगदौपराङ्ग्यकेयूरकुण्डलकि रीटविटङ्कवेषौ ॥ द्रुतिभा० ह० स्क न्धे १५ अध्याय : ॥

विटङ्कित : । त्रि० अलङ्कृते ॥

विटप:।पु० विटाधिपे । पारदारिकश्रे ष्ठे ॥ आदित्यपर्णे ॥ पुं० न० शाखा पल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ मु ष्कवङ्क्षणयोरन्तरे । महावीर्ये ॥ विटान्पाति । पा० । आतोनुपे तिक : ॥ यद्वा । विटानांपानम् । पा० । घञर्थेक : ॥ वेटति० विस्त णोति । विटपाक्रोशे० शब्दे च । वि टपविष्टपविशिपोलपा : ०ड०सो पु : ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्या स्ति । अतइनि : ॥

विटप्रिय. । पुं० मुद्गरवृक्षे । मोगरा० इ० भा० प्र० ॥ विटानांप्रिय : ॥

विटमाक्षिक । पु॰ धातुविशेषे । सार्प्ये । नदीजे । कामारी ॥

विटि . । स्त्री॰ पीतचन्दने ॥

विट्कारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिर . । पुं॰ दुर्गन्धिखदिरे । अरिमेदे ॥ विड्गन्धि खदिर ॥

विट्चर । पुं॰ ग्राम्यशूकरे ॥ विष विष्ठाचरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कोवा ॥ विषस्वरोवा ॥

विट्ठल . । पुं॰ अज्ञानुग्राहकेदेवे ॥ यदाहुरर्वाचीनादार्क्षिणात्या . । विदाज्ञानेनठान् शून्यान्॰लाति अद्दत्तआत्मीयतयागृह्णाति । ला॰ । आतोनुपसर्गइतिकः । विदाज्ञानेनठान्शून्यान्लातिगृह्णातिय . स्वयम् । अज्ञानुग्रहकाईवोविट्ठल . कथ्यतेबुधैरिति प्रक्रियाप्रसादः ॥

विट्पतिः । पु॰ जामातरि ॥ यथा । मातामहमातुलश्चस्वस्रीयश्वशुरगुरुम् । दौहित्रंविट्पतिंबन्धुमृत्विग्याज्यौचभोजयेत् । एतान्मातामहादीन्॰दशमुख्यणोश्रिया दासश्चवैभोजयेद् । गुरुर्विद्यागुरुराचार्यादि' । विट्दुहितातस्या . पतिः । इतिकुल्लूकभट्टः ॥ भोजयेत्॰श्राद्धे॰इतिशेषोवोध्यः ॥ नृपतौ ॥ वैश्यवर्य्ये ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुलाख्याम् । गुयासालक्॰इ॰गौ॰दे॰भा॰प्रसिद्धे ॥

विठर । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पाक्ये । खारीलूण॰इ॰भा॰ ॥ अस्यगुणायथा । विडसक्षारमूर्द्धधःकफवातानुलोमनम् । अशूलकफमघोवातसञ्चारयेदिष्यथं . । दीपनंलघुतीक्ष्णोष्णारुक्षरुच्यव्यवायिच । विबन्धानाहविष्टम्भहृद्ग्गौरवशूलनुत् ॥ विडति । विडभेदने ॥ इगुपधज्ञाप्रीकिरःकः ॥

विडङ्ग । पुं॰ न॰ वेल्ले । चित्रतण्डुलायाम् । क्रमिघ्ने ॥ विडङ्गकटुतीक्ष्णोष्णारुक्षंवह्निकरंलघु । शूलाध्मानोदरश्लेष्मक्रमिवातविबन्धनुत् ॥ त्रि॰अभिज्ञे ॥ विडति ॥ विड॰ । विडभाक्रोशेवा । विडादिभ्यः कित्॰इत्यङ्गच् ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान' । त्रि॰ अनुक्रियमाणे ॥

विडम्बितः । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्बाः । त्रि॰ उपहासास्पदे ॥

विडार : । पुं॰ विडाले ॥ रसयोर भेद ' ॥

विडारक । पुं॰ विडाले ॥

विडाल । पुं॰ योतौ । मार्जारे । वृषदंशके ॥ नेत्रपिण्डे ॥ विडति॰ विडातीवा । विडश्राक्रोशे । तमि विशिविडिम्रुणिकुलिकपिपलिपञ्चिभ्य' कालन् ॥ नेचौषधविशेषे ॥ रगणो॰८ । ८॰ ॥

विडालकम् । न॰ हरिताले ॥ पुं॰ नेत्ररोगौषधविशेषे ॥

विडालपद : । पुं॰ तोलकद्वयपरिमाणे ॥ न॰मार्जारचरणे ॥

विडालपदकम् । न॰ कर्षपरिमाणे ॥

विडाली । स्त्री॰ भूमिकूष्माण्डे । विदार्याम् ॥ मार्जार्याम् ॥

विडीनम् । न॰ खगानांगतिप्रभेदे ॥ विशिष्टंडयनम् । डीङ् विहायसा गतौ । क्तादि॰ । नपुंसकेभावेक्त : । क्तादयश्चेोदितइत्यतिदेशात्चोदित्वान्निष्ठानत्त्वम् । विडीनंविचित्र पचिण : पतनमितिमहाभारत ॥

विडुल । पुं॰ वेतसवृचे ॥

विडोजा : । पुं॰ इन्द्रे ॥ वेवेष्टि । विष्लृव्याप्तौ । क्विप् । विट्॰व्यापकम्॰ओजस्तेजोऽस्य ॥ विट् सुप्रजासु॰मनुष्येषुवा॰ओजोयस्येतिवा ॥

विडौजा : । पुं॰ पाकशासने । इन्द्रे ॥ विडति । शिडभेदने । इगुपधंतिक : । विड'भेदकमोजोऽस्य । साम : ॥

विड्भम् । न॰ विड्लवणे ॥

विड्ज : । त्रि॰ विष्ठायाजाते ॥

विड्लवणम् । न॰ विडे ॥

विड्वराह : । पुं॰ विट्चरे ॥

वितस' । पुं॰ वीतसे ॥

वितण्डा । स्त्री॰ कच्चीशाके ॥ शिलाह्वये ॥ करवीर्याम् ॥ दर्व्याम् ॥ वादप्रभेदे । परपचप्रतिवादे । स्वपचस्थापनहीनायाम्विजिगीषुकथायाम् ॥ तथाचन्यायसूत्रम् । सप्रतिपचस्थापनाहीनोवितण्डा । यद्यपितच्छब्देनजल्पोनपरामष्टुंशक्यते॰ जल्पस्यस्थापनाद्वयवत प्रतिपचस्थापनाहीनत्त्वस्यविरुद्धत्त्वात् । तथापिस्थापनाद्वयवत्त्वंविहाय॰जल्पैकदेश : परामृश्यते । प्रतिपचोद्वितीयपच' । तथाच॰प्रतिपचस्थापनाहीनाविजिगीषुकथा॰वितण्डेति । नचस्वस्थापनीयाभावात्कथमियंकथाप्रवर्त्तामितिवाच्यम् । परपचखण्डनेनजयस्यैवोद्देश्यत्त्वात् । परेतु॰यत्परपचखण्डनेनैवस्वपचसिद्धेर्यादिवसिद्धेतत्साधनाभावेपिनप्रवृत्त्यनुपपत्तिरितिवदन्ति ॥ १ । ४२ ॥ वितण्डातैपरचोऽमया

। तदिच्छवादै । गुरोश्चेत्य : ॥

विततः । त्रि॰ विस्तृते ॥ विशेषेणत त. ॥

विततिः । स्त्री॰ विस्तारे ॥

वितथम् । न॰ अन्टतवचसि ॥ त्रि॰ तद्वति ॥ विगतंतथासत्यंयस्मात्॰ तत्॰वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्रः । त्रि॰ जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्यस॰ ॥

वितन्यमानः । त्रि॰ वितायमाने ॥ तनोतेः कर्मणिलटः शानजादेश. ॥

वितन्वन् । त्रि॰ विस्तारयति ॥

वितमाः । त्रि॰ तमोगुणरहिते ॥

वितरणम् । न॰ दाने ॥ तॄप्लवनतरणयोः विपूर्व. । भावेल्युट् ॥

वितर्क॰ । पुं॰ ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषार्थश्चुरादी । भावेघञ् ॥ ज्ञानसूचके ॥

वितर्कणम् । न॰ वितर्के ॥ तर्क॰ । ल्युट् ॥

वितर्द्दिः । स्त्री॰ वेदिकायाम् ॥ विगतातर्द्दिः हिंसाऽस्या. । तर्दहिंसायाम् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्दिका । स्त्री॰ वेदिकायाम् ॥ स्वार्थेक॰ ॥

वितर्द्दी । स्त्री॰ वेदिकायाम् ॥ कृदिकारादक्तिनइतिङीष् ॥

वितलम् । न॰ पातालप्रभेदे ॥

वितस्ता । स्त्री॰ नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यनागसदनमस्ति ॥

वितस्तिः । पुं॰ स्त्री॰कनिष्ठयासहविततेऽङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति॰वितस्यतेवा । तसुउपक्षये । वौतसिरितिति : ॥

वितानः । पुं॰ न॰यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ कदके । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न॰वृत्तविशेषे । अवसरे ॥ त्रि॰मत्ते ॥ तुच्छे ॥ शून्ये ॥ मन्दे ॥ विताननम्॰वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानकः । पुं॰ माण्डच्चे ॥ पुं॰न॰ चन्द्रातपे ॥

वितानतनिका । स्त्री॰ पटमण्डपरज्जौ ॥

वितानमूलकम् । न॰ उशीरे ॥

वितायमान । त्रि॰ वितन्यमाने । विस्तीर्यमाणे । वितनोते॰ कर्मणिलट शानजादेश॰। तनोतेर्यक्वीति॰ वा॰ आकारादेशः ॥ विटङ्किते । अलङ्कृते ॥

वितिष्ठमान॰ । त्रि॰ अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

वितीर्ण । त्रि० दत्ते ॥ अवगाढे ॥

वितुन्नम् । न० सुनिषण्णे । शिषखप रिया० इ० भा० प्र० शाकि ॥ शै वाले ॥ विगतस्तुन्न व्यथनमस्मात् ॥ त्रि० व्यथिते ॥

वितुन्नक । पु० न० धन्याके॥ भाटा मलौषधौ । तामलक्याम् । भू म्यामलक्याम् ॥ मुस्तायत्पीलवपु रमुकाभस्माद्वितुन्नकाम् ॥ वितुन्न कञ्चिमतिक्तं कषायकटुकाग्निदम॥ कफपित्ताखश्वासपर्कुष्ठकण्डूविषप्र णुत ॥ वितुद्यतेऽसा । तुद्व्यथने कर्मणिक्त । स्वार्थेकन् ॥ विगत स्तुन्नद्‍ . खमस्माद्वा । कप् ॥

वितुन्ना । ) स्त्री० तामलक्याम् ।
वितुन्निका । ) भूम्यामलक्याम् ॥ वितुन्नके ॥

वितृप्त । त्रि० सन्तुष्टे ॥ विशेषेण तृप्त . ॥

वितृष्ण . । त्रि० निष्कामे ॥

वित्तम् । न० धने ॥ न्यायाज्जितधने ॥ धर्माययशसेऽर्थायकामायस्वज नायच ।पञ्चधाविभजन्वित्तमि हामुत्रचमोदते । प्रभूतेहिरण्य रत्नादौ ॥ ज्ञाने ॥ लब्धादिवृत्तीय भवने । त्रि० ख्याते । विख्याते ॥ विचारिते ॥ विद्यतेऽसाविद्विचार णे । क्त ॥ नुदविदेतिपक्षेनत्वा भाव : ॥ यद्वा । अवेदि । विद्लृ लाभे । क्त । वित्तोभोगप्रत्यय योरितसाधु ॥ लब्धे ॥

वित्तद । पु० पूर्वदक्षिणोत्तरद्वारे गृहे ॥ त्रि० धनदातरि ॥ वित्तद दाति । डुदाञ्दाने । आतश्चो तिक ॥

वित्तप : । पुं० कुबेरे ॥ त्रि० धनर क्षके ॥ वित्तंपाति । पा० क : ॥

वित्तमय । त्रि० धनप्राये ॥

वित्ति । स्त्री० विचारे । ज्ञाने ॥ यथा । सत्त्व भावनवित्तिर्व्यपनुद तियत . कर्मनाप्योघटादिर्मिथ्या भूतपक्षमंपयतिनतथाविक्तिचा- स्य यतस्तत् ।इत्थ सिद्धेविभागेस्फु तिशिखरगिरावित्तिघाअप्रतीताव ज्ञोमिथ्येतिसिद्धंनतदपरतयेक्ष गंज्ञातसमर्थम् ॥ वृत्ति ॥ लाभे ॥ सम्भवे ॥ विदेर्भावादौस्त्रियांक्तिन् ।

वित्तेश । पुं० धनपतौ कुबेरे ।

वित्तैषणा । स्त्री० धनलाभेच्छायाम् ॥ कर्मयागाधनेवित्तेतृष्णावित्तैष- णामता ।

वित्रस्त : । त्रि० त्रासयुक्ते ॥ विप् र्वात्त्रसे : क्त : ॥

वित्रास । पुं० भये । त्रसीउद्वे गे० विपूर्व . । घञ् ॥

विद्धन : । पुं० वृषभे ॥

विधुर : । पुं० चौरे । राक्षसे ॥ व्य थते ।व्यथभयचलनयो : । व्य थे :

सम्प्रसारणं किच्चेष्णुरच् ॥

विध्या । स्त्री० गोजिह्वायाम् ॥

वित्‌द्‌ । त्रि० विदुषि ॥ न० ज्ञाने ॥ वेदनम् । विदज्ञाने । सम्पदादित्वात् भावेक्विप् ॥

विद । पुं० पण्डिते । वेत्ति । विद० कः ॥

विदंश: । पुं० अवदंशे ॥ विदश्यते । दंश० । कर्मणि० भावेवाघञ् ॥

विदग्ध । त्रि० चतुरे । दग्धे ॥ नागरे ॥ पण्डिते ॥ अत्यन्तपक्के ॥

विदग्धता । स्त्री० विदग्धत्वे ॥

विदग्धा । स्त्री० परकीयान्तर्गतनायिकाप्रभेदे ॥

विदथ । पुं० योगिनि ॥ कृतिनि । प्राज्ञे ॥ वेत्ति । विदज्ञाने । रुदिविदिभ्यांङिदित्यथ: ॥ यज्ञे ॥ वेत्ति० अस्मिन्देवान् ॥

विदम् । त्रि० पण्डिते ॥

विदंदक्षु । त्रि० विदष्टुमिच्छौ । उपदेशेच्छावति । दशे सन्नन्तादुप्रत्यय ॥

विदन्ता । स्त्री० नातिदीर्घायावराटिकायाम् ॥

विदर: । पुं० स्फुटने । भिदायाम् । फटना० हि०भा० । विदरणम् । दृविदारणे । ऋदोरप् ॥ न० विष्वसारके । नागफणीथूहर० हि०भा० ॥ त्रि० दरशून्ये । निर्भये ॥

विदरकम् । न० विदरे ॥ विदरके ॥

विदर्भ । पुं० कुण्डिनपुरे ॥ सतुवङ्गदेशस्यदक्षिणपश्चिमेवर्त्तते० अधुना० वडानागपुर० इतिख्यात । भद्रकालीमहापूर्वेरामदुर्गाञ्चपश्चिमे । श्रीविदर्भाभिधोदेशो।वैदर्भीतत्रतिष्ठति ॥ त्रि० दर्भशून्ये ॥ कर्मठे ॥ विशिष्टेनदर्भेणोपलक्षित ॥

विदर्भजा । स्त्री० अगस्त्यमुनेः पत्न्याम् । कौशीतक्याम् । लोपामुद्रायाम् ॥ दमयन्त्याम् । रुक्मिण्याम् ॥

विदर्भराज । पुं० विदर्भदेशाधिपतौ । भीमाभिधेपुराणप्रसिद्धे राजनि । दमयन्तीजनके ॥

विदर्भसुभ्रू । स्त्री० दमयन्त्याम् ॥

विदर्भाधिपति: । पुं० कुण्डिनपतौ । भीष्मकाभिधे । रुक्मिणीजनके ॥

विदल । पुं० रक्तकाञ्चने ॥ पिष्टके ॥ न० वंशादिकृतपात्रविशेषे ॥ वेणुदले ॥ शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दममितिमनु: ॥ दाडिमवल्कले ॥ द्विधाकृतकलायादौ । दाल० हि०भा० ॥ स्वर्णादेरवयवे ॥

विदला । स्त्री० त्रिवृति ॥ पत्रशून्यायाम् ॥

विदा । स्त्री० ज्ञाने ॥ मनीषायाम् ॥ भिदादित्वाद्विदेरङ् । टाप् ॥

विदाय: । पुं० गमनानुमतौ ॥ यथा । त्वयं वाचम्पकवनंगच्छवातिष्ठसु

न्दरि । त्वगाटहत्वयाश्यामि विशिष्टं कार्यमस्तिमे । विदायदेहिसम्प्रीत्या त्वर्गमांप्राणवल्लभे ॥ इतिब्रह्मवैवर्त्ते श्रीराधाप्रतिश्रीकृष्णवाक्यम् ॥

विदार : । पुं॰ जलोच्छासे । वाजौ । युधि ॥ दारणे ॥ विदार्यते । दृ॰ । कर्म्मणिघञ् ॥

विदारक । पुं॰ शुष्कनद्यादौवार्य्यर्थंकृतगर्त्ते । कूपके ॥ नद्यादौस्रोतोदृर्धकारिणितरुशिलादौ । कूपके ॥ याचायोगान्तरे ॥ यथा । मार्गेश : शनियुक्त : सप्तमेऽस्तगतोयश्च : ॥ विदारकमिम मन्ये प्राहु : पत्नीविनाशकम् ॥ पुनश्च । मार्गेशात्सप्तमेभानु : पञ्चमेक्रूरखेचर : । विदारकाख्यएवासौभार्यामरिवशनयेत् ॥ न॰ वज्जचारे ॥ विदार्यते । दृ॰ विदारणे । णिच् । वाहुलकात्कर्म्मणिवुल् ॥ यद्वा । विदार्यते । कर्म्मणिघञ् ॥ कुत्सितोविदार : । कुत्सायांक : ॥ त्रि॰ विदारणकर्त्तरि ॥ विदृणाति । दृ॰ । ण्वुल् ॥

विदारकसमाख्य : । पुं॰ याचायानिशिष्टयोगान्तरे ॥ यथा । भार्येशोव्ययगोनीचपुत्रस्थानेशनेश्वर । विदारकसमाख्योयंयातु : पत्नीं निहन्तिवै ॥ विदारकेणसमाचाख्यायस्यस : ॥

विदारण : । पुं॰ कर्णिकारवृक्षे ॥ न॰ विडम्बे । विडम्बने ॥ भेदे ॥ भेदने ॥ पुं॰ स्त्री॰ रणे । सम्पराये । समीके ॥ विदार्यतेऽनेन दृ॰ । ण्यन्त । ल्युट् ॥ विदारयतिवा ॥

विदारिका । स्त्री॰ शालपर्ण्याम् ॥ विदार्य्यर्थे ॥ विदार्येव । स्वार्थेक ॥

विदारिगन्धा । स्त्री॰ अंशुमत्याम् । शालपर्ण्याम् ॥ विदार्या गन्ध विदारिगन्ध । ङ्यापोरितिह्रस्व : । सोऽस्त्यस्या : ॥

विदारिणी । स्त्री॰ काश्मर्य्यां ॥

विदारित : । त्रि॰ भेदिते ॥ विदार्यतेस्म । दृ॰ । ण्यन्त : । क्त : ॥

विदारी । त्रि॰ विदारणकर्त्तरि ॥ विपूर्वाद्दृणाते. कर्त्तरिणिनि : ॥

विदारी । स्त्री॰ शालपर्ण्याम् । अष्टादशप्रकारकण्ठरोगान्तर्गतरोगविशेषे ॥ यथा । सदाहतोयश्वयथुस्ताम्रमन्तर्गलेपूतिविशीर्णमांसम् । पित्तेनविद्याद्दने विदारींपार्श्वेविशेषात्सतुयेनशेते ॥ सपुरुषोयेनपार्श्वेन॰ विशेषाद्बाहुल्येनशेते॰ तस्मिन् पार्श्वेसाविदारीभवतीत्यर्थ : ॥ क्षुद्रगन्धायाम् । श्वेतभूकूष्माण्डे ॥ विदारीक्षीरशुक्लेक्षुगन्धाक्रोष्ट्रीचेत्यमर : । अस्या : गुणास्तु । विदारीमधुरास्निग्धावृष्यास्वर्य्याशुक्रदा । शीतास्तर्य्यामूत्रलाचजीवनीवलवर्णदा ॥ गुरु पित्तास्रपव

महार्हहन्तिरसायनीति ॥ विदारय
ति । दृविदारणे० अचग । पचा
द्यच् । गौरादिः॥ विदार्या .फलं
मूलञ्च० विदारी । अनुदात्तादेश्च
त्यञ० ०पुष्पमूलेषुबहुलमिति० लु
पि० युक्तवद्भावः ॥

विदारः । पुं० जलप्रवाहे । जला
त्यासे ॥

विदाहि । न० परिणामेऽम्लपाकमु
पयाते० दाहजनकद्रव्ये ॥ विदा
हिद्रव्यमुद्गारमम्लं कुर्यात्तथातृषा
म् । हृदिदाहञ्चजनयेत्पाकंगच्छ
तितच्चिरात् ॥

विदिक्चक्रः । पुं० हरिद्राङ्गप
क्षिणि

विदितः । पुं० कवौ ॥ त्रि० बुधि
ते । अवगते । ज्ञाते । विदिक्रिय
यातिशयेनाप्ते । विदिक्रियाकर्म
भूते ॥ यथा । तस्मिन्ब्रह्मणिवि
दितेविश्वमशेषंभवेदिदंविदितम् ।
कारणमृदिविदितायांघटकार्यंय-
थाऽवगम्यन्ते ॥ ७५ ॥ श्रुते ॥
अर्थिते ॥ ज्ञानाज्ञानवति ॥ अ
भ्युपगते ॥ ख्याते ॥ विद्यतेस्म ।
विदज्ञाने । क्तः । यस्यविभाषेती
ट् ॥ विदितवेदनमस्यास्तिवा । अ
र्शआद्यच् ॥

विदिक् । स्त्री० अपदिशं । अपदिशि
। दिशोर्मध्ये । अभिनिष्कृतिशा
ख्वीशानकोणचतुष्टये ॥ दिग्भ्या
विनिर्गता० प्रान्ताविदिक् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण । त्रि० कृतविदारणे ।
चीरा० फाडा इ० भा० ॥ दृ० ।
कर्मणिक्तः । ऋतइत्० रपर ।
रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु । पुं० हस्तिकुम्भयोर्मध्यभागे
॥ कुम्भौतुपिण्डोशिरसस्तयोर्मध्ये
विदुः पुमान् ॥ वेत्तिसञ्ज्ञामयया
तेन । विद० । बाहुलकात्कु ॥

विदुरः । पुं० नागरे ॥ धीरे ॥ धृत
राष्ट्रानुजे । कौरवाणामन्त्रिणि ॥
त्रि०ज्ञानशीले ॥ वेदनशील । ।
विदिभिदिच्छिदेः कुरच् ॥

विदुलः । पुं० अम्बुवेतसे ॥ वेतसे ॥
गन्धरसे । वेत्ति ॥ वेत्तिविद्यतेवा ।
बाहुलकादुलच् ०गुणाभावश्च ॥ न
म्रवेतसे ॥

विदुषी । स्त्री० पण्डितायांनार्याम् ॥
वेत्ति । विदेः शतुर्वसुः । उगित
श्चेतिङीप् ॥

विदुषती । स्त्री० पण्डितवत्यांपु-
र्याम् ॥

विदूनः । त्रि० परितप्ते ॥ विदूयते
स्म । टुदुउपतापे । क्तः । ल्वादि
भ्यश्चेतिनिष्ठानत्वम् ॥ विशेषेणदू
नोवा ॥

विहरम् । न० देशविशेषे । बालवा

र्थे ॥ वालवायाद्रेः समीपवर्त्तिनि नगरे ॥ त्रि० अतिदूरस्थदेशादौ । विप्रकृष्टे ॥

विदूरजम् । न० वैदूर्यमणौ ॥

विदूरथ । पु० राजविशेषे ॥

विदूरभूमि । स्त्री० विदूरदेशे ॥

विदूराद्रि । पुं० रोहणपर्वते ॥

विदूषक: । पुं० क्रीडनीयेकपात्रे । षिड्गे । विटे । व्यलीके । कामकेलौ । चाटुवटौ । वासन्तिके । वैहासिके । प्रहासिनि । परनिन्दाकरे । खले । अभीरौ । सूचके । कण्टके । परदेषिणि ॥ नायकविशेषे ॥

विदेश । पु० परदेशे ॥ कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

विदेह । पुं० जनकान्वयभूमिपे । मैथिले ॥ विदेहाः पु० भूम्नि । देशविशेषे । तीरभुक्तौ । तिरुहित इ० भा० प्र० ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तीरभुक्त्यभिधः स तु ॥ त्रि० कायशून्ये । निर्देहे ॥

विदेहमुक्तिः । स्त्री० मुक्तिविशेषे ॥ सा यथा । तत्र कालवशादेव प्रारब्धे तु क्षयङ्गते । वैदेही मामकी मुक्तिर्याति नास्त्यत्र संशय इति ॥ ततो जीवन्मुक्त्यनन्तरम् ॥

विदेहा । स्त्री० मिथिलायाम् ॥

विद्ध । त्रि० वेधिते । कृतच्छिद्रे ॥ क्षिप्ते ॥ सदृशे ॥ बाधिते ॥ ताडिते ॥ विध्यते स्म । व्यधताडने । क्तः । ग्रहिज्येति सम्प्रसारणम् ॥

विद्धकर्ण । पुं० विद्धकर्ण्याम् ॥ त्रि० कृतकर्णवेधे ॥ विद्धौ कर्णौ यस्य ॥

विद्धकर्णा । ) स्त्री० विद्धकर्ण्याम् ॥
विद्धकर्णिका । )

विद्धकर्णी । स्त्री० पाठायाम् । अम्बष्ठायाम् ॥ विद्धौ कर्णौ यया । यस्या वा । पाककर्णेति ङीष् ॥

विध्यर्थ । पुं० विधिफले ॥ कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्चेति तार्किकाणां दर्शनम् ॥ भाट्टमते विद्ध्यर्थस्तु श्येनफलस्य वाभिचारस्यानर्थहेतुत्वादधर्मत्वम् । श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव । अर्थपदव्यावर्त्यं तु कलञ्जभक्षणादेर्निषिद्धस्यैवेति । फलतोऽनर्थहेतुत्वेन तु शिष्टानां श्येनादौ नधर्मत्वेन व्यवहारः । तदुक्तम । फलतोपि च यत् कर्म्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात् तद्धर्म्म इति कथ्यते ॥

विद्धंसः । पु० विनाशे ॥ विशि

ष्टोध्वंस . ॥

विद्यमान . । त्रि० वर्त्तमाने ॥

विद्या । स्त्री० उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् ॥ देवताज्ञाने । उपासनायाम् ॥ विज्ञाने ॥ श्रेयोविषयायाम् ब्रह्मविद्यायाम् ॥ अनात्मतत्त्वचित्तादात्मापन्नायां ब्रह्माकारान्तःकरणवृत्तौ ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डाख्यासु चतसृषु ॥ यथा । आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिञ्च पार्थिवः । तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रे व्यवसीदति ॥ इति ॥ पुराणादिचतुर्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः ॥ इति ॥ तत्रा

ङ्गानि षट् । यथा । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार ईरिताः । विचारो वेदवाक्यानां मीमांसा प्रोच्यते बुधैः ॥ सा च पूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपरा जैमिनिप्रणीता द्वादशाध्यायी पूर्वमीमांसा । ब्रह्मप्रतिपादनपरा व्यासप्रणीता चतुरध्यायी उत्तरमीमांसेति । पदार्थनिर्णयपरं तर्कशास्त्रं न्यायः अत्र वैशेषिकनयस्यान्तर्भावः । मन्वत्रिविष्णुहारीतादिप्रणीतधर्मशास्त्रम् । कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपि धर्मशास्त्र एवान्तर्भावः । सर्गादिपञ्चलक्षणलक्षितम् मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधं पुराणम् । तदुक्तम् । मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानि विदुर्बुधाः ॥ उपपुराणानामप्यत्रैवान्तर्भावः । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुत आयुर्वेदः । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहितः पादचतुष्टयात्मको धनुर्वेदः । षड्जादिस्वरावस्थिततानपरिच्छेदप्रयुक्तावधानैः पृथक्खण्डजाति

खरसमुद्रायोगाच्चर्ववेद : । चतु : षष्टिकलासङ्ख्याहकमौशनसादिशा स्त्रमर्थशास्त्रमिति ॥ सर्वद्रव्येषु विद्यैवद्रव्यमाहुरनुत्तमम् । अहार्य्यत्वादनर्घ्यत्वादक्षयत्वाच्चसर्वदा ॥ विद्याददातिविनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखमितिविष्णु शर्म्मा ॥ दानेनतपसायज्ञै रुपवास व्रतैस्तथा । नतागतिमवाप्नोतिवि द्ययायामवाप्नुयादितियमः ॥ वि दन्त्यनया॰ अस्त्रामितिवा । विद्-ज्ञाने । सन्ज्ञायांसमजनिषदनिपत मनविद्षुञ्शीङ्भृञिणइतिक्य प् ॥ ब्रह्मविद्यादि॰ इयमिथ्यात्वं दृश्यस्तुन खकाशत्व बोधयति ॥ प रापरविभेदेनविद्याद्वैविध्यमीरितम् । ऋग्वेदाद्याऽपराविद्यापराप्त्व क्षरतत्परा ॥ व्यवहारस्तदशेयवि द्याविद्येतिभेदपरिभाषा । नोस्ये वतत्त्वदृष्ट्यातत्त्व ब्रह्मैवनान्यदस्य स्मात् ॥ तत्त्वदृष्ट्या॰ ब्रह्मात्मैक त्वविद्याष्टष्ट्या । तत्त्वम्॰ यथार्थ स्वरूपम् ॥ गणिकार्यामेधयी ॥

विद्यागुरु : । पुं॰ आचार्यादिरितिउ पाध्यायादौ ॥

विद्यातीर्थम् । न॰ सन्ध्यातीर्थे ॥ विद्यादानपात्रे ॥

विद्यादल : । पुं॰ भूर्जवृक्षे ॥

विद्यादाता । त्रि॰ विद्यादानकर्त्तरि ॥ यथा । अन्नदाताभयत्राताप त्नीतातस्तथैवच । विद्यादाताज न्मदातापञ्चैतेपितरोनृणाम् ॥

विद्यादानम् । न॰ अध्यापने ॥ पुस्तकदाने ॥ अन्नदान महादान विद्यादानंततोधिकम् । अन्नेनक्ष णिकातृप्तिर्यावज्जीवन्तुविद्यया ॥ अपिच । वाजपेयसहस्रस्यसम्यगि ष्टस्ययत्फलम् । तत्फलंसमवा प्नोतिविद्यादानान्नसंशयः ॥ त स्माद्देवालयेनित्यं धर्मशास्त्रस्यवा श्रुते । पठनंकारयेद्राजन्यदीच्छेच्छ र्ममात्मनः ॥ गोभूहिरण्यवासा सिशयनान्यासनानिच । प्रच्छहं तेन दत्तानिभवन्तिनृपसत्तम ॥ ध र्माधर्म्मंनजानातिलोकोयं विद्यया विना । तस्मात्सदैवधर्मात्मन्वि द्यादानरतोभव ॥ इतिवह्निपुराणे विद्यादाननामाध्यायः ॥ अपिच गारुडे ५१ अध्याये । विद्यांदत्त्वाब्रा ह्मणायब्रह्मलोकेमहीयते । दद्याद्द हरहस्तात्तुश्रद्धयाब्रह्मचारिणे ॥ स र्वपापविनिर्मुक्तोब्रह्मस्थानमवाप्नुया त् इति ॥ यस्तुदेव्या गृहेनित्यंविद्या दानंप्रवर्त्तयेत् । सभवेत्सर्वलोका नांपूज्यः पूजापदंव्रजेत् ॥ धर्मा र्थैयजनस्यातांशुश्रूषावामितद्विधा । तत्रविद्यानवप्तव्याशुभंबीजमिवो

धरे ॥ विद्ययैवसमङ्कामंमर्त्तव्यंब्रह्मवादिना । आपद्यपिहिघोरायां नत्वेनामिरिणेवपेत् ॥ विद्याब्राह्मणमेत्याहशेवधिस्तेऽस्मिरक्षमाम् । असूयकायमांमादास्तथास्यांवीर्यवत्तमा ॥ यमेवतुशुचिंविद्यान्नियतब्रह्मचारिणम् । तस्मैमांब्रूहिविप्रायनिधिपायाप्रमादिने ॥ इति मनुः ॥

विद्यादेवी । स्त्री॰ विद्याधिष्ठात्र्याम् । सरस्वत्याम् ॥ जिनषोडशदेवीषु ॥ यथा । विद्यादेव्यस्तुषोडश ॥ १५२ ॥ रोहिणीप्रज्ञप्तीवज्रशृङ्खलाकुलिशाङ्कुशा । चक्रेश्वरीनरदत्ताकाल्यथोऽसौमहापरा ॥ गौरीगान्धारीसर्वास्त्रमहाज्वालाच मानवी । वैरोट्याच्छुप्तामानसीमहामानसिकेतिताः ॥ १५४ ॥ इ॰ हे॰ च॰ ॥

विद्याधनम् । न॰ विद्ययोपार्ज्जितं वित्तम् ॥ यथाह कात्यायनः । उपन्यस्ते तुयल्लब्धंविद्ययापणपूर्वकम् । विद्याधनन्तुतद्विद्याद्विभागेननियोजयेत् ॥ शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धंप्राध्ययनाच्चयत् । विद्याधनन्तुतत्प्राहुर्विभागेनप्रयोजयेत् । शिल्पेष्वपि हिधर्म्मोऽयं॰ मूल्याद्यच्चाधिकंभवेत्



साधारणस्वर्णादिकमादाय॰ कुण्डलादिकंनिर्माय॰ स्वर्णादिमूल्यात्॰ शिल्पगुणेनयदधिकंलब्धंस्यात्तदित्यर्थः ॥ परनिरस्तंयल्लब्धंविद्यया द्यूतपूर्वकम् । विद्यातिशयेनपणेन॰ द्यूतपूर्वकंयल्लब्धमित्यर्थः ॥ विद्याधनन्तुतद्विद्यान्नविभाज्यं बृहस्पतिः ॥ अस्यार्थं वचनार्थानुक्रमेणाह । यदीति । यदिभवानभ्युपन्यस्यति॰ तदाभवते॰ एतमर्थंतद्देयमितिपणितस्योपन्यासेनिस्तीर्णेलभतेतन्नविभाज्यम् ॥ शिष्यादध्यापितात्॰ आर्त्विज्यतः ऋ यजमानादृत्विग्यालब्धंधनम्॰ दक्षिणाचनप्रतिग्रहेवेतनरूपत्वात्तथा । तथायत्किञ्चिद्विद्ययाप्रश्ने निस्तीर्णे॰ अपणितमेवयदिकश्चित्परितोषाद्ददाति॰ प्रश्ने निस्तीर्णे॰ प्रश्नस्यसम्यगुत्तरेदत्तइत्यर्थः सन्दिग्धप्रश्ननिर्णयादितिव्याचष्टे । तथेति॰ तथायोऽस्मिन्शास्त्रार्थेममसंशयमपनयति॰ तस्मैसुवर्णमिदंददानीत्युपस्थितस्यसंशयमपनीययल्लब्धम् । तत्रैवविकल्पेनव्याख्यान्तरमाहयद्वेति । यद्वा॰ वादिनोर्वादसन्देहे॰ न्यायकरणार्थमागतयोः सम्यङ्निरूपणेनयल्लब्धंपणादिकम् । स्वज्ञानशंसनादितिव्याचष्टे॰ तथेति॰ तथाशास्त्रादिषुप्रज्ञ

ष्टज्ञानविभाज्यतत्प्रतिग्रहादिनाल
ब्धम् । वोढादित्यस्यार्थमाह० तथे
ति । तथाद्वयो शास्त्रज्ञानविवादे०
अन्यचापियचकुत्रचिदन्योन्यज्ञान-
विवादे० निर्जित्ययल्लब्धम्० नि
र्जित्य० एककोटिव्यवस्थापनेनवि
वादमपनीय० लब्धम्० वादिपणि
तराज्ञावाप्रसाददत्तमित्यर्थं . प्रा
ध्ययनादितिव्याचष्टे० तथेति० त
थैकस्मिन्देयेवह्नूनामुपप्लवे० येन
प्रकृष्टमधीत्य० यल्लब्धम् । शिल्पे
ष्वपीत्यस्यार्थमाह० तथेति० तथा
शिल्पादिविद्यया० चित्रकारसुवर्ण
कारादिभिर्यल्लब्धम्० शिल्पगुणेन
यदधिकंलब्धम् । तथाद्यूतेनापि
परनिर्जित्ययल्लब्धं० तत्सर्वंविद्या
धनमविभाज्यमितरैरित्यर्थं . । त
स्मादाथाकथाचविद्ययालब्धमर्ज-
कस्यैवतन्नेतरेषामिति० प्रदर्शना
र्थन्तुव्याख्यायनेनविस्तारितमितिदा-
यभाग : ॥ अथनारद : । कुटुम्बं
विभृयाद्भ्रातुर्योविद्यामधिगच्छत :
। भागविद्याधनात्तस्मात्सलभे
ताश्रुतोपिसन्निति ॥ विभृयादित्ये
कवचननिर्देशाद्भ्रवश्च · । यद्वि
द्यामभ्यस्यतोभ्रातु : कुटुम्बमपरो
भ्रातास्वधनव्ययशरीरायासाभ्यांसं-
वर्द्धयति० तदातद्विद्यार्जितधने
तस्याधिकार:० अश्रुतोमूर्ख : ।

विद्याधर । पुं० देवयोनिविशेषे ।
जीमूतवाहनपुष्पदन्तादौ० कामरू
पिणि० खेचरे ॥ विद्यायागुटिका
ञ्जनादिविषयिण्या:० धरोधारक
॥ रतिबन्धविशेषे ॥ यथा । नार्याऊ
रुयुगधृत्वाकराभ्यांताडयेत्पुन · ।
कामयेन्निर्भयंकामीबन्धोविद्याधरो
मत : ॥ यन्त्रविशेषे ॥ यथा ॥
विद्याधरयन्त्रम् । न० डमरुयन्त्रे ॥
विद्याधार: । पुं० वर्णवृत्तान्तरे ॥
यथा । नागाधीशैर्मोक्तं वृत्त विद्या
धारम्० यत्र : कर्णौ शेते पूर्णैर्भू
मौसारम् । स्यादस्मिन्विश्रामोवेदै
र्वेदैर्वेदै० कृत्वायस्यात्पूर्णैधीर: की
र्त्यायुक्त . ॥ यथा । वन्देपादाम्भो
जन्नित्य सीताभर्तु : कृत्वासिन्धौ
सेतुरक्षोनाथहन्तु . । पित्र्यामाज्ञा
ज्ञात्वाप्राप्तंराज्यंभ्रातु · स्वीयै : स
र्वैर्लोकै : सार्द्धंनार्थयातु : ॥ वि
द्यां धरति । धृञ्० । कर्म्म
ण्यण् ॥
विद्याधिकारी । त्रि० उपनिषन्निर्व्व च
नेनोक्ते ॥ विद्याया: ब्रह्मविद्या
या : अधिकारी ॥ सद्विविध:०
कृतोपास्तिरकृतोपास्तिश्च । तत्रो
पास्तिमाचात्कारपर्यन्तामुपासना
कृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्या
धिकारी । इदानीन्तनस्तप्रायेणा
कृतोपासनएवोत्सुक्यमात्रात्सहसा

विद्यायाप्रवर्त्ततेसतुणोयोधिकारी॰ तस्यज्ञानस्यसवातप्रदेशप्रदीपवत्स द्यसानिवर्त्तनात् । ननुसर्वेषाम पिविदुषामात्मनोनित्यप्राप्तिरूपो मुख्याधिकारः किन्नस्यादविशेषा दविद्यानिवृत्तिरितिचेत्॰शृणु॰अ स्यायम्भावः। यस्तुपास्यदेवतासा साक्षात्कारपर्यन्त सगुणोपासन वि धायविद्यायांप्रवृत्तस्तस्यविचारेणज्ञा नोत्पत्तौविघ्नाभावात्॰आत्मधी र्निश्चयप्राप्तैव । यः पुनरुपासनमकृ त्वाश्रवणाद्यनुष्ठायतस्य निश्चिनोति तस्यचित्तवशीकरणाभावेविघ्नप्रस क्तवात्तत्प्रतिनियमविधिः । नच तत्त्वज्ञानेमाज्ञानस्यनष्टत्वाद्विधिवै यर्थ्यमितिशङ्क्यम् ॰वशीकरणा भावे॰शास्त्रेणनश्येत्परमार्थबुद्धिरि त्युक्तेःपरमार्थस्यांशनाशेपि॰जन्म हेतुत्वज्ञाननाशायोगात् । अन्यथा वेदान्तेषूपास्तिविधीनामेकाग्रत्वद्वा राऽद्वितीयब्रह्मपरत्व नस्यात् । अ तस्तेषांश्रुतिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतिबद्धसाक्षात्कारायनिरन्तर निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे॰विदुषोविधिर्नास्तीत्युक्ता॰ पुनर्विज्ञानज्ञवद्विधिमहतीतिब्रह्म निष्ठाविधीयते॰इत्याद्युक्तिर्नविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधि । पुं॰ विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकाम । त्रि॰ विद्याति शयमाकाङ्क्षिणि ॥

विद्याप्रयोजनम् । न॰ आत्यन्तिकसंस सारनिवृत्तौब्रह्मप्राप्तिलक्षणायाम्॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि॰ विद्यार्थिनि ॥

विद्यारम्भः । पुं॰ प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि॰ विद्याभीप्सिनि ॥ विद्ययैवार्थः सोस्यास्तीति॰इ- नि: ॥

विद्यावान् । त्रि॰ विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्त्यस्य । म- तुप् ॥

विद्याविषयः । पुं॰ परब्रह्मणि॰प्र त्यगात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः । पुं॰ राक्षसविशेषे ॥ त्रि॰तडिदाभजिह्वे ॥

विद्युज्ज्वाला । स्त्री॰ कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री॰ मेघ मुहूर्ते॰दीर्घाका रे॰ज्योतिषि । तडिति । सौदा मिन्याम । चञ्चलायाम् ॥ साचतु र्विधायथा । वातायकपिलाविद्युदा तपायह्वितोहिता । पीतावर्षायवि

श्चयाद्भिर्वायासिताभवेत् ॥ स
न्ध्यायाम् ॥ विशेषेणद्योतते । द्यु
तदीप्तौ । भाजभासीतिक्किप् ॥
चि॰निष्प्रभे ॥
विद्युत्केश : । पुं॰ राक्षसविशेषे ॥
विद्युत्प्रियम् । न॰ कांस्ये ॥
विद्युत्वान् । पुं॰ मेघे ॥ विद्युत :
सन्त्यस्मिन् । मतुप् ॥
विद्युन्माला । स्त्री॰ अनुष्टुप्छन्दोभे
दे ॥ यथा । मोमोगोगोविद्युन्मा
ला । वासोवक्षोविद्युन्मालावर्हश्रे
णीशाक्रश्चाप : । यस्मिन्नास्तातापो
च्छित्त्यैगोमध्यस्थ : कृष्णाम्भोद : ॥
अपिच । उक्तायस्यामष्टौवर्णा : पा
देपादेसर्वेदीर्घा । विश्राम : स्याद्वे
दैर्वेदै : साविद्युन्मालानिर्दिष्टा
॥ यथा । आगामिन्योनोयामिन्यो
यायायाताभूयोभूय : । अभ्रच्छाया
बृक्षारूढ्यमानेनानेनस्यात्किन्नो ॥
विद्युन्माली । पुं॰ राक्षसविशेषे ॥
विद्योपयोग : । पुं॰ विद्यायेष्टसिद्धौ ॥
चतुर्भिश्चप्रकारैर्विद्योपयुक्ताभवति
। आगमकालेन॰आगमकालश्चवि
द्याग्रहणकाल : । १ । स्वाध्यायका
लेन॰स्वाध्यायकालश्चाभ्यासकाल :
। २ । प्रवचनकालेन॰प्रवचनकालोऽ
ध्यापनकाल : । ३ । व्यवहारकालेन॰
व्यवहारोयज्ञानुष्ठनकर्मणि । ४ ।
तत्राद्ययोर्विद्यार्थ्युपयुक्तिमानित्याद
रपूर्वकमन्नवस्त्रादिलाभरूपोपयोग
। तृतीयेप्रतिष्ठा॰शिष्यलाभद्वा
राऽर्थप्राप्ति सत्कारविशेषश्च । चतु
र्थे॰यज्ञादानुष्ठानकालेऽप्रमत्वप्रयो
गप्रयुक्तप्रायश्चित्ताभाव .॰कर्मसा
द्गुण्य॰दक्षिणालाभ . प्रतिष्ठाचेत्युप
योग ' ॰तादृशश्चोपयोग : सर्वाध्य
यनएवेतिमहाभाष्यकारादय : ॥
विद्रम् । न॰ छिद्रे ॥
विद्रधि . । पुं॰ रोगविशेषे । ह्रद्रन्थौ
। ह्रद्व्रणे ॥ अस्यसम्प्राप्तिपूर्व्वकसा
मान्यलक्षणंयथा । त्वक्तमासमेदां
सिप्रदुष्यास्थिसमाश्रिता : । दोषा :
शोथंशनैर्घोरंजनयन्त्यायताभृशम् ॥
महामूलंरुजावन्तंवृत्तंव्याप्यथवाय
तम् । सविद्रधिरितिख्यातोविज्ञे
य : षड्विधश्च स : ॥ पृथग्दोषै : स
मस्तैश्चक्षतेनाप्यसृजातथा । विद्रधि
: षड्विध : प्रोक्तोविशेषोभावसङ्कुले ॥
अलोकापातनंशस्तसर्वस्मिन्नपिविद्र
धौ । मृदुर्विरेकोलघ्वन्नस्वेद : पित्तो
त्तरविना ॥ वेदनम् । विदेर्वहुल
मन्यत्रापिसञ्ज्ञाछन्दसोरितिवारक्
। यद्वा । विद्रास्त्रम्पलायने । आ
तश्चोपसर्गइतिक: । विद्र धीयतेऽ
स्याम् । डुधाञ् । कर्मण्यधिक
रणेचेतिकि : ॥ यद्वा । विद्रस्यधा
नम् । कृञादिभ्य : ॥
विद्रधिनाशन : । पुं॰ शोभाञ्जनवृक्षे ॥

विद्रव:। पुं॰ विद्रुतौ । पलायने॥ धि
 यि । बुद्धौ ॥ विद्रवणम् । द्रुगतौ ।
 ऋदोरप् ॥ निन्दायाम् ॥ चरणे ॥
विद्रावित :। त्रि॰ पलायिते ॥
विद्रुत :। त्रि॰ पलायिते ॥ प्रचलिते
 ॥ द्रवीभूतेस्त ' प्राप्तद्रवीभावे ।
 विलीने । द्रुते ॥ विद्रवतिस्म। द्रु
 गतौ । गत्यर्थेतिक्त ॥
विद्रुति '। स्त्री॰ पलायने । प्रद्रावे ॥
विद्रुम :। पुं॰ रत्नभेदे ॥ प्रवाले
 ॥ किशलये ॥ विशिष्टोद्रुम ॥ य
 द्वा । विशिष्टे द्रौवृक्षे भव . । विशि
 ष्टोद्रुमोस्यस्यवा । बृद्रुभ्यांम .
 ॥ त्रि॰विगतद्रुमेभूमिपर्वतादौ ॥
विद्रुमलता । स्त्री॰ नलीनामौषधौ ॥
 शुषिराविद्रुमलताकपोताङ्घ्रिर्नटी
 नली ॥ विद्रुमस्येवलता ॥
विद्रुमलतिका । स्त्री॰ विद्रुमलताया
 म् ॥
विद्वत्कल्प :। त्रि॰ ईषदूने विदुषि ।
 विद्वदीषोये ॥
विद्वत्संन्यास । पुं॰ सम्यगनुष्ठितै :
 श्रवणमनननिदिध्यासनै: परतत्त्व'
 विदितवद्भि ' सम्पाद्यमाने॰ ज्ञा
 नफलभूतेचतुर्थाश्रमे ॥ तद्ययाञ्चव
 ल्क्यादय : सम्पादयामासु : ॥
विद्वान् । त्रि॰ प्राज्ञे । दक्षे ॥ पण्डि
 ते ॥ वेदविदि ॥ विदितसकलवे
 द्ये । आत्मविदि ॥ व्युत्पन्नमप

रियच्छेतिद्वयविविदिषु वासाधनत्वेनोक्तम्॰ तत्॰ विदुषाख
त : सिद्धमित्याह । लोकद्वयार्थंच
याभ्योव्युत्थानद्वापरियह । द्वय
वे।श्रमश्चैवविदुषानतुयलत ' ॥
आनन्दैकस्वभावस्यमात्मानपश्य
त . कुल ' । काम परिग्रहोवा
स्यात्योकामइतिचश्रुते ॥ वेत्ति
। विदज्ञाने । विदे शतुर्वसुरिति
पाणिनीक्तावसुरादेश ॥ नशिल्प्यादि
ज्ञानयुक्तो विद्वच्छब्द . प्रयुज्यते ॥
विद्वत्वञ्चनृपत्वञ्चनैवतुल्या कदाच
नास्वदेशेपूज्यतेराजाविद्वान्सर्वत्रपू
ज्यते ॥
विद्विट् । त्रि॰ शत्रौ ॥
विद्वेष . । पुं॰ विद्वेषणे । द्वेषिपक्ष
प्रीतौ । वञ् ॥
विद्वेषक :। त्रि॰ विद्वेष्टरि । द्वे
षकर्त्तरि ॥ विद्वेष्टि। द्विष॰ एवु
ल् ।
विद्वेषणम् । न॰ विद्वेषे । वैरे ॥
 अभिचारकर्मविशेषे ॥ स्निग्धाना
 द्वेषजननमिथोविद्वेषणमतम्॥
विद्वेषणी । स्त्री॰ स्त्रीविशेषे ॥
विद्वेषी । त्रि॰ शत्रौ । वैरिणि ॥
 विद्वेषोस्त्यस्यास्मिन्वा । इनि : ॥
विधनम् । त्रि॰ विनाशयति ॥
विधवनम् । न॰ कम्पने ॥
विधरण :। त्रि॰ विधारयितरि ॥

विधवा । स्त्री० रण्डायाम् । मृतभर्तृकायाम् । विश्वस्तायाम् । पतिहीनाचयानारीकामंभवतुपुत्रिणी । धनधान्यसमृद्धापिविधवेत्युच्यतेबुधैः । विगतोधवोभर्त्तायस्याः॥

विधा । स्त्री० गजाशने । इभान्ने ॥ ऋद्धौ ॥ विधौ ॥ विधानम् । डुधाञ् धारणपोषणयोः ॥ आतङ्क ॥ वेतने ॥ कर्माणिविधीयन्तेऽनया ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं० वेधसि । द्रुहिणे ॥ स्मरे । कामदेवे ॥ दिशैयैदृपाति । डुधाञ्० । तृच् । विरन्यापसर्गनिवृत्त्यर्थः ॥ मदिरायामितिराजनिर्घण्टः ॥ भृगुमुनेः पुत्रे॥ विष्णौ कर्माण्यदृष्टपूर्वमासादीनि० तत्फलानिस्वर्गादीनिचविदधातिसृजति । पूर्ववत्तृच् ।

विधात्वभू । पुं० नारदमुनौ ॥

विधातायुः । पुं० सूर्यआभायाम्॥ ब्रह्मणोवयसि ॥

विधाची । स्त्री० पिप्पल्याम् ॥ मद्ये ॥ विधानकल्याम् ॥

विधानम् । न० हस्तिकवले ॥ विधौ॥ कारणे ॥ अप्रवृत्तप्रवर्तने ॥ वेदे ॥ विधीयन्तेऽनेनकर्माण्यग्निहोत्रादीनि । डुधाञ्० । ल्युट् ॥

विधानग: । पुं० पण्डिते ॥ विधानंगायति । गैशब्दे । गापोष्टक् ॥

विधानोक्त । त्रि० विधिशास्त्रबोधिते ॥ विधानेनउक्तः ॥

विधाय । अ० कृत्वेत्यर्थे ॥

विधायक. । त्रि० विधेर्ज्ञापके । विधानस्यकर्त्तरि ॥ विपूर्वोधाञो ण्वुल् ॥

विधायी । त्रि० विधानकर्त्तरि ॥

विधारक । पुं० विधरणे ॥

विधि. । पुं० ब्रह्मणि । परमेष्ठिनि। काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वैद्ये ॥ यागोपदेशग्रन्थे ॥ कर्मणि ॥ लिङाद्यर्थे ॥ वेदे । कुर्यात्क्रियेतकर्त्तव्यंभवेत्स्यादितिपञ्चमम् । एतत्स्यात्सर्ववेदेषुनियतंविधिलक्षणमितिन्यायविदांस्मरणम् ॥ तथाच०पुरुषार्थमुद्दिश्य०कर्मोपासनाज्ञानात्मककाण्डत्रयविधायको वेदो०विधिरितिफलितोर्थः ॥ अज्ञातज्ञापकोवेदभागो०विधिरितिमीमांसकाः । सचताद्दशप्रयोजनवदर्थविधानेनार्थवान्० याद्दशचार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यथा० अग्निहोत्रंजुहुयात्स्वर्गकामइतिविधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमविधत्ते० अग्निहोत्रहोमेनस्वर्गंभावयेदितिवाक्यार्थबोध. । यत्रकर्ममानान्तरेणाप्राप्तं०

तत्रतदुद्देशेनगुणमात्रं विधत्ते । यथादध्नाजुहोतीत्यत्र । होमस्याग्निहोत्रं जुहुयादित्यनेनप्राप्तत्वाद्धोमोद्देशेन । दधिमात्रविधानं । दध्ना होमं भावयेदिति । यत्रतूभयमप्राप्तं । तत्र विशिष्टं विधत्ते । यथा । सोमेनयजेतेत्यत्र । सोमयागयोरप्राप्तत्वात् । सोमविशिष्टयागविधानम् । सोमपदेमत्वर्थलक्षणया । सोमवतायागेनेष्टं भावयेदिति । वाक्यार्थबोधः । नचोभयविधानेवाक्यभेदः । प्रत्येकमुभयस्याविधानात् । किन्तु । विशिष्टस्यैकस्यविधानात् ॥ विधिस्तुर्विधः नियोगविधिरधिकारविधिः प्रयोगविधिश्चेति ॥ विधिरत्यन्तमप्राप्तौनियमः पाक्षिकेसति । तत्रचान्यत्रचप्राप्तौ परिसङ्ख्याविधीयते ॥ अप्राप्तप्रापकोविधिरितिवैयाकरणाः ॥ न्यायमतेविधिर्यथा । प्रवृत्तिः कृतिरेवात्रसाचेच्छातोयतस्ततः । तज्ज्ञानं विषयस्तस्यविधिस्तज्ज्ञापकोथवा ॥ विधिजन्यज्ञानात् प्रवृत्तिरुत्पद्यते । सा । इच्छातः । चिकीर्षातः । चिकीर्षाचकृतिसाध्यत्वेष्टसाधनत्वज्ञानात् । तज्ज्ञानस्यविषयः कार्यत्वमिष्टसाधनत्वञ्चविधिरितिप्राचीनमतम् । स्वमतमाह । तज्ज्ञापकोथवेति । इष्टसाधनत्वानुमापकप्रमाभिप्रायोविधिप्रत्ययार्थः । इ त रिदासीयकुसुमाञ्जलिः ॥ विधिर्विधायकइतिन्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यविधिः । अग्निहोत्रं जुहुयात् स्वर्गकामइत्यादि ॥ विधीयतेनेनसुखदुःखे । धाञ् । उपसर्गेघोः किः ॥ विधत्तइतिविधिर्वा । बाहुलकात्कर्त्तरिकिः ॥ यद्वा । विधविधाने । इन् । इगुपधात्किदितिकित्वान्नगुणः ॥ विधानमनेनवा । पूर्ववत्किः ॥

विधिगोचरः । त्रि० विधिविषये ॥

विधिघ्नः । त्रि० शास्त्रघ्ने ॥

विधित्समानः । त्रि० विधातुमिच्छति ॥

विधित्सा । स्त्री० विधातुमिच्छायाम् ॥ विपूर्वाद्दधातेः सनिमीमेत्यादिना । इकारः । अत्रलोपोभ्यासस्येत्यभ्यासलोपः ततः स्त्रियामित्यनुवृत्तौ । अप्रत्ययादितिअप्रत्ययेटाप् ॥

विधित्सितः । त्रि० विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सुः । त्रि० विधातुमिच्छौ ॥ विपूर्वाद्दधातेः सन्नन्तादुप्रत्ययः ॥

विधिदर्शी । पुं० सदस्ये । न्यूनाधिकविचारकेऋत्विग्विशेषे ॥ विधिदृष्टशीलमस्य । णिनिः ॥

विधिदृष्टः । त्रि० यथाशास्त्रनिश्चिते ॥ विधिनादृष्टः ॥

विधिदेशक : । पुं॰ सदस्ये । विधिद र्शिनि ॥

विधियज्ञ : । पुं॰ विधिनानुष्ठीयमा नेवाद्ययज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयीयज्ञ : ॥

विधिवत् । अ॰ यथाविधि । विध्यनु सारिणि स्वर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रय त्नभाव्ये ॥ विधेर्विषय : ॥

विधिहीन . । त्रि॰ यथाशास्त्रबोधित विपरीते ॥ विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्म णि ॥ राक्षसे ॥ विध्यतिविरहिणाम् ॰विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ अमावास्यायाम् ॥

विधुत : । त्रि॰ त्यक्ते ॥ निरस्ते ॥ क म्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये ॥ विधुंतुदति । तुद॰ । विध्वरुषोस्तु दइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दा क्षायिण्योविधुप्रिया : ॰इतिकोषा त्तारम् ॥

विधुरम् । न॰ प्रविश्लेषे ॥ वैकल्ये त्रि॰विकले ॥ विगताधू : कार्यभा र : । ऋक्पूरित्यप् । धुरोविगतत्व तिप्रादिसमासोवा ॥ न॰प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् ॥ हृ॰मे॰ ॥

विधुरित । त्रि॰ विश्लेषिते ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादि भ्यइतिङित्वाद्गुणाभाव . ॥

विधूत ' । त्रि॰ कम्पिते ॥ त्यक्ते ॥ वि धूयतेस्म । धूञ्कम्पने । क्त : । य स्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि ' । ल्युट् । धू ञ्प्रियोर्नुग्वक्तव्य : ॥ अस्यादीना मृगाकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰क्त : ।धूञ् प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे ।कृष्णरक्तमिश्रि तवर्णे ॥ त्रि॰तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेण धृते ॥ विष्टब्धे ॥

विधृति . । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेवि नियुज्यतेऽत्राज्ञाप्रवाक्येनकर्माङ्गत्वे नेतिहरिहरभाष्यम् ॥ त्रि॰विनय ग्राहिणि । वचनेस्थिते ॥ विधिज न्यबोधविषये ॥ यथा । अनुवादम

मुक्तातुनविधेयसुदीरयेत् । नह्यल
व्यास्यदकिञ्चित्कुचचित्प्रतितिष्ठति
॥ विधातु शक्य ' । यचीयत् । ई
यति ।। गुण :॥ विधिगम्ये । य
नुष्ठेये । कर्त्तव्ये ॥ वश्ये ॥
विधेयता । स्त्री॰ विधेयत्वे । विधिज
न्यबोधविषयत्वे ॥ यथा ॥ यथाब्र
ह्मवधादिषुपापस्यनिषितयोपयुक्ता
ब्राह्मणादिस्तानिर्देगुण्य॰तथागङ्गा
स्नानादिषुपुण्यस्यविधेयतावच्छेदका
गङ्गादिस्नानिर्देगुण्यमितिप्रायश्चित्तत
त्त्वम् ॥
विधेयवर्त्ती । त्रि॰ वशवर्त्तिनि ॥ वि
धेयेवर्त्तते॰विधेयवर्त्तयतिवा । णि
नि ॥
विधेयात्मा । पुं॰ वशीकृतात्म : कर
णे ॥ विधेयआत्मायस्य ॥
विनत :। त्रि॰ प्रणते ॥ भुग्ने ॥ शि
क्षिते ॥ विनमतिस्म । णम॰। क्त :
॥ विशेषेणनतोवा ॥
विनता । स्त्री॰ तार्क्ष्यंजनन्याम्। सुप
र्णायाम् ॥ पिटकाभेदे ॥
विनतासूनु :। पुं॰ अरुणे । सूर्यसा
रथौ ॥ गरुडे । खगेश्वरे ॥ विनता
या : सूनु ॥
विनति :। स्त्री॰ विनये ॥ विशिष्टान
ति ॥
विनद :। पुं॰ छगणे। शिलीन्ध्रे ॥
विनम्र :। त्रि॰ विनयिनि ॥ विशेषे
णनम्र ' ॥
विनम्रकम् । न॰ तगरपुष्पे ॥
विनय । पु॰ शिक्षायाम् ॥ प्रणतौ
। विनीतत्वे । निरहङ्कारे । सौशी
ल्ये । अनौद्धत्ये । अवनतौ ॥ वि
नयप्रशंसायथा । विनयोपग्रहानभू
त्यैकुर्वीतनृपति : सुतान् । अवि
नीतकुमारंहिकुलमाशुविशीर्यति ।
विनीतमौरसपुत्र यौवराज्येऽभिषेच
येत् ॥ अपिच । वृद्धांश्चनित्यंसेवेत
विप्रान् वेदविद ' शुचिन् । वृद्ध
सेवीहिसततं रक्षोभिरपिपूज्यते ॥ ते
भ्योधिगच्छेद्विनयविनीतात्मापिनि
त्यश :॥ विनीतात्मादिनृपतिर्नवि
नश्यतिकर्हिचित् ॥ बहवोऽविनया
न्नष्टाराजान : सपरिच्छदा : । वन
स्थाअपिराज्यानिविनयात्प्रतिपेदि
रे ॥ वेणोविनष्टोऽविनयान्नहुषश्चैव
पार्थिव :।सुदा:सौयवनश्चैवसुमुखो
निमिरेवच ॥ पृथुस्तुविनयाद्राज्यंप्रा
प्तवान्मनुरेवच । कुवेरश्चधनैश्वर्यं
ब्राह्मण्यञ्चैवगाधिज :॥स्मृतिमनु:
॥ द्विविधोविनय स्वाभाविक. कृ
त्रिमश्चेतिकौटिल्य । विशिष्टोन
य ' ॥ दण्डे ॥ त्रि॰ क्षिप्ते ॥ वि
प्ते ॥ निभृते ॥ विजितेन्द्रिये ॥
विनयग्राही । त्रि॰ विधेये। वचनेस्थिते
। आश्रवे ॥ विनयंग्रहीतुंशीलमस्य
। सुपोतिणिनि :॥

विनयस्थ । त्रि० विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । ष्ठा० । क : ॥

विनया । स्त्री० बलौषधौ । वाट्यालके ॥

विनयी । त्रि० विनयान्विते ॥ विनयोस्यास्ति । इनि : ॥

विनद्द । पु० ऋषभकूजितसमेश्वरविशेषे ॥ विशिष्टोनद्द ॥

विनशनम् । न० तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट । त्रि० अन्तर्हिते ॥ विनश्यतिस्म । णशअदर्शने । गत्यर्थेतिक्त ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वसविशिष्टे ॥ पतिते ॥

विनष्टि । स्त्री० विनाशे ॥ अशिर्भावेक्तिन् ॥

विनस : । त्रि० विगते । गतनासिके ॥

विना । अ० वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यानानाञौनसहेति॰निषेधार्थादिशब्दात्ना ॥

विनाकृत । त्रि० विरहिते । भिन्ने ॥ द्व०त्रि० ॥

विनाम । पु० शरीरस्यनम्रतायाम् । व्यथयावपुषोनमने ॥ विनमनम् । णम । घञ् ।

विनामक : । पु० अधिमासे ॥

विनायक । पु० विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ जिने ॥ गुरौ ॥ विनयतिहितमनुशास्ति । णीञ्० । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि०नायकवर्जिते ॥

विनायिका । स्त्री० तार्क्ष्यपत्न्याम ॥

विनारुहा । स्त्री० त्रिपर्णिकायाम् ॥

विनाश : । पु० अदर्शने । विनष्टे ॥ ध्वसे ॥ विनशनम् । णशअदर्शने । घञ् ॥

विनाशक : । त्रि० विनाशकर्त्तरि ॥ विनाशयतितच्छीलादि । णश० । विपूर्वोहेतुमण्यन्त. । निन्दहिसक्लिशखादविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि० अनित्ये । देशकालवस्त्वात्मकत्रिविधपरिच्छेदवति ॥ विनष्टुंशीलमस्य । णिनि . ॥ विनाशकारणशीले ॥

विनाशोन्मुख । त्रि० पक्के ॥ नाशोद्यते ॥ विनशनविनाश : । भावेघञ् । उद्गतंमुखमारम्भोऽस्य । विनाशेउन्मुख : ॥

विनासक । त्रि० अनासिके । गतनासिके ॥ विगतानासायस्यस : ॥

विनाह । पु० कूपाननपिधानके ॥ आच्छादने । हलधेतिघञ् ॥

विनिगमकः। त्रि॰ विशेषेणनितरां बोधके। ज्ञापके॥

विनिगमना। स्त्री॰ एकतरपक्षपातिन्यांयुक्तौ। वैकल्पिकेषुवस्तुष्वेकस्मिन्नवधारणाशक्तौ॥

विनिद्र। त्रि॰ उन्मीलिते। विकसिते। स्फुटिते। निद्रारहिते॥ विगतानिद्राऽस्य॥

विनिद्रत्वम्। न॰ निद्रारहितत्वे॥ प्रबोधे॥

विनिनीषु। त्रि॰ विनेतुमिच्छौ॥

विनिपातः। पुं॰ निपाते। अपपाते। दैवादिव्यसने। दैविकानर्थे। विशिष्टोनिपातः। अवमाने॥

विनिमयः। पुं॰ परिदाने। प्रतिदाने॥ व्यतिहारे॥ व्यत्यये। अन्यस्मिन्नन्याभासे॥ बन्धके॥ यथा। विक्रयैर्गोविनिमयैर्दत्त्वागोमांसखादके। व्रतंचान्द्रायणंकुर्याद्वधेसाक्षाद्वधीभवेत्॥ कृतिगोभिलवचनम्॥ विशेषेणनिमीयते। मी ञ् हिंसायाम्। एरच्॥

विनियोगः। पुं॰ विनियोजने॥ अनेनेदन्तुकर्त्तव्यविनियोगः प्रकीर्त्तितः॥ विशिष्टोनियोगः॥ विभजने। विनियोगोऽर्पणंफले॰ हे॰ हेमचन्द्र॥

विनियोगविधिः। पुं॰ अङ्गप्रधानसम्बन्धबोधकोविधिः॥ यथा। दध्नाजुहोतीति। सहितृतीयाप्रतिपन्नाङ्गभावस्यदध्नोहोमसम्बन्धंविधत्ते॰दध्नाहोमंभावयेदिति। गुणविधौच धात्वर्थस्यसाध्यत्वेनैवान्वय। क्रियाश्रयत्वेनापि। यथादध्नेन्द्रियकामस्यजुहुयादित्यत्र॰दधिकरणत्वेनेन्द्रियंभावयेत्। तस्यविनियोगमित्याकाङ्क्षायां॰सन्निधिप्राप्तहोमाश्रयत्वेनान्वेति। एतस्यधे: सहकारिभूतानि॰श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणिषट्प्रमाणानि। एतत्सहकृतेनानेनविधिनाङ्गत्वंपरोद्देशसाध्यप्रवृत्तिकृतिसाध्यत्वरूपपाराध्यापरपर्यायंज्ञाप्यते॥

विनियोजितः। त्रि॰ प्रवर्त्तिते। विनियुक्ते॥

विनिर्णीतः। त्रि॰ विचार्यस्थापिते॥ विशेषेणनिर्णीतः॥

विनिर्देश्यः। त्रि॰ वक्तव्ये॥

विनिर्धूतः। त्रि॰ दूरतस्त्यक्ते। विशेषेणनितरांकम्पिते॥ समुन्मूलिते॥ परित्यक्ते॥

विनिर्भयः। पुं॰ साध्यगणविशेषे। त्रि॰भयरहिते॥

विनिर्मुक्तः। त्रि॰ वियुक्ते॥

विनिर्मोक्षः। पुं॰ विनिर्मुक्तौ॥

विनिवृत्तः। त्रि॰ निष्पन्ने। समाप्ते।

विनिवृत्त । निवृत्तविशिष्टे । निरस्ते । शान्ते ॥

विनिवृत्तकाम: । त्रि० विवेकवैराग्यद्वारात्यक्तसर्वकामे यि ॥ विशेषेणनिवृत्त: कामोऽस्य ॥

विनिवेशित : । त्रि० प्रतिष्ठापिते । स्थापिते ॥

विनिश्चित । त्रि० प्रमाणैर्निर्णीते ॥

विनिष्कल : । त्रि० निरवयवे ॥ विशेषेणनिर्गता कला यस्मात् ॥

विनिहत : । त्रि० विनष्टे ॥

विनीत: । पु० सुवहाश्वे । साधुवाहिनि ॥ वणिजि ॥ दमनकवृक्षे ॥ शिक्षितवृषभादौ ॥ त्रि० जितेन्द्रिये । अपनीते । हृते । निभृते ॥ विनयान्विते । अनुद्धते । नम्रे ॥ शिक्षिते ॥ क्षिप्ते ॥ कृतदण्डे ॥ व्यनायि० विनीयतेस्मवा । णीञ् प्रापणे । क्त: ॥

विनीतक । पुं० दमनकवृक्षे ॥ पुं० न० वैनीतके । परम्परावाहने ॥

विनीय : । पु० पिष्टऔषधादिप्रक्षेप । कल्के ॥ कपटे ॥ विनीयतेसिद्धिं प्राप्यते ॥ णीञ् । विपूयविनीये तिक्यप् ॥ पापे ॥

विनीयमान : । त्रि० शिक्ष्यमाणे ॥

विनेता । पुं० देशके । नियामके ॥ राजनि ॥ इ० मे० ॥ विशिष्टोनेता ॥ देशिके ॥ इ० हे० चन्द्र. ॥

विनेय : । त्रि० नेतव्ये ॥ विनेतुंयोग्य: । णीञ् । अचोयत् ॥ दण्ड्ये ॥

विनेयक : । पु० आदेशके ॥ राज्ञि ॥

विनोक्ति: । स्त्री० अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित् प्रस्तुतंहीनमुच्यते । विद्याहृद्यापि सावद्याविनाविनयसम्पदम् ॥ किञ्चित्०विनाप्रस्तुतशब्दैर्हीनदुष्टमुच्यतेचेत्तदाविनोक्तिर्नामालङ्कार इत्यर्थ: ॥ प्रकारान्तरमपि । तच्च किञ्चिद्विनारम्यविनोक्ति सापि कथ्यते । विनाखलैर्विभात्येषाराजेन्द्रभवत: सभा ॥ तत्प्रस्तुतंकिञ्चिद्विनारम्यञ्चेत्सापिविनोक्तिर्नामालङ्कार. कथ्यते ॥

विनोद । पुं० क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकंविभज्यद्विधादेवि०जीवस्वरूपेतिनाम्ना । शिवस्याजीवत्वमापादयन्तीपुनर्जीवमेनंशिवाकरोषीति ॥ कुतूहले ॥ चमत्कारविशेषे ॥ अपनोदे ॥ राजगृहविशेषे ॥ आलिङ्गनविशेषे ॥ तल्लक्षणयथा । नायकोनायिकायादक्षिणपादंवामपादंवास्वमध्यदेशे०स्वदक्षिणपादंवामपादंवा०नायिकामध्यदेशेनिधाय०वक्षसिवक्ष. ०ओष्ठेचोष्ठंदत्वायदाश्लिष्यतितदितिकामशास्त्रम् ॥

विनोदित : । त्रि० अपनीते ॥ सद्धा

तविशेषे ॥ तारकादित्वादितच् ॥

बिन्द । पु॰ विजयाख्येमुहूर्ते ॥ बिन्दति । विदृ लाभे । अनुपसर्गाल्लिम्पविन्दधारीत्यादिनाश । शेमुचादीनामितिनुम् ॥

बिन्दु । पुं॰ जलकणायाम । विप्रुषि · पृषति ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये ॥ रूपकार्यप्रकृतौ ॥ लवे ॥ अनुस्वारे ॥ नादोत्तवे ॥ त्रि॰ वेदितरि । ज्ञातरि । विज्ञानशीले ॥ बिन्दति॰विदिष्ववयवे । बाहुलकादु । पवर्गीयादिः ॥ यथा । वेत्तितच्छील · बिन्दुरिच्छुरितिसाधु ॥ दातरि ॥ वेदितरि ॥

बिन्दुचित्रकः । पुं॰ मृगविशेषे ॥ बिन्दुभिश्चित्र ॰सएवकः ॥

बिन्दुजालम् । न॰ बिन्दुजालके ॥

बिन्दुजालकम् । न॰ तारुण्याज्जायमानेगजमुखादिस्थबिन्दुसमूहे । पद्मके ॥ बिन्दूनांजालकमिव ॥

बिन्दुतन्त्र । पु॰ शारिफलके ॥ तुरङ्गे ॥

बिन्दुपत्रः । पुं॰ भूर्जवृक्षे ॥

बिन्दुरेखकः । पुं॰ पक्षिविशेषे ॥

बिन्दुसरः । न॰ हैमवते॰सरोविशेषे ॥ यथा । अभ्युत्तरेणकैलासंशिवंसर्वौषधि गिरिम् । गौरन्तुपर्वतश्रेष्ठं हरितालमयप्रति ॥ हिरण्यशृङ्गः ॰सुमहान्दिव्यौषधमयोगिरि · । तस्यपादेमहद्दिव्य सर · काञ्चनसन्निभम् ॥ रम्यबिन्दुसरोनामयत्रराजाभगीरथ . । गङ्गार्थंसतुराजर्षिरुवासबहुला समा ॥ दिवयास्यान्तिमेपूर्वंगङ्गातीयपरिप्लुता · । तत्रत्रिपथगादेवीप्रथमन्तुप्रतिष्ठिता ॥ सोमपादात्प्रसूतासासप्तधाप्रतिभज्यते । यूपामणिमयास्तत्रचितयश्चहिरण्मया . ॥ तत्रेष्ट्वाक्रतुभि . सिद्ध . शक्र सुरगणै : सह । दिव्यच्छायापथस्तत्रनक्षत्राणान्तुमण्डलम् ॥ दृश्यतेभास्वरारात्रौदेवीत्रिपथगातुसा । अन्तरीक्षदिवञ्चैवभावयित्वाभुवंगता । भवस्याङ्के पतितासरुद्धायोगमायया । तस्यायेबिन्दव . कैचित्क्रुद्धाया : पतितो भुवि ॥ कृतस्तुतैर्बिन्दुसरस्ततोबिन्दुसर स्मृतम् ॥ इतिमात्स्ये १०१ अध्याय ॥

बिन्ध्य । पुं॰ जलबालके । बिन्ध्याचले ॥ व्याधे ॥ विरुद्ध ध्यायति । ध्यै चिन्तायाम् । आतश्चोपसर्गइतिकः पृषोदरादि · ॥ यथा । विवृध्यते । विवृध्यीदीप्तौणिच् । अन्तर्भावितण्यर्थ. । शकन्ध्वादि · । अघ्न्यादिर्वा ॥ नर्मदासुरसाद्याश्चनद्योविन्ध्यविनिर्गता : ॥

विन्ध्यकूट · । पुं॰ अगस्त्यमुनौ ॥ विन्ध्याद्रिशृङ्गी ॥

विन्ध्यवासिदेशः । पुं॰ विन्ध्यस्थदेशे षु ॥ यथा । मालवाश्वकरूषाश्चमेकलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्चभोजाः किष्किन्धकैः सह ॥ तोषलाः कोशलाश्चैव त्रैपुरावैदिकास्तथा । तुमुरास्तुम्बुराश्चैवपट्सान्निषधैः सह ॥ अनूपास्तुण्डिकेराश्चवीतिहोत्राह्यवन्तयः । एतेजनपदाः ख्याताविन्ध्यपृष्ठनिवासिन ॥ इतिमत्स्यपुराणम् ॥

विन्ध्यवासी पुं॰ व्याडिमुनौ ॥

विन्ध्यवासिनी । स्त्री॰ विन्ध्याचलनिवासिन्यादुर्गायाम् ॥ विन्ध्येवतीर्थं देवार्थंकृतोचिरोमहाभटैः । अद्यापितत्रसावासातेनसाविन्ध्यवासिनी ॥ इतिदेवीपुराणम् ॥

विन्ध्यस्थः । पुं॰ व्याडिमुनौ ॥ त्रि॰ विन्ध्याचलस्थिते ॥ विन्ध्येतिष्ठति स्था॰ । कः ॥

विन्ध्या । स्त्री॰ लवलीवृक्षे ॥ त्रुटौ । सूक्ष्मैलायाम् ॥

विन्ध्याचलनिवासिनी । स्त्री॰ विन्ध्यवासिन्याम् ॥ नन्दगोपगृहेजाता यशोदागर्भसम्भवा । ततस्तौनाशयिष्यामिविन्ध्याचलनिवासिनी ॥ विन्ध्याचलेतयापिगङ्गातीरेनिवासिनीतिबोध्यम् । अयमवतारोभगवत्याजातएवेतिपुराणे प्रसिद्धम् ॥

विन्ध्यावली । स्त्री॰ बलिपत्न्याम् । बाणराजमातरि ॥

विन्ध्यावलीपुत्र । पुं॰ बाणासुरे ॥

विन्ध्यावलीसुतः । पुं॰ बाणराजे ॥

विन्नः । त्रि॰ विचारिते । लब्धे ॥ स्थिते ॥ ज्ञाते । विद्यतेस्म । विद विचारणे । क्त. । नुदविदेत्यादिनानत्वम ॥

विन्यस्तः । त्रि॰ क्रमेणस्थापिते । रचिते ॥ न्यस्तविन्यासे ॥ विशेषेणन्यस्तो ॥ विन्यस्यतेस्म । असु॰ । क्तः ॥

विन्याकः । पुं॰ कुठावे ॥

विन्यासः । पुं॰ विभज्यस्थापने ॥ यथा । गुह्येलुप्तविन्यासोविश्लेषोजगदण्डवत् । विद्युच्चौरवन्न्यासोविधेयः सदसोपरि ॥ वैनस र्गिक प्रवृत्तिः ... मितियुक्तत्वप्रसक्तः ॥ विन्यसनम् । असुक्षेपणे । विनिपूर्वं । ततोघञ् ॥ सन्निवेशे ॥ विशिष्टोन्यासः ॥ रचने ॥

विपक्षः । पुं॰ रिपौ । द्विषि । प्रतिवादिनि । स्वाभाववति । निश्चितसाध्याभाववति ॥ यथा॰ धूमवत्त्वे हेतौह्रद ॥ विरुद्धः पक्षो । विविधः पक्षोऽस्यवा ॥

विपञ्चिका । स्त्री॰ विपञ्च्याम् ॥

विपञ्ची । स्त्री वीणायाम् । वल्लक्याम्

म् ॥ विपञ्चीषु सप्तस्वरान् वा दयन्त्यस्तवद्वारिगायन्तिगन्धर्वक- न्या । चच सावधानेनचित्तेनमा स समाकर्ण्यं सर्वं मयाप्रार्थितासि विप चपतिविस्तारयतिशब्दं । पचि विस्तारे । ण्यन्तादच् । गौरादि । ॥ केली । लीलायाम् ॥

विपण : । पुं॰ विक्रये । विक्रयक्रिया याम् ॥ विपणनम् । पणव्यवहा रे । घञ् । स च्चापूर्वकत्वान्नवृद्धि: ॥ खनोघचेतिघो वा ॥

विपणि : । पुं॰ स्त्री॰ विक्रयार्थप्रसा रितनानाद्रव्यायांवणिग्वीथ्याम् । पण्यवीथिकायाम् । वणिज् व्यवहा र॰बजार॰बाणिज्जावीथी॰इतिच भाषाप्रसिद्धायाम् । पण्यवीथ्याम् । वणिजांविक्रयस्थाने ॥ विपण्यते॰ अस्यांवा । पण॰ । सर्वधातुभ्यइन् ॥ विपणन्तेऽनया । इक्कृष्यादिभ्य: ॥

विपणी । पुं॰ वणिजि ॥ विपणोव्यव हार . सोऽस्यास्ति । इनि : ॥ बुध भेदे ॥

विपणी । स्त्री॰ पण्यवीथ्याम् ॥ कृदि कारादक्तिनइतीष् ॥

विपण्यु : । त्रि॰ विगतव्यवहारे ॥

विपति : । पुं॰ खगेश्वरे । गरुडे ॥

विपत्ति : । स्त्री॰ यातनायाम् ॥ आ पदि । विपदि ॥ मरणे । विनाशे ॥ यथा । यस्मिन्राशिगतेभानौविप त्तिं यान्तिमानवा: । तेषातचैवक र्सं व्याधिर्मृत्युदानोदक्रिया ॥ विपद नमनयावा ॥ पदगतौ । स्त्रियांक्तिन् ॥ पु॰ विशिष्टपदातौ ॥

विपथ : । पुं॰ निन्दितपथे । व्यध्वे । दुरध्वे । कदध्वनि । कापथे ॥ वि रूप : पन्था : । प्रादयोगताद्यर्थइ तिसमास . । ऋक्पूरित्य : ॥

विपत्॰द् । स्त्री॰ विपत्तौ ॥ विपद्नम नयावा । सम्पदादित्वात्क्विप् ॥ तृतीयताराराम् ॥

विपदम् । न॰ नभसि ॥ बीनांवयसां पदविहारस्थानम् ॥ त्रि॰विगतप्र तिष्ठे ॥

विपदा । स्त्री॰ विपदि ॥

विपन्न : । पुं॰ भुजङ्गमे॥ त्रि॰विपदा क्रान्ते ॥ नष्टे ॥ विपद्यतेस्म । प द॰ । क्त : । नत्वम् ॥

विपरिणाम : । पुं॰ विशिष्ट : परि- णामे ॥

विपरिश्रम : । पुं॰ आयासेसत्यपिश्र मरहिते ॥

विपरीत : । त्रि॰ तम : प्रकाशावि वान्योन्यव्यावृत्तरूपे । प्रतिकूले । उलटा॰इ॰भा॰ ॥ यथा॰धर्मविप रीतोऽधर्म : ॥ पुं॰रतिबन्धविशेषे ॥ यथा । पादमेकमुरौकृत्वाद्वितीयकटिसंस्थितम् । नारीपुरमते कामीविपरीतस्तुबन्धक : ॥ अपिच

। पादमेकमुरौकृत्वा द्वितीयस्कन्धसं
स्थितम । कामिन्या : कामयेत्का
मौबन्ध • स्याद्विपरीतक ॥
विपरीतभावना । स्त्री॰ अतस्मिंस्तदु
द्धौ ॥ यद्यथावर्त्ततेतस्यतत्त्व द्विस्वा
ऽन्यथात्वधी : । विपरीताभावना
स्यात्पित्रादावरिधीर्यथा ॥
विपरीता । स्त्री॰ कामुक्याम् ॥
विपर्ण : । त्रि॰ पर्णरहिते ॥
विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰
पत्ररहिते ॥
विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्या
से । विपर्यासे । व्यत्यये ॥ मिथ्या
ज्ञाने । यथाशुक्तं विन्दुरजतमिति
॥ अन्यथाभावे । देहादिष्वात्माभि
मानलक्षणे । यथार्थानिश्चये । अ
तत्त्वज्ञाने ॥ विपर्ययादिष्यतेबन्ध .
। अविद्यास्मितारागद्वेषाभिनिवे
शा : यथासङ्ख्यतमोमोहमहामो
हतामिस्राअन्धतामिस्रसज्ञका ' पञ्च
विपर्ययभेदाभवन्ति ॥ लक्षणञ्चयथा
। किञ्चित्सामान्यतोन्यत्रमतिरन्या
विपर्ययः । किञ्चित्साधारण्यादन्य
स्मिन्नन्याहशोबुद्धिर्विपर्यय ' । मरु
मरीचिकास्विवजलावगति ' ॥ अ
पिच । विपर्ययस्तमोयोनिर्मिथ्या
रूपश्चयासच । सामान्यमात्रकाभा
सात्सत्त्वात्मेतिविनिश्चित: ॥ वि
पर्ययस्यमिथ्यारूपत्वात्तम प्रभ

वत्वम्॰ सचविपर्यय ' साधारण्य
मात्रग्रहणात्प्रकाशरूप ' सत्त्वात्म
कोपिनिश्चित : ॥ विपर्ययणम् । इ
णगतौ । एरच ॥
विपर्य्यस्त । त्रि॰ मिथ्याज्ञानविशि
ष्टे ॥ विपरीते ॥
विपर्य्याय । पुं॰ विपरीतमयने ।
अन्यस्यान्यरूपग्रहणे ॥
विपर्य्यास . । पुं॰ विपर्यये । व्यत्य
ये । व्यतिक्रमे । अतस्मिंस्तद्बुद्धौ
। अविवेके ॥ विपर्य्यसनम् । अ
सु॰ । घञ् ॥
विपव्य : । त्रि॰ शोधनीये ॥
विपश्चित् । त्रि॰ विदुषि । दोषज्ञे ।
पण्डिते । अत्यन्तविवेकिनि । मे
धाविनि ॥ सर्वज्ञे॰निरस्तभेदे॰अ
विपरिलुप्तचैतन्यस्वभावे ॥ परमात्म
नि ॥ विप्रकृष्ट निश्चिनोति॰चेतति॰
चिन्तयतिवा । पृषोदरादि : ॥
विपाक : । पुं॰ पचने ॥ स्वादे ॥
कर्मणोविसदृशफले ॥ कर्मण :
परिणामे । दुर्गतौ ॥ जात्यायु
र्भोगात्मकेकर्मफले ॥ पचनंपा
क : विशिष्टपाक : विरुद्ध : पो
कोऽस्यवा ॥ विपच्यतेवा । घ
ञ ॥ विपाककटुयत्कर्म्मतत्स्थ
सन्निपण्डिता : ॥ जाठरेणा
ग्निनायोगात्यदुदेतिरसान्तरम् ।
रसानांपरिणामान्तेसविपाकइति

स्मृतद्रूतिसुश्रुत ' ॥ अपिच । मि ष्ट ' कटुश्चमधुरमम्लो ऽम्ल पच्य ते रस ' । कटुतिक्तकषायाणांवा क स्यात्प्रायश . कटु ' ॥ तथा चवाग्भट : । त्रिधारसानांपाक स्यात्स्वाद्वम्लकटुकात्मक ' । प्रा य . पदेन॰ ब्रीहि : स्वादुरम्लविपा क ' शिवाकषायामधुपाका । शु ण्ठीकटुकमधुरपाकित्यादि ' ॥ विपाकानांगुणायथा । स्त्रि ष्मकन्म धुर ' पाकोवातपित्तहरोमत . । अम्लस्तुकुरुतेपित्तं वातघ्नं श्रगदा- पह : ॥ कटु : करोतिपवनंकफं पित्तस्त्वनाशयेत् । विशेषएवरसतो विपाकानांनिदर्शित : ॥

विपाचनम् । न॰ नरके ॥

विपाट : । पुं॰ वाणे अस्त्रकाण्डके । शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पुं॰ शुभ्रे ॥ अति शुभ्रे ॥ त्रि॰ तद्वति ॥

विपादिका । स्त्री॰ । पादस्फोटे । वि वाइ॰ इ॰ भा॰ ॥ प्रहेलिकायाम् ॥ वैपादिकपाणिपादेस्फुटनतीव्रवेद नम् । कण्डुमद्भि . सरागैश्च गण्डैरलसकंविदम् ॥ विपादिका वातश्लेष्मोद्भवेतिमाधव : । अयंकु ष्ठरोग : ॥

विपाट् । स्त्री॰ विपाशायाम् ॥ पा श विमोचयति । सख्यायपाशैस्था दिना॰पाशान्मोचनद्रूतिक्विच् । क्षिप्चेतिक्षिप् ॥

विपाश ' । त्रि॰ पाशरहिते ॥

विपाशा । स्त्री॰ नदीविशेषे । विपा शि ॥ पाशंविमोचयति । सख्या यपाशिस्थादिना॰पाशान्मोचनद्रूति क्विच् । तत : पचाद्यच् । पुत्र शोकाद्वेिषविपाश बद्धाप्रविष्टं वशिष्ठ पाशच्छेदात्विपाशितवतीविमुक्त पाशंकृतवतोतिविपाशा । अस्या जलस्यगुणायथा । शतद्रोर्विपा शायुज ' सिन्धुनद्या ' सुशीत ल घुस्वादुसर्वामयघ्नम । जल निर्मलं दीपन पाचनञ्चप्रदत्ते बल बुद्धिमेधा युषश्च तिराजनिर्घण्ट : ॥

विपिनम् । न॰ अरण्ये । गहने । वने ॥ वेपन्तेऽत्र । टुवेपृकम्पने । वेपितुशीङ्स्वजेतीनन् ॥ विशेषे णपियत्यत्रवा । पिगतौ । बाहुल कान्नक् ॥

विपिनतिलकम् । न॰ अतिशक्वरी छन्द ' प्रभेदे ॥ तल्लक्षणंयथा । विपिनतिलक नसनरेफयुग्मे र्भवे त् । यथा । विपिनतिलक विकसि तं सिन्तागमेमधुकृतमदैर्मधुकरै ' क्वणयिवृतम् । मलयमरुताश्चित लास्यमालोकयन्व्रजयुवतिभिर्वि ह रतिस्मसुधोहरि : ॥

विपीड : । त्रि॰ निर्बाधे ॥

विपुल । पु॰ मेरुपश्चिमभूधरे । मेरो स्थैर्यायविधसाहष्टेषुचतुर्षुविष्कम्भशैलेषु॰प्रतीच्याविपुलोनाम विष्कम्भशैलोनीलवर्णः पश्चात्तुसह्स्रयोजनोच्छ्रायोस्ति॰यच्चयोजनसहस्रोन्नतिमानश्वत्थपादपोस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि॰पृथुले । विशाले ॥ अगाधे । दक्षिणपश्चिमोत्तरदेशरहिते ॥ विपोलति । पुलमहत्त्वे । इगुपधेतिकः ॥विशिष्टपुलकौ॥

विपुलपुलिना । स्त्री॰ नद्याम् ॥

विपुलरसः । पुं॰ इक्षौ ॥

विपुला । स्त्री॰ पृथ्व्याम् । क्षितौ ॥ आर्याप्रभेदे ॥ यथा । पथ्याविपुला चपलामुखचपलाजघनचपलाच । गीत्युपगीत्युद्गीतयआर्यागीतिश्चनवधार्या ॥ संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोर्भवतिपादः ।यस्यास्तांपिङ्गलनागोविपुलामितिसमाख्याति ॥ पुंसांकलिकालव्यालक्षतानानास्थपद्धतिरत्यापि । वीर्यविपुलामुखेचेत्स्यादृगोभिन्द्राख्यमस्योस्ति ॥

विपुलांस । त्रि॰ मांसलोन्नतभुजशिरस्के ॥

विपुलाखा । स्त्री॰ स्टरकुमार्याम् ॥

विपूय । पुं॰ रज्ज्वादिकरणाय शोधयितव्ये॰ मुञ्जे ॥ विपूयते । पूञ्पवने । विपूयविनीयेतिक्यप् । मुञ्जे ॥ यथा । वसाना वल्कलेशुद्धेविपूये क्षतमेखलाम् । चामामञ्जनपिण्डाभादण्डिनीमजिनान्तरामितिभट्टिः ॥

विपोथित । त्रि॰ आघातेनाधःपातिते ॥ आमर्दिते ॥

विप्र । पुं॰ ब्राह्मणे ॥ तस्यलक्षणं यथा । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्ययायातिविप्रत्वं त्रिभिः श्रोत्रियलक्षणमितिप्रायश्चित्तविवेकः ॥ विशेषेणप्रातिपूरयतिषट्कर्माणि । प्रापूर्तौ । आतश्चोपसर्गइतिकः ॥ उप्यतेधर्मबीजमत्रवा । डुवप्॰ ऋज्रेन्द्रेतिसाधु ॥ विपातिवा॰ विपतिवा । विपर्चपे ॥ अश्वत्थे ॥

विप्रकर्ष । पुं॰ विश्लेषे ॥ विशिष्टः प्रकर्षः ॥

विप्रकार । पुं॰ अपकारे । निकारे ॥ विप्रकरणम् । कृञोभावेघञ् ॥ तिरस्कारे ॥

विप्रकाष्ठम् । न॰ तूलवृक्षे ॥

विप्रकृत । त्रि॰ तिरस्कृते । निकृते । यस्यापकारःकृतस्तस्मिन् ॥ विप्राकारि । क्त ॰ ॥ विप्रेणकृते ॥

विप्रकृतिः । स्त्री॰ विप्रकारे ।

विप्रक्षस्थम् । न॰ ब्राह्मणस्यकर्त्तव्ये ॥

यथा । अध्यापनमध्ययनम्यजनं याजन दानप्रतिग्रहः । क
र्माणिषडग्रजन्मनः... अध्ययनतथेतिराट ॥ वैश्य . सदा
प्रापविप्रादिजन्मादिसेवारति रेतदीयम् । कर्मण्यव्यवहार
जानिकर्माण्यनेकान्यपराण्यजानाम् ॥ यद्यत्कर्मोचितदेशकालसंसा
धितान्यपि... । ततस्त त्सर्वं व्यवहारकालनयेन... युग
पत्नयर्थिम् ॥ अथविप्रादीनांस्वभाव कृत्यमाह । शमोदम: सत्यमथा
र्जवक्षमाशौच तपोज्ञानकथामराघ नम् । तीर्थं तथास्तिक्यमभिन्नसङ्ग
ति . स्वभावकर्मायजनेर्मखव्रतम् ॥ शौर्यंबलं धैर्यं धृतिर्धृतिर्मृध विद्या
सुदोषं स्वरतापवर्ज्जनम् । क्षमा भृत कर्मनिसर्गजविशांवाणिज्य
गोजीवनकर्षणान्विति ॥ द्विजाति सेवावनिदेवताश्रयाधर्मोविधि :शू
द्रनिसर्गकर्मच । स्वभावकर्मप्रविहा यवोन्यथास्वयम्चरेत्सोन्त्यजकर्मनर्म
भाक् ॥ इतिकालिदास . ॥

विप्रकृष्ट : ) विप्रकृष्टक : ) वि॰ दूरे ॥ विप्रकृष्य

तेस्म । कृषि : क्त . । स्वार्थेकनिविप्र कृष्टकोपि ॥

विप्रचित्ति : । पुं॰ दनोर्गर्भेकश्यपा ज्जातोऽसुरविशेषे ॥

विप्रतिपत्ति स्त्री॰ विरुद्धकोटिद्वयोप स्थापकेशब्दे ॥ विरुद्धाप्रतिपत्ति ॥
विरोधे ॥ विकृतौ ॥

विप्रतिपन्न: । वि॰ विरुद्धतयावगते ॥

विप्रतिषिद्ध । वि॰ निषिद्धे ॥

विप्रतिषेध : । पुं॰ तुल्यबलविरोधे ॥ परस्परविरोधे ॥ विप्रतिपूर्वात्कर्म
व्यतिहारेवर्त्तमानात्सेधतेर्घञ् ॥

विप्रतिसार : । पुं॰ पश्चात्तापे ॥ विप्र तिसरणम् । सृगतौ । घञ् । उप
सर्गस्यघञीतिपाक्षिकोदीर्घाभाव: ॥

विप्रतीसार . । पुं॰ पश्चात्तापे । अ नुतापे । कौकृत्ये ॥ अनुशये ॥ क
पि । रोषे ॥ विप्रतिसरणम् । सृ॰ । घञ् । उपसर्गस्यघञीतिदीर्घ ॥

विप्रदेह । पु॰ फलमूलादिशुष्कद्रव्ये ॥ ब्रा ह्मणतनौ ॥ विगत:प्रदेहो॰ विशेषेण
प्रकृष्टोवादेहोस्य । विप्रस्यवादेह:॥

विप्रप्रिय : । पुं॰ पलाशे ॥ विप्राणां प्रिय:॥ विष्णौ ॥ श्रीरामचन्द्रे । वि॰
ब्राह्मणवल्लभे ॥ विप्रा: प्रियायस्य म .॥

विप्रदास : । पुं॰ कायस्थे । मसीशे ॥

विप्रयाणम् । न॰ पलायने ॥

विप्रयुक्त : । वि॰ विभिन्ने । विश्लिष्टे ॥

विप्रयोग : । पुं॰ विरहे ॥ ब्राह्मणे : सहसङ्गमे ॥ विप्रयोजनम् । युजिर्
योगे । घञ् ॥ विरुद्ध : प्रयोगो वा ॥ विशेषेणप्रकृष्टोवायोग : ॥
विप्राणांवायोग : ॥ विप्रलम्भे ॥

विरहोविसम्वादोवेतिस्वामी ॥ रागिणोर्विश्छेदे ॥ इतिसुभूतिः ॥

विप्रलब्धः । त्रि० वञ्चिते ॥ विप्रलभ्यतेस्म । डुलभष्प्राप्तौ । क्तः ॥

विप्रलब्धा । स्त्री० स्वीयादिनायिकाभेदे ॥ सङ्केतनिकेतनेप्रियमनवलोक्य समाकुलहृदयाविप्रलब्धेतिलक्षणम् ॥

विप्रलब्धा । त्रि० प्रतारके ॥

विप्रलम्भः । पुं० विसम्वादे । अङ्गीकृतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागिणोर्वियोजने ॥ विप्रियेणप्रलम्भनम् । डुलभष्प्राप्तौ । घञ् । उपसर्गाद्दितिनुम् ॥ विप्रलब्धि० । लभेर्घञ्वा ॥

विप्रलम्भकः । पुं० मिथ्यावचनैः परप्रवञ्चके । ठग१इ०भा०प्र० ॥

विप्रलापः । पुं० विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा०एकोब्रूते० आगताकल्याणीति०अन्योब्रूतेनेति । तथाभ्युदाहारसर्वानन्दः । एकःस्मरन्मधुसरोजमवेतिवक्त्रमन्यः सुधाकिरणबिम्बमदोमृगाक्ष्याः । यूनोर्मुहुर्विवदतोर्वदनेवभूवुः सिद्धान्तवन्मधुपराजिगतागतानीति ॥ विरुद्धःप्रलापः ॥ अनर्थकवाक्ये । अपार्थवचने ॥

विप्रलिप्सा । स्त्री० वञ्चनेच्छायाम् ॥

विप्रलिप्सुः । त्रि० वञ्चके ॥

विप्रलुम्पकः । त्रि० अन्यायेनधनग्राहिणि ॥

विप्रलोभी । पुं० अशोकपादपे । किङ्किराते ॥

विप्रवसितः । त्रि० कृतदूरदेशगमने ॥

विप्राश्निका । स्त्री० जनानांलक्षणादिनाशुभाशुभनिरूपिकायाम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविधःप्रश्नोस्त्यस्याः । ठन् ॥

विप्रसृतः । त्रि० विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेति क्तः ॥

विप्रियः । पुं० अपराधे । आगसि । त्रि० अप्रिये ॥

विप्रियकृत् । त्रि० शठे ॥

विप्रुट् । स्त्री० बिन्दौ । जलकणे ॥ प्रुषुदाहे । सम्पदादित्वात्क्विप् । विगताप्रुड्वाविप्रुट् दाहोऽस्मात् ॥

विप्लवः । पुं० डिम्बे । धाकडलुटनादौ ॥ अश्वस्वकालहे ॥ विप्लवनम् । प्लुङ्गतौ । ऋदोरप् ॥ परचक्रादिभये ॥ राष्ट्राद्युपद्रवे ॥ नाशे ॥ मतिसम्मोहे ॥

विप्लाव । पुं० अश्वस्यप्लुतगतौ ॥

विप्लुतः । त्रि० व्यसनार्त्ते । विप्लवे ॥ खण्डिते ॥ विप्लवनम् । प्लुङ् । क्तः ॥

विप्लुताक्षः । त्रि० अश्रुपूर्णनयने ॥

विभ्रुति . । स्त्री॰ स्वभावच्युतौ ॥

विभ्रुष्ट । त्रि॰ निर्दग्धे ॥ विशिष्टं यथा भ्रुष्ट ॥

विफल । त्रि॰ निरर्थके । मोघे ॥ विगतं फलं यस्य ॥

विफला । स्त्री॰ वीतक्याम ॥ ऋतुहीनायाम् ॥

विवध . । पु॰ पर्याहारे । उभयतोबद्धशिक्येस्कन्धवाह्यकाष्ठे ॥ अध्वनि ॥ भारे ॥ विगतोवधोऽस्मात् ॥

विवधिक : । त्रि॰ वैवधिके ॥ विवधेनहरति । विभाषाविवधादिति ष्ठन् । ङीषि॰ विवधकी ॥

विवन्ध : । पुं॰ आनाहे । आध्माने । मूत्रादिरोधे । यथाह्यचिकित्सा । तुल्यकारणकार्यत्वादुदावर्त्तहरीक्रियाम । आनाहेपिचकुर्वीतविशेषश्चाभिधीयते ॥ त्रिवृत्कृष्णाहरीतक्योद्विचतुष्पञ्चभागिका : । गुडेनतद्वावटिकाहरत्यानाहमुल्बणम् ॥ वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः । मधुनिगुडेबापक्वेनिर्दिष्टाह्यङ्गुष्ठपरिमाणा ॥ वर्त्तिरियदृष्टफलाशने प्रणिहितागुदेघृताभ्यक्ते । आनाहोदावर्तौशमयतिजठरतथागुल्मम् ॥ त्रिकटुकाद्यावर्तिर्भावप्रकाशे ॥ विवन्धनम् । बन्धबन्धने । घञ् ॥ करणेवाघञ् ॥

विवाधा । स्त्री॰ विहिंठने ॥

विविध । त्रि॰ नानाप्रकारे ॥

विवुद्ध । त्रि॰ तत्त्वसाक्षात्कारवति ॥

विबुध । पुं॰ स्त्री । पण्डिते ॥ सुरे । देवे ॥ चन्द्रे ॥ विशिष्टोबोधोयस्य । विशेषणबुध्यतेनस्वपितीति वा । बुधअवगमने । इगुपधेति क ॥

विबुधान : । पुं॰ आचार्य ॥ पण्डिते ॥ देवे ॥

विबुधानुग : । पुं॰ किन्नरादिषु ॥

विबुभूषु । त्रि॰ विविधभवितुमिच्छौ ॥

विबोध : । पुं॰ प्रबोधे ॥

विबोधनम् । न॰ प्रबोधने । जागरणा॰ दृ॰ भा॰ ॥

विभक्त . । त्रि॰ विभज्यस्थापिते । कृतविभागे ॥ विभिन्ने । परस्परव्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्यतेस्म । भज॰ । कर्मणिक्त ॥ विभक्ताभ्रातरएतस्यचतु॰ विभक्तमेप्रामस्तीतिमत्वर्थीयोऽर्शआद्यजिष्यच् । नतुकर्त्तरिक्त । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ अथवोत्तरपदलोपोद्रष्टव्य : । विभक्तधनाविभक्ता . । गम्यार्थस्याप्रयोगएवलोपोभिमत . । तेनविभक्ताभ्रा

तरद्रव्यञ्चधनस्ययद्विभक्तस्य'सत्॰ आद्दष्वारोप्यते ॥ विभक्तं पिधने यस्तुस्वीयाशप्रतिपादयेत् । पुनर्वि भज्यतद्व्यमप्राप्तांशायदापयेत् ॥

विभक्तज.। पुं॰ विभागानन्तरजाता पत्ये ॥ पुत्रै: सहविभक्तेनपि चायत्स्वयमर्जितम्। विभक्तजस्यतत् सर्वमनीशा. पूर्वजा. स्मृता. ॥

विभक्ति:। स्त्री॰ विभागे ॥ सुप्ति ङो'॥ यथा । सङ्ख्यात्वव्याप्य सामान्ये' शक्तिमान्प्रत्ययस्तुय.। साविभक्तिर्द्विधाप्रोक्तासुप्तिङ्चेति प्रभेदत: ॥ सङ्ख्यात्वावान्तर जात्यवच्छिन्नशक्तिमान्य' प्रत्य य. साविभक्ति'। सुप्तिङिति भेदात्साद्विधेतिशब्दशक्तिप्रकाशि- का ॥ कारकशक्तौ ॥ विभज्यतेप्रा तिपदिकार्थोऽनया । स्त्रियांक्ति न् ॥

विभजनीय । त्रि॰ विभा ज्ये । विभागयोग्ये ॥ भज नार्हे ॥

विभज्य:। त्रि॰ विभक्तव्ये॥ ऋह लोर्ण्यतिप्राप्ते॰ विवजनविभज्योप पदे॰ इतितदपवादोयन्निपात्यते । तेनविभाग्यमितिनभवति ॥

विभव:। पुं॰ राये। धने ऐश्व र्य्ये ॥ विभवति। भू॰ । पचा द्यच् ॥ भिक्षाप्राप्तस्यरचार्थैकन्या

शीतनिवारणी । अचलाकीशवैभ क्तिर्विभवै: किंप्रयोजनमितिस ञ्यासिधर्म्म: ॥ निहृ'तौ ॥ मो क्षे ॥ विगत: भवोयस्मिन् ॥ ष ष्टिवत्सरान्तर्गतद्वितीयवत्सरे । य थामविष्यैभैरवउवाच । सुभिक्षं क्षेममारोग्य सर्वव्याधिविवर्ज्जिता: । प्रशान्तामानवास्तत्रबहुशस्याव सुन्धरा । हृष्टास्तुष्टाजना: सर्वेवि भवेवरानने ॥ २ ॥

विभवी । त्रि॰ ऐश्वर्य'वति ॥ विभ वोस्यास्ति ॥ इनि: ॥

विभा । स्त्री॰ शोभायाम्॥ प्रकाशे ॥ किरणे ॥ उदीच्यासोमस्यपुर्याम ॥

विभाकर:। पुं॰ अग्नौ । वह्नौ ॥ सूर्ये ॥ विभांकरोति । द्विवावि भानिशेतिट: ॥ अर्क'वृक्षे ॥ चि त्रकवृक्षे ॥

विभाग:। पुं॰ अंशे। भागे॥ वि वेके॥ विविच्यप्रयोगे॥ संयोगना शकेनवद्व्यवृत्ति'निगुणे ॥ स्वत्व निर्णयानुकूलव्यापारे ॥ विभ ज्यते॰ विभजनंवा । भज॰ । भा वेवाघञ् ॥

विभागी । त्रि॰ अंशिनि ॥ विभा गोऽस्यास्ति । अतइनिठनाविती नि: ॥

विभाजित:। त्रि॰ विभागेनस्था पिते ॥

विभाज्य । त्रि॰ विभजनीये । विभागयोग्ये ॥ विपूर्वाद्भज्धातोर्ण्यत् ॥

विभाण्डक । पुं॰ ऋष्यशृङ्गपितरि॰ मुनिविशेषे ॥

विभाण्डी । स्त्री॰ आवर्त्तकीलतायाम् ॥

विभान् । त्रि॰ भासमाने ॥ शचन्तं ॥

विभातम् । न॰ प्रभाते । प्रत्यूषे ॥ विभातु प्रवृत्तम् । भा॰ । आदिकर्म्मणिक्त : ॥

विभातकम् । न॰ प्रत्यूषे ॥

विभाव : । पुं॰ परिचये ॥ रसस्योद्दीपनादौ ॥ रत्यादीनाकारणेषु । ललनोद्यानादिष्वालम्बनोद्दीपनकारणेषु ॥

विभावनम् । न॰ विभावनायाम ॥

विभावना । स्त्री॰ अलङ्कारविशेषे ॥ विभावनाविनापिस्यात्कारणं कार्यंजन्मचेत् । अप्यलाक्षारसासिक्तरक्ततच्चरणद्वयम् ॥ अचलाक्षारसासेककारणाभावेपिरक्तिमाकथित : स्वाभाविकत्वेनविरोधपरिहार : ॥

विभावरी । स्त्री॰ तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ निशायाम् । हरिद्रायाम् । कुट्टन्याम् ॥ वक्रयोषिति ॥ विवादवस्त्रगुण्ठ्याम् ॥ विभातिनक्षत्रादिभि : । क्वनिप् । वनोरचेतिङीन्नौ ॥ मौखर्यंनिरताख्याम् ॥ मेदावृक्षे ॥

विभावसु : । पुं॰ ग्रहपतौ । सूर्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनयस्य ॥ असुरविशेषे ॥ मणौ ॥

विभावित । त्रि॰ अभ्यूहिते । ज्ञाते ॥ विचिन्तिते ॥ विशेषेणोत्पादिते ॥ विशेषेणप्रापिते ॥ विमिश्रयिते ॥ विशेषेणभावित . ॥

विभाविन् । त्रि॰ प्रभावसम्पन्ने ॥ विभावोस्यास्ति । इनि : ॥

विभाव्य : । त्रि॰ सलक्ष्ये ॥

विभाषा । स्त्री॰ विकल्पे ॥ विभाष्यते विकल्प्यते । भावव्यक्तायांवाचि । गुरोश्चहलइत्यकार : । ततष्टाप् ॥

विभिन्न : । त्रि॰ मिश्रिते ॥ विदारिते ॥ विदीर्णे ॥ विभक्ते ॥ समालब्धे ॥ पक्षिभिन्ने ॥ विकसिते ॥

विभीत : । त्रि॰ विभीतके ॥ विगतंभीतंरोगभयमस्मात् ॥ त्रि॰ निर्भये ॥

विभीतक । त्रि॰ कर्षफले । भूतवासे । कलिद्रुमे बहेडुके । बहेडा॰ इतिख्याते ॥ विभीतकस्वादुपाकंकषायकफपित्तनुत् । उष्णवीर्यंहिमस्पर्शंभेदनकासनाशनम् ॥ रूक्षंनेत्रहितंकेश्यंकृमिवैस्वर्यंनाशनम् । विभीतमज्जातृट्छर्द्दिकफवातहरो

लघु.॥ अपायेऽमदत्वाद्यथाऽऽत्म स्यापितद्गुणा ॥ विगतभीतिरोगाभ यमस्मात् ॥ स्वार्थेऽक स्त्रियांजा तेरितिङीप् ॥

विभीषण । पु० रावणानुजे ॥ नख हर्यां ॥ त्रि० भयानके ॥ विशेषेणभी षयते । ञिभीभये । नन्द्यादित्वा ल्लु । भियोहेतुभयेषुक् ॥ निर स्ताविध्यै ॥ विगतभीषणं भयङ्करम स्मानयस्य सः ॥

विभीषिका । स्त्री० भयप्रदर्शने ॥ य था । कृत्वायस्त्वविभीषिकाकृतिप ययामिषु दीना. प्रजा मद्यन्तो विटजल्पितैरुपहता 'क्षोणीभुजस्ते किल । विद्वासोपिवयपरचिजगतां सर्गस्थितिव्यापदामीशस्तत्परिचर्य याभगणितोयैरेषनारायण ॥ इति मिश्रकामिश्र .॥

विभु: । पुं० शङ्करे । सदाशिवे ॥ प रमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । प रममहत्त्ववति ॥ सतु० आत्मादियै था । आत्मेन्द्रियाद्यधिष्ठाताकरणं हिसकर्तृकम् । विभुर्बुद्ध्यादिगुणवा नबुद्धिस्तुविविधामतेतिभाषापरिच्छे द । विभुरिति० विभुत्वपरममह त्वमितिसिद्धान्तमुक्तावली ॥ काल खात्मदिशांसर्वगतत्वंपरमंमहदिति भाषापरिच्छेद: ॥अर्हति॥ नित्ये ॥ भृत्ये ॥ विष्णौ ॥ त्रि० व्यापके ॥ प्रभौ ॥ सर्वगते । हठे ब्रह्मणि ॥ य था । निवृत्त. सर्वदु'खानामीशा न प्रभुरव्यय । अद्वैत सर्वभा वानादेवस्तुर्योविभु स्मृतइत्यागम ॥ विविधभवतिप्रसद्धात् । भू० । वि प्रसम्भाद्रुतिडु '॥

विभुता । स्त्री० सामर्थ्यै ॥ भावेतल् ॥

विभूति: । स्त्री० भूतौ । ऐश्वर्ये । अ णिमादिषु ॥ यथा । अणिमालघि माप्राप्ति ' प्राकाम्यंमहिमातथा । ई शितावशिताचैवतथाकामावशायि तेति ॥ भस्मनि ॥ शिवधृतभस्मनि ॥ श्रियै ॥ विविधभावे । विशेषेणभ वनम् । स्त्रियांक्तिन् ॥विभूतिरिति कथनमन्यप्रादिनिवृत्त्यर्थम् ॥

विभूतिद्वादशी । स्त्री० विष्णोर्व्रतविशे षे ॥

विभूतिमत् । त्रि० ऐश्वर्ययुक्ते ॥ विभू तिर्विद्यतेऽस्य । मतुप् ॥

विभूमा । त्रि० परिपूर्णे ॥ विगतोभू मायस्मात् । यमपेक्ष्यान्यत्रमहत्त्व नास्तीति ॥'

विभूषणम् । न० अलङ्कारे । आभर णे ॥ विशिष्ट भूषणम् । विभूष्यते ऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ पुं० मञ्जुघोषे ॥

विभूषा । स्त्री० शोभायाम् ॥ आभर णे ॥

विभूषित: । त्रि० अलङ्कृते ॥

विभ्रत । त्रि० धृते ॥ पुष्टे ॥
विभ्यत् । त्रि० भयकुर्वति ॥
विभेद । पुं० विशेषे ॥
विभ्रंसः । पुं० नाशे ॥
विभ्रत् । त्रि० धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥
विभ्रम . । पुं० भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे । स्त्रीणांशृङ्गारभावजातक्रियाविशेषे ॥ तथाहि । मद्रागहर्षजनितविपर्यासोविभ्रमः । यथा । अन्यनिमित्तमानसादुत्थायान्यत्रगमन • प्रियागमनकथामाक्षिप्यसख्यासहालपन • सुखेहँसितक्रोधौ • पुष्प • दीनायाञ्चा • सहसैवतत्परित्याग . । वस्त्राभरणमाल्यानामकारणात खण्डनमाननस्य । यदुक्तम् । क्रोध स्मितकुसुमाभरणादियोग्यालङ्कारनस्यसहसैवविमण्डनस्य । आक्षिप्यकान्तवचनलपनसखीभिर्निष्कारणोत्थितगतवदविभ्रमतत् ॥ इति ॥ चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमत । इत्यन्यच ॥ अपिच । विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय । यथा । श्रुत्वायातवहिकान्तमसमापितभूषया । भालेञ्जनदृशोर्लाक्षाकपोलेतिलकःकृत । इति ॥ यौवनजोविकारोविभ्रमइत्येके ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्यय ॥ विविधभ्रमणम् । अनुवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धि . ॥
विभ्रमा । स्त्री० विलसायाम् । जरायाम् । वार्द्धक्ये ॥
विभ्राट्‌०ड । त्रि० भ्राजिष्णौ । रोचिष्णौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥
विभ्रान्त । त्रि० विभ्रमयुक्ते । यथा । विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत । स्वानिष्टस्वपरानिष्टजायतेस्मात्पदेपदे ॥ इतिमहानिर्वाणतन्त्रम् ॥
विभ्रान्ति । स्त्री० विभ्रमे ॥
विमत . । त्रि० विरुद्धमतिविशिष्टे ॥
विमति . । स्त्री० नानामतौ ॥ विरुद्धमतौ ॥
विमत्सर । त्रि० मात्सर्यरहिते ॥ अहितेयात्मदर्शनेनिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥
विमना . । त्रि० दुर्मनसि । अन्यमनसि । चिन्तादिनाव्याकुलचित्ते ॥
विमनस्क । त्रि० विमनसि ॥
विमनीकृत । त्रि० वैमनस्यप्रापिते ॥ अविमना . विमना । सम्पद्यमान । कृत । अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्चेतिच्विप्रत्ययसलोपौ ।

अस्यचाविति वारः ॥

विमयः । पुं० परिवर्त्तने । विनिमये ॥ विमीयते । मीञ् । एरच् ॥

विमर्द्दः । पुं० कालद्गतद्वयं । चक्रमर्द्दे ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥

विमर्द्दकः । पुं० चक्रमर्द्दे । कासौन्दी तिप्रसिद्धक्षुपे ॥

विमर्द्दनम् । न० कुङ्कुमादिनामर्द्दने । परिमले । मृदक्षोदे । ल्युट् ॥

विमर्द्दना । स्त्री० कुङ्कुमादिमर्द्दे ॥

विमर्द्दोत्थः । पुं० परिमले । मर्द्दनाज्जातेसुगन्धादौ ॥ यथा । अथगन्धे परिमलोविमर्द्दोत्थे मनोहरे । दूरगामीमनोहारीगन्धआमोदईरितइति शब्दरत्नावली ॥

विमर्शः । पुं० विचारे ॥ न्यायमार्गेणविचारे ॥ संशयात्मिकायांबुद्धौ ॥

विमर्शनम् । न० परामर्शे । वितर्के ॥

विमर्शितः । त्रि० विचारिते ॥ विमर्शः सञ्जातोस्य । तारकादित्वादितच् ॥

विमर्षः । पुं० विचारणायाम् ॥ इति जटाधरः ॥ विशिष्टार्थाक्षमायाम् ॥

विमर्षणम् । न० ज्ञाने ॥ कर्मणाकर्मनिर्हारोनह्यात्यन्तिकइष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्षणम् ॥ इतिभागवतेषष्ठस्कन्धः ॥

विमलः । पुं० सूर्यपरिवारे ॥ अर्हति । जिने ॥ न० तारङ्गेमाक्षिधाकृतौ० उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि० निर्मले । शोभे ॥ विगतमलंयस्मात् ॥ चारौ ॥ रागादिशून्ये ॥

विमलतीर्थम् । न० तीर्थविशेषे ॥ यथा । यापिमीवर्णराजतमस्याहश्यन्ते ॥

विमलदानम् । न० नित्यनैमित्तिककाम्यदाने ॥ यथोक्तंगरुडपुराणे । नित्यं नैमित्तिकंकाम्यविमलदानमीरितम् । चेतनासम्प्रयुक्तं नदानंतद्विमलस्मृतमितिग०पु० ॥ ईश्वरप्रीणनार्थदाने ॥

विमलमणिः । पुं० स्फटिके ॥

विमला । स्त्री० शीतलायाम् । सप्तलायाम् । सौहुण्डप्रभेदे ॥ भुवप्रभेदे ॥ देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजाक्षेत्रमुच्यते । विमलाममहादेवीजगन्नाथस्तुभैरवः ॥

विमलात्मकः । त्रि० शोभे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोस्य ॥

विमलाद्रिः । पुं० शत्रुञ्जयपर्वते ॥

विमलेश्वरः । पुं० शिवे ॥ विश्वेशादेव्यधिष्ठितेपुण्यस्थाने ॥

विमाता । त्रि० गणयितरि ॥

विमाता । स्त्री० मातुः सपत्न्याम् ॥ विरुद्धामाता । प्रादयोगतेतिसमासः ॥

विमातृजः । पुं० सापत्न्यभ्रातरि ।

वैमात्रेये ॥ विमातुर्जात । पद्म स्यामजाताविति ड : ॥

विमान । पु॰ न॰ देवतायाने । व्योम याने ॥ सार्वभौमगृहे ॥ घोटके ॥ यानपात्रे ॥ विशिष्टं मानयन्त्यनेन । पुंसिसञ्ज्ञायामितिकरणे घ. ॥ विशेषेणमान्त्यस्मिन्निति वा । अधिकरणे ल्युट् ॥ विगतमानमुपमाऽस्येति वा ॥ त्रि॰ मानहीने ॥

विमानक । पु॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानित : । त्रि॰ अनादृते ॥

विमार्ग । पुं॰ कुपथे ॥

विमिश्र : । त्रि॰ विभिन्ने ॥

विमुक्त । त्रि॰ विरहिते ॥ पृथग्भूते ॥ सर्वैषणाविनिर्मुक्ते ॥ नित्यमुक्ते चिदानन्दरसात्मनि ॥ विशेषेण॰ अविद्याकामक्रोधादिभिर्मुक्त. परित्यक्त . ॥ त्रिषु ॥ जीवन्मुक्ते ॥ जीवन्नेवदृष्टबन्धात्कामादे विंशेषेणमुक्त : सन् देहपातेभाविबन्धाद्विशेषेणमुच्यते । विमुक्तश्चविमुच्यतइतिश्रुते . ॥

विमुक्ति : । स्त्री॰ मोक्षे ॥ विमोचने । अनुध्यानरूपेऽनुग्रहे ।

विमुख । त्रि॰ पराङ्मुखे ॥ विगतं मुखं यस्य ॥

विमुद्र । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मुद्रारहिते ॥

विमूढ । त्रि॰ विक्षिप्ते ॥ अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्टविषयभोगवासनाक्रुष्टचेतस्तयाआत्मानात्मविवेकायोग्ये । अदूरदर्शिनि ॥ विगतमूढभावेऽतिचतुरे॰ सूक्ष्मार्थविवेचनकुशले ॥

विमूढभाव । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषितान्तःकरणे ॥ विमूढआत्मायस्य ॥

विमूढेन । त्रि॰ मूर्खशिरोमणौ । देहात्मवादिनि । स्वस्वनादरकारिणि ॥ विमूढानामिन ॥

विमूल्य । त्रि॰ अमोलविमोलइतिभाषायांख्याते । महार्घे ॥

विमृत्यु । पुं॰ विगतकामादिके । वेदान्तवेद्यआत्मनि ॥

विमृश । पुं॰ विमर्षे ॥

विमृष्ट । त्रि॰ विभाविते ॥

विमृष्य । त्रि॰ विचार्ये ॥ विमृषेऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥

विमृष्यकारी । त्रि॰ विवेकिनि ॥ विमृष्यकरोति । णिनि ॥

विमोक्ष । पु॰ विमोचने ॥

विमोक्ष । पुं॰ मुक्तौ ॥

विमोक्षण । न॰ विमोचने । परित्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमुक्तौ । विपूर्वान्मुचेर्ल्युट् ॥ तीर्थविशेषे ॥

विमोह । पुं० भ्रमपरम्परायाम् ।
विशिष्टोमोहः ॥
विमोहनम् । न० आकुलीकरणे । वै
चित्तीकरणे ॥
विमोहित । त्रि० विविध मोह भ्रम
परम्पराप्रापिते । मोहयुक्ते ।
विम्ब । पुं० कृकलासे ॥ न०प्रति
विम्बे ॥ विम्बीफले ॥ वर्णवृत्तान्त
रे ॥ नगणकरगन्धकर्णभवतिनवव
र्णपूर्णम् । फणिशरदनभूषण यत्त
द्दितिकिलविम्बमेतत् ॥ यथा ।
कपटकृतगोपवेशः शयनवरभूत
शेष । जयतिकृतनन्दहर्षोगिरि
विधुतवातवर्षः ॥ पुं० न०सूर्य
चन्द्रमण्डले ॥ वेतिशोभते । वीग
त्यादिषु । उल्वादयश्चेति०वन्न
लोपगमश्चत्वानि ॥ विम्बओष्ठाइ
कारान्तास्यन्तरे ॥
विम्बकम् । न० मण्डले ॥ विम्बी
फले ॥
विम्बजा । स्त्री० विम्बिकायाम् ॥
विम्बट । पुं० सर्षपे ॥
विम्बभूत । त्रि० कारणभूते ॥
विम्बा । स्त्री० विम्बिकायाम् ॥
विम्बिका । स्त्री० तुण्डिकेर्याम् ।
रक्तफलायाम् । पीलुपर्ण्याम् ।
कंदूरी०कुंदुरुइतिभाषा ॥ विम्बी
कायति ॥ कैशब्दे । आतोनुप
सर्गेक । ङ्यापोरितिह्रस्वः ॥

विम्बी । स्त्री० विम्बिकायाम् ॥ गौ
रादित्त्वान्ङीष् ॥
विम्बीफलम् । न० विम्बिकायाम् । क
दूरी०हु०प्र०फले । विम्बीफलस्वा
दुशीतगुरुपित्तास्रवातजित् । स्तम्भ
न लेखन रुच्य विबन्धाध्मानकारक
म् ॥
विम्बुः । पुं० गुवाके ॥
वियच्चारी । पुं० चिल्लखगे ॥ त्रि०आ
काशगामिनि ॥
वियत् । न० विष्णुपदे । गगने । आ
काशे ॥ विविश्वतएतिव्याप्नोति ।
इण गतौ ॥ यद्वा । वियच्छति०
नविरमति । विपूर्वाद्यमेरन्येभ्यो
पीतिक्विप् । क्वौचगमादीनामिति
मलोपितुक् ॥
वियद्गङ्गा । स्त्री० मन्दाकिन्याम् । स्व
र्णद्याम् । सुरदीर्घिकायाम् ॥
वियति०वियतीवागङ्गा ॥
वियद्भूतिः । स्त्री० तमसे । अन्धका
रे ॥
वियन्मणि । पुं० सूर्ये । सहस्रांशौ ॥
वियतोमणिरिव ॥
वियम । पुं० संयमे ॥ विविधयमने
॥ वियमनम् । यम . समुपनिवि
षुचेतिपक्षे०अप् ॥
वियात : । पुं० धृष्टे । निर्लज्जे ॥ वि
रुद्धंयातचेष्टितंयस्य ॥ विरूपमया
सोढा । गर्ह्यईतिक्तः ॥

वियाम : । पुं॰ संयमे । विविधयमने ॥ वियमनम् । यम ' समुपनिविषु चेति॰ अबभावेघञ् ॥

वियुक्त । त्रि॰ वियोगविशिष्टे ॥

वियोग । पु॰ विच्छेदे । विप्रलम्भे । रागिणोर्वियोजने । विरहे ॥ स्मृत्वावियोगजदु खमत्यजत्स्नेहप्रिये जने । अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापिदह्यते ॥ वियोजनम् । युजि र्योगे । घञ् । वियुज्यतेऽनेनवा ॥

वियोगभाक् । त्रि॰ विच्छेदयुक्ते ।

वियोगी । पुं॰ चक्रवाके । कोके ॥ त्रि॰विरहिणि । वियोगयुक्ते ॥ वियोगोऽस्यास्ति । इनि ॥

वियोगिनी । स्त्री॰ विरहिण्याम् ॥

वियोजित । त्रि॰ पृथक्कृते । वियोग प्रापिते

विरक्त : । त्रि॰ विरागवति ॥ सच॰ कुटीचकबहूदकहंसपरमहंसभेदाच्चतुर्विध ॥ विपूर्वाद्रञ्जे ' क्त ॥ अतिरक्तवर्णे ॥

विरक्ता । स्त्री॰ सांसारिकविषयेषुविरागविशिष्टायाम् ॥ दुर्भगायाम ॥ अननुकूलायाम् ॥ याचिन्तयामिसततमतिसाविरक्ता ।।

विरक्ति ' । स्त्री॰ वैतृष्ण्ये ॥ तीव्रातीव्रतराचेतिविरक्तिर्द्विविधामता । तवसत्त्वान्तुतीव्रायांन्यसेद्योगीकुटीचके । शक्तोबहूदकेतीव्रतरायाहंमस

क्षिते । मुमुक्षु परमेहंसेसाक्षाद्विज्ञानसाधने ।। रञ्जे क्तिन् ॥

विरङ्गम् । न॰ काङ्कुष्ठे ।।

विरचनम् । न॰ निर्माणे ॥ विशेषेणरचनम् ।।

विरचित . । त्रि॰ निर्मिते ॥ विशेषेणरचित ॥

विरजम् । न॰ तीर्थविशेषे ॥

विरजा : । त्रि॰ विगतधर्माधर्मे ॥ रजोगुणरहिते ॥ विगत रजोयस्य स ॥

विरजा ' । स्त्री॰ विगतार्त्तवायाम् ॥

विरजस्तमा । पु॰ दूयातिने । निवृत्तरजस्तमोगुणे ॥ रजस्तमोभ्याविगत । निरादयइतिसमास ॥ विगतेरजस्तमसीयस्मादितिवा ॥

विरजा । स्त्री॰ कपित्थपर्ण्याम् ॥ दूर्वायाम् ।' ययातिमातरि ।। गोलोकेश्रीकृष्णसखीविशेषे ।। दौर्गाविशेषे ।। देवयानपथवर्त्तिन्यांनद्याम् ॥ जगन्नाथक्षेत्रे ।। यथा । मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयविधि । वर्जयित्वागयागङ्गाविशालाविरजांतथा ।।

विरजाक्षेत्रम् । न॰ पुरुषोत्तमतीर्थे ॥ यथा । उत्कलेनाभिदेशन्तुविरजाक्षेत्रमुच्यते । विमलासामहादेवीजगन्नाथस्तुभैरव इति तन्त्रचूडामणीपीठनिर्णय . ।

शिरजाहोम । पुं० अवधूतत्वस म्प्रादृकेो० आगमप्रोक्तकर्मविशेषे॥
विरञ्च । पु० द्रुहिणे । ब्रह्मणि ॥ विरचयति । रचप्रतियत्ने । पचाद्यच् । पृषोदरादित्वान्नुमागम ॥
विरञ्चि । पुं० स्रष्टरि । ब्रह्मणि ॥ विरचयति । रच० । स्वार्थण्यन्तादचइ० । पृषोदरादित्वान्नुम ॥
विरणम् । न० वीरणतृणे ॥
विरत । त्रि० निवृत्ते । विरक्ते ॥
विरति: । स्त्री० आरतौ । उपरामे । निवृत्तौ ॥ विरमणम् । रमक्रीडायाम् । क्तिन् ॥
विरथ: । त्रि० भग्नरथे ॥
विरमणम् । न० विरतौ ॥ विपूर्वाद्रमेर्ल्युट् ॥
विरमित । त्रि० निरस्ते ॥
विरलम् । न० दध्नि ॥ त्रि०अवकाशे । पेलवे । तनौ । सान्तरे ॥ विराति । रादाने । बाहुलकात्कलन् ॥ पुं० निर्जने ॥
विरलजानुक: । त्रि० वक्रजानुविशिष्टे । प्रज्ञौ । प्रज्ञे ॥ दू० हे० चन्द्र: ॥
विरलद्रवा । स्त्री० सुश्रुतयवाग्वाम् ॥ यथा । यवागूरुक्थिकाश्रावा सैवतुद्रुतसिक्थिका । विलेपीस रलाक्ष्यात्सासुश्रुताविरलद्रवा ॥
शिरस । त्रि० रसहीने ॥ विगतोरसोयस्मात् ॥
विरह । पुं० विप्रलम्भे । वियोगे । विच्छेदे ॥
विरहिणी । स्त्री० वियोगिन्याम् ॥ विच्छेदविशिष्टायाम् ॥ नायिकाभेदे ॥ ङीप् ॥
विरहित: । त्रि० त्यक्ते । विरहेणविशिष्टेरहित: ॥
विरही । पु० वियोगिनि । विरहविशिष्टे ॥ विरहोस्यास्ति । अतइनि ॥रघ्वतेराभीक्ष्ण्येघिनिर्वा॥
विरहोत्कण्ठिता । स्त्री० नायिकाविशेषे ॥ चिरम्प्रत्युरनागते विरहोत्कण्ठितोन्मनेतिलक्षणात्॥
विराग । पु० वैराग्ये । रागप्रतिबन्धिनि ॥ त्रि० गताभिलाषे ॥ विगत रागोस्य ॥
विरागार्ह । त्रि० विरागयोग्ये । वैरङ्गिके ॥ अर्हति । अर्ह० । पचाद्यच् । विशिष्टोराग विरागः । विरागस्यअर्हः । भवति ॥
विरागी । त्रि० विरक्तिमति ॥
विराट् । पुं० विविधराजमानत्वात्स्थूलसमष्टिपहितचैतन्येभगवत स्थूलरूपे ॥ यथा तत्कार्यं स्वविराड्देह: स्थूलदेहोयमात्मनइति । पञ्चीकृतभूतानांयत्कार्यंततत्का-

र्थं विराट् देहे भवति स च देह: प रमेश्वरस्य स्थूलदेह ॥ आत्मनो मम भगवत्पादू० दे० भो० ॥ विराडात्माना म० स्थूलप्रपञ्चाभिमानी स र्थं मण्ड लात्मक समष्टिदेहश्च भुगीलकद यानुग्राहको हिरण्यगर्भं. च यत्रा श्यामर्थान्तरमिति व्याख्यातार . ॥ विशेषेण राजते । राजृ दीप्तौ । विवि ध राजते वा । सत्सूद्विषेति क्विप् ॥ चर्विये ॥ स्त्री० दृश्याचरायाश्चर्मी ॥

विराज । पुं० विराजि ॥

विराजमान: । त्रि० दीप्तिविशिष्टे । शोभमाने ॥

विराजित । त्रि० शोभिते । दीप्ते ॥

विराट । पुं० मत्स्यदेशे ॥ वैदर्भं दे शादूर्ध्वं चइन्द्रप्रस्थाच्च दक्षिणे । म रुदेशात् पूर्व्वभागे विराट: परि कीर्त्तित: ॥ मत्स्यदेशाधिपे ॥ नगरविशेषे ॥

विराटक । पुं० राजपट्टे ॥ इति हेमचन्द्र: ।

विराटज: । पुं० विराटदेशीयहीर के । राजपट्टे । राजावर्त्ते ॥ त्रि० विराटराजजाते ॥

विराणी । पुं० हस्तिनि ॥ इतिश ब्दमाला ॥

विराद्ध: । त्रि० विप्रकृते ॥ राधेर निष्ठ कर्मणि क्त: ॥

विराध: । पुं० रामायणप्रसिद्धराक्ष सविशेषे ॥

विराधनम् । न० पीडायां ॥

विराध्यन् । त्रि० अपकुर्वाणे ॥

विराम: । पुं० अवसाने ॥ वितर्कवि चारानन्दास्मितादिरूपचिन्ताख्या गे । इस्व परमे ॥ विपूर्वाद्रमेर्भावे घञ् ॥ विरमन्ते निवर्त्तन्तेऽस्मि न्निति वा ॥

विराव: । पुं० शब्दे । स्वाने । आ रावे ॥ विरवणम् । रु० उपसर्गे रु वइतिभावे घञ् ॥

विरिक्त । त्रि० सञ्जातविरेके ॥

विरिञ्च । पुं० वैकुण्ठे । विष्णौ ॥ परमेष्ठिनि ॥ शिवे ॥ इ० श० रत्ना वली ॥

विरिञ्चन: । पुं० विरञ्चने । द्रुहि णे ॥ इ० हे० चन्द्र ॥

विरिञ्चि: । पुं० शिवे । विष्णौ ॥ विधातरि । परमेष्ठिनि । सुरज्ये ष्ठे ॥ भूतानि विरचयति । रचप्र तियत्ने । स्वार्थण्यन्तादिचइ: । पृषोदरादित्वादकारस्येत्वं नुमाग मश्च ॥

विरिब्ध: । पुं० स्वरे ॥ रेभृशब्दे सौत्र । क्त । बुब्धस्वान्तध्वान्ते त्यादिना निपातित: ॥

विरिष्ट: । त्रि० विच्छिन्ने ॥

विरुद्ध: । पुं० हेत्वाभासान्तरे । सा ध्याभावव्याप्ते हेतौ ॥ यथा शब्दोनि

स्य 'कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥ न्यायसूत्रञ्च 'सिद्धान्तमभ्युपेत्यतद्विरोधीविरुद्धः । अत्र चसिद्धान्तसाध्यम ०प्रतिज्ञार्थ इति यावत्सिद्धान्तसाध्यमभिधीयते० तथाचसाध्यमभ्युपेत्यतद्विरुद्धप्रयुक्तस्तद्विरोधीसाध्याभावव्याप्तइतिफलितार्थ । यथाशब्दोनित्यःकृतकत्वादिति । एतत्रसाध्याभावानुमितिसामग्रीत्वेनसाध्यानुमितिप्रतिबन्धोदूषकताबीजम् । नच सत्प्रतिपक्षाविशेष ' । तत्रहित्वन्तरंसाध्याऽभावसाधकम् ०अत्रतु हेतुरेव साध्याभावसाधक. साध्यसाधकत्वेनत्वयोपन्यस्तवत्वप्रशक्तिविशेषोज्ञापकत्वंनविशेषात् ॥ १ । ४६ इ० ॥ विपरीतधर्माक्रान्ते ॥ विरोधविशिष्टे ॥

विरूढः । त्रि० अङ्कुरिते । विरुह० इतिख्याते ॥ विपूर्वाद्रुहेर्गत्यर्थेति क्त. । ढत्वधत्वष्टुत्वढलोपदीर्घाः ' ॥ आरोहणविशिष्टे ॥

विरूपम् । न० पिप्पलीमूले ॥ त्रि० कुरूपे ॥ विरुद्धंरूपयस्यसः ॥

विरूपा । स्त्री० अतिविषायाम् ॥ दुरालभायाम् ॥ कुरूपायाम् ॥

विरूपाक्षः । पुं० त्रिलोचने । शम्भौ । ईशे । शिवे ॥ रुद्रविशेषे ॥ विविधानिरविचन्द्राग्निरूपाण्यक्षीणियस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच ॥ विरूपेष्वपि० अचिन्त्यरूपाद्दृष्टिरूपेष्वपीतिवा ॥ विविधरूपाणि० विविधरूपेषु० अक्षाणीन्द्रियाण्यस्येतिवा ॥ असुरविशेषे ॥

विरूपिका । स्त्री० कुरूपायाम् ॥

विरूपी । पुं० जाहके ॥ त्रि० कुरूपविशिष्टे ॥

विरेकः । पुं० मलभेदे । रेचने । रेके । रेचनायाम् । विरेचने ॥ पृथक्त्वे ॥ यथा । यत्रयद्ध्यासस्तविरेकाग्रहणनिबन्धनोभ्रमइतिभाष्यम् ॥

विरेचकः । त्रि० विरेककारके ॥ यथा । चूर्णमध्येत्रिवृच्चूर्णंस्वरसेकारवेल्लकम् । स्नेहेष्वेरण्डजंतैलंफलेष्वहरीतकीतिवाग्भटः ॥

विरेचनम् । न० विरेके ॥ तत्कारकौषधयथा । हरीतकीसमगुडामधुनासहपेषिता । विरेचनकरीह्यद्यभवतीतिनसंशयः ॥ त्रिफलाचित्रकंचिचतथाकटुकरोहिणी । जलस्तम्भहरोह्येषउत्तमन्तुविरेचनम् ॥ अपिच । त्रिफलाबदराद्राक्षापिप्पलीचविरेचकृत् । हरीतकीसोष्णनीरांखलवणञ्चविरेचकृत् । इतिगरुडपुराणे १ प० पीलुवृक्षे ॥

विरेफः । पुं० नदमात्रे ॥ त्रि० रेफशून्ये ॥

विरेभित । त्रि० शब्दिते ॥

विरोकः । पु० सूर्यकिरणे ॥ न० छिद्रे रन्ध्रे ॥ विरोचतेऽनेन । रुच० । घञ् । चजोः कुघिण्य तोरितिकुत्वम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येतिनपुंसकत्वा-विरोधः ॥

विरोचनम् । न० स्फुरणे ॥

विरोचन । पु० प्रह्लादतनये ॥ अर्के । सूर्ये ॥ अग्नौ ॥ चन्द्रे ॥ अर्कवृक्षे ॥ रोहितकवृक्षे ॥ श्योनाकप्रभेदे । पूतकरञ्जे ॥ विशेषेण रोचते । रुचदीप्तौ ॥ अनुदात्तेतश्चहलादेरितियुच् ॥ त्रि० रोचके ।

विरोचनसुतः । पु० बलिराजाख्य दैत्ये ॥ विरोचनस्यसुतः ॥

विरोध । पुं० वैरे । विद्वेषे ॥ यथा । प्रधानस्यप्रधानेनसहविरोधोनतुदुर्बलेनेति ॥ विरोधकरणे दोषोयथा । अथपुत्र रेणुकासाक्षात्वास्नेह।तृष्टवत्यसि, उत।चकिञ्चिद्व चनपरिणामसुखावहम् ॥ अविरोधोभवाब्धौचसर्वमङ्गलमङ्गलम् । विरोधोनामबीजस्यसर्वोपद्रवकारणम् ॥ अवश्यंव्योविरोधश्चदाकणे. च तिथैः सह । प्रतिज्ञाचैषाकर्त्तव्या मदीयश्चवचनंशृणु ॥ इति ॥ अपि च । नकुर्याद्गुरुभिः सार्द्धं विरोधंबन्धुभिस्तथा । आत्मनः प्रतिकूलानिपरेषानसमाचरेदिति ॥ विरोधनोसमैर्गच्छेन्नाधमैस्सदाबुधइतिच ॥ विरोधनम् । रुधिर आवरणे । घञ् ॥ अलङ्कारविशेषे । यथा । विरोधः सोऽविरोधेऽपिविरुद्धत्वेनयद्वचः । वस्तुन्तोरविरुद्धेऽपिविरुद्धयोरिवयदभिधानंसविरोधः । जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभिः । क्रियाद्वाभ्यामपिद्रव्यंद्रव्येणैवेति तेदश ॥ अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशि । सुभगकुरङ्गदृशोस्याविधिवशतस्त्वद्वियोगपविपाते ॥ गिरयोप्यनुन्नतियुजोमरुदप्यचलोब्धयोप्यगम्भीरा । विश्वम्भराप्यतिलघुर्नरनाथतवान्तिकेतिनियतम् ॥ ( * ) येषांकण्ठपरिग्रहप्रणयितांसम्प्राप्यधाराधरस्तोक्ष्णः सोप्यनुरज्यतेचकमपिस्नेहपराप्नोतिच । तेषासङ्गरसङ्गसक्तमनसाराज्ञांत्वयाभूपतेपांशूनापटले . प्रसाधनविधिर्निर्वर्त्यतेकौतुकम् ॥ सृजतिचजगदिदमवतिच संहरतिचहेलयैवयोनियतम् । अवसरवशतः शफरोजनार्दनः सोपि चित्रमिदम् ॥ सततमुसलासक्ताब

हुतरगृहकर्मघटनयान्पते । हिज पत्नीनाकठिना, सरिभवतिकरा सरोजकुसुमारा ॥ पेशलमपिख लवचन दहतितरांमानससुतत्त्ववि दाम् । परुषमपिसुजनवाक्यमलय जरसवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्दा मदृषदृढोययस्मार्गोयानर्गलश्चातपा ते । अभूत्नवाम्भोजदलाभिजात स भार्गव सत्यमपूर्वसर्ग । परिच्छे दातीत सकलवचनानामविषय: पुनर्जन्मन्यस्मिन्ननुभवपथ येनगत वान् । विवेकप्रध्वंसादुपचितमहा मोहगहनोविकार: कोप्यन्तर्जडय तिचतापञ्चकुरुते । अयवारामेकोनि लयङ्कतिरत्नाकरकृतिर्गिरीरोऽस्माभि स्तृष्णातरलितमनोनिर्जलनिधि । कएवजानीतेनिजकरपुटीकोटरग तवणादेनसाम्यत्तृतिमिमकरमापास्य तिमुनि ॥ समदमतङ्गजमदजलनि स्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षिति तिलकत्वयितटजुषिशङ्करचूडापगा पिकालिन्दी ॥ कृति ॥ अनर्थे । विपरीतार्थे ॥ यथा । श्रुतिस्मृति विरोधेतुश्रुतिरेवगरीयसी । अवि रोधेसदाकार्यंस्मार्त्तं वैदिकवत्सता ॥ असमानाधिकरण्ये ॥ न्यायमते ० साध्यव्यापकाभावप्रतियोगित्वमि तिचिन्तामणि: । साध्यासमानाधि करणमितिदीधिति: । अग्निकु लादेरन्यतरेणापरस्मरणे ॥ विरोध नाम्नवस्तुनि ॥

विरोधकृत् । पु॰ वत्सरविशेषे । तत्फ लयथा । वासवोवर्षतेदेविदेशेचा खण्डमण्डले । अग्निकणेकान्यकु र्णे विरोधीक्षपिनाशकृत् ॥ ४५ ॥ त्रि॰ विरोधकर्त्तरि ॥

विरोधन: । पु॰ विविधे । न॰ पर्यंव स्यायाम् । विरोधे ॥ रुधिर्॰ । ल्यु ल्युँङ्वा ॥

विरोधी । पुं॰ शत्रौ ॥ विरोधीस्यास्य स्मिन्वा । इनि: ॥ वत्सरविशेषे ॥ यथा । अनग्निप्रबलोलोकाधान्यौष धिप्रपीडनम् । जायतेमानुषेकष्टं विरोधिनिनसंशय ॥ त्रि॰ विवा दिनि ॥ विरोधविशिष्टे ॥

विरोधिनी । स्त्री॰ विरोधकारिकाया म् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्ति । स्त्री॰ विप्रलापे । पर वचनविरोधिवचने ॥ विरोधस्यउ क्ति ॥

विल । पुं॰ उच्चै:श्रवसि । इन्द्रस्य हये ॥ वेतसे ॥ न॰ छिद्रे । रन्ध्रे ॥ गुहायाम् ॥ विलतिभिनत्ति । वि लभेदने॰ घोष्ठादि: । इगुपधेति क: ॥ विल्यतेवा । क्तास्त्युटीव कुलमिति॰ इगुपधेतिक: । घञर्थे कोवा । खनेघचेतिघे॰ सङ्घाय्वै कल्वान्नणाभावोवा ॥

विलकारक । पुं॰ मूषके ॥

विलकारी । पु॰ मूषिके ॥ गर्त्त कारके ॥

विलक्ष । त्रि॰ विस्मयान्विते । परकीयधर्मं शीलादौप्राप्ताश्चर्ये ॥ विशेषेणलक्षयति । लक्षआलोचने । पचाद्यच् ॥ लक्षाद्भ्रष्टे ॥ लज्जिते ॥ निर्लक्षणे ॥

विलक्षणम् । न॰ हेतुशून्यायांस्थितौ । निष्प्रयोजनस्थितौ ॥ यथा । विलक्षणमतस्थान यन्नवेन्निष्प्रयोजनमितिभागुरि . ॥ त्रि॰भिन्ने । अन्यलक्षणे ॥ विशेषलक्षणयुक्ते ॥ विगत लक्षणमालोचनं यत्र ॥

विलक्षणा । स्त्री॰ शय्याविशेषे ॥

विलक्षित । त्रि॰ चिह्निते ॥ विशेषेणलक्षित: ॥

विलग्न । पुं॰ न॰ मध्ये ॥ न॰लग्न लग्ने ॥ मेषादिलग्नमात्रे ॥ त्रि॰ लग्ने । ससक्ते ॥ विशेषेणलग्न ॥ वियुक्ते ॥

विलङ्घनम् । न॰ अतिक्रमणे ॥

विलङ्घित । त्रि॰ अतिक्रान्ते ॥

विलङ्घ्य । त्रि॰ अतिक्रमणीये ॥

विलज्ज । त्रि॰ लज्जयाहीने ॥ विगतालज्जायस्य ॥

विलपनम् । न॰ विलापे ॥ भाषणे ॥

विलम्ब । पुं॰ उचितकालाधिककाले ॥ लम्बने ॥ गौणे ॥ वत्सरविशेषे ॥ तत्फलं यथा । तस्करैः पार्थिवैश्चैवअभिभूतमिदं जगत् । अर्घोभवतिसामान्योविलम्बे तुभयमहत् ॥ ३२ ॥

विलम्बनम् । न॰ अशीघ्रे ॥

विलम्बितम् । न॰ तत्त्वाख्यनृत्यादौ ॥ विशेषेणलम्बन्तेकारचरणाद्य . प्रत्यंक्षमतिविशेषप्रदर्शनायात्र । लविश्ववस्त्रंसने॰ओष्ठोप[?] ध ' क्तोधिकरणे चेतिक्त ' ॥ त्रि॰ आश्रिते । विलम्बमाने ॥

विलम्बी । त्रि॰ लम्बमाने ॥ विशेषेणलम्बमाने ॥

विलम्भ . । पुं॰ अतिसर्ज्जने । दाने ॥ विलब्धि : । डुलभष्प्राप्तौ । घञ् । उपसर्गात्खलघञोरितिनुम् ॥

विलय . । पु॰ प्रलये ॥ विशेषेणलीयन्तेपदार्थाअस्मिन् । लीङ्श्लेषणे । एरच् ॥ यथालवणस्यतोये ॥

विलता । स्त्री॰ श्वेतवलायाम् ॥ इ॰राजनि॰ ॥

विलवास ' । पुं॰ आखुकजन्तौ ' ।

विलवासी । पु॰ सर्पे ॥ विलेवसति । णिनि . ॥

विलशय ' । पु॰ विलेशये ॥

विलसन् । त्रि॰ विलासयुक्ते ॥

विलसितम् । न॰ चेष्टिते ॥ भावे क्त ॥ उद्भूते ॥

विलाप. । पुं॰ परिदेवने । अनुशोचनोक्तौ । शोकोक्तौ ॥ विलपनम् । लपेर्भावेघञ् ॥ दु. खजेवचसि ॥

विलापित : । त्रि॰ घृतवद्द्रवीकृते । विलीनतांप्रापिते ॥

विलाल । पुं॰यन्त्रे ॥

विलास । पुं॰ लीलायाम् ॥ हावभेदे । सयथा । प्रियसमीपगमने य : स्थानासनगमनविलोकनेषुविकारोऽकस्माच्चक्रोधस्मितचमत्कारमुखविकूननं सविलास : । तथाहि । योवल्लभांवानुगतोविकारोगत्यासनस्थानविलोकनेषु । तथास्मित क्रोधचमत्कृतीर्भविकूननस्सा खगत विलास. ॥ अपिच । विलासोङ्गविशेषोय : प्रियाप्तावासनादिषु । इति । विलसनम् । लसश्लेषणे । घञ् । प्रकाशे ॥ शारीरिकसुखानुभवे ॥

विलासकाननम् । न॰ क्रीडावने ॥

विलासायुध । पु॰ कामदेवे ॥

विलासी । पु॰ भोगिनि ॥ व्याले सर्पे ॥ विष्वक्सेने । हरी ॥ अग्नौ ॥ चन्द्र विलसनशील । विपूर्वाल्लसेर्घिणुज्जसेत्तस्यानुप ॥

विलासिनी । स्त्री॰ नार्याम् ॥ वेश्यायाम् ॥

विलिप्त । त्रि॰ श्लिष्टे ॥ विशेषेण लिप्त. ॥

विलिम्पन् । त्रि॰ उपदिहाने ॥ विलिम्पति । लिप॰ । शतृ ॥

विलीन : । त्रि॰ लग्ने प्राप्तद्रवीभावेघृतादौ । विद्रुते । द्रुते । श्लिष्टे । संसक्ते ॥ विलीयते स्म । लीङ् श्लेषणे । गत्यर्थेतिक्त : । स्वादयओदितइतिनत्वम् ॥ विशेषेणलीनोवा ॥ विशेषेण लयङ्गते ॥ यथा । विलीनोवैदेहस्तनगरकोलाहलभरोगतादूरादूरं क्वचिदपिपरेतान्मृगयितुम् । विमानानांत्रातोविदलयतिवीथीर्दिविषदांकथातेकल्याणीयदवधिमहीमण्डलमगात् ॥ विश्लिष्टे ॥

विलुप्त. । त्रि॰ संहृते ॥ चोरिते ॥

विलुप्ताब्द : । पु॰ लुप्तसंवत्सरे ॥ यथा । गीज्ञान्त्यकुम्भेतरभेऽतिचारगोगीष्पूर्वराशिगुरुरेतिवक्रितस्तदाविलुप्ताब्दइतिनिन्दित : शुभेषुदेवासुरनिर्मलाम्बरे ॥

विलुम्पक. । त्रि॰ अपहर्त्तरि ॥

विलुलित : । त्रि॰ आकुलिते । आकर्षआकुलिते ॥ विधुते ॥

विलेखनम् । न॰ छेदने ॥ आकर्षे ॥ सीवने ॥

विलिप । पुं॰ लेपे ॥ लिपेर्भावे घञ् ॥

विलेपनम् । न॰ कुङ्कुमाद्यनुलेपने । समालम्भे ॥ गात्रानुलेपनशोभ्ये पिष्टे घृष्टे वा सुगन्धिद्रव्ये । गात्रानुलेपन्याम ॥ घृष्टचन्दनादिविलेपनार्थे । विलिप्यतेऽनेन । लिप उपदेहे । ल्युट् ॥

विलेपनी । स्त्री॰ यवाग्वाम् ॥ सुवेशस्त्रियाम् ॥

विलेपी । त्रि॰ विलेपनकर्त्तरि ॥

विलेपी । स्त्री॰ यवाग्वाम् । उष्णिकायाम् ॥ अस्या विधिर्गुणाश्च । चतुर्गुणाम्बु संसिद्धा विलेपी घनसिक्थिका । पृथग्द्रवैर्वा रहिता ख्याता शिथिलभक्तिका ॥ स सिद्धा॰ अतीवसिद्धा । विलेपी गिलश्री॰ तृप्तिलोकि । विलेपी दीपनी बल्याहृद्या सङ्ग्राहिणी लघुः । व्रणाक्षिरोगिणां पथ्या तर्पणी लङ्घनाक्षरापहा ॥ विलिम्पति । लिप॰ । पचाद्यच् । गौरादि ॥

विलेवासी । पुं॰ सर्पे ॥

विलेशय । पुं॰ सर्पे ॥ मूषिके ॥ गोधादिषु ॥ यथा । गोधाशशभुजङ्गाखुशल्लकाद्या विलेशयाः । विलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च पिकीर्तिता ॥ विलेशेते । अधिकरणे शीङ्॰ कृत्यच्

। अथवा सत्यलुक् ॥

विलोकनम् । न॰ दर्शने ॥ लोकृ दर्शने । ल्युट् ॥

विलोकित । त्रि॰ दृष्टे ॥ लोकृ॰ । क्तः ॥

विलोचनम् । न॰ चक्षुषि । विलोच्यतेऽनेन । लोचृ॰ । ल्युट् ॥ दर्शने ॥

विलोटक । पुं॰ नलमीने । वालियामाछ॰ इ॰ गौ॰ भा॰ प्रसिद्धे ॥

विलोडनम् । न॰ मथने ॥ आलोडने । विलोवना॰ इ॰ भा॰ प्र॰ ॥

विलोडित । त्रि॰ आलोडिते । मथिते । विलोया॰ इ॰ भा॰ न॰ तक्रे ॥

विलोप । पुं॰ विशिष्टलोपे ॥

विलोभ । पुं॰ विलोभने ॥ विलुभेर्घञ् ॥

विलोम । पुं॰ सर्पे ॥ वरुणे ॥ शुनि ॥ न॰ अरघट्टके ॥ पिष्टयन्त्रे । त्रि॰ प्रतीपे । विपरीते ॥

विलोमक । पुं॰ प्रतिकूले । विपरीते ॥

विलोमजिह्व : । पुं॰ अश्व खरे । महामृगे । हस्तिनि विलोमानि जिह्वायस्य ॥

विलोमजिह्वक । पुं॰ पीलौ । सि

विल्वमूला । स्त्री० वाराहीकन्दे ॥
विल्वशुण्ठी । स्त्री० विल्वपत्र्याम् । वि
ल्वशुण्ठा० कू० गौ० दे० भा० प्र० ॥
विल्वसू । स्त्री० दग्धपुत्रायाम् ॥
विल्वा । स्त्री० हिङ्गुपत्र्याम् ॥
विव । त्रि० पक्षिवाहने ॥ विनापक्षि
वावातिगच्छति । बा० । आतद्रूति
का ॥
विवक्षा । स्त्री० कथनेच्छायाम् ॥ अ
ङी ॥
विवक्षित । त्रि० कथनेच्छाविषये । व
क्तुमिष्टे ॥ अभ्यार्थे ॥
विवक्षु । त्रि० वक्तुमिच्छौ ॥
विवत्सा । स्त्री० नष्टापत्यायाम् ॥
विवदमान । त्रि० विवादकर्त्तरि ॥
विवध । पु० पर्याहारे । वीवधे । प
थि । भारे ॥ विविधोवधोहनन
गमनंवाचानेनवा । प्रादिभ्योधातु
जस्येतिसमासोत्तरपदलोपौ ॥
विवन्ध । पुं० मलाप्रवृत्तौ ॥
विवरम् । न० दूषणे । गर्त्ते । छिद्रे ॥
अवकाशस्थाने ॥ विवृणोति । वृञ् व
रणे । पचाद्यच् ॥ यद्वा । विव्रिय
ते । घञर्थेकविधानमस्थप ॥ वि
गतोवरोऽस्मात् ॥ वीनांपक्षिणांव
रंवा ॥ पुं० अतलादिविलेषु । यथा
। अतलं प्रथमंप्रोक्तं द्वितीयंवितलंत
था । तृतीयंसुतलंप्रोक्तं चतुर्थंवैत
लातलम् । महातलंपञ्चमंचषष्ठंप्रो
क्तंरसातलम् । सप्तमंचपातालं
सप्तैतेविवराः स्मृताः । एतेषुविल
स्वर्गेषुदिवोप्यधिकमेवच । कामभो
गैश्वर्यसुखसमृद्धभवनेषुचेतिदेवीभा
गवतम् ॥
विवरणम् । न० व्याख्यायाम् । अर्थ
स्फुटीकरणे ॥ कथने ॥
विवरनालिका । स्त्री० वंश्याम् । वेणौ ।
विवरेसद् । त्रि० मध्यवर्त्तिनि ॥ वि
वरेसीदति । षद्लृ० । सत्सूद्विषे
त्यादिनाक्विप् । सत्पुरुषेकृतोऽस्त्या
दिनाऽलुक् ॥
विवर्ण । त्रि० पामरे । नीचे । क
ष्टे ॥ विगतोवर्णोयस्य अस्मात् ॥
मलिने ॥
विवर्णवासा । त्रि० काषायवाससि ॥
विवर्त्त । पुं० समुदाये । संघे ॥
अपावृत्तौ । अपवर्त्तने ॥ नर्त्तने ।
नृत्ये ॥ स्वरूपानुपमर्दनकार्यान्तरा
पत्तौ । अप्रच्युतपूर्वस्वरूपस्यासत्य
नानाऽऽकारावभासे ॥ यथा । सत
त्त्वतोऽन्यथाप्रथाविकारइत्युदीरि
तः । अतत्त्वतोऽन्यथाप्रथा । विवर्त्त
इत्युदाहृतइति ॥ विवर्त्तनम् । व
तु० । घञ् ॥
विवर्त्तनम् । न० परिभ्रमणे ॥ प्रत्या
वृत्तौ ॥ पराङ्मुखविलुण्ठने ॥
विवर्त्तवाद । पुं० वादविशेषे । प्रकृता
नाद्यनिर्वचनीयाविद्यावशाद्ब्रह्मणोनाऽऽ

पेवविवर्त्तते॰मुखमिवतत्त्वजातो
त्पत्त्यनभेदादित्येवनिर्धारिते ॥ त
थाच । ततोनिरंशआनन्देविवर्त्तो
जगदिष्यताम् । अवस्थान्तरभानन्तु
विवर्त्तोरज्जुसर्पवत् ॥ मायाशक्ति
कल्पिकास्यादिन्द्रजालिकशक्तिवत्
। शक्ति . शक्तात्पृथङ्नास्तितवदृ
ष्टेनचाभिदा । प्रतिबन्धस्यदृष्टत्वा
च्छक्त्यभावेतुकस्यस . । शक्ते
कार्यानुमेयायाः अनिर्वाच्यत्वमिष्य
ते ॥

विवर्त्तित : । त्रि॰ परिमण्डलिते ॥

विवर्द्धन । पुं॰ विशेषेणवर्द्धिते ॥

विवश ' । त्रि॰ अस्वतन्त्रे । अवश्यात्म
नि । अरिष्टदुष्टधियि । आसन्नमर
णसूचकलक्षणमदुष्टमतौ ॥ विरुद्धं
वष्टि॰कामयते । वश॰ । अच् ॥
कातरे ॥

विवसन : । पुं॰ अर्हति । जिने ॥ बौ
द्धे ॥ त्रि॰दिगम्बरे । विगतवसन
मस्यस ॥

विवस्त्र । त्रि॰ नग्ने ॥

विवस्वान् । पु॰ सर्वचयिवंशबीजभू
ते॰आदित्ये । सूर्य्ये । विविधवर्स्त
॰आच्छादयति । वस॰ । क्विप् ।
विवोरश्मिरस्यास्ति , मतुप् । तस्तौ
मत्वर्थेइतिभत्वाद्रुत्वाभाव ' ॥ वि
वस्त ओप्रास्तीतिभ ॥ अर्कद्रुमे ॥
विबुधे । सुरे ॥ अरुणे ॥ वैवस्वत

मनौ ॥

विवस्वती । स्त्री॰ सूर्यनगर्याम् ॥

विवह । पु॰ दारपरिग्रहे । वायोः
पञ्चमेस्कन्धे । सयथा । ऊर्ध्वाह
गौहृगन्धासुदूकप्रतिक्षिप्तसञ्चतो
सञ्चवस्य स्थायहेभ्य पञ्चमोविवहो
गण . । ५ ॥

विवाक । त्रि॰ विवेचनकर्त्तरि ॥ य
था । अर्थप्रत्यर्थिनोर्वचनविकवावि
कृष्णमध्ये सद्विविनक्तिविवेचयति
वा॰विवाकइतिमिताक्षरा ॥

विवाद ' । पु॰ व्यवहारे । ऋणादि
न्याये । सचधनविभागादिविषय
न्यायादि ' ॥ यथा । ऋणादिदाय
कलहैद्वयोर्बहुतरस्यवा । विवादोव्य
वहारश्चव्ययमेतन्निगद्यते ॥ अष्टादश
विवादस्थानानियथा । तेषामाद्य
मृणादानं निक्षेपोऽस्वामिविक्र
य : । सम्भूयचसमुत्थानंदत्तस्यान
पकर्मच ॥ वेतनस्यैवचादानंसंविद
श्चव्यतिक्रम ' । क्रयविक्रयानुशयो
विवाद स्वामिपालयो ॥ सीमा
विवादधर्मश्चपारुष्ये दण्डवाचिके ।
स्तेयञ्चसाहसञ्चैवस्त्रीसङ्ग्रहणमेवच
॥ स्त्रीपुन्धर्मोविभागश्चद्यूतमाह्वयमे
वच । पदान्यष्टादशैतानिव्यवहार
स्थितानिहेतिमनु : ॥ मिथोविरुद्ध
वादे । पक्षप्रतिपक्षपरिग्रहेणविरुद्ध
वदने ॥ विरुद्धोवादोविवाद : ॥

विवादानुगत ' । त्रि॰ विवादकर्त्तरि
विवादी त्रि॰ विवादयति ॥ मत्वर्थी यङ्गिनि ' ॥ विवादकर्त्तरि ॥
विवाधनम् । न॰ शाठ्ये । पीडायाम् ॥
विवाधा । स्त्री॰ पीडायाम् ॥
विवार । पु॰ वर्णोच्चारणे प्रयत्नविशेषे ॥ विवारयति विकाशयत्यास्यमितिविवारइतिकैयट . ॥
विवास । पुं॰ समाप्तौ ॥
विवाह । पु॰ भार्याप्राप्तिहेतौ । दारपरिग्रहे । उपयमे । परिणये । उद्वाहे । उपयामे । पाणिपीडने ॥ धर्मप्रजार्थत्वार्थोहि विवाह ॥ विवाहो ऽष्टविध प्रोक्त स्मृतिशास्त्रेषुसूरिभि . । ब्राह्मणे वर्णभेदेनकलौ सद्विविधोमत । परिणीतास्तुया नार्योब्रह्मोर्वाशैवतत्त्वभि : । ता एवदाराविज्ञेयाअन्या सर्वा परस्त्रिय॰इतिमहानिर्वाणतन्त्रम् ॥ विवाहानन्तरकन्यायाभर्तृगृहगमनकाले विवादीनारोदनपुराणसिद्धम् । यथा दुर्वाससासहर्षौर्वकन्याया कन्दल्याविवाहे । कन्यासमर्पण कृत्वा मोहादुच्चैररोदच । मूर्च्छामवापस मुनि ' स्वकन्याविरहातुर ' ॥ च पश्यभेदहेतोकौर्व स्तोत्तारामंनमुस्तुति । सर्पे नचेतनांप्राप्यबोधया मासकन्यकाम् ॥ मूर्च्छितातात

विच्छेदादृदन्तोंहिशोकसयुताम् ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥ विशिष्टं वहनम् । वहप्रापणे । घञ् ॥
विवाहक । पुं॰ विवाहे । स्वार्थेक ॥
विवाहित ' । पु॰ स्त्री॰कृतविवाहे ॥
विवाह्य : । त्रि॰ विवाहयोग्ये ॥
विविक्त । पुं॰ वसुनन्दने ॥ त्रि॰ असम्पृक्ते ॥ एकान्ते । रहसि ॥ जनसम्मर्दरहितदेशे ॥ पूते ॥ विवेकिनि ॥ विविक्तजनाश्च । विचिर॰ । पौव्यार्थत्वात्कर्म्मण्यत्वाहा ॰कोधिकारणे चेत्तक ॥ विविच्यते॰विविच्यतेस्म । विचिर्पृथग्भावे॰विचिर्विरेचनेवा । क्त ॥ पकाये ॥
विविक्तदेश: । पुं॰ जनसम्बन्धविवर्जिते देशे । स्वभावत : संस्कारतोवा ॰शुद्धे॰ऽशुचिभि सर्पव्याघ्रादिभिवरहिते॰सुरधुनिपुलिनादौ॰चित्तप्रसादकरेदेशे ॥ विविक्तवासोदेशस्य ॥
विविक्तसेवी । त्रि॰ एकान्तवासस्वभावे विवेकिनि ॥ विविक्त जनसम्मर्दरहित॰पूतञ्च॰यदरण्यगिरिगुहादि ॰तत्सेवितु शीलयस्य ॥
विविक्ता । स्त्री॰ दुर्भगायाम् ॥
विविग्न ' । त्रि॰ भीते ॥
विवित्सा । स्त्री॰ वेदितुमिच्छायाम् ॥
विविक्षित ' । त्रि॰ ज्ञातुमिष्टे ॥ व

अस्मयोग. । वासनचयस्यप्रतिकूलवा । सनोत्सादन मध्येवविविच्यनिश्च ये ॥ पृथगात्मतायाम् । पृथग्भा वे । प्रकृतिपुरुषादिभेदज्ञाने । व्य क्ताव्यक्तज्ञविज्ञानेविवेचनम् । वि विर्पृथगभावे । घञ् ॥ तत्त्वाव धारणे । विद्यामदधनमदकुलाचार मदादिमदानाविरोधिनि ॥ सच दर्शितो जनकेन । यद्यमदत्तांमू- र्ध्निनिदिनेनिपतत्त्यध । इत्यपि त्तमदत्तायाकैषाविजस्ततालव ॥ साधनानिमहीपालाज्ञाभ्याणा जग त्त्विवा । प्राकृतानप्रयाता निकेय विश्व स्ततालव ॥ कोटयोब्रह्मणांया तागतासर्गपरम्परा: । प्रयातापां शुवद्भूपा । काधृतिर्भमजोविती ॥ येषानिमेषणोन्मेषौजगत: प्रल योदयौ तादृशा: पुरुषायातामा दृशागणनेवका ॥ इति ॥ जलद्रो ण्याम् ॥ पृथग्भावविचारे ॥ वि भागे ॥ एकान्ते ॥

विवेकिता । स्त्री० विवेकित्वे । का- र्याकार्यविचारतायाम् ॥ मदमूढबु द्धिषुविवेकिताकुत: ॥

विवेकी । त्रि० मनीषिणि । गुरुशा स्त्राद्युपदेशयुक्ते ॥ विवेकोस्यास्ति । चतद्भुनि: ॥ शास्त्रदृष्टिर्विवेकि- नाम् ॥ विचारकर्त्तरि ॥ पुं० देव सेनराजपुत्रे ॥

विवेचक: । पुं० विवेचनस्यकर्त्तरि ॥ विवेचयति । विचिर् । ण्वुल् ॥

विवेचनम् । न० विवेके ॥

विवेचनीय: । त्रि० विवेच्ये । विवे चितव्ये ॥

विवोढा । पुं० परिणेतरि । वरे । पत्यौ ॥

विव्रुवन् । त्रि० विरुद्धवक्तरि ॥

विव्वोक । पुं० हावविभेदे । स्त्रीणां शृङ्गारभावजायांक्रियायाम् ॥ य थोक्तम् । विव्वोकोऽभिमतप्राप्ताव पिगर्वादनादरकृति ॥ विवानम् वागतो । विवुर्गतिविशेष: । मू गव्यादित्वात्कुप्रत्यय. । उच्यतेसम वेत्यच । उसमवाये । इत्यभिति घञ् । घञर्थेकोवा । ओकउच: के० इतिनिपातित. । विवोरोक: स्थानम् ॥

विट । पुं० मनुजे ॥ वेश्ये ॥ प्रवेशे ॥ विशन्ति । विशप्रवेशने । क्विप् । ब्रश्चेतिषत्वम् । जश्त्वचर्त्वे ॥

विशम् । न० विसे । मृणाले ॥

विशकण्ठी । स्त्री० बलाकायाम् ॥

विशङ्क: । त्रि० निश्शङ्के । शङ्कार- हिते ॥

विशङ्कट । त्रि० पृथौ । विशाले ॥ विस्तृतार्थवृत्तेर्विशब्दात् । वे: शा लच्छङ्कटचौ ॥ स्त्री० विशङ्कटी । बह्वादिभ्यश्चेतिङीष् ॥

विशद : । पुं० शुक्ले । शुभ्रे । श्वेते । पाण्डरे । धवले ॥ त्रि० धवलवर्णयुक्ते ॥ प्रसन्ने ॥ विमले । व्यक्ते ॥ विविक्तावयवे । यथा० खरविशदमभ्यवहार्य्यंभक्ष्यमिति ॥ विशीयते० शद्लृशातने । अच् ॥

विशदप्रभ . । त्रि० निर्म्मलकान्तौ ॥

विशब्दनम् । न० प्रतिज्ञाने ॥ शब्देनप्रकटीकृताभिप्राये ॥

विशम्वरा । स्त्री० पक्षराम् ॥ इतिराजनिर्घण्ट : ॥

विशय : पुं० संशयेन्यायमतेनैवेतिसन्देहे ॥ विविधैशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि० संशयिनि ॥

विशर : । पु० वधे । मारणे ॥ विशरणम् । शृहिंसायाम् । ऋदोरप् ॥

विशरणम् । न० अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्य : । त्रि० शल्यरहिते ॥

विशल्यकरणी । स्त्री० ओषधिविशेषे ॥

विशल्यकृत् । पुं० अक्षोटके । भूपलाशे । हापरमालीति० गौ० दे० भा० प्र० हर्षे ॥ त्रि० विशल्यकारिणि ॥ विशल्यंकरोति । कृञ्० । क्विप् ॥

विशल्या । स्त्री० अग्निशिखायाम् लाङ्गलिक्याम् ॥ लघुदन्त्याम् ॥ गुडूच्याम् ॥ त्रिपुटायाम् । शल्यनरहितायाम् । लक्ष्मणाख्यौषधौ ॥ अजमोदायाम् ॥ कलिकार्याम् ॥ विगताशल्यात् । विगलशल्यमनया० यस्याः वा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री० तीर्थविशेषे ॥

विशसन . । पुं० तरवारौ ॥ खड्गे । नरकान्तरे ॥ न० मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसित . । त्रि० मारिते ॥ विपूर्वकशसि : क्त ॥

विशसिता । त्रि० पशोरङ्गानांकर्त्र्यादिनापृथक्पृथक्कारके ॥

विशस्त : । त्रि० अविनीते ॥ शसु० । क्त : । धृषिशसीवैयात्ये । एतौनिष्ठायामविनयएवानिटौस्त : ॥

विशस्ता । पुं० चाण्डाले ॥

विशाकार : । पुं० भद्रचूडे ॥

विशाख . । पुं० शिखिवाहने । कार्त्तिकेये । षडानने ॥ विशाखति । शाखृव्याप्तौ । पचाद्यच् ॥ विशाखायाजातइतिवा । सन्धिवेलादीत्यण् । श्रविष्ठाफल्गुन्यादिनात्अलुक । लुक्तद्धितलुकि ॥ धन्विनासमरकाले० वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानंभवति० तस्मिन् । याचके । तर्कले ॥ पुनर्नवायाम् ॥

विशाखलम् । न० योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री० षोडशीनक्षत्रे । राधायाम् ॥ अस्यां जातस्य फलं यथा । सदानुरक्तो विविधक्रियासु सुवर्णकारैरपि सख्यमेति । यस्य प्रसूतौ भवेद्विशाखा सखा न कस्यापि भवेत् प्रसूत ॥ पाक्षिकमेकवचनम ॥ अजलाट्टाप् ॥ कठिल्लके ॥

विशाय : । पुं० उपशाये । यामिनांक्रमाच्छयने ॥ यथा । उपशायो विशायश्च पर्यायशयनार्थकौ ॥ विशयनम् । शीङ् स्वप्ने । व्युपयो : शेते . पर्याय इति घञ् ॥

विशारणम् । न० मारणे ॥ इतिहेमचन्द्र . ॥

विशारद । पुं० सर्वज्ञे । ईश्वरे ॥ वकुले ॥ मद्यगन्धे ॥ त्रि० पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टो विपरीतो वा शारद : । प्रादयो गतेति समास : ॥ ।वशुद्धे ॥

विशारदा । स्त्री० क्षुद्रदुरालभायाम् ॥

विशाल . । पुं० मृगप्रभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे । वृक्षविशेषे ॥ त्रि० पृथुले ॥ विस्तृतार्थस्य तेर्विशब्दात् वे . शालच्छङ्कटचाविति० शालच् ॥ यद्वा । विशति । विशप्रवेशने । तमिविशिबिडीत्यादिना कालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री० पार्श्वविस्तारे । परिणाहे । पनहा० इ० भा० ॥

विशालस्यभाव । तस्य भावस्त्वतलाविति तल् ।

विशालतैलगर्भ । पुं० अङ्कोठवृक्षे ॥

विशालत्वम । न० विशालतायाम ॥

विशालत्वक् । पुं० सप्तपर्णवृक्षे ॥ विशालात्वगस्य । बृहत्त्वचि ॥

विशालपत्र पुं० कासालो । कोकणदेशप्रसिद्धोयम् । मृदुताले । शीताले विशालानि पत्राणि यस्य ॥

विशालफलिका । स्त्री० निष्पाव्याम् ॥

विशाला । स्त्री० इन्द्रवारुण्याम् ॥ अन्ये न्द्रवारुणी प्रोक्ता विशाला तुमहाफला । विशाला कफवातघ्नी मेहकुष्ठहरा सरा । उज्जयिन्याम ॥ विशलति । शलचलने । ज्वलितीतिण ' ॥ यद्वा । विशति । विश० । तमिविशिबिडीतिकालन् । विशालशब्दात् स्त्रियामजाद्यतष्टाबिति टाप् ॥ उपोदक्याम् ॥ वदरिकाश्रमे ॥

विशालाक्ष : । पुं० हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि० विशालनयने । सुनेत्रे ॥ विशाले अक्षिणी यस्य । बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच् ॥

विशालाक्षी । स्त्री० वरस्त्रियाम् ॥ नागदन्याम् ॥ देवताविशेषे ॥ वाराणस्याम् विशालाक्षी विशाला-

यामपिख्यिता ॥ योगिनीविशेषे ॥ पित्वात्ङीष् ॥

विशालाया । स्त्री॰ पाटलायाम् ॥

विशाली । स्त्री॰ अजमोदायाम् । बनयवान्याम् । वस्तगन्धायाम् ॥ वह्वादिभ्यश्चेतिङीष् ॥

विशिख॰ । पु॰ शरे । बाणे ॥ तोमरे ॥ शरकाण्डे ॥ विशिष्टा शिखाअग्रमस्य ॥ त्रि॰ शिखारहिते । यथा । विशिखोप्युपवीतोच यत्करोतिनतत्कृतमितिस्मृति ॥

विशिखा । स्त्री॰ खनित्र्याम् ॥ रथ्यायाम् ॥ नलिकायाम् ॥ विशेते ॥ शीङ् । शीङ् विट्टप्रत्ययेतिख । टाप् ॥

विशिपम् । न॰ गृहे । मन्दिरे । विशन्त्यत्र । विश॰ विटपविष्टपविशिपोलपाद्गति॰ विशे . कपन्॰ प्रत्ययोदेरित्वञ्च ॥

विशिष्ट । पु॰ विष्णौ ॥ त्रि॰ प्रकृष्टज्ञानवति ॥ अधिके ॥ युक्ते ॥ विशेषेणशिष्ट . ॥ यद्वा । विशिष्यतेसर्वज्ञत्वादिभि॰ सर्वेभ्योऽतिरिच्यते । विपूर्वात्॰ शिषल्ल विशेषणाद्युत्पत्त कर्मणिक्त॰ ॥

विशिष्टाद्वैतवादी । त्रि॰ प्रकृतिपुरुषयो।र्भिन्नत्वेपिमितयोस्तयोर्ब्रह्म त्ववादिनि ॥ तस्यमतयथा । पुरुषस्तदतिरिक्ताप्रकृति॰ किन्तुभ यमितब्रह्म । यथकद्विदलवत् । इत्थंब्रह्मणएकत्व व्यवस्थितम् । चित्परमाणुस्वरूपोजीव॰ समस्तविश्वब्रह्मांश . । इतिमाधवभाष्यादि ॥

विशीर्ण । त्रि॰ विध्वस्ते ॥ गलिते ॥ विशीर्यतेस्म । शृहिंसायाम् । क्त ऋतइद्धातोः । रदाभ्यामितिन॰ । णत्वम् ॥ विशीर्णं . प्रारब्धोवपुरपिजराव्याधिविधुरगतदूरेविप्रस्वजनभरणवाञ्छितमपि । इदानींव्यामोहादहहविपरीतेहतविधौविधेयंयत्तत्त्वस्फुरतिमनागपिहृदये । इतिशिह्ल णमिश्र ॥

विशीर्णपर्ण : । पुं॰ निम्बवृक्षे ॥

विशीर्णवाक् । त्रि॰ स्खलितवचने ॥

विशुद्धम् न॰। अज्ञानतत्कार्यमलरहितत्वाल्लिङ्गप्रपञ्चे वेदान्तप्रसिद्धेब्रह्मणिषट्चक्रान्तर्गतपञ्चमचक्रे कण्ठस्थे । विशुद्धिं तनुतेयस्मा।ज्जीवस्यहंसलोकनात् । विशुद्धपद्ममाख्यातमाकाशाख्य महाद्भुतम ॥ जीवस्यहंसस्यपरमात्मनोवलोकनात्जीवयस्माद्विशुद्धं तनुते॰ ततोविशुद्धमित्यन्वय ॥ त्रि॰ उज्ज्वले । विमले । शुद्धे ॥ केवले ॥ निभृते ॥ सत्ये ॥

विशेषेणाशुद्धे ॥ विषयोपराग शून्ये ॥

विशुद्धविज्ञानम् । न० कार्यकारणो पाधिविनिर्मुक्तेब्रह्मणि ॥

विशुद्धात्मा । त्रि० निर्मलाऽन्तःकरणे ॥ विशुद्धोरजस्तमोभ्यामकलुषितआत्माऽन्तःकरणरूपसत्त्वं यस्य सः ॥

विशुद्धिः । स्त्री० समे ॥ शोधने ॥ सर्वकर्मक्षयोपादेयाविशुद्धिस्तन्त्रतारयोः ॥

विशृङ्खलः । त्रि० शृङ्खलारहिते । अबद्धे ॥ अप्रतिहते ॥ विगताशृङ्खलायस्य ॥

विशेषः । पु० तिलके ॥ प्रभेदे ॥ अतिशये ॥ प्रकर्षे । इतरव्यावर्त्तके असाधारणधर्मे ॥ सप्तपदार्थान्तर्गतपदार्थभेदे ॥ विशेषं निरूपयति । अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितइति । अन्तेअवसानेवर्त्तते०इतिअन्त्यः । यदपेक्षयाविशेषोनास्तीत्यर्थः । घटपटादीनांद्व्यणुकपर्यन्तानांतत्तदवयवभेदात्परस्परभेदः । परमाणूनाभेदकोविशेषएव०सतुस्वतएवव्यावृत्त इति नतत्रविशेषान्तरापेक्षानास्तीत्यर्थः ॥ इतिमुक्तावली ॥ पञ्चतन्मात्रेभ्योयथासङ्ख्यमाकाशादीनि यानिपञ्चभूतानि । एतेस्मृताविशेषाः कुतः शान्ताघोराश्चमूढाश्चेतिसाङ्ख्याः ॥ अलङ्कारप्रभेदे ॥ यथा । विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् । गतेसूर्य्येपिदीपस्थास्तमश्छिन्दन्तितत्कराः ॥ १ ॥ विशेषः सोपियद्येकं वस्त्वनेकत्रवर्ण्यते । अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपिसैवमे ॥ २ ॥ किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्चसः । त्वांपश्यतामयालब्धं कल्पवृक्षनिरीक्षणम् ॥ ३ ॥ विशिष्यते । त्रि० स्वविशेषणे । घञ् ॥ त्रि० शेषशून्ये ॥

विशेषकम् । न० तमालपत्रे । ललाटकृततिलके । अयाणांस्त्रीकानाम् अन्वये ॥ पुं० तिलकवृक्षे ॥ पुं० न० तिलकविशेषे ॥ त्रि० विशेषयितरि । विशेषाधायके० प्रभेदे ॥ विशिनष्टि । शिष् लृ० । ण्वुल् ॥

विशेषकच्छेद्यम् । न० चतुःषष्टिकलान्तर्गतषष्टकलायाम् ॥ सातु तिलकपुनाभाविच्छेदरचनेतिशैवतन्त्रम् ॥

विशेषगुणः । पुं० बुद्ध्यादिषट्के । रूपादिचतुष्टये ॥ स्नेहे ॥ स्वाभाविकद्रवत्वे ॥ अदृष्टे ॥ भावनायाम् ॥ शब्दे ॥ इतिभाषापरिच्छेदः ॥

विशेषज्ञः । त्रि० सारविदि ॥

विश्रुत . । त्रि० ख्याते । प्रसिद्धे ॥ व्यप्रवि । श्रु० । क्त ॥ ख्याते ॥ हृष्टे ॥ विशिष्टश्रुत ॥

विश्रुतात्मा । पु० विष्णौ ॥ अनाद्यविद्यावशान्मनुष्योऽहमात्मनोहक र्त्ताहमे.क्तोहमित्यन्नताद्यात्मनाप्रतीयमानोऽप्यन्नृतजडदु. खात्मकेभ्योदेहादिभ्यो।विशिष्टवेलक्षण्येनवेदान्तवाक्यै: सत्यज्ञानादिलक्षण सन् श्रुत श्रवणादिनाऽवगतआत्माऽतो विशिष्टश्रुतत्वाद्विश्रुतात्मा। सच्चेचज्ञ.।च्चं चज्ञापिमाविद्धीतिभगवद्वचनात् ॥ ब्रह्मविद्दि ।विशेषेणश्रुतआत्मायेन। ज्ञानीत्वात्मैवमेमतमितिभगवद्वचनादस्यविष्णु-रूपत्व सुप्रसिद्धमेव ॥

विश्रुति । स्त्री० कीर्त्तौ ॥ विख्यातौ ॥

विश्लथ: । त्रि० शिथिले ॥

विश्लिष्ट: । त्रि० शिथिले ॥

विश्लेष' । पु० विधुरे ॥ वियोगे विभागे ॥

विश्व' । पु० विश्वरूपभगवति ॥ व्यष्टयुपहितचैतन्ये व्यष्टिस्थूलशरीरोपहितस्य० विश्वशब्दवाच्यत्वेहि तु . सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वादिति । सूक्ष्मशरीरंकारणशरीरम् ० तदपरित्यज्य० स्थूलशरीरादौ० तदपेक्षयास्थूलशरीरलिङ्गशरीरतद्वादियं स्वपरमस्थूलशरीरस्य तितद्गुणसविज्ञानीवहुशेष्टि । तस्मिन् प्रविष्टत्वात् । तथाहि । जीवस्यचत्वउपाधय सुषुप्त्याद्यौ बुद्ध्यादिसंस्कारोपरक्षितमज्ञानमात्रमुपाधि । स्वप्ने जाग्रद्वासनामयलिङ्गशरीरमुपाधि । जाग्रदवस्थायान्तुसूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधि । तथाचपूर्वं पूर्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात्सर्वशरीरप्रविष्टत्वेनैवस्थूलभोगायतनाभिमानिनो विश्वइतिसज्ञा ॥ यद्वा । सूक्ष्मशरीरलिङ्गशरीरतदपरित्यज्य० स्थूलशरीरंविराट व्यष्टितद्वादियासांचक्षुरादिष्वीना० तत्तद्विषयाकाराणामुत्तत् प्रविष्टत्वादितिहेतुयोऽस्मा विश्वशरीरवर्त्तित्वाद्विश्व . ॥ गणदेवताविशेष ॥ तेयथा ॥ क्रतुर्दक्षोवसु सत्य: काल कामोधृति ' कुरु: । पुरूरवामाद्रवाश्चविश्वेदेवादशस्मृता : ॥ इष्टिश्राद्धे क्रतुर्दक्ष : स सत्योनान्दीमुखेवसु : । नैमित्तिकेकालकामौकाम्येचधुरिलोचनौ ॥ पुरूरवोमाद्रवाश्चपार्वणेसमुदाहृतौ ॥ तेतु० धर्माद्दक्षकन्याशांविश्वायांजाता' ॥ विशति० का र्मक्षितिविश्व. । विशप्रवेशने । अशूप्रुषिलटिकणिखटिविशिभ्य :

ब्रह्मितिब्रम् ॥ ब्रह्मणि ॥ विशन्ति
सर्वाणिभूतान्यस्मिन •तत् । अनुप्र
वेशश्रुत्या•विशतिसर्वमितिवा ॥
पञ्चीकृतपञ्चमहाभूततत्कार्यात्म
केवैराजशरीरे ॥ भुवने । जगति ।
सर्वस्मिन्प्रपञ्चजाते॥ विशतिसका
रणमितिनिरुक्तेः । अस्यकारणस्य
रूपादिविषयैतर्कजालनकर्त्तव्यमा
यामयत्त्वादिच्छा:किमिदंकिमस्यरू
पकथमिदमभूदस्यकोहेतु । इति
नकदापिविचिन्त्यचिन्त्य मायेतिधी
मताविश्वम् ॥ दन्तिनिदारुविकारे
दारुतिरोभवतिसोपितत्रैव । जग
तितथापरमात्मापरमात्मन्यपिजग
त्तिरोधत्ते ॥ ९४ ॥ इति । अपि
च । मूलोच्छेदंविनाकाश्चित्प्ररोह
न्तिपुनः पुनः । यथालतास्तथावि
श्वमज्ञानप्रशमंविना । अपिचाह ।
। विश्वंदर्पणदृश्यमाननगरीतुल्यं
निजान्तर्गतंपश्यन्नात्मनिमाययाबहि
रिवोद्भूतंयथानिद्रया । यः साक्षा
त्कुरुतेप्रबोधसमयेस्वात्मानमेवाद्व
यंतस्मैश्रीगुरुमूर्त्तयेनमइदंश्रीदक्षि
णामूर्त्तये ॥ इति ॥ अपिचाहुर्गौड
पादाचार्याः । स्वप्नमायेयथादृष्टे ग
न्धर्वनगरंयथा । तथाविश्वमिदंदृष्टं
वेदान्तेषुविचक्षणैरिति ॥ नागरे ।
शुण्ठ्याम् ॥ बोले ॥ त्रयोदशाङ्के ॥
त्रि•अखिले । कृत्स्ने ॥ विशतिस्व



कारणम् ॥ विश• । वात्°रिक्वन् ।
अनन्ते ॥ विश्वशत सप्तसप्तसर्वमस्य
यथाचकमितिभारतम् ॥ सर्वनाम
सञ्ज्ञेयम् ॥ आधुनिकसञ्ज्ञाखेनसर्व
नामस्वपर्युदासात् ॥

विश्वकद्रुः । पुं• आखेटशुनि । मृगा
याकुशलकुक्कुरे ॥ ध्वनौ । ध्वाने ॥
त्रि•खले । पिशुने ॥ विश्वकसर्वंद्र
वति । दुर्गतौ । मितद्र्वादित्वात्
डुः ॥ यथा । विश्वकन्दसी । कदि
आह्वानादौ । अचादि ॥

विश्वकर्मजा । स्त्री• विश्वकर्मसुतायाम्॥

विश्वकर्मा । पुं• सर्व्वांशौ । सूर्ये ॥
मुनिविशेषे ॥ देवशिल्पिनि । त्वष्ट
रि । देववर्द्धकौ ॥ द्वौप्रोक्तौविश्वक
र्माणौमयस्त्वष्टाचयोगवित् ॥ विश्व
कर्माऽस्माटकवेति ॥

विश्वकर्मसुता । स्त्री• सूर्यभार्य्याया-
म् । सञ्ज्ञायाम् ॥

विश्वका । स्त्री• गङ्गाचिल्लाम् ॥

विश्वकृत् । पुं• देवशिल्पिनि । विश्व
कर्मणि ॥ ब्रह्मणि । परमेष्ठिनि ॥
विश्वंकरोति । डुकृञ् • । क्विप्
। तुक् ॥

विश्वकेतुः । पुं• कामे । मदने ॥ वि
श्वस्मिन्•विश्वव्यापीवाकेतुर्यस्येति
रथः ॥ अनिरुद्धे ॥

विश्वगः । पुं• ब्रह्मणि ॥

विश्वगन्धः । पुं• पलाण्डौ ॥ न•बो

ले ॥
विश्वगन्धा । स्त्री० भूमौ ॥ क्षितौ ॥
विश्वस्मिन्गन्धोऽस्याः ॥
विश्वग्रन्थिः । स्त्री० हंसपद्याम् ।
विश्वचक्रम् । न० महादानविशेषे ॥
विश्वचक्रात्मा । पुं० विष्णौ ॥
विश्वजन' । पुं० सर्वसाधारणेविश्वादौ । रामजनी०ङ०भा०प्र० ॥
विश्वजनीन' । त्रि० सर्वजनहिते ॥ विश्वश्चासौजनश्च०तस्मैहितम् । प्रात्मविश्वजनभोगोत्तरपदात्ख' ॥
विश्वजनीयः । त्रि० विश्वजनहिते ॥ विश्वस्यजनःसर्वसाधारणोविश्वादि' । विश्वोजनोऽस्येतिविग्रहेपि०सएवा-र्थपदार्थः । तस्मैहितम् । कर्मधारयादेवेष्यतइतीष्टेरयनश्च : किन्तु छएव ॥ विश्वांजनायहितोवा ॥
विश्वजित् । पुं० सर्वस्वदक्षिणे यज्ञविशेषे । सर्वमेधे ॥ त्रि०सर्वजेतरि ॥ विश्वंजयति । जि०क्विप् । ष्वेतिक्विप् । तुक् ॥
विश्वत' । अ० सर्वतइत्यर्थे । विश्वस्मात् । पञ्चम्यास्तसिल् ॥
विश्वतोमुखः । त्रि० सर्वतोमुखे ॥ विश्वतोमुखान्यस्य ॥
विश्वदेव : । पुं० गणदेवताविशेषे ॥ यथा । विश्वदेवौक्रतुदक्षौसर्वास्विष्टिषुकिस्मृतौ । नित्यनान्दीमुखश्राद्धेवसुसत्यौचपैतृके ॥ नवान्नालम्भेदेवौकामकालौसदैवहि । अपिकन्यागतेसूर्यश्राद्धेचध्वनिरोचकौ ॥ पुरूरवामाद्रवाश्चविश्वदेवौचपार्वणे । इ०वह्निपु० ॥ चक्षुरादिषुप्राणेषु ॥ देवसमूहे ॥ कुक्कुरविघुकायाम ॥
विश्वदेवा । स्त्री० कुक्कुरविधुकायाम् ॥ गोरक्षचाकुलिया०ङ०गौ०दे०भा०प्र० ॥ नागबलायाम् ॥ रक्तपुष्पदण्डोत्पलै ॥
विश्वधायाः । त्रि० विश्वस्यधारके ॥ विश्वदधाति । डुधाञ्० । वहिहाधाञ्भ्यश्छन्दसीत्यसुन्०णित् । आतोयुक् ॥ वैदिकोयम् ॥
विश्वधृक् । पुं० श्रीपतौ ॥ विश्वधृष्णोतिस्वानैश्वर्यादिभिर्ब्रह्मादीन्वाऽभिभवति । ञिधृषा० । क्विप् । ऋत्विक्दधृगित्यादिनाकुः । गः । कः ॥
विश्वनाथः । पुं० विश्वेश्वरे । शिवे ॥ विश्वेषांनाथ' ॥
विश्वनाथनगरी । स्त्री० काश्याम् ॥ यत्रदेहपतनेनदेहिनांमुक्तिरेवभवतीतिनिश्चितम् । पूर्वपुण्यनिचयेनलभ्यतेविश्वनाथनगरीगरीयसी ॥
विश्वप' । पुं० अग्नौ ॥ विश्वपाति । पा० । आतोनुपसर्गेकः ॥
विश्वपाः । पुं० अग्नौ ॥ विधौ ॥ रवौ ॥ प्रजापतौ ॥ विश्वंपा-

ति । पा० । आतोनुपसर्गेकइतिके प्राप्ते०वासरूपन्यायेन०आतोमनि न्क्वनिप्वनिपश्चेतिचेनविच् ॥ देवे ॥

विश्वपा । पुं० वह्नौ ॥ चन्द्रे ॥ सूर्ये ॥ समीरणे ॥ कृतान्ते ॥ विश्वंपाति । पारक्षणे । शुभ्रुषन्निति साधुः ॥

विश्वबोधः । पुं० धर्मकाये । बुद्धे ॥

विश्वभुक । पुं० विष्णौ ॥ विश्वं कृत्स्नं जगद् भुङ्क्ते संहरतिप्रलयकाले इति०भुनक्तिपालयतिस्थितिकाले इतिवाभुजे परिपालनाभ्यवहारणकर्मणि . क्विप् ॥

विश्वभू । पुं० बुद्धप्रभेदे ॥

विश्वभेषजम् । न० शुण्ठ्याम् ॥ विश्वस्यदोषस्यभेषजम् ॥

विश्वभोजाः । पुं० इन्द्रे ॥ विश्वं भुङ्क्ते भुनक्तिवा । भुज० । विदिभुजिभ्यांविश्वे०इत्यसिप्रत्ययः ॥

विश्वमदा । स्त्री० अग्नेर्जिह्वाविशेषे ॥

विश्वम्भरः । पुं० अच्युते । विष्णौ ॥ विष्णौ असि । शक्रे ॥ विश्वं बिभर्ति । डुभृञ० । संज्ञायाभृतृवृजिधारिसहितपिदमइतिखच् । अरुर्द्विषदितिमुम् ॥ अग्नौ ॥ विश्वस्यभरणाद्विश्वम्भरो निरितिभाष्यकाराः ॥ विसम्भरा०इ०भा०प्राणिविशेषे ॥

विश्वम्भरा । स्त्री० धरायाम् । स्थिरायाम् । पृथिव्याम् ॥ विश्वम्भरातद्धरणाच्चानन्तानन्तरूपतः । इतिपुराणम् ॥ विश्वंबिभर्ति० डुभृञ्धारणपोषणयोः . संज्ञायाभित्यादिनाखच् । मुम् । टाप् ।

विश्वयोनि । पुं० भगवति ॥ विश्वस्ययोनिः कारणम्०निमित्तोपादानात्मकम् ॥

विश्वरूपः । पुं० विराजि । विष्णौ ॥ आदित्ये । सूर्ये ॥ विश्वानिबहूनिरूपाण्यस्य ॥ विश्वानिनानाविधानि० रूपाणिश्वेतपीतादिगुणात्मकानियस्यस ॥ मणिविशेषे ॥ सचनानारूपोऽवभासते० उपाधिसन्निधानात्०नस्वतोनेकरूपः ॥ न० अगुरुणि ॥

विश्वरूपकम् । न० अगुरुणि ॥

विश्वरेताः । पुं० ब्रह्मणिविधातरि ॥ विश्वस्यरेतः कारणम् ॥ विश्वसर्वकार्यत्वेनाभिमतरेताः कारणंयस्यसविश्वरेताः . परमेश्वरः ॥

विश्वरोचनः । पुं० नाडीचशाके ॥

विश्ववेदाः । पुं० अग्नौ ॥ सर्वज्ञे ॥ विश्वं वेत्ति० विदन्तिवा । विद० । विदिभुजिभ्यांविश्वइति० असिप्रत्ययः ॥

विश्वसनम् । न॰ मुनिविश्रामदेशे ॥ मुनिविश्रामदेशीयस्तस्य विश्वसनस्य तमितिवचनात् ।

विश्वसहा । स्त्री॰ वह्नेर्जिह्वाविशेषे ।

विश्वसारम् । न॰ तन्त्रविशेषे ॥

विश्वसारकम् । न॰ विट्खदिरे । फणिमनसो॰ द्र॰ गौ॰ भा॰ । नागयूहर॰ द्र॰ भा॰ प्र॰ ॥

विश्वसितः । त्रि॰ विश्वस्ते । कृत विश्वासे ॥

विश्वसृट् ॰ड् । पुं॰ विधौ । ब्रह्मणि ॥ विश्वं सृजति । सृज॰ । क्विप् । क्विन्प्रत्ययस्येतिकुत्वं न॰ रज्जुसृड्भ्यामितिभाष्यप्रयोगात् । यद्वाऽस्त्विजयज्यो . पदान्ते षत्वविधेः कुत्वापवादत्वात् ॥

विश्वस्त । त्रि॰ जातविश्वासे । अशङ्किते ॥

विश्वस्ता । स्त्री॰ विधवायाम् ॥ विफलश्वसिति । श्वसप्राणने । गत्यर्थेतिक्त । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

विश्वस्या । स्त्री॰ शतावर्याम् ॥

विश्वा । स्त्री॰ अतिविषायाम् ॥ शुण्ठ्याम् । शतावर्याम् ॥ विशति । विश॰ । अशूप्रुषीतिक्वन् । टाप् ॥ पिप्पल्याम् ॥

विश्वाकषाय ः । पु॰ शुण्ठीक्वाथे ॥

विश्वाची । स्त्री॰ अप्सरोविशेषे ॥

विश्वात्मा । पुं॰ परमेश्वरे । विश्व आत्मनियस्य ॥ प्रतीचि ॥ विश्वस्मिन्पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकेस्थूलजगतिवैराजशरीरे॰ जागरितेच॰ आत्माऽहंममेत्यभिमानोऽस्य । विश्वस्याखिलजङ्गमात्मकस्यप्राणिजातस्यात्माप्रत्यक्पीवा ॥

विश्वामित्र । पुं॰ ब्रह्मर्षिविशेषे । गाधिजे । विश्वकुशयाजिनि । कौशिके ॥ विश्वेषांमित्रः । विश्वप्रयोगयोर्मैत्रीकस्मिन्निच्छतिधर्मतः । विश्वामित्रः सवृत्तिभागवते॰क्तं. ॥ आत्मनि ॥ विश्वस्यमित्रंनिरुपाधिप्रेमगोचरतयाप्रेयान् । आत्मानमेवप्रियमुपासीतेतिश्रुतेः ॥ मित्रे चर्षाविति विश्वशब्दस्यदीर्घः ॥ त्रि॰ सकलशात्रवे ॥ विश्वेषाममित्रः ॥

विश्वामित्रतीर्थम् । न॰ तीर्थविशेषे ।

विश्वामित्रप्रिय । पुं॰ नारिकेले ॥

विश्वाराट् । पु॰ विश्वस्मिन्राजमाने ॥

विश्वावसुः । पुं॰ गन्धर्वविशेषे ॥ विश्वंवसुयस्य । विश्वस्यवसुराटोरितिपूर्वपदान्तस्यदीर्घः ॥ वत्सरविशेषे ॥ तत्फलयथा । सर्वत्रजायतेचैमसबंशस्यमहार्घता । विश्वावसौवराराहैकापासस्यमहार्घता ॥ स्त्री॰ रात्रौ ॥

विश्वास । पुं॰ विश्रम्भे । दृढमित्थ मेवनान्यथेतिनिश्चये ॥ विश्वसन म् । श्वस॰ । घञ् ॥ लोभप्रमाद विश्वासै पुरुषोनश्यतित्रिभि । त स्माल्लोभोनकर्त्तव्य .प्रमादोनानवि श्वसेत् ॥ सार्थोयानमदकुर्यात्ससु खोदृष्यायोश्मित । तन्निष यस्य विश्वास ' पुरुष सजितेन्द्रिय .॥ अपिच । सौहृदं व्यवहारांश्चप्रवृत्ति प्रकृतिन्तथाम् । सहवासेनततोंश्च ञ्ज्ञित्वाविश्वसेत्तत . ॥

विश्वास्य । त्रि॰ श्रद्धेयवचने ॥

विश्वदेवा . । पुं॰ अग्नौ ॥ श्राद्धदेवे ॥ क्रतुर्दक्षोवसु सत्य काम काल स्तथाध्वनि । रोचकश्चाद्रवाश्चैव तथाचान्य : पुरूरवा ' ॥ विश्वेदे वाभवन्त्येतेदृशसर्वेप्रपूजिता . ॥

विश्वेश । पुं॰ परमेश्वरे ॥ विश्वेषां सर्वेषामीशोनियन्ता ॥

विश्वेशा । स्त्री॰ विमलेश्वरेवस्माना यादेव्याम् ॥

विश्वेश्वर । पुं॰ काशिस्थेशिवे । का श्यांस्थितेलिङ्गविशेषे ॥ विश्वेषामी श्वर ॥ इष्टोविश्वेश्वरोदेवोकाल व्यामणिकर्णिका ॥

विश्वौषधम् । न॰ शुण्ठ्याम् ॥ विश्वे षामौषधम् । विश्वस्यतदौषधञ्चेति वा ॥

विट् । स्त्री॰ विष्ठायाम् ॥ वेवेष्टि । विषत्वव्याप्नोति । क्षिप् । अध्वस्त त्वे ॥ दृषितरि ॥ विट्पतिशब्द निर्देशात् ॥ व्यापने ॥

विषम् । न॰ जले । तोये ॥ वत्सनाभा भिधे ॥ बोले ॥ सामान्यविषे ॥ पुं॰ न॰ क्ष्वेडे । गरले ॥ तद्भेदायथा । पुंसिक्लीवेचकाकोलकालकूटहलाह ला : । सौराष्ट्रिक : शौक्लिकेयोब्र ह्मपुत्र ' प्रदीपन ॥ द्वारदोवत्स नाभश्चविषभेदाअमीनव ॥ अपिच । विषतुगरलन्तस्यभेदानुदाह रेत् । वत्सनाभ ' सहारिद्र सक्तु कश्चप्रदीपन ॥ सौराष्ट्रिक शृङ्ग कश्चकालकूटस्तथैवच । हालाहलो ब्रह्मपुत्रोविषभेदाअमीनव ॥ ब्राह्म ण पाण्डरस्तेषुक्षत्रियोलोहितप्रभ । वैश्य . पीतोऽसित . शूद्रोविषउ क्तश्चतुर्विध ॥ रसायनेविषविप्रं क्षत्रियदेहपुष्टये । वैश्यकुष्ठविनाशा यशूद्र दध्याद्वधायहि ॥ अथास्यगुणा । विष प्राणहरप्रोक्त व्यवायिचविका सिच । आग्नेयवातकफहृद्योगवाहि मदावहम् ॥ व्यवायि॰सकलकाय गुणव्यापनपूर्वकपाकागमनशीलम् । विकासि॰ओज . शोषणपूर्वकस न्धिबन्धशिथिलीकरणशीलम् । आ ग्नेयम्॰अधिकाग्न्यंशम् । योगवाहि ॰स सर्गगुणग्राहकम् । मदावहम्॰ तमोगुणाधिक्येनबुद्धिविध्वंसकम् ॥

तदेवयुक्तियुक्तन्तु प्राणदायिरसाय नम् । योगवाहिपरंवातश्लेष्मजित् सन्निपातहृत् ॥ योगवाहित्रिदोषघ्न बृंहणं वीर्यवर्द्धनम् । येदुर्गुणाविषे ऽशुद्धे तेस्युर्हीनाविशोधनात् ॥ तस्मा द्विषप्रयोगेषुशोधयित्वाप्रयोजयेत् । अथशोधनविधि । गोमूत्रे त्रिदिनं स्थाप्यविषंतेनविशुद्ध्यति । रक्तस र्षपतैलाक्तं तथाधार्यं त्र्यहंसिसि ॥ येगुणागरलेप्रोक्तास्तेस्युर्हीनाविशोध नात । तस्माद्विषप्रयोगेषुशोधयि त्वाप्रयोजयेत् ॥ स्थावरजङ्गमञ्चैव द्विविधं विषमुच्यते । दशाधिष्ठान माद्यन्तु द्वितीयषोडशाश्रयम् ॥ विशेषोभावप्रकाशेद्रष्टव्यः ॥ वैवेष्टि कायम् । विष्लृ० विषविप्रयोगेषु । कुगुपधेतिक. ॥ हालाहलोनैव विषं विषं रमापरजनाव्यस्ययमेवम न्वते । योगेनजागर्त्तिपिबन्नपि शिव मारनरमांमुच्यतिनिद्रयाहरिः ॥

विषकण्टकिनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

विषकण्ठ : । पु० नीलकण्ठे ॥

विषक्त. । त्रि० अतिश्लिष्टे । लग्ने ॥ आश्रिते ॥

विषघा । स्त्री० गुडूच्याम् ॥

विषघाती । पु० शिरीषवृक्षे ॥ विषनाशके ॥ त्रि० ॥

विषघ्न : । पु० शिरीषद्रुमे ॥ यवासे ॥ विभीतके ॥ चम्पकवृक्षे ॥ त्रि० विषनाशके ॥ विषहन्ति । हन० । हन्तेरमनुष्यकर्तृकेपिचेतिटक् ॥ विषघ्नौषधानिमात्स्ये १८२ ऽध्यायेद्र ष्टव्यानि ॥

विषघ्नधूप : । पु० धूपविशेषे ॥ तथा । लाक्षा सर्जरसौमैत्रं सर्षपा एलावालुके । सुवर्णातस्करतरोः कुसुमैरर्जुनस्यतु ॥ धूपोवासगृहेहन्ति विषंस्थावरजङ्गमम् । नतत्रकीटाः सविषानदर्दुरसरीसृपाः । न कृत्याकर्मणास्तत्रधूपोऽयंयत्रदह्यते ॥

विषघ्ना । स्त्री० चिह्नतायाम् ॥ गुडूच्याम् ॥

विषघ्नी । स्त्री० हिलमोचिकायाम् ॥ इन्द्रवारुण्याम् ॥ वनवर्वरिकायाम् ॥ सल्यकलायाम् ॥ भूम्यामलक्याम् ॥ रक्तपुनर्नवायाम् ॥ हरिद्रायाम् ॥ वृश्चिकाल्याम् ॥ महाकारञ्जे ॥ कुलुथायाम् ॥

विषक्ती । त्रि० मिथः श्लिष्टे ॥

विषजिह्व. । पु० देवताडवृक्षे ॥

विषज्वर : । पु० महिषे ॥ विषजज्वरे ॥

विषगुडम । न० मृणाले ॥

विषण्ण :। त्रि० विषादप्राप्ते ॥ भग्नोत्साहे ॥ दुःखिते ॥ विषीदतिस्म । षदॢ० । गत्यर्थेतिक्तः । रदा

ष्यामितिनत्वम् ॥
विषलता । स्त्री॰ जङतायाम् ॥
विषतिन्दु ' । पुं॰ कुपीलौ ॥ कारस्क रवृक्षे ॥
विषदम् । न॰ पुष्पकासीसे ॥ त्रि॰ विषदातरि ॥ यथा । विषद . श्याव शुष्कास्येविलक्षोवीक्ष्यतेदिश । स्वेदवेपथुमांसव्योभीत स्खलति जृम्भते ॥ विषदददाति । डुदाञ्॰। चातकूतिक ' ॥
विषदंष्ट्रा । स्त्री॰ सर्पकङ्काल्याम् ॥
विषदन्तक । पुं॰ सर्पे ॥
विषदर्शनमृत्युक । पुं॰ चकोरपक्षि णि ॥ जीवञ्जीवस्तुगुन्द्रालोविषदर्श नमृत्युकश्चतिहेमचन्द्र ' ॥
विषद्रुम : । पुं॰ कारस्करवृक्षे ॥
विषधर ' । पुं॰ आशीविषि । सर्पे ॥ विषस्यधर : ॥
विषधर्मा । पुं॰ कुलक्षयायाम् । शू काशिम्ब्याम् ॥
विषधाची । स्त्री॰ विषकृष्याम् ॥
विषनाशन . । पुं॰ शिरीषवृक्षे ॥ त्रि॰ विषनाशके ॥
विषनाशिनी । स्त्री॰ सर्पकङ्काल्या म् ॥ नाकुल्याम् ॥
विषनुत् । पुं॰ श्योनाकवृक्षे ॥
विषपुष्प : । पुं॰ मदनद्रुमे । मयनफलवृ॰ प्र॰ ॥ न॰ नीलपद्मे विषयुक्तपुष्पे ॥
विषपुष्पक . । पुं॰ मदनवृक्षे ॥ ज्वरे ॥ विषपुष्पभक्षणजन्यरोगे ॥ विषपु ष्पैर्जनित : । कालप्रयोजनाद्रोगवृ तिकन् ॥
विषभक्षणम् । न॰ विषखादने ॥ य चमुहूर्तमाह । चराचरेन्द्रडुलघूडु चिञाविष:धनिभानुकवीन्दुभौमान् । यद्वहतेऽनेकविधानिताबत्सका लकूटानिसदेतिविज्ञा ॥
विषभिषक् । पुं॰ विषवैद्ये ॥
विषम . । पुं॰ अलङ्कारविशेषे ॥ यथा । क्वचिद्यदतिवैधर्म्यान्नश्लेषोघटना मियात् । कर्त्तु क्रियाफलावाप्ति र्नैवानर्थस्यपद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्यकारणस्यगुणक्रिये । क्रमेण चविरुद्धेयत्सएषविषमोमत ॥ द्व योरत्यन्तविलक्षणतयो॰ यदनुपपद्य मानत्वेनयोग : प्रतीयते॰यश्चकि ञ्चिदारभमाण : कर्त्ता॰क्रियाया प्राणाशात्र्यविकलमभीष्ट त फलनल भेत॰यावदप्रार्थितमप्यनर्थं विषयमा सादयेत्॰तथासत्यपिकार्य स्यकारण रूपाऽनुकारेयत्तयोर्गुणौक्रियेचप रस्परविरुद्धतांव्रजत : ॰ससमविष यंयात्मा॰चतूरूपोविषम : । क्रमेणो दाहरणम् । शिरीषादपिमृद्वङ्गीके यमायतलोचना । अयक्वचकुकूला ग्निकर्कशोमदनानल : ॥ सिंहिका सुतसन्त्रस्त शश :शीतांशुमाश्रि त ' । जग्रसेसाश्रयतत्रतमन्य . सि

श्चिकासुत ' ॥ सद्य ' करकर्धमवा
प्यविच रणे रणे यस्त्रक्षपाणलेखा ।
तमालनीलाशरदिन्दुपाण्डुयशस्त्रि
लोक्याभरण प्रसूते ॥ आनन्दमम
न्दमिमकुवलयदललोचनेददासित्व
म् । विरहस्त्वयैवजनितस्तापयति
तरांशरीरमे ॥ अत्रानन्ददानशरीर
तापिनविरुद्धते॰एवम्॰विपुलेनसा
गरशयस्यकुक्षिणा । भुवनानियस्यप
पिरेयुगक्षये । मदविभ्रमासकलया
पपिपुन . सपुरस्त्रियैकतमयैकद्दशा
॥ कृत्यादावपिविषमत्व यथा योगम
वगन्तव्यम् ॥ तालविशेषि ॥ यथा ।
चतुर्विध : परिच्छेद्यस्ताल . कल्पना
नामक . । पूर्ण खण्ड समश्चै
वविषमश्चैवकथ्यते ॥ सचतुष्कगणो
पूर्णो खण्डे विन्दुद्वयगुरु . । यगण
स्तुसमेज्ञेयस्तगणोविषमेभवेदिति
॥ अयुग्मराशौ ॥ न॰विषमाशने ॥
बहुस्तोकमकालेभुक्तं यद्विषमन्ति
तत् ॥ पद्यस्यत्रिविधवृत्तान्तर्गतवृत्त
विशेषि ॥ यथा । पद्यं चतुष्पदीतच्च
वृत्त जातिरितिद्विधा । वृत्तमक्षरस
ङ्ख्यात जातिर्मात्राकृताभवेत् ॥
सममर्द्धसम वृत्तविषमञ्चेतितत्त्रि
धा । समसमचतुष्पादभवत्यर्द्धसम
पुन : ॥ आदिस्तृतीयवद्यस्यपादस्तु
र्योद्वितीयवत् । भिन्नचिह्नचतुष्पा
दविषमंपरिकीर्त्तितम् ॥ स्पष्टे ।
उन्नतानते । उच्चनीचस्थाने ॥ चि॰
असमाने ॥ कोपने ॥ अयुग्मे ॥ वि
गत . सम सदृशोऽस्य । सुविनि
र्दृश्यं सुधिसूतिसमाकृतिपत्त्वम् ॥

विषमच्छद । पु॰ सप्तपर्णे । इतवि
नीतिप्रसिद्धे ॥ विषमाश्छदायस्य
स : ॥

विषमज्वर । पुं॰ चतुर्थकादिज्वरवि
शेषि ॥ तस्यनिदानाद्याह । दोषा
ल्पोऽहितसम्भूतो॰ज्वरोत्सृष्टस्यवा
पुन । धातुमन्यतमप्राप्यकरोतिवि
षमज्वरम् ॥ सन्ततरससंस्थ स
ततरक्तधातुग . । दोष . क्रुद्धोज्वर
पुंसांसोऽन्येद्यु पिशितास्त्रित '
॥ मेदोगतस्तृतीयेऽह्निअस्थिमज्जग
त पुन ' । कुर्याच्चतुर्थक घोरम
न्तकरोगसङ्करम् ॥ य . स्यादनिय
तात्कालाच्छीतोष्णाभ्यांतथैवच । वे
गतश्चापिविषमोज्वर : सविषम ' स्मृ
त ॥ अस्यभेदायथा । सन्तत स
ततोऽन्येद्युस्तृतीयकचतुर्थकावि
ति ॥

विषमनयन । पु॰ शिवे ॥ विषमो
निमयनानियस्य ॥

विषमस्थ : । पुं॰ आकृत्याम् । विप
द्विद्यायाम् ॥

विषमर्द्दनिका । } स्त्री॰ गन्धनाकुल्या
विषमर्द्दनी । }
म् ॥

विषय .

विषमस्थ : । त्रि॰ दरिद्रे ॥ विषमेतिष्ठति । छो॰ । सुपिस्थइतिकः ॥ उपद्रवदेशस्थे ॥

विषमाक्ष : । पुं॰ शिवे ॥ विषमाक्षीणियस्य . ॥

विषमायुध . । पुं॰ कामे । पञ्चशरे ॥ विषमाख्यायुधानियस्य ॥

विषमाशनम् । न॰ अकालेबहुबाल्पं वाभुक्त्वाविषमाशनमितिलक्षिते ॥ बहुस्तोकमकालेवाभुक्तं तद्विषमाशनम् ॥

विषमित । त्रि॰ विषमीकृते

विषमीयम् । त्रि॰ विषमदेशभवे ॥ गहादिभ्यश्चेतिछः ॥

विषमुष्टि ' । पुं॰ महानिम्बे ॥ मुष विशेषे । सुमुष्णाम् । बपमुष्टिके ॥ विषमुष्णाति । मुष॰ । क्तिच् ॥

विषमृत्यु ' । पुं॰ चकोरे ॥

विषमेषु । कामे ॥ विषमाइषवोयस्य ' ॥

विषमोन्नत । त्रि॰ स्फुटे ॥

विषय : । पुं॰ चक्षुरादिग्राह्ये रूपादौ न्द्रियार्थे । गोचरे ॥ न्यायमतेक्षित्यप्तेजोवायूनांविषया यथा । तत्र क्षितिर्गन्धहेतुर्नानारूपवतीमता । षड्विधस्तुरसस्तत्रगन्धोपिद्विविधो मत ' ॥ स्पर्शस्तस्यास्तुविज्ञेयोह्यनुष्णाशीतपाकजः। नित्यानित्याचसा

विषय .

द्वेधानित्यास्यादणुलक्षणा ॥ अनित्यातुतदन्यास्यात्सैवावयवयोगिनी साचत्रिधाभवेद्देहइन्द्रियविषयस्तथा ॥ योनिजादिर्भवेद्देहइन्द्रियघ्राणलक्षणम् । विषयोद्व्यणुकादिश्च ब्रह्माण्डान्तउदाहृत :॥ वर्णः शुक्लोरसस्पर्शौजलेमधुरशीतलौ । स्नेहस्तत्रद्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥ नित्यतादिप्रथमवत्किन्तुदेहमयोनिजम् । इन्द्रियरसनसिन्धुर्हिमादिर्विषयोमत ' ॥ स्पर्शउष्णस्तेजसस्तुस्याद्रूपशुक्लभास्वरम् । नैमित्तिकद्रवत्वन्तुनित्यतादिचपूर्ववत् ॥ इन्द्रियनयनवह्निस्वर्णादिर्विषयोमत ' ॥ अपाकजोऽनुष्णाशीत . स्पर्शस्तुपवनेमत ' । तिर्यग्गमनवानेषज्ञेय : स्पर्शादिलिङ्गक . ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत :॥ विषिण्वन्तिविषयिणमवबध्नन्ति स्वेनरूपेणनिरूपणीयकुर्वन्ति॰ इतिविषया :। षिञ् बन्धने । पचाद्यच् । परिनिवीतिषत्वम् । विषयणमनवा॰ विषिणोतिवा । षिञएरच्॰ पुसीतिघोवा॰ पचाद्यज्वा ॥ विषस्यविषयाणाञ्च दूरमत्यन्तमन्तरम् । उपभुक्तविषघ्नन्तिविषया ' स्मरणादपीतिविषयानुसन्धानस्यनिन्दितत्वादिन्द्रियार्थेषु

स्वादि । विधेयेतिसतांमतम् ॥ यथोक्तम् । दोषिणतीव्रो विषय ' कृष्णसर्पविषादपि । विषनिहन्तिभोक्तारद्रष्टारञ्चक्षुषाप्ययम् ॥ अपिच । विषयविषधराणांदोषदंष्ट्रोत्कटानांविषाक्तमविसर्पव्यक्तदुःखेश्थितानाम् । विरमविरमचेत : सन्निधानादमीषाम्सुखकणमपिहितो : सादृसमासमकार्षी ' । इति ॥ नियामके यथा । विशब्दोहिविशेषार्थ . सिनोतेर्बन्धुरुच्यते । विशेषेणसिनोतीतिविषयोऽतोनियामक . ॥ इति ॥ प्रबन्धाद्यक्रयोज्ञातस्तत्र ॥ यथाजीवब्रह्मैक्यशुद्धचैतन्यंप्रमेयवेदातानांविषय ॥ कुरुपञ्चालादिदेशे ॥ जनपदे ॥ अव्यक्ते ॥ शुक्रे ॥ आश्रये । आश्रये ॥ योगसाधने ॥ सर्वमेवहिकार्यमदृष्टाधीनम् यत्कार्यंयदृष्टाधीनेतत्तदुपभोगसाक्षात्परम्परयाजनयत्ये व • नहिवीज योजनाभ्याविनाकश्चिदुत्पत्तिरस्ति • तेनत्र्यणुकादिब्रह्माण्डान्तसर्वमेवविषयोभवतीत्यर्थ . । इतिसिद्धान्तमुक्तावली ॥

विषयवित् । पुं॰ वात्स्यायनादिमुनिषु । तेचेत्यकल्पयन्ति • शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमिति तदेतत्कल्पनतेषांविभ्रममात्रम् । विषस्यविषयाणाञ्चेतिविषयानुसन्धानस्यनिन्दितत्त्वात् ॥

विषयाज्ञानम् । न॰ तन्द्रायाम् ॥

विषयायी । पुं॰ राज्ञि ॥ वैषयिकजने ॥ इन्द्रिये ॥ कामदेवे ॥ विषयासक्तपुरुषे ॥

विषयी । पुं॰ नृपतौ ॥ कामदेवे ॥ वैषयिके ॥ ध्वनौ विषयोऽस्यास्ति । अतइनि ' ॥ देशे ॥ यस्यादित्वात्निर्वृद्ध्यभाव ' पत्वञ्चनिपात्यते ॥ न॰ इन्द्रिये ॥ त्रि॰ विषयासक्ते ॥ आरोप्यमाणे ॥

विषयोग । पुं॰ तिथिवारयोर्योगविशेषे ॥ यथा । षष्ठीशशाङ्केनवमीचशुक्रेबुधेद्वितीयातपनेचतुर्थी । जीवेष्टमी • सौरिकुजेद्विसप्तमीयोगाविषाख्या . कुलनाशका स्यु ॥ बुधवारेभद्रारूपेणसिद्धियोगस्तुसप्तमीकादश्योश्चरितार्थो • नतुद्वितीयायामिति । अन्यथाबुधाष्टम्यादिवाक्यविरोध . स्यादिति ॥

विषरूपा । स्त्री॰ अतिविषायाम् ॥

विषलम् । न॰ विषे ॥

विषलता । स्त्री॰ इन्द्रवारुण्याम् ॥

विषविद्या । स्त्री॰ विषघ्नमन्त्रे ॥

विषवैद्य ' । पुं॰ कथाप्रसङ्गे, गारुडिके । जाङ्गुलिके ॥ विद्यामधीते • वेत्तिवा । तदधीतेतद्वेदेत्यण् । विषस्यवैद्य ' ॥

विषवैरिणी । स्त्री॰ निर्विषायाम् ॥

विषशालूक । पुं॰ पद्मकन्दे ॥

विषशूक . ।
विषशृङ्गी । ) पुं॰ भङ्गरोले ॥

विषसूचक । पुं॰ चकोरे ॥

विषसृक्का । स्त्री॰ भृङ्गरोलि ।

विषहन्त्री । स्त्री॰ अपराजितायाम् ॥ निर्विषायाम् ।

विषहर । पुं॰ गरलनाशकौषधादौ ।

विषहरा ।
विषहरी ) स्त्री॰ मनसादेव्याम् ॥

विषहा । स्त्री॰ देवदालीलतायाम् ॥

विषा । अ॰ बुद्धौ ॥ विपूर्वात् स्यतेर्विषाविहेत्याप्रत्ययः ॥

विषा । स्त्री॰ अतिविषायाम् ॥ विषा सोष्णाकटुस्तिक्तापाचनीदीपनीहरेत् । कफपित्तातिसारामविषकासवमिक्रमीन् ॥ बुद्धौ ॥ वेवेष्टि । विष ल॰ । विषप्रयोगेवा । इगुपधेति क ॥

विषाङ्कुर । पुं॰ शल्यास्त्रे ॥

विषाणम् । न॰ पशुशृङ्गे ॥ इभदन्ते ॥ कुष्ठनामौषधे ॥ कोले ॥ व्यक्ति । असमुखि । आनश् असीरलोप । उपसर्गप्रादुर्भ्यामितिषत्वम् ॥

विषाणिका । स्त्री॰ मेषशृङ्ग्याम् ॥ सातलायाम् ॥ कर्कटशृङ्ग्याम् । आवर्तक्याम् ॥

विषाणी । पुं॰ हस्तिनि ॥ शृङ्गिणि । ऋषभनामौषधे ॥ शृङ्गाटके ॥

विषाणी । स्त्री॰ क्षीरकाकोल्याम् ॥ अजशृङ्ग्याम् ॥ फलस्याजशृङ्गसदृशत्वात् । विषाणमस्त्यस्याः । अर्शआद्यच् । गौरादि ॥ तिन्तिड्याम् ॥ ऋषभौषधे ॥ वृश्चिकाल्याम् ॥

विषाद । पुं॰ अवसादे । उपतापे । स्नेहविषयीभूतस्वजनविच्छेदाशङ्कानिमित्ते शोकापरपर्यायेचित्तव्याकुलीभावे ॥ इष्टनाशकृतेमनोभङ्गे ॥ तदुक्तम् । विषादश्चेतसोभङ्गउपायाभावनाशयोरिति विषदनम् । षदॢ॰ । घञ् । मोहे ॥ विषादात्मकस्तमोगुणः ॥

विषादनी । स्त्री॰ पलाशीलतायाम् ।

विषादी । त्रि॰ सततमसन्तुष्टस्वभावश्चलेनोनुशोचनशीले ॥

विषानन । पुं॰ सर्पे ॥

विषान्तक । पुं॰ शिवे ॥ त्रि॰ विषनाशके ।

विषापह । पुं॰ पाटली । मुष्कके ॥

विषापहा । स्त्री॰ इन्द्रवारुण्याम् ॥ निर्विषायाम् ॥ नागदमन्याम् ॥ अर्कमूलायाम् ॥ सर्पकङ्कालिकायाम् ॥

विषाभावा । स्त्री॰ निर्विषायाम् ॥

विषायुध । पुं॰ सर्पे । न॰ विषयुक्तास्त्रे ॥

विषारः । पुं० सर्पे ॥

विषाराति । पुं० कृष्णधत्तूरके ॥

विषारि । पुं० घृतकरञ्जे ॥ महाचञ्चुशाके ॥

विषास्य । पुं० अहौ ॥ त्रि० विषयुक्तमुखे ॥

विषास्या । स्त्री० भल्लातके ॥

विषीदन् । त्रि० विषादङ्कुर्वति । अतिदुःखिते ॥

विषु । अ० नानार्थे ॥ साम्ये ॥ सर्वतोर्थे ॥

विषुण । पुं० विषुवदाख्ये काले । विषुवे ॥ विषुनानाऽस्मिन्निति विष्वक्षि । तान्यस्य सन्ति पामादिषु० विष्वगित्युत्तरलोपश्चाकृतसन्धिरितिगणसूत्रान्नप्रत्ययउत्तरपदलोपश्च । विषुवदाख्यकालस्थिनानागतानिदिनानिसन्ति० दिनान्तरायान्यूनाधिकभावस्यतन्मूलकत्वात् ॥

विषुवम् । न० समरात्रिन्दिवेकाले । तुलामेषयोरर्कसङ्क्रमे ॥ विषुसाम्यमस्त्यस्मिन्० तुलयामेषेयस्त्वेवेत्यर्थे० वप्रकरणेऽन्येभ्योपीत्युक्तेर्वः ॥

विषुवत् । न० विषुवे ॥ प्रथमेकृत्तिकाभागेयदाभास्वांस्तदाशशी । विशाखानाञ्चतुर्थेंशेमुनेतिष्ठत्यसंशयम् ॥ विशाखायायदासूर्यश्चरत्यंशस्तृतीयकम् । तदाचन्द्रं विजानीयात्कृत्तिकाशिरसिस्थितम् ॥ तदैव विषुवाख्योयंकालः पुण्योभिधीयते । तदादानानिदेयानिदेवेभ्यः प्रयतात्मभिः ॥ इतिविष्णुपुराणम् ॥ विषुसाम्यमस्त्यस्ति० तुलयामेषेयस्त्वेवेत्यर्थेमतुप्प्रत्ययः ॥

विषूचि । स्त्री० नानागतौ ॥ पृथक्फले ॥

विषूचिका । स्त्री० प्रवाहिकायाम् ॥

विषूचीन । त्रि० सर्वतः प्रसृते ॥

विषौषधी । स्त्री० नागदन्त्याम् ॥

विष्क । पुं० विंशतिवर्षीयगजे ॥

विष्कम्भः । पुं० योगविशेषे ॥ तत्रोत्पन्नस्य फलं यथा । विष्कम्भयोगीयदिजन्मकालेकार्येस्वतन्त्रोमनुजस्तदानीम् । सुहृत्कलत्रात्मजसौख्ययुक्तः रूपस्वनिर्माणविधौसमर्थः ॥ विस्तारे ॥ प्रतिबन्धे । अर्गलायाम् । आगल० इतिभाषा ॥ योगिनांबन्धभेदे ॥ विष्कभ्नाति । स्कम्भुः सौत्रोरोधनार्थः । कर्मण्यण् । वेः स्कभ्नातेरितिषत्वम् ॥ वृक्षे ॥

विष्कम्भक । पुं० पूर्वनटसङ्क्षेपपूर्वकतत्प्रतिपत्त्योक्तृनटप्रवेशे ॥ यथा । वृत्तवर्तिष्यमाणानांकथांशानान्तुसूचकः । विष्कम्भकइतिख्यातोहीनपात्रप्रयोजकइति ॥

विष्कम्भशैल । पुं० मेरोर्दाढ्यार्थंस्थि तेषुचतुर्षुपर्वतविशेषेषु ॥ यथा । विष्कम्भशैलाश्चत्वारोमेरोः स्थैर्या यवेधसा । कृताःदिक्षुतथ । कर्म्मा स्तेषांपूर्व्वेणमन्दरः ॥ दक्षिणेहरिद्रा चूर्णाभोयाम्यतोगन्धमादनः । प्रती च्याविपुलोनीलः सुपार्श्वः । सौम्य तोऽरुणः ॥ सहस्रयोजनोच्छ्राया स्तेषुकल्पद्रुमाः स्थिताः । कदम्बज म्बूअश्वत्थन्यग्रोधौयोत्तरान्तिका ॥

विष्कम्भि । न० अर्गलायाम् ॥ वि ष्कम्भातिः कृणाति । स्कम्भु । चा बध्नातीतिनिः ॥

विष्कल । पुं० ग्राम्यशूकरे ॥ क्रू० रा० जि० ॥

विष्किर । पुं० खगे । पक्षिणि ॥ पक्षिविशेषाणाङ्गणे ॥ यथा । वर्त काखावविष्किरकपिञ्जलकतित्तिराः । कुलिङ्गकुक्कुटाद्याश्चविष्किराः स मुदाहृताः ॥ विकीर्य्यभक्षयन्त्येते यस्मात्तस्माद्धिविष्किराः ॥ विष्कि रामधुराः शीताः कषायाः कटु पाकिनः । बल्याबृष्यास्त्रिदोषघ्नाः पथ्यास्तेलघवः स्मृताः ॥ विकि रति । कृ० । कृगुपधेतिकः । वि ष्किरः । शकुनिर्विष्किरोवेतिपक्षेसु ट् । परिनिविभ्यइतिषत्वम् ॥

विष्टः । त्रि० प्रविष्टे ॥ सवधे ॥ विश ति । विश० । क्तः ॥

विष्टपम् । न० पुं० विष्टपे । भुवने ॥ विशन्त्यस्मिन्सुकृतिनः । विश्प्रवे शने । विटपविष्टपविशिपोलपा इतिविशेरौणादिकः कपन्प्रत्ययः । प्रत्ययस्यतुट् । ब्रश्चेतिषत्वम् । सूत्रेविष्टपस्थानेपिष्टपइतिपकारादि पाठस्तूज्ज्वलदत्तरीत्योक्तइतिबोध्य म् । नाययुक्तः यत्तन्नधूश्चविष्टपमि त्यादौ दन्त्योष्ठ्यादिपाठस्यदर्शनात्

विष्टब्धः । त्रि० विधृते ॥

विष्टम्भः । पुं० प्रतिबन्धे ॥ आमयस्य प्रभेदे । आनाहरोगे ॥ तल्लक्षणन्तु । आमशकृद्वानिचितक्रमेणभूयोविब द्धंविगुणानिलेन । प्रवर्त्तमाननयथा स्वमेनंविकारमानाहमुदाहरन्ति ॥ आममपक्वमाहाररसम् । शकृत्पु रीषवाक्रमेणनिचितसञ्चितम् । भू योविगुणानिलेनदुष्टवायुनाविवद्धं व्याप्तमबोधितम्वायथास्वपूर्ववत्अप्र वर्त्तमानम् । एनंविकारमानाहमा- हुः ॥ उत्तरदेशगतिप्रतिबन्धे ॥ आक्रमे ॥

विष्टम्भी । त्रि० विष्टम्भरोगजनके ॥ विष्टम्भरोगवति ॥

विष्टर । पुं० विटपिनि । महीरुहे ॥ दर्भमुष्टौ ॥ पीठाद्यासने ॥ आदि नाकुशासनादियह । ॥ समध्ययन्थि दर्भासने ॥ विष्टरलक्षणम् यथा । विष्टरस्तु । सार्द्धहितयवामावर्त्तवलि

तादेवीमुखायावसख्यातदर्भाः । तथाचगृह्यसङ्ग्रहे । उर्द्धकेशोभवेद्ब्रह्मालम्बकेशस्तुविष्टरः । दक्षिणावर्तकोब्रह्मावामावर्तस्तुविष्टरः ॥ इति ॥ दर्भसङ्ख्यानविहिताविष्टरास्तरणेष्वपीतिज्ञ ॥ विस्तीर्यते । स्तृञ्आच्छादने । वृक्षासनयोर्विष्टरइतिसाधु । विपूर्वात्स्तृञ् इत्यस्मात्० ऋदोरप्० इत्यपि० षत्व निपातनादित्यर्थं ॥

विष्टरश्रवा' । पु० विष्णौ ॥ विष्टरेवृक्षेश्रूयते । श्रसुन् । वृक्षसाध्यत्वोभिमतः० अश्वत्थ. सर्ववृक्षाणामित्युक्ते. ॥ विष्टरोदर्भमुष्टिरिवश्रवसीकर्णावस्येतिवा ॥

विष्टरा । स्त्री० गुडासिन्याम् ॥

विष्टकृष्ा । स्त्री० स्वर्णकेतक्याम ॥

विष्टिः । स्त्री० वेतनविनाबलात्कारी कृतकर्मणि । आज्ञाम् । वेठी० वेठ्० वेगारी० इतिभाषा ॥ इष्टात्प्रभृतिकल्पे शोविष्टिराजूयकी र्त्यते ॥ वेतने ॥ कर्मणि ॥ प्रेषणे ॥ करणान्तरे । भद्रायाम् ॥ अस्याउत्पत्तिमाह । भद्रापुरासुरगणैश्चविजयोहम्बवामीवदनामरासुरे । लाङ्गूलिनीसप्तभुजा त्रिपदतीवराटकाकृत्यवर्णीविक्ष्मना ॥ कामीदासभीतवदनमुखवक्त्राः । मनोनिवेक्षः० कुत्सितीचेविवेष

अ' कुत्सितकांस्य'तद्वत्स्वनः अस्योयस्याः ॥ जाविप्रविष्टाकुणपांशुकाम्बराऽमरद्विषामग्रजकाननेलदा । परेतगाधूमनिभावलोहतोवाम्बवसाभूदतिदीर्घविग्रहा ॥ आलिसमूहे । अग्रजकानने० पितृवने । परेतगा० शववाहना ॥ तस्मात्तदाचानमिरेऽमरारयः कलिन्दकोसोदरधामपश्यतिम् । अवापसाकार्पदकापदिनोवज्रायुधानन्दवतोमकद्वया ॥ चानमिरे० जग्मु. । वज्रायुधा० अग्निश्खा । आनन्दवत ० परमसुखयुक्तस्य ॥ विवेवमेवाऽग्निशिखाग्रतालुका० फलनसाश्रितवराऽमिमङ्गलम् । नरेरतः स्वात्महितोपलब्धिभिस्तदाश्रितस्वाश्रितकर्मसिद्धिजम् श्रितवरा० शाद्रोशात्कृतः प्राप्तवरोयया । अग्निशिखाग्रतालुका० वह्निज्वालावद्रक्ततालुकायस्याः । स्वाश्रितकर्मसिद्धिजम्० स्वयाविष्ट्याश्रितविहितकर्मतस्यसिद्धिस्तस्माजातम्० भद्रायाकृतकार्यनिष्पत्तिजातम् । तदाश्रितम्० विष्टिवेलाप्राप्तम्० मङ्गलसुवाहादिकमविधेयम् । स्वात्महितोपलब्धिभिः० स्वात्मनेनिजजीवाय० हिता० हितकारिणो० उपलब्धिर्बुद्धिः प्राप्तिर्ज्ञानंवायेषांते ः ॥

विष्टियोग्यकालमाह । शुक्लेऽष्टमी
पौर्णमास्यो : पूर्वार्द्धे विष्टिसम्भव:
। एकादशीचतुर्थ्योश्च परार्द्धे विष्टिरी
रिता ॥ दशम्याश्च तृतीयाया प
रार्द्धे कृष्णपक्षके । चतुर्दश्याश्च सप्त
म्या : पूर्वार्द्धे विष्टिरेव हि ॥ वि
ष्टिस्तु सर्पाकृतिरेव । आननेऽपसृद
शा : स्मृतं च स्थाने चतुर्द्दश । म
ध्ये चाष्टौ विजानीयाद्विष्टिपुच्छे च य
स्मृता : ॥ फलन्तु । आनने हि
नाश : स्यादृच्च स्थाने महद्भयम् ।
मध्ये च मध्यम विद्याद्विष्टिपुच्छे ध्रुवं
जय : ॥ प्रकारान्तरस्यापि । मुखे
पञ्च गलेत्वेकावक्षस्येकादशस्मृता
। नाभौ चतस्र षट् कट्यां तिस्र
पुच्छे तु नाडिका ॥ फलन्तु । मु
खेकार्य्यं ध्वस्तिर्भवति• मरणञ्चा
थ गलके• धनत्वानिर्वक्षस्यथ कटित
टे बुद्धिविलय । कलिर्नाभौदेशे
विजयमथ पुच्छे च जगदु : शरीरभ
द्राया पृथगिति फलपूर्वं मुनय: ॥
मनुवसुमुनितिथियुगदशशिवगुण-
सङ्ख्यासु तिथिषु पूर्वाऽन्यो : १४
। ८ । ७ । १५ । ४ । १० । ११ ।
• ३ । यायाति विष्टिरेषा पृष्ठे शुभ
दा पुरस्त्वशुभदा ॥ पूर्वान्यो • पू
र्वाऽन्यादिदिङ्मुखी भवतीत्यर्थ: ॥
दिवार्थविपरीदायाविष्टि सर्व्व वर्-
ज्जयेत् । विष्टिपुच्छं चिदण्डेऽपि
शिविकार्थे शुभावहम् ॥ वि • कर्मकरे ॥
विशति क्लेशम् । विश • क्तिच ॥ यद्वा
। विष्णाति । विषविप्रयोगे । क्तिच्
॥ यद्वा । विष्यते कर्म्मणि । क्तिन् ॥

विष्टुति । स्त्री• सामगानां स्तुतिप्र
कारविशेषे ॥ तस्या विष्टुतेरुद्गती
ति नाम । एवं परिवर्त्तिनी कुलायि
नीति द्वे विष्टुती ॥

विष्ठा । स्त्री• उच्चारे । शमले गूथे । विषि
पुरीषे ॥ विविधप्रकारेण तिष्ठति उद
रे • चनयावा • पुरुष । ष्ठा • । आ
तश्चेति क । उपसर्गादिति ष ॥

विष्ठारुहा । स्त्री• स्वर्णकेतक्याम् ॥

विष्णु । पु • नारायणे । देशकालव
स्तुपरिच्छेदशून्ये व्यापनशीले परमा
त्मनि वासुदेवे ॥ यथा विष्णुपुराणे
। ज्योतींषि विष्णुर्भुवनानि विष्णुर्व
नानि विष्णुर्गिरयो दिशश्च नद्य: स
मुद्राश्च स एव सर्व्वं यदस्ति यन्नास्ति च वि
प्रवर्य्येति ॥ यथावा तत्त्वादिनीचे
सुकृतान सत्त्वान्पापात्मनहारूमया
दिदेवान् । भजन्ति ये माधवमिन्दका
स्ते पूर्णं . सदानन्दमयोऽस्ति विष्णु
रिति ॥ अपिच । वेदे रामायणे चैव
पुराणे भारते तथा । आदावन्ते च म
ध्ये च विष्णु . सर्व्वत्र गीयते इति । अ
जातावेकवचनं बोध्यम् ॥ द्वादशा
दित्यानां मध्ये भगवतो वासुदेवस्य वि
भूतौ । आदित्यानामहं विष्णुरित्यु

ते ॥ वेवेष्टिव्याप्नोतिविश्वम् । विष्लृव्याप्तौ । विषि किच्चेति॰नुः । रषाभ्यामितिणत्वम् ॥ वेषति॰ सिञ्चति॰आप्याययतीविश्वम्॰इति वा । विष्णाति॰वियुङ्क्तेभक्तान्॰ मायापसारणेनसंसारादितिवा । पूर्ववत्नुः ॥ विशति॰भूतेन्द्रियम नोजीवभावेनसर्वप्राणिन ॰विश न्तिसर्वभूतान्यत्रेतिवा । यस्माद्वि ष्टमिदंसर्वंतस्यशक्त्यामहात्मनः । तस्मादेवोच्यतेविष्णुर्विशधातोः प्र वेशनात् ॥ यद्वा । रोदसीव्याप्यका न्तिरभ्यधिकास्थितास्येतितथा । व्या प्य मेरोदसीपार्थकान्तिरभ्यधिकास्थि ता । विशेर्विपाक्रामति । क्रमु॰वि पूर्वं । अस्मात्णुप्रत्ययोधातुलो पश्चपृषोदरादित्वात क्रमणाद्वाप्यह पार्थविष्णुरित्यभिधीयते । यस्क वामने ॥ वेवेष्टिविभिर्विक्रमैरेवलो कत्रयमितितथा ॥ शुक्ले ॥ वसुदेव तायाम् ॥ वह्नौ ॥ धर्मशास्त्रकर्तृमु निविशेषे ॥

विष्णुवटकम् । न॰ असपर्णे ॥

विष्णुकन्द । पु॰ मूलविशेषे ॥ वि ष्णुगुप्ते । जलवासे । वृहत्कन्दे । दीर्घपत्रे ॥

विष्णुक्रान्ता । स्त्री॰ अपराजितायाम् ॥ अपराजितायामन्यापुष्पजा तिरपिविष्णुक्रान्ता । तत्पर्याया । हरिक्रान्ता॰नीलपुष्पा॰अपराजि ता॰नीलक्रान्ता॰सुनीला॰विक्रान्ता ॰इतिवैतिराजनिर्घण्टः ॥

विष्णुगुप्त । पुं॰ कौण्डिन्यमुनौ ॥

विष्णुगुप्तकम् । न॰ चाणक्यमूलके ॥

विष्णुगृहम् । न॰ विष्णुमन्दिरे । स्व स्वपुरे ॥

विष्णुचक्रम् । न॰ सुदर्शनचक्रे ॥ क रस्थरेखामयचक्रे ॥ विष्णुचक्राकारे चिह्ने सर्वेषाञ्चक्रवर्त्तिनाम् । भव त्यव्याहतीयस्यप्रभावस्त्रिदशैरपि ॥

विष्णुतैलम् । न॰ भैषज्यरत्नावल्या द्युक्तलघुवृहद्भिन्नैतैलविशेषे ॥

विष्णुदत्त । पुं॰ परिक्षिन्नृपतौ ॥

विष्णुदैवतम् । )
विष्णुदैवत्यम् । ) त्रि॰ विष्णुधिष्ठातृ देवताके ॥ श्रवणे ॥

विष्णुदैवत्या । स्त्री॰ एकादश्याम् ॥ द्वादश्याम् ॥ एकादशीद्वादशीचप्रो क्ताश्रीचक्रपाणिनः ॥

विष्णुधर्म्मः । पु॰ श्राद्धविशेषे ॥ वि द्याविशेषे ॥

विष्णुधर्मोत्तरम् । न॰ संहिताविशे षे ॥ तत्रप्रश्नवक्ताजनमेजयसुतः ॰वक्तारः शौनकादयः ॥

विष्णुपञ्जरम् । न॰ विष्णुकवचविशे षे ॥

विष्णुपदम् । न॰ वियति । आकाशे ॥ विष्णोः पदम्॰आस्यदत्तकपवा ॥

यज्ञे । विष्णोः स्थाने ॥ यथा । अपुण्यपुण्योपरमेयौषामशेषार्तिहि तव : । यच्च गत्वा न शोचन्ति तद्विष्णोः परमंपदम् ॥ पुं० चौरादे ॥

विष्णुपदी । स्त्री० गङ्गायाम ॥ विष्णुपदस्थानंयस्याः सा । गौरादित्वान्ङीष ॥ द्वारिकायाम् ॥ रवे : सङ्क्रान्तिविशेषे । वृषालिघटसिंहेषु विष्णुपदयकसङ्क्रमे ॥

विष्णुपुरम् । न० वैकुण्ठे ॥ विष्णोः पू : । ऋक्पूरित्यप्रत्ययः ॥

विष्णुभक्त : । त्रि० वैष्णवे । विष्णुभक्तिविशिष्टे ॥ तल्लक्षण यथा । मत्कर्मकृन्मत्परमोमद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेतिपाण्डव ॥ नचलतिनिजवर्णधर्मतोय सममतिरात्मसुहृद्विपक्षपक्षे नहरतिनचहन्तिकिञ्चिदुच्चैसितमनसतमवेहिविष्णुभक्तम् ॥ विमलमतिरमत्सर प्रशान्त शुचिचरितोऽखिलसत्त्वमित्रभूतः । प्रियहितवचनोस्तमानमायोवसतिसदाहृदितस्यवासुदेव ॥ सकलमिदमहञ्चवासुदेव परमपुमान्परमेश्वर : सएक : । इतिमतिरचलाभवत्यनन्तेहृदयगतेव्रजतान्विहायदूरात् ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् । अपगतमदमानमत्सराणांव्रजभटदूरतरेण

मानवानामिति ॥

विष्णुभक्ति : । स्त्री० भगवत्सेवायाम् ॥

विष्णुमाया । स्त्री० दुर्गायाम् ॥ चिच्छक्ती । अव्यक्तं व्यक्तरूपेणरज सत्त्वतमोगुणै : । विभज्ययार्थं कुरुते विष्णुमायेतिसोच्यते ॥ विष्णुरेव माया । एकैवशक्ति परमेश्वरस्य भिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु । कोपेषुकाली समरेषुदुर्गा ॥ इत्यनेनविष्णुकालिकयोरेकमूर्तित्वप्रतिपादनात् ॥

विष्णुयशा । पुं० ब्रह्मयशः पुत्रे । कल्किपितरि ।

विष्णुरथ : । पुं० नागान्तके । गरुडे ॥ विष्णोरथइव । यद्वा । रथ : पौरुषदेहयोरितित्रिकाण्डशेष : । विष्णोरथ पौरुषदेहोवा ॥ विष्णो स्यन्दने ॥

विष्णुरात : । पुं० अभिमन्युसुते । परीक्षिन्नृपतौ ॥ विष्णुनारात : ॥

विष्णुलिङ्गी । स्त्री० वर्तिकापक्षिणि ॥

विष्णुवल्लभा । स्त्री० तुलस्याम् ॥ लक्ष्म्याम् ॥ अग्निशिखायाम् ॥

विष्णुवाहनम् । न० अरुणावरजे । गरुडे ॥ विष्णोर्वाहनम् ॥ गरुड : शाल्मल्यरुणावरजोविष्णुवाहन इतिहेमचन्द्र : ॥

विष्णुवाह्य : । पुं० गरुडे

विष्णुस्नानम् । न॰ तीर्थविशेषे ॥

विष्यन्दन । पुं॰ रोचकरस्तस्मरे । विष्यदे ॥ यथोक्त सूदशास्त्रे । दधि चीरेसमेकत्वात्त्वर्द्धभागावशेषिते । अष्टमांशक्षिपेत्तत्तण्डुलान्निस्त्वच खिलान् ॥ प्रियालपनसाम्राणाम च्छामाच समक्षिपेत् । चीरार्द्धं च तस्त्वेवशर्करास्तुतथान्यसेत् ॥ सिद्ध क्षिकट्वेपित कर्पूरेणाधिवासि त । एष विष्यन्दनोनामदेवलोके पिदुर्लभ ॥ यस्मिन्पक्वे हिल्लतख न्दतेसर्वतोमुखम् । तस्मात सूपवि धानज्ञै विष्यन्दनइतिस्मृत ॥ वि ष्यन्दोवृंहणोहृद्य पित्तानिलहरो गुरु । कफ्फोबहुतरंसाद्दुर्बलशुक्र कारोहिस : ॥ इति ॥

विष्य । त्रि॰ विषवधेऽर्हे ॥ विषेण वध्य : । नौवयोधर्मविषेत्यादिना यत ॥ विषायहितोवा । उगवा दिभ्योयत् ॥

विष्व । त्रि॰ हिंस्रे ॥

विष्वक्पर्णी । स्त्री॰ भूम्यामलक्याम् ॥ विष्वक्षिपर्णान्यस्य ॥

विष्वक्सेन । पुं॰ जनार्दने । वि ष्णौ ॥ विषुनानाञ्चतिगच्छतीति । ऋत्विगादिनाक्विन् । उगितश्चेति ङीप् । विष्वचीसेनायस्य । गकार परत्वादितिस ञ्चायामगादितिषत्वम् ॥ विष्वगञ्चतिपलायन्ते दैत्य सेनायद्रणोद्योगमात्रेणेतिवा ॥ वि ष्णोर्निर्माल्यधारिणि ॥ चयोदृशेम नौ ॥

विष्वक्सेनप्रिया । स्त्री॰ वाराह्यामोष धौ । वामारवालु॰इ॰गौ॰दे॰भा॰ । लक्ष्म्याम् ॥ विष्वक्सेनस्यप्रिया ॥

विष्वक्सेना । स्त्री॰ प्रियङ्गौ । फलि न्याम् ॥ विष्वक्सेनेति । विश्व वञ्चने । ञ्चनकीत्यादिनाम : ॥

विष्वक् । अ॰ परित : । समन्तादर्थे ॥ नानाविधगतौ ॥ तुल्याशेराच काले ॥ विषुञ्चति । अञ्चु॰ । क्विन् ॥

विष्वञ्च् । पुं॰ पुरुषे । आत्मनि । सर्वत्रे ॥ विविधंसृष्टञ्चति । अञ्चु॰ । क्विन् ॥

विष्वाणम् । न॰ भोजने ॥ शब्दकर णे ॥

विष्वद्र्यञ्च् । त्रि॰ सर्वतोगच्छति । वि ष्वग्गतिके ॥ विष्वगञ्चति । ऋत्वि गादिनाश्च क्विन् । विष्वग्देवयो रित्यद्र्यादेश । स्त्रियांविष्वद्रीची ॥

विष्वाण । पुं॰ भक्षणे ॥

विसंवाद : । पुं॰ विप्रलम्भे । अङ्गीकृ तासम्पादने ॥ विरुद्ध सम्यग्वदन म् । वदेर्भावेघञ् ॥

विसंवादि । त्रि॰ विलक्षणे ॥

विसम् । न॰ मृणाले । पद्मादीनाम् ले ॥ विसति । विसप्रेरणे । इगु

पधेतिक : ॥
विसकण्ठिका । स्त्री॰ बलाकायाम् ॥
विसकुसुमम् । न॰ कमले ॥
विसकण्टः । पु॰ सिंहे । मृगेन्द्रे ॥ वृहदीवर्चे ॥
विसतन्तु । पु॰ मृणालसूत्रे
विसनाभि । पुं॰ पद्मिन्याम् ॥
विसपुष्पम् । न॰ नलिने ॥ विसस्त्र पुष्पम ॥
विसप्रसूनम । न॰ अम्भोरुहे । नलिने । पद्मे ॥ विसस्त्र प्रसूनम् ॥
विसम्बाद । पुं॰ विप्रलम्भे । मिथ्याख्यानेनवञ्चने । अङ्गीकृतासम्प दने ॥
विसर । पुं॰ सन्दोहे । व्रजे । समूहे । विसरति । सगतौ । पचाद्यच् । प्रसरे ॥
विसर्गः । पु॰ दाने ॥ त्यागे ॥ मलनिर्गमे । पायूपस्थयोर्व्यापारे ॥ विभासैारयनभेदे ॥ विसर्ज्जनीये ॥ यथा । शृङ्गवद्वालवत्सस्यबालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्प्पस्यविसर्गोयमितिस्मृत : ॥ विशेष सृष्टौ ॥ यथा । पुरुषानुगृहीतानामेतेषांवासनामय : । विसर्गोयस माहारोवीजाद्दीजचराचरम् ॥ विसर्ज्जनम् । सृज॰ । घञ् ॥ विविधसृज्यतेक्षिप्यतेवा॰ घञ् ।
विसर्ज्जनम् । न॰ दाने ॥ परित्यागे ॥ सम्प्रेषणे ॥ सृजीविंपूर्बाङ्गावेल्युट ॥
विसर्ज्जनीय : । पुं॰ विसर्गे । द्विविन्दुके ॥
विसर्प्प । पुं॰ रोगविशेषे । सचिवामये ॥ अशविप्रकृष्टनिदानैस ङ्ख्यानिरुक्तिप्ताह । लवणाम्लकटुष्णादिसेवनाद्दोषकोपत : । विसर्पं सप्तधाक्षेय सर्वत परिसर्पणात् ॥ आदिशब्दाज्जरकोक्तद्दरितशाकशिण्डाकीप्रभृतीनाग्रहणम् ॥ सप्तधात्वविवृणोति । पृथक्त्रयस्त्रिभिश्चैको विसर्पाद्दन्दुजास्त्रय । वातिक पैत्तिकश्चैवकफज सान्निपातिक । चत्वारएतेत्रीसर्पावक्ष्यन्ते द्वन्द्वजास्त्रय ॥ आग्नेयोवातपित्ताभ्याग्रन्याख्य कफवातज । यस्तुकर्दमकोघोर: सपित्तकफसम्भव ॥ एषालक्षणादिकग्रन्थान्तराद्‌वधेयम् ॥
विसर्प्पणम् । न॰ प्रसरे । तन्तुप्रवादिर्विसर्प्पणं ॥ सृप्लृगतौ । ल्युट् ॥
विसर्प्पि । पु॰ विसर्पे ॥
विसलम् । न॰ किसलये । पल्लवे ॥
विसार । पुं॰ मत्स्ये ॥ विशेषेणसरति । सगतौ । व्याधिमत्स्यबलेषुचेतिवाच्यमितिघञ् ॥

विसारिणी । स्त्री॰ माषपर्ण्याम् ॥

विसारित । त्रि॰ प्रसारिते ॥ विपू र्वात्सर्त्तेः क्त ॥

विसारी । त्रि॰ प्रसरणशीले । प्रसारिणि ॥ विसरणम् । सृ॰ । घञ् विसारोऽस्यास्ति । अतइनिः ॥ अ भीक्ष्ण्यं विसरतिवा । बहुलमाभी क्ष्ण्ये॰ इतिणिनिः ॥

विसिनी । स्त्री॰ पद्मिन्याम् ॥ मृ णाले ॥ विसमस्त्यस्याः । पुष्करा दिभ्यइतिइनि ॥

विसूचिका । स्त्री॰ अजीर्णहेतुकेरो गविशेषे । विसूच्याम् ॥

विसूची । स्त्री॰ विसूचिकायाम् ॥ अस्यालक्षणन्तु । मूर्च्छातिसारौवम थुः पिपासाशूलभ्रमोद्वेष्टनजृम्भदा हाः वैवर्ण्यकम्पौहृदयेरुजश्चभव न्तितस्यांशिरसश्चभेदः ॥ अस्याउ पद्रवायथा । निद्रानाशोऽरति कम्पोमूत्राघातोविसञ्ज्ञता । अमी उपद्रवाघोरा विसूच्याः पञ्चदा रुणाइति ॥ निरुक्तिर्यथाह । सू चीभिरिवगात्राणितुदन्सन्तिष्ठतेऽ निलः । यत्राजीर्णेनसावैद्यैर्विसू चीतिनिगद्यते ॥ नतांपरिमिता हारालभन्तेविदितागमाः । मू ढास्तामजितात्मानोलभन्तेऽशन लोलुपाः ॥ अस्याश्चिकित्सायथा । लशुनजीरकसैन्धवगन्धकत्रिकटुरा मठचूर्णमिदंसमम् । सपदिनिम्बु रसेनविसूचिकाहरतिभोरतिभोग विचक्षणइतिलोलिम्बराजः ॥

विसूरितम् । न॰ अनुतापे ॥ क्त॰ ज॰ ध॰ ॥

विसृत । त्रि॰ विस्तृते ॥ विसर तिस्म । सृ॰ । गत्यर्थेतिक्त ॥

विसृत्वरः । त्रि॰ विसृते ॥

विसृत्वर । त्रि॰ प्रसारिणि प्रसरण शीले ॥ विसरतितच्छील । सृ॰ । इण्नशजीतिक्वरप् । ह्रस्वस्येति तुक् ॥

विसृमत्वम् । न॰ विसृते ॥

विसृमर । त्रि॰ विसृत्वरे ॥ वि सरतितच्छील । सृ॰ । घसृदः क्मरच् ॥

विसृष्ट । त्रि॰ निक्षिप्ते । उत्पादिते ॥ विपूर्वात्सृजेः क्त ॥ मुक्ते ॥ दत्ते ॥ विशेषेणसृष्ट ॥

विस । पुं॰ हेम्नोर्थे । सुवर्णे । हेम्न षोडशसुमासेषु । अशीतिर क्तिकापरिमिते । स्वर्णे ॥ बिसति । विसउत्सर्गे । क्तः । आगमशास्त्र स्यानित्यत्वान्नेट् ॥

विस्तर । पुं॰ शब्दस्यविस्तारे । वा क्प्रपञ्चे ॥ विस्तारे ॥ प्रणये ॥ विस्तरणम् । स्तृञ्आच्छादने । ऋदोरप् ॥ पीठे ॥ समूहे ॥

विस्तारः । पुं॰ तिर्यगायती ।

विस्तृतौ । प्रसृतावयवेसमूहे ॥ विटपे ॥ शाखापल्लवादिसमुच्चये ॥ स्तम्बे ॥ विस्तीर्णतायाम् । विग्रहे । व्याप्तौ ॥ विस्तरणम् । स्तृञ् । प्रथमेवावशब्देऽइतिघञ् ॥ विभूतौ ॥ यथा । विस्तार : सर्वभूतस्य विष्णो : सर्वमिदं जगत् । द्रष्टव्यमात्मवत् तस्मादभेदेनविचक्षणैरिति । सर्वभूतस्य सर्वात्मकस्य ॥

विस्तारित . । त्रि॰ विस्तृते ॥ प्राप्तविस्तारे ॥

विस्तीर्ण : । त्रि॰ विपुले । विशाले ॥ विस्तीर्यतेस्म । स्तृञ् । क्त : । रदाभ्यामितिन : ॥

विस्तीर्णपर्ण : । पुं॰ न॰मानकद्रुमे । महापर्णे ॥

विस्तृत । त्रि॰ विस्तते । तते । विस्तारिते । लब्धविस्तारे ॥ विस्तर्यतेस्म । स्तृञ् । गत्यर्थेतिक्त ॥

विस्तृति : । स्त्री॰ विस्तारे । विस्तरणम् । क्तिन् ॥

विस्पष्ट . । त्रि॰ सुव्यक्ते । सुस्पष्टे ॥ न॰प्रकटोदिते । प्रकटोक्ते ॥

विस्फार . । पुं॰ धनुष : स्वाने । योधानाधनुर्गुणशब्दे । विस्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञीत्यात्त्वम् ॥ स्फारस्फुरणेवा ॥

विस्फारित : । त्रि॰ निर्घोषिते ॥ विघर्षिते ॥ प्रकाशिते ॥ विपूर्वात् व्यन्तस्फुरते : क्त : ॥

विस्फुरणम् । न॰ सर्वतप्रसरणे ॥

विस्फुरित : । त्रि॰ स्फूर्तिविशिष्टे ॥

विस्फुलिङ्ग : । पुं॰ विषप्रभेदे ॥ अग्निकणे ॥

विस्फूर्ज्जथु : । पुं॰ उद्रेके ॥ द्वितीयुच् ॥

विस्फूर्ज्जित . । त्रि॰ सङ्क्षुभिते ॥

विस्फोट . । पुं॰ विरुद्धस्फोटके । पिटके । पिटकायाम् । पिडिया॰फोड़ा॰इ॰भा॰ ॥ विस्फोटति । स्फुटिर्विशरणे । पच् ॥ करणेघञ् वा ॥

विस्फोटक . । पुं॰ व्रणविशेषे । विस्फोटे ॥ विस्फोटति । स्फुटिर॰ ण्वुल् ॥

विस्मय : । पुं॰ अद्भुते । आश्चर्ये । अलौकिकचमत्कारविशेषे ॥ यथा । विविधेषुपदार्थेषुलोकसीमातिवर्त्तिषु । विस्फारश्चेतसीयस्तुसविस्मय उदाहृत ॥ गर्वे । दर्पे ॥ विस्मयनम् । ष्मिङ्ईषद्धसने । एरच् ॥ सन्देहे ॥

विस्मयान्वित । त्रि॰ विलक्षे ॥ विस्मयेनआश्चर्येणान्वित : ॥

विस्मयाविष्ट । त्रि॰ अद्भुतदर्शनजन्याश्चर्येणव्याप्ते ॥ विस्मयेनआश्चर्यं बुद्ध्याआविष्टोव्याप्त ॥

विस्मरणम् । न० विस्मृतौ ॥ स्मृआध्याने । ल्युट् ॥
विस्मापन . पुं० कुहके । इन्द्रजाले ॥ गन्धर्व्वनगरे ॥ स्मरे । कामदेवे ॥
विस्मित । त्रि० विस्मयमाश्चर्य्यङ्गते । विस्मयान्विते ॥ ष्मिङ् । क्त विस्म ॥
विस्मृत । त्रि० अप्सगते । स्मरणाविषये ॥ विस्मर्य्यतेस्म । स्मृ० । क्तः ॥
विस्मृति । स्त्री० विस्मरणे ॥ विस्मरणम् । स्मृ० । क्तिन् ॥
विस्मेर । त्रि० विस्मयशीले ॥ विस्मयतेतच्छील: । नमिकम्पीत्यादिना र ॥
विस्रम् । न० आमगन्धिनि ॥
विस्रसनम् । न० अवस्रसने । अध: पतने ॥
विस्रसमान: । त्रि० ध्वसमाने ॥
विस्रगन्ध । पुं० हरिताले ॥ त्रि० दुर्गन्धिनि ॥ विस्रगन्धोस्य ॥
विस्रगन्धा । स्त्री० हबुषायाम् ॥
विस्रगन्धि: । पुं० हरिताले ॥
विस्रब्ध: । त्रि० अनुद्धटे ॥ गाढे ॥ विश्वस्ते ॥
विस्रम्भ: । पुं० केलिकलहे ॥ विश्वासे ॥ प्रणये ॥ प्रणय: परिचय: शृङ्गारप्रार्थनावेत्यमरमाला । क्रीडापारतन्त्र्यमितिकश्चित् ॥ वधे ॥ परिवधे ॥ विप्रलम्भे ॥ विस्रम्भणम् । विस्रम्भ्यतेऽनेनवा । स्रम्भु विश्वासे । घञ् ॥
विस्रम्भित: । त्रि० विश्वासप्राप्ते ॥
विस्रम्भी । त्रि० प्रणयिनि ॥ विश्वासिनि ॥ अस्त्यर्थे इनि ॥
विस्रसा । स्त्री० जरायाम् । विस्रस्यतेऽनया । स्रंसुअध: पतने । भिदाद्यङ् ॥
विस्रस्त । त्रि० विच्युते ॥
विस्रा । स्त्री० हबुषायाम् ॥
विहग । त्रि० पक्षिणि ॥ आशुगेबाणे ॥ पुं० ॥ विहायसा० विहायसिवा गच्छति । गम्लृ० । अन्यत्रापिदृश्यतइतिड । डे च विहायसोविहादेशश्च: ॥
विहङ्ग । त्रि० पक्षिणि ॥ आशुगे । बाणे ॥ पुं० चन्द्रे ॥ सूर्य्ये ॥ मेघे ॥ विहायसा० विहायसिवागच्छति । विहायसोविहश्चगमे . सुपीतिखच् । खच्चडिद्वा ॥
विहङ्गम: । पुं० विहङ्गे । खगे ॥ विहायसागच्छति । गम्लृ० । विहायसोविहश्च० गमे सुपीतिखच् ॥
विहङ्गमा । स्त्री० भारयष्ट्याम् ॥
विहङ्गराज . । पुं० गरुडे ॥ विहङ्गानांराजा । टच् ॥
विहङ्गिका । स्त्री० भारयष्ट्याम् । बहँगी० इ० भा० ॥ विहङ्गप्रतिकृति:

। द्रुवेप्रतिक्रतावितिकन् ॥ विहा यसागच्छतिवा । गमस्ये तिखच् । विहायसोविहच । स्वयवाडिहाच्य । यावादिस्वात् कन् । टाप् ॥

विहत । त्रि० विनष्टे । विशेषेणाहत ॥

विहननम् । न० विघ्ने ॥ हिंसायाम् ॥ तूलपिञ्जले । तूलधनुषि ॥

विहर : । पुं० वियोगे ॥

विहरणम् । न० विहारे ॥ विपूर्वाहृ ञो ल्युट् ॥

विहरन् । त्रि० क्रीडति ॥

विहर्तुम् । अ० क्रीडितुमित्यर्थे ॥

विहसितम् । न० महत्त्वाल्पत्वहीने० मध्यहास्ये ॥ यथाहु : । आकुञ्चित कपोलाच्च सस्वन निस्वनतथा । प्र स्तावोत्थसानुरागमाहुर्विहसितंबु धा : ॥ हसित्वसने । भावेक्त : ॥

विहस्त : । त्रि० पण्डिते ॥ विह्वले । व्याकुले ॥ करशून्ये ॥ विगतोवि चित्रोवाहस्तोऽस्य ॥

विहा । अ० स्वर्गे ॥ विशेषेणजहाति । ओहाक्त्यागे । विषाविहेत्याप्रत्य य ॥ न्यायेनोपार्जितस्यधनादे : सत्पात्रे विनियोगे ॥

विहापितम् । न० दाने ॥ विहापन म् । ओहाक० । व्यन्तात्क्त : ॥

विहाया : । पुं० खगे । शकुने ॥ पुं० न० गगने । आकाशे ॥ विशेषेणहा ययति० गमयति० विमानादीन् । हयगतौ । व्यन्तादसुन् ॥ विजहा तिभुववा । ओहाक० । अविहाधा अभ्यञ्छन्दसीत्यसुन् । णिदित्यस्या नुवर्त्तेर्युक् । क्वचिच्छान्दसाअपि भाषायाप्रयुज्यन्ते तेनलोकेपि ॥

विहायसम् । न० व्योम्नि ॥

विहायसा । अ० नभसि ॥

विहार : । पु० क्रीडार्थं पद्भ्यांसञ्चरणे । परिक्रमे । भ्रमणे ॥ स्कन्धे । ली लायाम् ॥ सुगतालये ॥ विहरण म् । हृञ्० । घञ् ॥ यानादौ ॥ विहरन्त्यनेन । करणे घञ् । क्रीडा स्थाने ॥ विहरन्त्यत्र । अधिकरणे घञ् ॥ बिन्दुरेखवगे ॥ त्रि० हार वर्जिते ॥ विगतोहारोऽस्य ॥

विहारगृहम् । क्रीडागारे ॥

विहारवित् । पुं० श्रीकृष्णे ॥ त्रि० वि हारज्ञे ॥

विहारवेदिका । स्त्री० वितर्दिम् ॥

विहारस्थानम् । न० क्रीडाप्रदेशे ॥

विहारी । त्रि० परिक्रमिणि । विहार कर्त्तरि ॥ मत्वर्थीयइनि ॥

विहित । त्रि० सृष्टे । निर्मिते ॥ वि धेये । विध्यागतोचितकृत्ये ॥ वि धीयतेस्म । डुधाञ्० । क्त । द धातेर्हि ॥ अभिहिते । विपूर्वस्य दधाते 'क्रियासामान्यवाचित्वात्

विहिति । स्त्री० विधाने ॥

विहीन । त्रि० विगते । विशेषेणहो

ने । त्यक्ते । वञ्चिते । वेधविद्धो मेषोतरिवक्तुर्वाक्यं प्रयाति वैफल्यम् । नयनविहीनेभर्त्तुरिलावण्यमिव खञ्जनाक्षीणाम् ॥

विहृतम् । न० स्त्रीणांस्वाभाविकदृष्टालङ्कारान्तर्गतालङ्कारविशेषे ॥ यथा । लीलाविलासोविच्छित्तिर्विव्वोकः किलकिञ्चितम् । मोट्टायितकुट्टमित ललित विहृतं तथा ॥ विभ्रमश्चेत्यलङ्कारा ' ,स्त्रीणांस्वाभाविकाद्दशेति हेमचन्द्र . ॥ तल्लक्षणं यथा । वक्तव्याभावव्याजाद्विहृतदर्शितेङ्गितम् ॥ विहरणम् । हृञ् । भावेक्तः ॥

विहृति : । स्त्री० सञ्चारे ॥ विहरणम् । हृञ् . । क्तिन् ॥ विशेषेणहरणे ॥

विहेठ . । पुं० विहेठने ॥

विहेठनम् । न० हिंसायाम् ॥ मर्द्दने ॥ विडम्बने । हेठविबाधायाम् । ल्युट् ॥ दु : खे ॥

विहेडनम् । न० विहेठनार्थे ॥ हेडृ० । ल्युट् ॥

विह्वल : । त्रि० भीत्याद्यभिभूते । स्वात्मान्यवधारयितुमशक्ते । विक्लवे ॥ विह्वलति । ह्वलचलने । अच् । मूर्च्छिते । विलीने ॥ विवशे ॥

वी : । पु० गमने । वेति । वीगत्यादौ । क्विप् ॥

वीक : । पुं० वायौ । वाते । पक्षिणि । खगे ॥ अजति । अज० । पक्षिपु

ध्वनीभ्योदीर्घश्चेतिकन् ॥ मनसि ॥

वीकाश : । पुं० रहसि । विजने ॥ विकाशे । प्रकाशे ॥ विकाशनम् । अस्मिन्वा । काशृदीप्तौ । भावे० इ सर्वेत्वधिकरणे बाधक । इक : काशइतिदीर्घ : ॥ यद्वा । विकाशनमत्रवा । काशशब्दे । पूर्ववत् ० घञ् दीर्घौ ॥

वीक्षणम् । न० विलोकने ॥ विशिष्टमीक्षणम् ॥

वीक्षणीय : । त्रि० गुरुमुखादवगत्य विचारणीये ॥ वीक्षितुं योग्ये ॥ ईक्ष० । अनीयर् ॥

वीक्षापन्न : । त्रि० विस्मयान्विते ॥ वीक्षणम्० वीक्षातामापन्न : ॥

वीक्षित . । त्रि० अवलोकिते । दृष्टे ॥ विशेषेणईक्षित : ॥

वीक्ष्य : । पुं० लासके ॥ वाजिनि । घोटके । न० विस्मये । दृश्ये । त्रि० ग्रंनीये ॥

वीङ्खा । स्त्री० शूकशिम्ब्याम् ॥ गतिभेदे ॥ नर्त्तने ॥ अश्वगतिभेदे । सर्व्वौ ॥

वीचि : । पुं० स्त्री० स्वल्पतरङ्गे । अल्पे ॥ अवकाशे । वीच० ह० मा० ॥ सुखे ॥ वयति० जयतिवा । वेञ् तन्तुसन्ताने । वेञोडिच्चेति० इंचि . ॥ अल्पे ॥ श्वाल्याम् ॥

वीचिमाली । पुं० समुद्रे ॥ वीचीनां

माला॰सामस्तिषष्ठ।बीच्यादिस्वा दिनि ः॥

बीची। स्त्री॰ बीचिशब्दार्थे॥

बीचीतरङ्गः। पुं॰ न्यायविशेषे॥ स तुशब्देशब्दस्योत्पत्तिकारणरूपः। यथा। बीचीतरङ्गन्यायेनतदुत्पत्ति स्तुकीर्त्तिता। कदम्बगोलकन्याया दुत्पत्ति. कस्यचिन्मते॥ भू॰भा॰ प॰॥ ननुमृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे॰श्रोत्रेकथमुत्पत्तिरित्यतआह। बीचीति। आद्यशब्दस्य॰बहिर्द शदिगवच्छिन्नोऽन्यःशब्दस्तेनैवशब्दे नजन्यते॰तेनचापरस्तद्व्यापकएवंक्र मेणश्रोत्रोत्पन्नोगृह्यतइति। कदम्ब इति। आद्यशब्दाद्दशदिक्षुदशश ब्दाउत्पद्यन्ते॰तैश्चान्येदशशब्दाउत्प द्यन्तइतिभावः। अस्मिन्पक्षेगौ रवादुक्त कस्यचिन्मतइति॥

बीजम्। न॰ अङ्कुरकारणे॥ हेतौ। तत्त्वे॥ आधाने॥ शुक्रे। रेतसि। सर्वभूतानांप्ररोहकारणंबीजत न्मायोपाधिकचैतन्यभगवद्विभूतिः॥ विशिष्टेषणजायतेऽनेन। उपसर्गे चसञ्ज्ञायामितिड. । अन्येषामपी तिदीर्घं.॥ यद्वा। विशेषेण॰ईजते। ईजगतिकुत्सनयोः। अच्॥ बीज्य तेवा। घञ्। कुत्वन्नभवति॰च जोरित्यत्रनिष्ठायामनिटइतिकार्त्ति ककृतापूरितत्वात्। अस्यचनिष्ठा यामिट्त्वात्॥ यद्वा। बीजयति॰ बीज्यतेऽनेनवा। बीजव्यजने। अ च्॰घञ्वा॥ मज्जनि॥ गणित विशेषे॰अव्यक्तगणिते॥ मन्त्रे॥

बीजकः। पुं॰ मातुलुङ्गे॥ असनवृ क्षे। पीतसारके। विजयसार॰भू॰ भा॰॥ बीजकः कुष्ठवीसर्पश्वित्र मेहगुदकृमीन्। हन्तिश्लेष्मास्रपि त्तघ्नत्वच्यः केश्योरसायनः॥

बीजकृत्। न॰ वाजीकरणे॥

बीजकोशः। पुं॰ बीजकोषे॥

बीजकोशी। स्त्री॰ शिम्बायाम्॥

बीजकोषः। पुं॰ वराटके। कर्णिका याम्॥ बीजस्यकोषः पात्रमाधार इतियावत्॥ बीजाभिधाने॥

बीजगर्भः। पुं॰ पटोले॥

बीजगुप्तिः। स्त्री॰ शिम्ब्याम्॥

बीजधर्म्मिणी। स्त्री॰ सर्वेषांमहदादी नांविकाराणांबीजत्वेनावस्थितायां॰ प्रकृतौ॥

बीजधान्यम्। न॰ धान्याके॥

बीजनम्। व्यजने॥ बीके। चक्रवा के॥ चकोरे। वस्तुनि॥ विधूनने॥ बीजव्यजने। चुरादिः॥ ल्युट्॥

बीजपादपः। पुं॰ भल्लातके॥

बीजपुष्पम्। न॰ मरुवके॥ मदनद्रौ॥

बीजपूरः। पुं॰ फलपूरे। मातुलु ङ्गे। टावालेबू॰भू॰वर्गो॰दे॰भा॰बङ्ग भाषाच॥ गुणास्तु। बीजपूरफलं

स्वादुरसेऽम्ल दीपनं लघु । रक्तपित्तह
रकण्ठजिह्वाहृदयशोधनम् ॥ श्वा
सकासारुचिहरं हृद्यं तृष्णाहरम् ॥ त
म् ॥ सैन्धवार्द्रकसंयुक्तं बीजपूरकं
मक्षिय । आकिनीभिरिवाकृष्ट
विशल्युद्रमोदनम् ॥ केशरमातु
लुङ्गस्त्वलघुश्लेष्मानिलापहम् । रो
चनदीपनहृद्यं गुल्मशूलार्शसां जये
त्यूति ॥ क्वाथिस्थमूलग्राह्यमिल्वा
कु : ॥ बीजैनपूर्यते । पूरीश्याप्याय
ने । इगुपधेतिक ' । कर्मणिघञ्
वा ॥ देशभाषयाबिजोरा० इतिप्र
सिद्धोयम् ॥
बीजपूर्णः । पु० बीजपूरे ॥ कोलके ॥
बीजपेशिका । स्त्री० अण्डकोषे ॥
बीजप्रद । पुं० पितरि । गर्भाधा
नस्यकर्तरि ॥
बीजफलक : । पुं० बीजपूरे ॥
बीजसू ' । स्त्री० क्षितौ ।
बीजमातृका । स्त्री० पद्मबीजे । प
द्माक्षे ॥
बीजरत्न : । पुं० माषकलाये ॥
बीजरुह : । पुं० शाल्यादौ ॥ य
था । कुरण्टाद्याअग्रबीजामूल-
जास्तूत्पलादय ' । पर्वयोनयइ
क्ष्वाद्यास्कन्धजा : ॥ अस्लकीमु
खा : ॥ शाल्यादयोबीजरुहा : स
म्मूर्च्छनाल्त्यादय । । स्युर्वनस्प
तिकायस्यषडेतेमूलजातयइ० है

मचन्द्र ' ॥
बीजरेचनम् । न० जयपाले ॥
बीजवपनम् । न० क्षेत्रेबीजक्षेपणे ॥
बीजवृक्ष । पुं० असनवृक्षे ॥
बीजसञ्चय : । पुं० बीजसङ्ग्रहे ॥
बीजसन्तान : । पुं० वपने । क्षेत्रे
बीजानांविकिरणे ॥ गर्भाधाने ॥
बीजसू । स्त्री० भूमौ । पृथ्व्याम् ॥
बीजाकृतम् । न० उप्तकृष्टे । सबीज
कृष्टक्षेत्रे ॥ बीजेनसहकृतकृष्ट
म् । कृञोद्वितीयेतिडाच् ॥
बीजाम्लम् । न० वृक्षाम्ले ।
बीजी । पु० पितरि ॥ त्रि० बीज
विशिष्टे ॥
बीजोदकम् । न० करकायाम् ॥ बी
जाकृत्युदकम् । शाकपार्थिवादि ॥
बीजोप्तिचक्रम् । न० बीजवपनजन्य
शुभाशुभज्ञानार्थंसर्पाकारचक्रे ॥
बीज्य : । त्रि० कुलसम्भवे ॥ बीज्य
ते । बीजव्यजनेऽदन्त ' । अचोय
त् ॥ यद्वा । बीजमस्यास्ति । अ
न्येभ्योपिदृश्यतइतियप् । बीजेभ
व : साधुर्वा ॥
बीटिका । स्त्री० सुसज्जीकृतताम्बू
ले ॥ इतिकेचित् ॥
बीणा । स्त्री० तडिति । विद्युति ' ।
बल्लक्याम् । विपञ्च्याम ॥ वेति
जायतेस्वरोस्याम । बीगत्यादि
षु । रास्नासास्नास्थूणावीणाइति

नञ्स्त्वयोगात्वं गुणाभावश्चनिपाति व ॥ अस्याः प्रभेदायथा । विश्वावसोस्तुबृहतीतुम्बुरोस्तुकलावती।महतीनारदस्यस्यात्सरस्वत्यास्तु कच्छपी ॥ अपिच । विश्वस्यवीणानालम्बीसरस्वत्यास्तुकच्छपी । महतीनारदस्यस्यात्गणानाञ्चप्रभावती ॥ विश्वावसोस्तुबृहतीतुम्बुरोस्तुकलावती । चण्डालानोन्तु कण्डोलवीणाचाण्डालिकापिच ॥ तस्याचङ्गानांनामानियथा । काय : कोलम्बकस्तस्याउपनाहोनिबन्धनम् । दण्ड पुन प्रवाल : स्यात्ककुभस्तुप्रसेवक ॥ मूलेवंशशलाकास्यात्कलिकाकूणिकापि-चेति ॥ रत्ना० ऽ । ऽ० ॥

वीणादण्ड । पुं० वीणास्थितालाबूपरिकाष्ठे । प्रवाले ॥ वीणाया दण्ड : ॥

वीणानुबन्ध । पुं० उपनाहे ॥

वीणाल । त्रि० वीणावति ॥ पुं० नारदे ॥ वीणाअस्तियस्य । सिध्मादित्वाल्लच ॥

वीणावाद : । त्रि० वैणिके ॥ वीणा वादति । वदेर्ण्यन्तात् । कर्मण्यण् ॥

वीणावादक । पुं० वैणिके ।

वीणास्य । पुं० नारदे ॥ वीणा आस्यमिवप्रधानंयस्य ॥

वीतम् । न० असारगजे । युद्धाक्षमे हस्तिनि ॥ असारतुरगे । युद्धाक्षमेघोटके ॥ अङ्कुशकर्मणि । करिण . पोदाघातनूर्वकाङ्कुशवारके ॥ पादकर्मयत्प्रोक्तं यातमङ्कुशवारणम् । उभयंवीतमाख्यातमिति हलायुध ॥ त्रि० अजलिस्म वा० युद्धादिकर्मण्य वीगत्यादौ० अजगतौवा । गत्यर्थेतिक्त . ॥ अनुमानप्रभेदे । अन्वयमुखेनप्रवर्तमानेविधायकेऽनुमानविशेषे ॥ वीतानुमानञ्चद्वेधा । पूर्ववत् ० सामान्यतोदृष्टञ्च । दृष्टस्वलक्षणसामान्यविषययत्तत्पूर्ववत् । पूर्वं प्रसिद्धम्० दृष्टस्वलक्षणसामान्यमितियावत् । तद्यस्यविषयस्तं ना स्त्यनुमानज्ञानस्येतिपूर्ववत् । यथा धूमाद्वह्नित्वसामान्यविशेष पर्वतेऽनुमीयते । तस्यवह्नित्वसामान्यस्यस्वलक्षणंवह्निविशेषोदृष्टोरसवत्याम् । अपरञ्चवीतसामान्यतोदृष्टम् ० अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम् ० अत्ररूपादिज्ञानानांक्रियात्वेनकरणवत्वमनुमीयतेयद्यपिचकरणत्वसामान्यस्यच्छिदादौवास्यादिस्वलक्षणमुपलब्धम् ० तथापियज्जातीयंरूपादिज्ञानेकरणमनुमीयतेतज्जातीयस्यकरणस्यनदृष्टं स्वलक्षणप्रत्यक्षेण

इन्द्रियजातीयं हितत्करणम् ० नचेन्द्रियत्वस्य सामान्यस्य लक्षणमिन्द्रिय विशेष . प्रत्यक्षगोचरो वगिन्द्रियाम् ० यथा वह्नित्वस्य सामान्यस्य लक्षण वह्निः सोयपूर्वंवत . सामान्यतोदृष्टस्य स्पिवीतत्वे नतुस्यत्वे विशेष । अत्रचदृष्ट दर्शनम् ० सामान्यस्य सार्वविभक्तिकस्तसिल् ० अदृष्टस्वलक्षणसामान्यस्य ० दर्शनमनुमानमित्यर्थं . ॥ त्रि० प्रान्ते ॥ निवृत्ते ॥ आच्छादिते ॥ विरहिते ॥ विशेषणकृत . ॥

वीतंस । पुं० मृगाणांपक्षिणामपि बन्धनोपाये ॥ मृगाणांपक्षिणांस्ववि श्वासहेतोः प्रावरणे ॥ वितङ्क्ते । तसिअलङ्कारे । घञ् । उपसर्गस्येतिदीर्घ . ॥

वीतदम्भ । त्रि० त्यक्तदम्भे ॥

वीतन . । पुं० कृकपार्श्वद्वये ॥ यथा । कृकस्तुकन्धरामध्यं कृकपार्श्वौतु वीतनौ । इतिहेमचन्द्रः ॥

वीतभय । त्रि० निर्भये ॥ वीतविगतभयंयस्य ॥

वीतमन्यु . । त्रि० विगतरोषे ॥

वीतराग . । पुं० बुद्धे ॥ त्रि० निस्पृहे ॥ रागशून्ये ॥ विशेषणकृत : गत . ० रागः प्रीतिर्मात्सर्यंवा ० यस्य ० यस्माद्वा ॥

वीतरागभयक्रोध । त्रि० मुनिसत्त्वे ॥ रागभयक्रोधाः ० वीताः विवेकेन विगतायस्मात् ॥

वीतरागो । त्रि० इहामुत्रार्थफलभोगरहिते ॥

वीतशोक . । पुं० अशोकद्रुमे ॥ त्रि० आत्मज्ञे ॥ आत्मज्ञएववीतशोको भवतिनानात्मज्ञः ॥ शोकहीने ॥ वीतः विशेषेणगतः शोकोयस्य यस्माद्वा ॥

वीतस्पृहः । विरक्ते ॥

वीति . । पुं० अश्वे ॥ स्त्री० गतौ दीप्तौ ॥ प्रजने ॥ असने ॥ खादने ॥ वेति । वीगत्यादौ । क्तिच् ० भावेस्त्रियांक्तिनवा ॥ नित्त्वात् ॥

वीतिहोत्र : । पुं० धनञ्जये । अग्नौ ॥ वीयते । वीगतिप्रजनकान्त्यसनखादनेषु । कर्मणिक्तिन् । वीतिभंक्ष्यं पुरोडाशादि ० हूयतेऽस्मिन् । हुदानादनयोः । हुयामाश्रुभसिभ्यस्त्रन् ० इतित्रन् ॥ वीतिरश्वो होत्रचहवनमस्येतिवा ॥ अर्के । सूर्य्ये ॥

वीध : । त्रि० विशेषेणदत्ते ॥ विदीयतेस्म । डुदाञ् ० । क्त : । अच उपसर्गात्तइतितादेशः दस्तीति दीर्घ : ॥

वीथि : । स्त्री० वीथ्याम् । अश्वसञ्चारस्थाने ॥ ताण्डव । यथा । सि

अमुखेनवसुवीथिषुकश्चिदङ्कवक्ता विभागकुशलोगमयाम्बभूवेतिमाघव्याख्यानावसरेमल्लिनाथः । नवसुवीथिषुसञ्चारस्थानेषुगमयाम्बभूव० वीथयोनक्षत्राणांसर्वेषांचाराद्या व्यांर्था . परिमिता : प्रचारदेशा : । तासुतिसृषुस्वे वी० नवेत्यन्ये० तत्रोत्तरपथमाश्रित्योक्तंकविनानवस्विति । यथाहभोज । वीथ्यस्तिस्रोऽप्यचाराणांमध्योत्तमा' क्रमात् । तासांत्र्यावृतुर्धामानमशीतिर्नवति ' शतम् ॥ श्रेष्ठमध्योत्तमानान्तुवाजिनांवीथिका ' स्मृता । नवानांकथितावीथ्योदुष्टानाक्रमणक्रमे ॥ अन्येषामपिसर्वेषगतिद्वाव्यार्थभोरिता ' ॥ समोन्नतासाविषमास्वुक्तोपांशुदानतायाहयवी० हृदाख्या । स्थाणुप्रकीर्णोपलसंप्रकीर्णापाश्चोन्नताख्यानकचेतिवीथ्य ॥ सर्वेवीथिषुयेवाजीदृढशिक्षासमन्वित : । तेनराजारथे नित्यंमृगयायांमुदश्नुतेदिति ॥ अन्ये तु० उरसाख्यादयोगतिविशेषावीथयश्चस्याहु ' । उरसालीढरश्चालोपृथुलोमध्यनामक : । आलीढ शोभनेरश्चे ' प्रत्यालीढस्तथापर . ॥ उपधेनवउत्तमपादचालोचसर्वेग ' । निर्दिष्टावीथयस्त्वे ताद्वृति ॥ विध्यतेनया । विधृयाचने । इगुपधा

त्किदितीन् । बाहुलकाद्दीर्घ ' ॥

वीथिका । स्त्री० वीथ्याम् ॥

वीथी । स्त्री० पङ्क्तौ ॥ गृहाङ्गे । गृहपिण्डिकायाम् ॥ नाट्यरूपके । वर्त्मनि ॥ विध्यतेऽनया । विधृ० । घञ् । पृषोदरादि' । गौरादि : ॥ यद्वा । विध्यते । इगुपधात्किदितीन् । बाहुलकाद्दीर्घ : । कृदिकारादितिपाक्षिको ङीष् ॥

वीथ्यङ्ग . । त्रि० नाटकभेदे ॥

वीध्र : । पुं० अग्नौ ॥ वायौ ॥ न० नभसि ॥ त्रि० विमले ॥ वीन्धे । ञिइन्धीदीप्तौ ॥ वाविन्धेरिति० क्रन् ॥

वीनाह . । पुं० इष्टकादिभिर्बद्धकूपमुखे ॥ विनह्यतेऽनेन० कूपमुखम् । णहबन्धने । हलश्चेति घञ् । उपसर्गस्यघञीतिदीर्घ : ॥

वीपा । स्त्री० विद्युति ॥

वीप्सा । स्त्री० व्याप्तुमिच्छायाम् ॥ नानार्थानांवृत्त्याधिकरणानांक्रियागुणाभ्यांप्रयोक्तुर्युगपद्व्याप्तुमिच्छा वीप्सा ॥ ग्रामेग्रामेरमणीयकं मौक्तिकमनर्घ्यं । देशेदेशेनविद्वांस सं'दनवनेवने ॥

वीवध . । पुं० पर्याहारे । उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे । विहङ्गिकायाम ॥ अध्वनि ।' भा

रे ॥ मार्गे ॥ धान्यादिप्राप्तौ ॥ वि विधे। विधोहननगमनवाऽजानेनत्रा । प्रादिभ्योधातुजस्येतिसमासेोत्त रपदलोपौ चान्येषामपीतिदीर्घं ॥

वीवधिकः । त्रि० वार्त्तांवहे ॥ वीव धेनहरति । एकदेशविकृतस्यान न्यत्वात्० विभाषाविवधादितिष्ठ न् । षोडोषधं : ॥

वीरः । पुं० शूरे । विक्रान्ते ॥ वि ष्णौ ॥ जिने ॥ शृङ्गाराद्यष्टरसा न्तर्गतरसविशेषे । उत्साहवर्द्धने ॥ उत्तमप्रकृतिर्वीरउत्साहस्थायि भावकः । महेन्द्रदैवतोहेमवर्णो ऽयंसमुदाहृतः ॥ ककुभद्रुमे ॥ ब्राह्मणे ॥ भावविशेषे ॥ न० अग्नौ ॥ तण्डुलीये ॥ वराहकन्दे ॥ लताकरञ्जे ॥ करवीरे ॥ शृङ्गा म् ॥ नले ॥ मरिचे ॥ पुष्करमूले ॥ काञ्जिके ॥ उशीरे ॥ आरुके ॥ त्रि० उत्तमे। श्रेष्ठे ॥ वीराचारविशिष्टेयथा । कुलाचाररतोवीरः कुलसक्तोसदा भवेत् । सविद्यासेवनकुर्यात्सोमपा नमहेश्वरि ॥ सर्वदाकुरुतेदेविवीर स्त्रोत्तमानस ॥ पुं० वीरयति । शूर वीरविक्रान्तौ चुरादिः । पचाद्यच् ॥ यद्वा । विशिषेण० ईर्त्ते० ईरयतिवा । ईरगतौ । वेोऽज्वा ॥ यद्वा । अज ति । अजगतिक्षेपणयोः । स्फायि तञ्चीतिरक् । अजेर्वी ॥ विविधानां अघ्ना आमीरयितावा ॥ यद्वा । ईरण म् । ईरगतौकम्पनेच । भावेघञ् । ईरः पलायन कम्पनञ्च०तदुभये परवीरप्रयुक्तं विगतमस्मे तिवीरः ॥

वीरकः । पुं० करवीरे ॥

वीरकुलम् । न० ब्राह्मणानागणे ॥

वीरगतिः । पुं० स्वर्गे ॥

वीरजयन्तिका । स्त्री० रणेवीराणां नृत्ये ॥

वीरणम् । न० उशीरस्यतृणे । वीरत रे । बहुमूलके । गाँडरइतिख्याते तृणे ॥ वीरणपाचनशीतस्तम्भनल घुतिक्तकम् । मधुरज्वरनुद्वान्तिम दध्नित्कफपित्तहृत् ॥ तृष्णासृग्विष वीसर्पकृच्छ्रदाहव्रणापहम् ॥ कुशा दीनांगणे ॥ यथा । कुश काशश्च दर्भश्चकत्तृण भूतृणंतथा । श्वेतदू र्वानीलदूर्वागण्डदूर्वेतिवीरणम् ॥ विपक्षिणमीरयति । ईरगतौकम्प नेच । ल्युट्युज्वा ॥

वीरतरः । पुं० वीरश्रेष्ठे ॥ शरे ॥ न० वीरणे ॥ अतिशयितोवीरः । द्विवचनविभज्येतितरप् ॥

वीरतरुः । पुं० अर्जुनवृक्षे ॥ वीरस्था नेतरुश्च ॥ कोकिलाक्षवृक्षे ॥ वि ल्वान्तरवृक्षे ॥ भल्लातके ॥

वीरपर्णम् । न० सुरपर्णे ॥

वीरपत्नी । स्त्री० वीरभार्यायाम् ॥ वी रः पतिर्यस्याइतिविग्रहे०नित्य स

मत्स्याद्विच्चिति ० पतिश्वद्स्यनकारा न्तादेशे ० स्त्रन्ने भ्यश्चुतिङीप् ॥ नहि वीरपत्नीनामलभ्यनामकिच्चिदस्ति ॥
वीरपत्रा । स्त्री ० विजयायाम् ॥
वीरपाणम् । न ० वीराणासमयविशेषे क्रियमाणे मद्यपाने ॥ यथा । वीरपा नस्तुयत्पान्नं वृत्तेभाविनिवारणे ॥ वीराणांपानम् । पाभावकरणयो रितिणत्वम् ॥
वीरपुरुष । पुं ० परैरपराजिते ॥
वीरपुष्पी । स्त्री ० सिन्दूरपुष्प्याम् ॥
वीरप्रमोक्ष : । पुं ० तीर्थविशेषे ॥
वीरभद्र । पुं ० अश्वमेधाश्वे ॥ वीर श्रेष्ठे ॥ वीरणे ॥ दक्षाध्वरध्वंसि निशिवगणविशेषे ॥
वीरभद्रकम् । न ० वीरणे ॥
वीरभार्य्या । स्त्री ० वीरपत्न्याम् ॥ वीरस्यभार्य्या ॥
वीरमाता । स्त्री ० वीरस्वाम् ॥ वीरस्य माता ॥
वीररज : । न ० सिन्दूरे ॥
वीरराचि । स्त्री ० निशाविशेषे ॥ यथा । दीपावल्याममायांचे ग्रहणं यदि लचचे । वीरराचिमंहेशानीत्याग म ॥
वीररेणु : । पुं ० भीमसेने । नागवले ।
वीरवती । स्त्री ० मासरोहिण्याम् ॥ वीरजनन्याम् ॥
वीरवत्सला । स्त्री ० स्वस्राम् ॥
वीरवत्सा । स्त्री ० वीरजनन्याम् ॥
वीरविप्लावक : । पु ० शूद्रद्रव्येणहोम कर्तरि ॥ यथा । वीरविप्लावकोजु हुयाने : शूद्रसमर्पितैरितिहेमच न्द्र ॥
वीरवृक्ष । पुं ० भल्लातके ॥ ककुभद्रु मे ॥ बिल्वान्तरे ॥ देवधान्ये । अश्म रीहरे ॥ वीरद्रुवतृक्ष ० दुस्पर्शत्वा त् ॥
वीरव्रत : । पुं ० दृढव्रते ॥ नैष्ठिके ॥
वीरसू । स्त्री ० वीरमातरि ॥ वीरसू ते । पूष्प्राणिगर्भविमोचने । स त्सूद्विषेतिक्विप् ॥
वीरसेन । पुं ० नलाभिधभूपपित रि ॥ न ० आरुकतरौ ॥ आलुके ॥
वीरसेनज : । पुं ० नलाभिधनृपे ॥
वीरहा । पुं ० त्यक्तयज्ञाग्नौ । नष्टा ग्नौ । प्रमादादिनायस्याग्निर्नष्टोवि धोऽग्निनंष्टोनिर्वाण : शान्तस्तस्मि न् ॥ वीरोऽग्निस्तंहन्ति । हन ० । क्विप् ॥ हरौ ॥ वीरान्असुरभटा न् ० हिरण्यकशिपुप्रभृतीन्वाहन्ती तितथा ॥
वीरा । स्त्री ० सुरायाम् । मदिराया म् ॥ चीरकाकोल्याम् ॥ तामल क्याम् ॥ एलवालुके ॥ पतिपुत्रव त्याम् । पत्यासुतेनचयुक्तायाम् ॥ रम्भायाम् ॥ विदार्याम् ॥ विदा रीस्थानेगम्भारीतिपाठान्तरम् ॥

कान्तोल्याम् ॥ महाशतावर्याम् ॥ गृहकन्यायाम् ॥ ब्राह्म्याम् ॥ अतिविषायाम् ॥ शिंशपावृक्षे ॥

वीराध्वा । पुं॰ शूराणांस्वर्गे नि ॥ वीराणांसङ्ग्रामेष्वनिवर्त्तिना॰गो ब्राह्मणबालस्त्र्याद्यर्थं॰कण्टकशत्रु कासर्पसिंहव्याघ्राद्यभीतानामध्वा ॥

वीरारुकम् । न॰ आरूके ॥

वीराशसनम् । न॰ अतिभयप्रदायां युद्धभूमौ ॥ सावीराशसन युद्धभूमिर्या तभयप्रदा ॥ वीरा 'श'स्यन्तेऽत्र । आङ्. शसिद्रूच्छायाम् । ल्युट् ॥

वीराश्रमः । पुं॰ तीर्थविशेषे ॥ यत्र कार्त्तिकेयस्तिष्ठति ॥

वीरासनम् । न॰ रात्रौखड्गहस्तस्य तिष्ठतोजागरणे ॥ ऊर्द्ध्वस्थाने ॥ वीराणामासनम् । योगिनामासनविशेषे ॥ तदुक्तं योगशास्त्रे वसिष्ठेन । एकंपादमथैकस्मिन्विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथावाहुंवीरासनमिदंस्मृतम् । इति ॥ अपिच । एकं पादमथ. कृत्वा विन्यसेद्दौरौतथेतरम् । ऋजुकायोविशेन्मन्त्रीवीरासनमितीरितमिति लघ्वाख्यम् ॥ श्रीभागवतेऽपि । कृत्वोरौदक्षिणेसव्यं पादपद्मंचजानुनि । वाहुंप्रकोष्ठेऽक्षमालामासीनंतर्कमुद्रयेति ॥

वीरिणी । स्त्री॰ दक्षप्रजापतेःप त्न्याम् ॥

वीरुत् । स्त्री॰ शाखापत्रप्रचयवत्यां लतायाम् । गुल्मिन्याम् । उपलविटपे ॥ विरूढ़ौ । रुधिर्॰ । क्विप् । अन्येषामपीतिदीर्घः ॥

वीरुधा । स्त्री॰ वीरुधि ॥ भागुरिमतेनटाप् ॥

वीरेशः । पुं॰ शिवे ॥

वीरेश्वरः । पुं॰ सदाशिवे ॥ वीराणामीश्वरः ॥

वीरोज्झो. । पुं॰ होमाकर्त्तरि ॥ यथा । यस्तु द्विजाभिनिर्मुक्तोवीरोज्झोवज्रुहीतिचः ॥ इतिहेमचन्द्रः ॥

वीरोपजीविकः । पुं॰ जीविकार्थम ग्निहोत्रिणि ॥ यथा । अग्निहोत्र फलाद्याश्रयपरोवीरोपजीविकइति हेमचन्द्रः ॥

वीर्य्यम् । न॰ शुक्रे । रेतसि । यथा । हरितालहरेर्वीर्य्यं लक्ष्मीवीर्य्यंमनः. शिला । पारदः शिववीर्य्यं स्यात्गन्धकंपार्वतीरजः ॥ इति । प्रभावे ॥ तेजसि ॥ इन्द्रियसामर्थ्ये ॥ अतिशयशक्तिभाज्युत्साहे ॥ शक्तौ ॥ साचपृथिव्यादीनांयः सारभागस्तद्गतिशयरूपा । साद्विविधाचिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्राचिन्त्यक्रियाहेतुर्यद्रव्यरसादीनां

स्वरूपमं यिस्वभावसिद्धाशक्ति'। अचिन्त्यक्रियाहेतुश्चप्रभावापरपर्याय द्रव्याधारसाद्यनुरूपकार्यंकरणाशक्ति'। उक्तञ्च। भूतप्रभावातिशयोद्रव्ये याकोरसेस्थित । चिन्त्याऽचिन्त्यक्रियाहेतुर्वीर्यंधन्वन्तरिमंतमिति॥ अस्याधिमाह। यामकल्पकषायवीर्यमखिलचूर्णंस्वप चचयषषमासानृपतमोदकोसवगुडौमासत्रयगुग्गुलौ । सिद्धानारसभस्मनासुविपुलवीर्यंस्ववर्षत्रयम्- किञ्चिद्गन्धत्रिवर्जितशुचपरतैलपुराणमहर्षितिनारायणदासकृतापरिभाषा॥ वीरे० अक्लीवेसाधु । तत्रसाधुरितियत्॥ यद्वा। वीर्यंतेऽनेन। वीरविक्रान्तौ। अचोयत् । अघ्न्यादिर्वा॥ अस्ति॥

वीर्यवान्। त्रि० मांसले॥ वीर्यमस्यस्यास्मिन्वा। मतुप्॥

वीर्य्यवृद्धिकरम्। न० वृष्ये। वाजीकरणे। शुक्रवर्द्धिकारकौषधादौ॥

वीर्य्या। स्त्री० अतिशयशक्तौ॥

वीसर्प्प। पुं० विसर्पे॥

वीहार:। पुं० बुद्धमन्दिरे। मठालये।

वुक्क। पुं० बकपोदपि। शिवमलस्याम्॥ नास्ति। वा० बाहुलकात्सुक। क्षुणोकारस्योत्त्व वा॥

वृंहण'। पुं० यावकाख्ये० खाद्यभेदे॥ सयावीवृंहणोगुरु॥ त्रि० पुष्टिकारके॥

वृंहितम्। न० करिगर्जिते॥ वृहधाम। वृंहिध्वनौ। नपुंसकेक्तिः॥

वृक'। बोको॥ ईहामृगी। हुंडार० हू० भेडिया० हू० चभाषा० प्र०॥ वर्क्ती। वृकआदाने। इगुपधेतिक:॥ यद्वा। वृणोति। वृञ्० स्तनभूशुसिमुषिभ्य: कक्॥ शृगाले॥ कृचिमधूपे॥

वृकदंश'। पुं० कुकुरे॥ वृकान् दंशयति। दश०। कर्मण्यण्॥

वृकधूप'। पुं० नानासुगन्धिद्रव्यकृतधूपविशेषे। कृत्रिमधूपे॥ सरलद्रवे। वृक्षधूपे। श्रीवेष्टे॥ वृकवधूप । धूप्यतेऽनेन। धूप सन्तापे। घञ्। वृकनामाधूप. शाकपार्थिवादिर्वा॥

वृकधूर्त्त:। पुं० शृगाले॥

वृका। स्त्री० अम्बष्ठायाम्। पाठायाम्॥

वृकाची। स्त्री० चिकृति॥

वृकाराति:। पुं० कुकुरे॥

वृकारि'। पुं० कुकुरे॥

वृकी। स्त्री० पाठायाम्॥

वृकोदर। पुं० भीमाख्यपाण्डवे। भीमसेने॥ यस्यतीक्ष्णोवृकोनाम जठरेहव्यवाहन'। मयोदत्त: स

धर्मात्मातेनचासौवृकोदर' ॥ द्व० मत्सपु० ॥ वृकवदुदरयस्य ॥
वृक्ण । त्रि० छिन्ने ॥ वृश्च्यते स्म । ओव्रश्चूछेदने । क्त ।॥
वृक्ष । पुं० महीरुहे । शाखिनि । विटपिनि । पादपे ॥ पुष्पैः फलिनस्तैर्वृक्षास्तूभयत स्मृताः ॥ वृक्षतिवृञ्चवरणे । पचाद्यच् । यद्वा । वृश्च्यत्वाम् । वृश्च्यतेश । ओव्रश्चू । स्नुवृश्चिकृत्यृषिभ्य किदितिस ।
वृक्षक । पुं० कुटजवृक्षे ॥ क्षुद्रो वृक्ष । क्षुद्रइतिक ॥
वृक्षखण्ड । पुं० वृक्षाणांसमूहे ॥ वृक्षादिभ्यः खण्ड ॥
वृक्षचर । पुं० वानरे ॥
वृक्षधूपः । पुं० श्रीवासे । सरलद्रवे ॥
वृक्षनाथः । पुं० वटवृक्षे ॥
वृक्षपञ्चकम् । न० क्षीरिवृक्षपञ्चके ॥
वृक्षनाकः । पुं० वटद्रुमे ॥
वृक्षभक्षा । स्त्री० वन्दायाम् ॥
वृक्षभवनम् । न० वृक्षकोटरे ॥
वृक्षभित्‌० । स्त्री० वृक्षभेदिनि । वास्याम् ॥ वृक्ष भिनत्ति । भिदिर० । क्विप् ॥
वृक्षभेदी । पुं० कुठारविशेषे । वृक्षादने ॥ वृक्ष भेत्तुंशीलमस्य । भिदिर् विदारणे । सुपीतिणिनि ॥

वृक्षमर्कटिका । स्त्री० कुचिद्भतिप्रसिद्धे पशु मृगजातौ ॥
वृक्षमार्जार । पुं० वृक्षविडाले । गिलहरी० टिकरी० इ० भा० ॥
वृक्षरुह । पुं० जलवेतसे ॥
वृक्षराज । पुं० अम्लवेतसे ॥
वृक्षरुहा । स्त्री० वन्दायाम् ॥ वृक्षं रोहतिरुहर्मूलविभुजादित्वात्क ॥ अमृतस्रवायाम् ॥
वृक्षवाटिका । स्त्री० अमात्यस्य० गणिकायाश्च० गेहस्योपवने ॥ वध्यते । वटवेष्टने । सञ्ज्ञायामितिण्वुल् । टाप् । प्रत्ययस्थादितीत्वम् । वृक्षाणांवाटिका ॥
वृक्षादनः । पुं० वृक्षभेदिनि० कुठारविशेषे ॥ वृक्षमत्ति । अद० । कृत्यलुटइतिल्युट् ॥ भल्लाते ॥ मधुच्छन्दे ॥ पियाले ॥
वृक्षादनी । स्त्री० वन्दायाम् ॥ विदारीकन्दे ॥ विदारीगन्धिकौषधौ । टित्वान्ङीप् ॥
वृक्षादिरूढकम् । ) न० आलिङ्गने ॥
वृक्षादिरूढकम् । )
वृक्षामय । पुं० लाक्षायाम् ॥
वृक्षाम्ल । पुं० आम्रातके ॥ न० आम्ले । तिन्तिडीके । चुक्रे ॥ अस्यगुणाः । वृक्षाम्लमाममम्लोष्णवातघ्नंकफपित्तलम् । पक्वन्तुगुरुसङ्ग्राहिकटुकतुवरंलघु । अम्लोष्ण

रोचनस्तथा दीपनकफशान्तिकृत्। हृ
द्यार्शोयक्ष्मगुल्मशूलहृद्रोगजन्तुजि
त्॥ वृक्षशाखम्॥ वृक्षच्छल्लो
वा॥

वृक्षायुर्वेदः। पुं॰ महीरुहाणां चिकि
त्सायाम्॥ सा चोक्ता वाराह्यां ५३
अध्याये। यथा। तत्रादौ प्रयोजनप्र
दर्शनार्थमाह। प्रान्तच्छायाविनि
र्मुक्ता न मनोज्ञा जलाशयाः। तस्मा
द्‌ द्विजलप्रान्ते त्वारामान् विनिवेशये
त्॥ १॥ तत्रभूलक्षणम्। मृ
द्वी भूः सर्ववृक्षाणां हिता तस्यां ति
लान्वपेत्। पुष्पितांस्तांश्च मृद्‌नी
यात् तत्कर्म प्रथमं भुवः॥ प्रथमं
रोप्या वृक्षाः। अरिष्टाशोकपुन्नाग
शिरीषाः सप्रियङ्गवः। मङ्गल्याः
पूर्वमारामे रोपणीया गृहेषु वा॥ २॥
काण्डरोप्याणां विधानमाह। पन
साशोककदलीजम्बूबकुलदाडिमाः।
द्राक्षापालीवताश्चैव बीजपूरातिमु
क्तकाः॥ एते द्रुमाः काण्डरोप्या
गोमयेन प्रलेपिताः। मूलोच्छेदेऽथ
वा स्कन्धे रोपणीयास्ततः परम्॥ ५॥
कालनियमार्थमाह। अजातशा
खाञ्छिशिरे जातशाखान् हिमागमे।
वर्षागमे च सुस्कन्धान् यथादिक्
स्थान् प्ररोपयेत्॥ घृतोशीरतिल
क्षौद्रविडङ्गक्षीरगोमयैः। आमूल
स्कन्धलिप्तानां सङ्क्रामणविरोपणम्॥ ७॥ रोपणविधानम्। शुचि
र्भूत्वा तरोः पूजां कृत्वा स्नानानुले
पनैः। रोपयेद्रोपितश्चैव पत्रैस्तै
रेव जायते॥ ८॥ रोपितानां सेक
विधानम्। सायं प्रातश्च घर्मर्त्तौ शी
तकाले दिनान्तरे। वर्षासु च भुवः
शोषे सेक्तव्या रोपितद्रुमाः॥ ९॥
अनूपजानाह। जम्ब्‌वेतसवानीरक
दम्बोदुम्बरार्जुनाः। बीजपूर
कमृद्वीकालकुचाश्च सदाडिमाः।
वञ्जुलो नक्तमालश्च तिलकः पनस
स्तथा। तिमिरान्नातकौ चेति षोड
शानूपजाः स्मृताः॥ ११॥ रोपि
तानां वृक्षाणां क्रिमामयमन्तरका
र्यमित्याह। उत्तमं विंशतिर्हस्ता
मध्यमं षोडशान्तरम्। स्थानात्
स्थानान्तरं कार्यं वृक्षाणां द्वादशावर
म्॥ १२॥ किमर्थमन्तरं कार्यं त
दाह। अभ्याससजातास्तरवः स
स्पृशन्तः परस्परम्। मिश्रैर्मूलैश्च
न फलं सम्यग्यच्छन्ति पीडिताः
॥ १३॥ तेषां रोगज्ञानमाह। शी
तवातातपै रोगो जायते पाण्डुपत्र
ता। अवृद्धिश्च प्रवालानां शाखाशो
षो रसस्रुतिः॥ १४॥ एतेषां चि
कित्सामाह। चिकित्सितमथैतेषां
शस्त्रेणादौ विशोधनम्॥ विडङ्गघृ
तपङ्काक्तान् सेचयेत्क्षीरवारिणा॥
फलनाशे चिकित्सितमाह॥ फल

नाशिकुलत्थैस्तु माषैर्मुद्गैस्तिलैर्यवैः । शृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ १९ ॥ इदृध्यर्थं प्रयोग । आविकाजशकृच्चूर्णस्याढकौ द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः । वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ बीजानां वापनविधानम् । वासरान् दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रौडमार्गपिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकल्पितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अथ तिन्तिडीविधानम् । तिन्तिडीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थबीजरोपणम् । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववाशिकानाम् । पलाशिनी वेतससूर्यवल्लीश्यामातिमुक्तैः सहिताष्टमूलैः ॥ क्षीरे शृते चाप्यनया सुशीते ताल शतं स्थाप्य कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ हस्तायतं तद्द्विगुणं गभीरं खात्वावटं प्रोक्तजलावपूर्णम् । शुष्कं प्रदग्धं मधुसर्पिषा तं प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भःसहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम् । वल्लीभवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २९ ॥ अथान्येषां रोपणम् । शतशोऽङ्कोठसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकाम्भोऽभिमृदितं तत्क्षणजन्मकम् । फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकरोपणम् । श्लेष्मातकस्य बीजानि निष्फलीकृत्य भावयेत् । प्राज्ञोऽङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्व एव ॥ माहिषगोमयपिष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि ॥ वृक्षाणां रोपणानन्तराणि । ध्रुवमृदुमूलविशाखागुरुभं श्रवणं तथाश्विनी हस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षारुहा । स्त्री॰ वृक्षरुहायाम् । वृक्षमारोहतीति तथा ॥

वृक्षारोपकः । त्रि॰ वृक्षाणामारोप

थितरि ॥

वृक्षार्हा । स्त्री० महामेदायाम् ॥

वृक्षालय । पुं० खगे । पक्षिणि ॥

वृक्षाश्रयी । पुं० क्षुद्रोलूके ॥

वृक्षेशय । पुं० विहगे ॥ वृक्षे शेते । शीङ० । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥

वृक्षोत्पल । पुं० कर्णिकारे ॥

वृजन । पुं० केशे ॥ न० पापे ॥ आकाशे ॥ वृणक्ति० वृज्यतेऽथा । वृजीव र्जने । कृपृवृजीत्यादिनाक्युः ॥

वृजिनः । पुं० केशे ॥ न० कल्मषे । अघे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपैः संसारफलकर्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि० कुटिले । वक्रे ॥ वृज्यते । वृजी० । वृजेः किच्चेति० इनच् ॥

वृजिनच्छित्० ट् । त्रि० दुःखहन्तरि ॥

वृत । त्रि० वृत्ते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौ स्वीकृतवरादौ ॥ व्रियते स्म । वृञ् वरणे । क्तः ॥ आवृते ॥

वृतकौशा । स्त्री० देवदाल्याम् ॥

वृतपत्रा । स्त्री० पुत्रदात्र्यामोषधौ ॥

वृतपुत्रा । स्त्री० वृतपत्रायाम् ॥

वृतिः । स्त्री० वरणे । वेष्टने । वाटे । आवृत्तिर्ग्रामीणप्रसिद्धविषयेषु कण्टकशाखावरणे ॥ वरणम् । वृञ् ० । क्तिन् ॥ गोपने ॥

वृतिङ्करः । पुं० विकङ्कतवृक्षे ॥ त्रि० वृतिकारके ॥

वृतिस्थ । पुं० सरटे ॥ त्रि० वृतौ तिष्ठति ॥

वृत्त । पुं० कूर्मे पुं० न० पद्ये ॥ यथा । पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥ वृत्तौ ॥ चारित्रे ॥ वेदबोधिताचारस्वपरिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे ॥ यथा । वृत्तमीदृशं तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च । यथा । चित्तवृत्तलीलया निसर्गरम्यदेहक पद्मिनीमणे राजमानसप्रिये विलाससद्मदाक्षलाकुतूहलेन । च सम्भ्रमाङ्गनाजनैः सुराङ्गनाभिभैः लुब्धमेत्य विश्वकलासचित्तपद्मकोशषट्पदः समे सदास्तु ॥ त्रि० अधीते ॥ योऽध्ययमेवृत्तमिति निपातितः । वृत्तं व्याकरणम्० अधीतमित्यर्थः ॥ अतीते । अतिवर्त्तुले । वृते । मृते । दृढे ॥ वर्त्तते स्म० वृत्यते स्म वा । वृतु वर्त्तने । गत्यर्थेति क्तः ॥ वर्त्तनम् । वृतु वर्त्तने वरणे वा । भावे क्तः ॥

वृत्तकम् । न० गद्यप्रभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरं स्वल्पसमासं वृत्तकं मतम् ॥ यथा । अखिलजगतां गतिः परमपुरुषः पुरुषोत्तमो दृप्तदानववधैराभजु

राङ्गीमवनिमवलोक्यकरुणार्द्रहृद
यस्तस्याभारमवतारयितु रामकृष्ण
स्वरूपेणांशतोयदुवंशेऽवततारयस्तुप्र
सङ्गेनापिस्मृतोवागृहीतनामापुंसा
संसारपारमवलोकयति ॥

वृत्तकर्कटिका । स्त्री॰ वृत्तकर्कट्याम् ॥

वृत्तकर्कटी । स्त्री॰ वृत्तोर्वारौ । षड्भु
जायाम् ॥

वृत्तगन्धि । न॰ गद्यप्रभेदे ॥ तल्लक्षणं
यथा । भवेदुत्कलिकाप्रायंसमासा
ढ्य दृढाक्षरम् । वृत्तैकदेशसम्बन्धा
द्वृत्तगन्धिपुन: स्मृतम् । तदुदा
हरणं यथा । जयजयजयजनार्द्दनसु
कृतिमनस्तडागविकस्वरचरणपद्मप
द्मपत्रनयनपद्मापद्मिनीविनोदराज
हंसाभभास्वरयश: पटलपरिपूरि
तभुवनकुहर । हरकमलासनादिवृं
दारकवृन्दवन्दनीयपादारविन्दद्वन्द्व
द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराबि
ष्कृतनिरञ्जनज्योति: स्वरूपनीर
दरूपविरूपकनाथनाथजगन्नाथमा
मनवधिभवदु:खव्याकुलंरक्षरक्ष
रक्ष ॥

वृत्तगुण्ड: । पुं॰ तृणविशेषे । दीर्घ
नाले । जलाश्रये ॥ अयद्विधा । ल
घुस्थूलभेदात् । तत्रस्थूलोऽधिकगु
ण: ॥

वृत्ततण्डुल: । पुं॰ यावनाले ॥

वृत्तत: । अ॰ वृत्तेनेत्यर्थे ॥

वृत्तनिष्पावी । स्त्री॰ वृत्तनिष्पाविकाया
म् । नखनिष्पावे ॥

वृत्तपर्णी । स्त्री॰ महाशणपुष्पिकाया
म् ॥ पाठायाम् ॥

वृत्तपुष्प । पुं॰ कदम्बे ॥ शिरीषे ॥
बानीरे ॥ कुब्जके ॥ मुद्गरे ॥

वृत्तफल: । पुं॰ दाडिमे ॥ बदरे ॥
न॰ मरिचे ॥

वृत्तफला । स्त्री॰ आमलक्याम् ॥ वा
र्त्ताक्याम् ॥ शशाण्डुल्याम् ॥

वृत्तमल्लिका । स्त्री॰ श्वेतार्के ॥ मोदि
न्याम् ॥

वृत्तबीज: । पुं॰ भिण्डायाम् ॥

वृत्तबीजका । स्त्री॰ पाण्डुरफल्याम् ॥

वृत्तबीजा । स्त्री॰ आढक्याम् ॥

वृत्तसम्पन्न: । त्रि॰ सदाचारवति ॥

वृत्ता । स्त्री॰ भिञ्झिरिष्टायाम् ॥ प्रि
यङ्गौ । रेणुकायाम् ॥ मांसरोहि
ण्याम् ॥

वृत्ताध्ययनर्द्धि: । स्त्री॰ ब्रह्मवर्चसे ॥
वृत्तस्याचार: अध्ययनस्यगुरुमुखा
द्दाक्षरग्रहणम् तयोरृद्धि: ॥

वृत्तानन्दम् । न॰ मात्रावृत्तान्तरे ॥
तल्लक्षणोदाहरणं यथा । एकादश
विश्रामि सप्तविरामि यदिवृत्तान्त
संभवति । छन्दोवृत्तानन्दमिहफणा
नन्दकारिफणिन्द्रपतिरितिवदति ॥
यथा । मधुरस्मितनवशालियदिव
नमालिवदनकमलमवलोकये । अ

वृत्ति :

धरसुधारसधामपरमभिरामससलम्वे जीवितमये ॥

वृत्तान्त । पुं० वार्त्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं बाल्ये प्रायेणपश्यति । ऐहिकं यौवनेऽन्ते तु तपस्वीभावितोऽच्यते ॥ वार्त्ताजनश्रुतिराख्यायिकाचेतिस्वामी ॥ प्रभेदे । विशेषे ॥ प्रक्रियायाम् ॥ कात्स्न्र्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुवर्त्तनीयोगविषयीयोऽन्त । समाप्तिर्यस्य । वृत्तोऽन्तोऽस्य०वृत्तस्यान्तइति वा ॥ भावे ॥

वृत्तावृत्तम् । न० मात्रावृत्तान्तरे ॥ तस्यलक्षणोदाहरणे यथा । द्वदस मचतुष्कजगणनिर्मितपदंचलघुविराम भवतियदि । नागाधिपपिङ्गलभणितसुमङ्गलवृत्तावृत्तमिदंहिपदि ॥ यथा । हृदितावदनेक ' स्फुरतिविवेकस्तपसिमनोनियत भवति । यावन्नवहरिणीनयनातरूणीस्मितसुभग नविलोकयति ॥

वृत्ति . । स्त्री० व्याख्यानग्रन्थविशेषे । विवरणे ॥ आजीवे । वर्त्तने । कृष्यादिजीवने । अनुष्टुब्व्याख्याजीविकायाम् ॥ कैशिक्यादौ ॥ यथा । भारतीसात्त्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासुनाट्यप्रतिष्ठितमितिभरत ' । शृङ्

वृत्ति .

गारेकैशिकीवीरेसात्त्वत्यारभटीपुन' । रसेरौद्रेचबीभत्से वृत्तिस . र्वत्रभारती । चतस्रोवृत्तयोह्येता ' सर्वनाट्यस्यमातृका ' ॥ प्रवर्त्तने ॥ विधृतौ ॥ व्यवहारे ॥ वर्त्ततेऽनया । वृतुवर्त्तने । स्त्रियांक्तिन् ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ लज्जादिवृत्तीनामपिपञ्चस्वेवान्तर्भाव ॥ अर्थसन्निकृष्टेन्द्रिये ॥ इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामानन्त्यादर्थवृत्तीःसूत्रयतिपतञ्जलि ' । वृत्तय . पञ्चतस्य क्लिष्टाअक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषा । रागद्वेषादिक्लेशरूपा . ०आसुरवृत्तय क्लिष्टा ' । रागादिरहितादैववृत्तयोऽक्लिष्टा । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भाव ०तथापिक्लिष्टा एवनिरोद्धव्याइतिमन्दबुद्धिवारयितु ताभि . सहाक्लिष्टाउदाहृता . । नामधेयलक्षणाभ्यावृत्तीर्निर्देष्टयितु सूत्रपट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतय । प्रत्यक्षानुमानागमा प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम ०तस्यार्थस्ययद्रूपनतस्मिन्रूपेप्रतिष्ठति०तस्यार्थस्ययत्पारमार्थिकरूप नतत्प्रतिभा

सवतीतियावत् । स अर्थोऽप्यतद्रूप
प्रतिष्ठत्वान्मिथ्याज्ञानम् ॰यथाश्वा
गावीपुरुषीवेति । शब्दज्ञानानुपा
तीवस्तुशून्योविकल्प: । अभावप्र
त्ययालम्बनावृत्तिर्निद्रा । अनुभू
तविषयाऽसम्प्रमोष: स्मृति: ॥
तत्रप्रमाणविपर्ययविकल्पाजाग्रद
वस्था॰ तएवयदानुभववलात्प्रत्य
क्षायमाणा . साखप्न . ॰निद्रात्वस
विद्यमानविषया॰स्मृतिश्चप्रमाणविप
र्ययविकल्पनिद्रानिमित्ता तिव्याख्या
तावृत्तय: ॥ क्तन्तक्तिसमासैक
शेषसनाद्यन्तधातुरूपासुपञ्चसु ॥
विच्छिन्नस्यप्रतिविधाने ॥ अप्रति
बन्धे ॥

वृत्तिक्षान: । त्रि॰ वृत्तिक्षीणे ॥

वृत्तिज्ञानम् । न॰ घटाकारज्ञाने ॥
यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञान
मेव॰तथापि॰अन्त:करणद्वारैस्त
त्तथातथाभातीतिततोभेद: ॥

वृत्तिनिरोध: । पुं॰ वृत्तीनांप्रति
हनने ॥ तत्साधनं सूचयतिभगवा
न्पतञ्जलि: । अभ्यासवैराग्याभ्यां
तन्निरोध: ॰वृत्ति: । प्रकाशप्रवृत्ति
नियमरूपाणांचित्तवृत्तीनामभ्या
सवैराग्याभ्यांप्रतिहननं सनिरोध:
यथातीव्रवेगेनपतन्नदीप्रवाह: सेतुब
न्धनेननिवार्यकुल्याप्रणयनेनक्षेत्रा
भिमुखंतिर्यक्प्रवाहान्तरमुत्पाद्य
ते॰तथावैराग्येणचित्तनद्याविषय
प्रवाहनिवार्य॰समाध्यभ्यासेन॰प्र
शान्तप्रवाह: सम्पाद्यते । एतदुक्तं
भवति । तासांविनिवृत्तबाह्याभि
निवेशानामन्तर्मुखतयास्वकारणएव
चित्तेशक्तिरूपतयावस्थानम् । तत्र
विषयदोषदर्शनजेनवैराग्येण॰तद्वै
मुख्यमुत्पाद्यते॰अभ्यासेनचसुखज
नकशान्तप्रत्ययप्रवाहप्रदर्शनद्वारेण
दृढस्थैर्यमुत्पाद्यतइत्याभ्यांभवतिचि
त्तवृत्तिनिरोध: ॥

वृत्तिभेद: । पुं॰ प्रवृत्तिनिमित्त
भेदे ॥

वृत्तिमान् । त्रि॰ वर्ते ॥ वृत्तिर
स्यास्मिन्वास्ति । मतुप् ॥

वृत्तिविषय: । पुं॰ वृत्तिव्याप्ये ॥
आत्मनि ॥

वृत्तिविस्मरणम् । न॰ ध्यातृध्येया
कारवृत्तिशून्ये । द्वैतानुसन्धा
ने ॥

वृत्तिव्याप्यत्वम् । न॰ विशिष्टशब्दा
दिप्रमाणवशात्॰तत्तद्विषयाकारा
धीसमुन्मेषाभिव्यक्तत्वे ॥ ब्रह्मज्ञा
ननाशायवृत्तिव्याप्तिरपेक्षिता ॥

वृत्य: । त्रि॰ वरणीये ॥ वरणं॰क्रिय
तेवा । वृञ् वरणे । एतिस्तुशास्
वृदृजुष: क्यप् ॥

वृत्त्यनुप्रास: । पुं॰ शब्दालङ्कारभेदे
। यथा । एकस्याप्यसकृत्पर: । ए

कस्य॰अपिशब्दादेकव्यञ्जनस्य॰ द्वि वर्हुरसकृत्वोवासोद्दश्य'इत्यनुप्रासः । यथा । युधिष्ठिरहैतवनेवनेचरवृ त्तयः॰इयोः स्वरव्यञ्जनसमुदाययो रेकदैवावृत्तिः ॥

वृत्र । पु॰ ध्वान्ते । अन्धकारे ॥ अ रौ । शत्रौ ॥ त्वष्टृ पुत्रे दानवबि शेषे ॥ वृजिनात्त्रातुमधुनायस्मा च्छत्रोसिपुत्रक । तस्माद्वृत्रइति ख्याततवनामभविष्यति ॥ घने ॥ शैलविशेषे ॥ वासवे । इन्द्रे ॥ वृ णोति । वृञ्॰ । बाहुलकात्त्र ॥ वर्त्तते । वृतुवर्त्तने । स्फायित श्चीत्यादिनारक्वा ॥

वृत्रद्विट् । पुं॰ इन्द्रे ॥ वृत्रं द्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषेत्यादिना क्विप् ॥

वृत्रभोजनः । पुं॰ गण्डीरे । समष्ठि लायाम् । समठ॰इ॰गौ॰दि॰भा॰॥

वृत्रहा । पुं॰ इन्द्रे ॥ वृत्रं हतवान् । ब्रह्मभ्रूणवृत्रेषुक्विप् ॥

वृत्रारिः । पु॰ शक्र । इन्द्रे ॥

वृथा । अ॰ व्यर्थे । मुधा । अविधौ । निरर्थके ॥ यथा । वृथावृष्टिःसमु द्रस्यतृप्तस्यभोजनंवृथा । वृथादान समर्थस्यनीचस्यसुकृतंवृथा ॥ नि ष्कारणे ॥

वृथाजन्म । न॰ निरर्थकेजनने ॥ *

वृथादानम् । न॰ परिहासनिमित्त पण्डादिभ्योदेये ॥ धूर्ते बन्दिनिम ल्लेचकुवैद्येकितवेशठे । चारचार णचौरेषुदत्तंभवतिनिष्फलम् ॥

वृथामांसम् । न॰ देवतादिकमनुद्दि श्यसाधितेमांसे ॥ तद्भक्षणेप्रत्यवायभव तीत्युक्तंवह्निपुराणे । यथा । वृथा रेतावृथामांसीवृथावादीवृथामतिः । निन्दकोद्विजदेवानामप्रेतोजाय तेनरइति ॥

वृद्ध । पुं॰ वृद्धदारके ॥ न॰ गन्धद्रव्य विशेषे । शैलजे । शैलेये । अश्मपुष्पे । इन्दू॰च॰छरीला॰इत्यादिभाषाप्र सिद्धे ॥ रूढे ॥ त्रि॰ जीर्णे । प्रवय सि । स्थविरे । जीने । गतयौवने ॥ सप्ततिवर्षानन्तरंवृद्धउच्यते । य था । वृद्धोजनोदुःखशतानिभुङ्क्ते । इ॰ ॥ नतेनवृद्धोभवतियेनास्यप लितंशिरः । योवैयुवाप्यधीयानस्तं देवाः स्थविरंविदुरितिमनुः । वृ द्धस्यप्रत्युत्थायाभिवादनंकार्य्यम् ॥ ज्ञे । पण्डिते ॥ वर्द्धतेस्म । वृधुवृ द्धौ । गत्यर्थेतिक्तः । यस्यविभाषे तिनेट् ॥

वृद्धकाकः । पुं॰ काकोले । द्रोणका के ॥

वृद्धगङ्गा । स्त्री॰ कामरूपपीठस्थनदी विशेषे ॥

वृद्धत्वम् । न॰ स्थाविरे । वार्द्धक्ये ॥ वृद्धस्यभावः । तस्यभावस्त्वतलौ ॥

वृद्धदारक .। पुं० छगलान्त्राम्। विधारा०इ०भा ॥ वृद्धोदारकोऽस्मात् ॥ वृद्धत्वं दारयतिवा। ण्वुल् ॥

वृद्धदारु। न० वृद्धदारके। विधारा०इ०भा०प्रसिद्धे ॥ यथा। वृद्धदारुद्वयगोल्य पिच्छिलकफवातनुत्। वल्यंकासामदोषघ्नं द्वितीयस्त्वपरोर्यदम् ॥

वृद्धनाभि.। त्रि० उन्नतनाभौ। तुण्डिले ॥ वृद्धाउन्नतानाभिरस्य ॥

वृद्धप्रपितामह:। पुं० प्रपितामहस्यजनके ॥

वृद्धप्रपितामही। स्त्री० प्रपितामहस्यजनन्याम् ॥

वृद्धवला। स्त्री० महासमङ्गायाम् ॥

वृद्धवाहन । पुं० आम्रवृक्षे ॥ सुपक्कोवृद्धवाहनइतिकेचित् ॥

वृद्धविभीतक:। पुं० आम्रातके ॥

वृद्धश्रवा.। पुं० सुनासीरे। इन्द्रे ॥ वृद्धेभ्य: शृणोति। श्रुश्रवणे। असुन् ॥ वृद्धोश्रवसोयस्येतिवा। वृद्धेषुपण्डितेषुश्रवोयशोयस्येतिवा।। वृद्धात्वृहस्पतेशृणोतिवा ॥

वृद्धश्रावक:। पुं० कापालिनि ॥

वृद्धसङ्घ.। पुं० वार्द्धके ॥ वृद्धानां सङ्घ: ॥

वृद्धसूत्रकम्। न० इन्द्रतूले। योषाहासि। मरुद्ध्वजे। बुढियाकासूत० इ० भा० ॥

वृद्धा। स्त्री० गतयौवनायाम्। पलिक्न्याम्। जरत्याम् ॥ तदवस्थाकालोयथा। आषोडशाद्भवेद्बालातरुणीत्रिंशतोमता। पञ्चपञ्चाशत: प्रौढाइद्धाभवतितत्परम् ॥ महाश्रावणिकायाम् ॥ अङ्गुष्ठे ॥

वृद्धाङ्गुलि । स्त्री० अङ्गुष्ठे ॥

वृद्धि स्त्री० वर्द्धने। स्फातौ ॥ विष्कम्भादिष्वेकादशेयोगे ॥ तत्रजातस्यफलयथा। प्रसूतिकालेयदिवृद्धिनामायोगोभवेद्विनयान्वितस्य। धनप्रयोगग्रहणेमुदस्त्रोविचक्षणस्यात्क्रयविक्रयाभ्यामिति ॥ अष्टवर्गौषधान्तरे। योग्यायाम्। ऋद्धौ। सिद्धौ। लक्ष्म्याम् ॥ अस्यागुणायथा। ऋद्धिवृद्धिस्तुमधुरासुस्निग्धातिक्तशीतला। कफमेधाकरीमेध्याशुक्रकृमिहरापरा ॥ प्रयोगेष्वनयोरेकयथालाभप्रयोजयेत्। यत्रयद्धातुमिष्टि: स्याद्वयमप्यत्रयोजयेदितिराजनिर्घण्ट. ॥ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणानामगुणायथा। ऋद्धिवृद्धिश्चकन्दौभवत: कोशयामले। श्वेतलोमान्वित: कन्दोलताजात. सरन्ध्रक. ॥ सएवऋद्धिवृद्धिश्चभे

द्मप्येतयेर्ब्रुवे । तूलग्रन्थिसमोऽव्द्धिर्वामावर्त्तफलाचसा ॥ वृद्धिस्तुदक्षिणावर्त्तफलाप्रोक्तामहर्षिभि । ऋद्धिर्योग्य सिद्धिलक्ष्मी वृद्धेरप्याह्वयाइमे ॥ ऋद्धिर्बल्या विदोषघ्नीशुक्रलामधुरागुरु । प्राणैश्वर्यंकरीमूर्च्छारक्तपित्तविनाशिनी॥ वृद्धिर्गर्भप्रदाशीताबृंहणीमधुरास्मृता । वृष्यापित्तास्रशमनी-क्षतकासक्षयापहा ॥ राज्ञामप्यष्टवर्गस्तुयतोयमतिदुर्लभः । तस्माद्स्यप्रतिनिधिग्रहणीयात्तद्गुणभिषक्॥ मूलग्रहश्च . प्रतिनिधि ॥ प्रतिनिधिमाह । मेदाजीवककाकोलीऋद्धिद्वन्द्वेपिचासति । वरीविदार्यश्वगन्धावाराहीश्चक्रमात्क्षिपेत् ॥ मेदामहामेदास्थानेशतावरीमूलम्० जीवकर्षभकस्थाने विदारीमूलम्० काकोलीक्षीरकाकोलीस्थानेऽश्वगन्धामूलम्० ऋद्धिवृद्धिस्थानेवाराहीकन्दगुणैस्तुल्यक्षिपेत ॥ कलान्तरे । वृद्धौ । लाभे । सूद्० व्याज० हू० भा० ॥ अभ्युदये ॥ समृद्धौ ॥ हर्षे ॥ मुष्कवृद्धौ । कुरण्डरोगे । श्लेषेये ॥ धने ॥ समूहे ॥ नीतिवेदिनांक्षयादित्रिवर्गान्तर्गतवर्गविशेषे ॥ क्रासाभावे ॥ वर्द्धनम् । वृधुवृद्धौक्तिन् । वर्द्धतेऽनयावा ॥ उक्त

कर्णोनमूलधनातिरिक्तग्राह्यधने ॥ वृद्धिका । स्त्री० ऋद्धिनामौषधौ ॥ वृद्धिजीविका । स्त्री० अर्थप्रयोगे । कुसीदे । ऋणदानजीविकायाम् ॥ वृद्ध्याजीविका ॥ वृद्धिजीवी । त्रि० कुसीदिके ॥ वृद्ध्यर्थंद्रव्यवृद्धि । तयाजीवितुशीलमस्य । णिनि ॥ वृद्धिद । पुं० जीवके ॥ शूकरकन्दे । त्रि०वृद्धिदायिनि ॥ वृद्धिश्राद्धम । न० आभ्युदयिकश्राद्धे ॥ नान्दीमुखश्राद्धे ॥ वृद्धोक्ष । पुं० जरद्गवे । वृद्धवृषे । वृद्धश्चासावुक्षाच । अचतुरेतिसाधु ॥ वृद्ध्याजीव । त्रि० वृद्धिजीविनि । कुसीदिके ॥ वृद्धिराजीवोजीविकाऽस्य ॥ वृधसान । पुं० मनुष्ये ॥ वर्द्धते । वृधु० । ऋञ्जिवृधिमन्दिसहिभ्यः किदित्यसानच् ॥ वृन्तम् । न० फलपत्रादिर्येनधार्यते तत्र । प्रसवबन्धने । बेंटा०बोंटा० हू०भा० ॥ वृणोति । वृञ्० । बाहुलकाद्धिधृणीतिक्तोनुम्च ॥ घटीधारायाम् ॥ कुचाग्रे । स्तनमुखे ॥ वृन्ताकम् । न० वार्ताकौ । अस्यगुणायथा। वृन्ताकंकफपित्तघ्नत् ॥ अ

पिच । वृन्ताकस्वादुतीक्ष्णोष्णंकटु, पाकमपित्तलम् । ज्वरवातबला सघ्नदीपनशुक्रलम्लघु ॥ तद्बालं कफपित्तघ्नं वृद्धंपित्तकरंगुरु ॥ वृन्ताकंपित्तलंकिञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघुदीपनम् । तदेवहिगुरुस्निग्ध सतैललवणान्वितम् ॥ अपरश्वेतवृन्ताककुक्कुटाण्डसमं भवेत् । तदर्शःसुविशेषेणहितंहीनञ्चपूर्वतः ॥ पूर्वतः. कृष्णात् ॥ भोजनंधिगवृन्ताकंवृन्ताकंधिगवृन्तकम् । सवृन्तं धिगतैलाढ्यं सतैलंधिगरामठम् ॥ सर्वासांशाकजातीनांवृन्ताकंशाकनायकम् ॥

वृन्ताकी । स्त्री० वार्ताक्यां ॥

वृन्तिका । स्त्री० वृन्तितायाम । कटुक्याम् ॥

वृन्दः । पु० दशार्बुदे । शतकोटौ । महार्बुदे । अजे ॥ न० समूहे ॥ वृणोति वृणभक्ते । वृन्दादयश्चेतिसाधुः ॥

वृन्दा । स्त्री० तुलस्याम् ॥ जलन्धरस्य पत्न्याम् ॥ केदारराजकन्यायाम् ॥ राधाषोडशनामान्तर्गतनामविशेषे ॥

वृन्दारः । त्रि० मनोज्ञे ॥

वृन्दारकः । पुं० अमरे । देवतायाम् । सुरे । प्रशस्तंवृन्दंयस्य सः । शृङ्गवृन्दाभ्यामारकन् । स्त्रियांसूत कापुत्रिकावृन्दारकाणावेतिवक्तव्यमिति० वृन्दारका० वृन्दारिकेत्युभयम् ॥ यूथपतौ ॥ यथा । वृन्दारकः सुरश्रेष्ठे मनोज्ञे यूथपातरीतिव्याडिः ॥ त्रि० मनोज्ञे ॥ श्रेष्ठे ॥

वृन्दावनम् । न० स्वनामप्रसिद्धे तीर्थविशेषे ॥ वृन्दावनेकेशजालसमानाश्चीचदेवता । भूतेशोभैरवस्तत्रसर्वसिद्धिप्रदायकः ॥ ब्रह्मागमः ॥ वृन्दायचतपस्तेपितत्तु वृन्दावनं स्मृतम् । वृन्दयाचकृता क्रीडातेनवामुनिसत्तम ॥ इतिपुराणम् ॥ वृन्दायावनम् ॥

वृन्दावनेश्वरः । पु० श्रीकृष्णे ॥

वृन्दावनेश्वरी । स्त्री० राधायाम् ॥

वृन्दिष्ठः । त्रि० अतिवृन्दारके ॥ अयमेषामतिशयेनवृन्दारकः । इष्ठन् । प्रियस्थिरेतिसाधुः ॥

वृन्दीयान् । त्रि० वृन्दारकतरे ॥ अयमनयोरतिशयेनवृन्दारकः । ईयसुनि० प्रियस्थिरेतिवृन्दारकस्यवृन्दादेशः ॥

वृष. । पु० आर्द्रके ॥ मूले ॥ वृणोति ॥ वृञ्० । जनिदेश्यादिनाशक् ॥ उन्दुरौ ॥

वृषा । स्त्री० औषधीविशेषे ॥

वृश्चिकः । पुं० अलौ । द्रुमे । विच्छू० हि० भा० प्र० ॥ वृश्चिकविषस्यलक्षण

यथा । दहत्यग्निरिवाद्गौ च भिन-
त्तीवोर्द्धमाशु च । वृश्चिकस्य विषं
यातिपश्चाद्दंशेऽवतिष्ठते ॥ औषध
न्तु । जीरकस्य कृतः कल्को घृतसै
न्धवसंयुतः । सुखोष्णो मधुनालेपा
द्वृश्चिकस्य विषं हरेत् ॥ गन्धमाघ्राय
मृदितं सूर्य्यावर्त्तदलस्य तु । वृश्चिकै
र्न नरो विद्धः क्षणाद्भवति निर्विषः
॥ अष्टमराशौ ॥ तत्र जातस्य फ
लं यथा । वृश्चिकोदयसञ्जातः शौ
र्य्यवानतिदुष्टधीः । भवेद्विद्वज्जनस
म्पन्नो विग्रही सुभगः सुधीः ॥ शू
ककीटे । शुयपोका० इ०भा०प्र०
॥ ओषधीविशेषे ॥ वृश्चति । ओव्र
श्चू छेदने । व्रश्चिकृषोः किकन् ।
ग्रहिज्येति सम्प्रसारणम् ॥

वृश्चिकप्रिया । स्त्री० पूतिकायाम् ॥

वृश्चिकर्णी । स्त्री० आखुकर्ण्याम् ॥

वृश्चिका । स्त्री० क्षुद्रक्षुपविशेषे ।
नखपर्ण्याम् । पिच्छिलायाम् । अ
लिप्रियायाम् ॥

वृश्चिकाधिप । पुं० मङ्गले ॥

वृश्चिकाली । स्त्री० क्षुपविशेषे ।
वृश्चिपत्र्याम् । विषघ्न्याम् ।
सर्पदंष्ट्रायाम् । भूरिदुग्धायाम् ।
भासुरपुष्पायाम् । बिछाटी० इ०
गौ०भा० ॥ वृश्चिकाली विषघ्नी
तु कासमारुतनाशिनी ॥

वृश्चिपत्री । स्त्री० वृश्चिकाल्याम् ॥

वृश्चीरः । पुं० श्वेतमूलपुनर्नवा-
याम ॥

वृषः । पुं० धर्म्मे ॥ वर्षति फलम् । वृ
षु श्रेष्ठे सेचने च । इगुपधेति कः ॥
वर्षयात् सर्व्वकामान् धर्म्मो वृषः
इति शङ्करभाष्यम् ॥ बलीवर्द्दे ।
उक्षणि । भद्रे । ऋषभे । वृषभे ।
अनडुहि । सौरभेये । गवि ॥ शि
ववाहनवृषस्य स्वरूपं यथा । शृङ्गायु
धः शुक्लकायश्चतुष्पाद्सितचुरः
। बृहत्ककुत् कृष्णपुच्छः श्यामस्क
न्धो वृषः स्मृतः इति ॥ वृषोत्सर्ग
वृषे ॥ तल्लक्षणं यथा । चरणानि मु
खं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णश्च तं नीलमिति नि
र्द्दिशेत् ॥ एवंविधवृषाभावेऽन्यो
वृषभो योयस्योपादेयः सोप्युक्तः ।
वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्य
ते । तथा । श्वेतोदरः कृष्णपृष्ठो
ब्राह्मणस्य प्रशस्यते ॥ स्निग्धरक्तेन व
र्णेन क्षत्रियस्य प्रशस्यते ॥ काञ्चना
भेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः ॥
इति । वृषोत्सर्गकालस्तु अशौचान्त
द्वितीयदिनम् । कार्त्तिकी चैत्री रे
वती युताश्विन पूर्णिमा चेति ॥ स्मृ
त्याम् ॥ चतुर्विधपुरुषमध्ये पुरु
षविशेषे ॥ तल्लक्षणन्तु । बहुगुण
बहुवन्धः शीघ्रकामोनताङ्गः सक
लरुचिरदेहः सत्यवादी वृषोयमि

ति । तावुरिसन्ने द्वितीयराशौ एतद्राशिजातफलं यथा । स्थिरमतिसुमतिकमनीयतां कुशलतां हिन्दुषामुपभोगताम् । वृषगतोऽहिम गुर्भ्रमादिशेत्सुकृतिनं कृतिमन्मसुखान्यपि ॥ तल्लग्नजातस्य फलन्तु । वृषलग्ने भवेज्जातो गुरुभक्तः प्रियम्वद । गुणी कृती धनी लुब्धः शूरः सर्वजनप्रियइति ॥ उत्तरपदस्थः श्रेष्ठे ॥ वासे । वासके । चटरूपे ॥ मूषिके ॥ शुक्रसे । वास्तुस्थानभेदे ॥ रिपौ ॥ कामे ॥ बलवति ॥ ऋषभनामौषधे ॥ वर्षतिफलमधुकामादीन् । वृषु० । इगुपधेतिकः ॥ वृष्यप्रयोगे ॥ श्रीकृष्णे ॥ पुण्ये ॥ वत्सरविशेषे ॥ यथा । कोद्रवाः शालिमुद्गाश्च सक्तुमाषास्तथैव च । महार्घं जायते सर्वं वृषे च सुरवन्दिते ॥ १५ ॥ न० अर्थे ॥ पिच्छे ॥ वेतसे ॥ त्रि० पुष्यवति ॥

वृषकर्णी । स्त्री० सुदर्शनायाम् । सुदर्शनशब्दे० द्र० गौ० भा० ॥

वृषकर्मा । पु० भगवति । वृषोधर्मं लक्षणं कर्मास्य ॥

वृषकेतु । पुं० कर्णस्य पुत्रे ॥

वृषगन्धा । स्त्री० अजान्त्र्याम् ॥

वृषचक्रम् । न० कृषिकर्मोक्तवृषाकारचक्रे ॥

वृषण । पुं० मुष्के । अण्डकोषे । वृषणौ भवतः सारौ कफासृङ्मासमेदसाम् । वीर्यवाहिशिराधारौ वृषणौ पुरुषावहौ ॥ स्थूललिङ्गो दरिद्रः स्यादुत्स्यो कल वृषणो भवेत् विषमैर्वृषणैर्लोलो नृपः स्याद्वृषणैः समैः ॥ प्रलम्बवृषणोल्पायुर्निर्द्रव्यो मणिभिर्भवेत् ॥ वर्षति । वृषु सेचने । बाहुलकात्क्युः । बहुलमन्यत्रेति युज्वा । तस्याप्रवर्तत्वा दणाभावः ॥

वृषणश्व । पु० इन्द्रस्याश्वे । उच्चैःश्रवसि । श्वेतहये ॥

वृषणवसु । न० इन्द्रस्यवने । नन्दने । कान्दसारे ॥

वृषदंशकः । पुं० आखुभुजि । बिडाले । वृषान्मूषिकान्दशति । दंश० । कर्मण्यण् । स्वार्थेकन् ॥

वृषध्वजः । पुं० वृषाङ्के । शिवे ॥ वृषोध्वजश्चिह्नमस्य ॥ हेरम्बे ॥ पुण्यकर्मणि ॥

वृषा । पुं० कर्णे ॥ महेन्द्रे ॥ वृषभे ॥ तुरगे ॥ वर्षति । वृषु० । कनिन् युवृषितक्षिराजौत्यादिना० कनिन् ॥

वृषनाशनः । पुं० विडङ्गे ॥

वृषपतिः । पुं० शिवे ॥ षण्ढे ॥

वृषपत्रिका । स्त्री० वस्तान्त्र्याम् । अजान्त्र्याम् ॥

वृषपर्णी । स्त्री० वृक्षविशेषे । दृश्या

स्याम् । चक्राङ्ग्याम् ! सुदर्शनायाम् । पुराती॰ङ्॰गौ॰भा॰ ॥ चाखुपर्ण्याम् ॥

वृषपर्व्वा । पुं॰ अन्धकसूदने । शम्भौ । ईशे ॥ दैत्यप्रभेदे ॥ शृङ्गारिथि ॥ कशेरौ ॥ वृषरूपाखिपर्वास्य ॥

वृषभ ' । पुं॰ श्रेष्ठे ॥ गवि । वृषे ॥ ओषधीभेदे । शृङ्ग्याम् ॥ वर्षति सूते थभूमिसिद्धति । वृषु॰ । ऋषिवृषिभ्यांकिदित्यभच् ॥ आदिजिने ॥ कर्णरन्ध्रे ॥

वृषभगति : । पुं॰ हरिहार्थे । शम्भौ । वृषभे थगतिर्यस्य ॥

वृषभध्वज : । पुं॰ महेश्वरे । शिवे ॥ वृषभोध्वजश्चिह्नमस्य ॥

वृषभाख ' । पुं॰ श्रीकृष्णे ॥ सर्वकामाभिवर्षकेषश्रियोयस्स ' । वसु श्रीहाविति षच् ॥ वृषभोधर्म्मोहष्टिरस्यवा ॥

वृषभाक्षी । स्त्री॰ इन्द्रवारुण्याम् ॥

वृषभानु ' । पुं॰ सुरभानुपुर्थे । राधिकापितरि ॥

वृषभासा । स्त्री॰ अमरावत्याम् ॥

वृषय ' । पुं॰ आश्रये ॥ वृषोति । वृञ् वरणे । वृषो मुकट्कौचेतिकयन्॰धातो : षुगागमश्च ॥

वृषल : । पुं॰ गञ्जने ॥ शूद्रे । चन्द्रगुप्तन्दपे ॥ वाजिनि । तुरगे ॥ अधार्मिके ॥ वृष्यति॰वर्षतिवा । वृषु॰ । वृषादिभ्यश्चिदितिकल । वृषधर्म्मं लुनातिवा । लूञ्॰ । अन्येभ्योपीतिड ॥ वृषलातिवा । ला॰ । क ॥ वृषोहिभगवान्धर्मस्तस्य य कुरुतेह्यलम् । वृषलंतंविदुर्द्देवा स्तस्माद्धर्मनलोपयेत् ॥

वृषलपति । पुं॰ शूद्रे॰चोराणारास्नि ॥

वृषलवृत्ति ' । पुं॰ शूद्रोपक्रमवृत्तौ ॥

वृषली । स्त्री॰ शूद्रायाम् ॥ जातित्वान्ङीष् ॥ चौमार्थे ॥ निरुक्तस्सकुर्वन्ति । वृषस्यन्तीयपलयतिभर्त्तारमिति॰वृषली॰ब्राह्मणस्यपरिणीताब्राह्मण्यपिवृषलीति॰श्राद्धभुग्वृषलीतल्पमित्यत्रकुल्लूकभट्ट . ॥ वन्ध्यातुवृषलीज्ञेया॰वृषलीतुमृतप्रजा । अपरावृषलीज्ञेयाकुमारीयारजस्वला ॥ पितृगेहेषविवाहितायांरजस्वलायांकन्यायां ॥ यथाऽविवाह्यपी । पितुर्गेहेचयाकन्यारज ' पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्या : साकन्यावृषलीस्मृता ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्त्येयतंविद्याद्वृषलीपतिमिति ॥ स्वपतिपरित्यज्यपरपतिगामिन्याम् । यथा । स्वपत्यापरित्यज्यपरवृषे॰वृषायते । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ॥

वृषलीपति : । पुं॰ सवर्णामपरिणीय कृतशूद्राविवाहे ॥ वृषल्या पति ॥ यस्तुतावरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयंतंविद्याद्वृषलीपतिम् ॥ यदिशूद्रांव्रजेद्विप्रोवृषलीपतिरेवस । तापितुर्गृहेसज्ञातरजस्काम् ॥

वृषलीफेन । पुं॰ शूद्रायाअधररसे ॥

वृषलोचन । पुं॰ मूषिके ॥ त्रि॰ वृषनयने ॥

वृषवाहन : । पुं॰ शिवे ॥

वृषशत्रु : । पुं॰ विष्णौ ॥ क्लि॰त्रि॰ष: ॥ बिडाले ॥

वृषस्कन्धो । पुं॰ भृङ्गरोलि ॥

वृषस्यन्ती । स्त्री॰ कामुक्याम् । मैथुनेच्छावत्याम् ॥ वृषनर॰ शुक्रलवा ॰ इच्छत्यात्मन : । सुपआत्मन : क्यच् । अश्वक्षीरवृषलवणानामात्मप्रीतौक्यचौतिसुक् । लट . शतृ । उगितश्चेतिङीप् ॥

वृषा । स्त्री॰ मूषिकपर्ण्याम् ॥ कपिकच्छ्वाम् ॥ वर्षति । वृषिरिगुपधेति क : । टाप् ॥

वृषाकपायी । स्त्री॰ श्रियाम् ॥ गौर्य्याम् ॥ वृषाकपि स्त्रीतिपुंयोगार्थे॰ वृषाकप्यग्निकुसितकुसिदानामुदात्तइत्यैकारादेशोङीप् च ॥ शर्व्याम् । शतावर्याम् ॥ जीवन्त्याम् ॥ श्यामाम् ॥ स्वाहायाम् ।

वृषाकपि : । पुं॰ हरे । स्मरहरे ॥ कृष्णे । वासुदेवे ॥ वर्षणात्सर्वकामानांधर्मोवृष । कात्तोयात्भूमिमपादितिकपिर्वराह । वृषत्वात्कपिरूपत्वाच्चवृषाकपि : । कपिर्वराहःश्रेष्ठश्चधर्मश्चवृषउच्यते । तस्माद्वृषाकपिंप्राहकश्यपोमांप्रजापतिरितिमहाभारतम् ॥ जातवेदसि । अग्नौ ॥ वृषधर्मनकम्पयति । कापाकपिश्चलने । कुटिलकम्प्यान्लोपश्चेति॰क्रु : । वृषाद्धर्मात्कम्पयतिदुष्टानितिवा ॥ यद्वा । वर्षतिकामान् । वृषु॰ । इगुपधेतिक । आकम्पयतिपापानि । पूर्ववद्भि । वृषश्चासावाकपिश्च ॥ यद्वा । वृषाइन्द्रेण आकम्प्यते॰आकम्प्यतेवाऽस्मात् ॥ यद्वा । वृषोधर्मो॰वृषाइन्द्रोवा॰कपिरिवयस्य ॥ यद्वा । वृषश्चासौ कपिर्वराह । शाकपार्थिवादि : । अन्येषामपीतिदीर्घ ॥ यद्वा । वृषाइन्द्रस्य॰अकम् वृषाकम् पिबति॰पिबतौ । अन्तर्भावितण्यर्थोवा । इन्द्रदु . खप्राप्नोति॰प्रापयतिवादैत्यान्॰रक्षकत्वात् । विधिसञ्ज्ञापूर्वकत्वान्नगुण : । किपितु आगमशास्त्रस्यानित्यत्वाज्ज्ञतुक् ॥

वृषाकर । पुं॰ माषे ॥

वृषाकृति : । पुं॰ विष्णौ । नारायणे ।

भू॰ । भुव : सत्तान्तरयोरिति-
क्विप् ॥

वृष्णि : पुं॰ यादवे ॥ मेषे ॥ श्रीकृ
ष्णे ॥ वर्षति । वृषु॰ । सृवृषि
भ्यांकिदितिनि ॥ त्रि॰पाषण्डे ॥
चण्डे ॥

वृष्णिगर्भः । पुं॰ श्रीकृष्णे ॥ वृष्णि
र्गर्भोयस्यस : ॥

वृष्य : । पुं॰ माषे ॥ न॰वाजीकर
णे ॥ त्रि॰शुक्रवृद्धिकारकौषधा
दौ ॥ वृष्यते । वृषु॰ । विभाषाकृ
वृषोरितिक्यप् । पक्षे ख्यतितु॰व
र्ष्यम् ॥ वृषायहितो ॥ वृषायका
मुकायहितम् । खलयवमाषेति-
यत् ॥

वृष्यकन्दा । स्त्री॰ विदार्याम् ॥

वृष्यगन्धा । स्त्री॰ वृद्धदारके ॥

वृष्यगन्धिका । स्त्री॰ अतिबलायाम् ॥

वृष्यवल्लिका । स्त्री॰ विदार्याम् ॥

वृष्या । स्त्री॰ ऋद्धिनामौषधे ॥ शता
वर्याम् ॥ आमलक्याम् ॥

वृसी । स्त्री॰ व्रतिनामासने । ब्रह्म
चार्याद्यासने ॥ व्रुवन्त : सीदन्त्य
स्याम् ॥ पृषोदरादित्वाद्व्रुवच्छ
ब्दस्य॰वृ॰आदेश : । अन्येत्वपीत्य
धिकरणे ड : ॥

वृहच्चक्षु : । पुं॰ महाचक्षुःशाकेपक्षि
विशेषे । दीर्घपादे । कुलङ्ग॰-
भा॰ ॥

वृहच्चित्त : । पुं॰ बीजपूरे ॥

वृहच्छल्क । पुं॰ चिङ्गटमत्स्ये ॥

वृहच्छ्कुका । पुं॰ दार्वाघाटे । काठ
ठोकरा॰इतिख्यातेखगे ॥

वैकट । पुं॰ वैकटिके । मणिकारे ।
मणिआरा॰इ॰भा॰प्र॰भेकटी॰इ॰
गौ॰देशभाषाप्रसिद्धमत्स्ये ॥ यू
नि । जाततारुण्ये ॥ विदूषके ॥

वेग : । पुं॰ जवे । रंहसि । रये ।
स्यदे ॥ प्रवाहे । ओघे । धारायो
म् ॥ किम्पाके । महाकालफले ॥
रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा ।
वेगान्नधारयेज्जातुविण्मूत्रपवनात्
थधाम् ॥ अपिच । वेगरोधेन
स्त्र्योत्पन्यक्रोधवेगत ॥ पुन
श्च । स्वभावत : प्रवृत्तानांमलादी
नांजितोविषु । नवेगान्धारयेद्वी
र कामादीनाञ्चधारयेदिति ।
पृथिव्यादिचतुष्टयमनोवृत्तौसंस्का
रे । वेजनम् । ओविजीभयचलन
यो : । घञ् ॥

वेगनाशन : । पुं॰ श्लेष्मणि ॥

वेगवान् । पुं॰ ईश्वरे ॥ त्रि॰ वेगि
नि ॥ वेगोजवोऽस्यास्ति । मतुप् ॥

वेगवती । स्त्री॰ अर्द्धसमवृत्तभेदे ॥
यथा । विषमेप्रथमाक्षरहीनदोध
कमेवहिवेगवतीस्यात् ॥ यथा ।
स्मरवेगवतीव्रजरामाकेशववंशरवै
रतिमुग्धा । रभसाव्रगुरूनृगणय

न्तौकेलिनिकुञ्जरक्षायजगाम ॥

वेगसर । पु॰ वेगिहये ॥

वेगित । त्रि॰ सञ्जातवेगे । वेगविशिष्टे ॥ वेगः सञ्जातोऽस्य । तारकादित्वादितच् ॥

वेगी । पुं॰ श्येनपक्षिणि ॥ त्रि॰ वेगवति । तरस्विनि । जाङ्घिके ॥ अतिशयितोवेगोऽस्य । अतइनि ॥

वेगिहरिण । पुं॰ श्रीकारीमृगे ॥

वेङ्कट । पुं॰ द्रविडदेशस्थेऽचलविशेषे ॥

वेचा । स्त्री॰ मूल्ये ॥ विचिर्॰ । अच् । टाप् ॥ वेचामूल्यञ्चवेतनमितिहलायुध ॰ ॥

वेजानी । स्त्री॰ सोमराज्याम् ॥

वेजित : त्रि॰ भीते ॥

वेडम् । न॰ सान्द्रविच्छिन्नचन्दने ॥

वेडा । ) स्त्री॰ नौकायाम् ॥
वेडी । )

वेण । पुं॰ अङ्गात्सुनीथायामुत्पन्ने पृथो पितरि ॰ ॥ सतृपुत्रेणतुजातेनवेणोपिचिदिवंययौ । पुन्नाम्नोनरकात्त्रात ॰ सतेनसुमहात्मनेतिविष्णुपुराणम् ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वैदेहकेनत्वम्बष्ठामुत्पन्नोवेणउच्यतइतिमनु : ॥

वेणा । स्त्री॰ भारतवर्षस्थनदीविशेषे ॥

वेणि । स्त्री॰ वेण्याम ॥ वेति॰ वीयतेवा । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु । वीज्याज्वरिभ्योनि । बाहुलकात्सत्वम् ॥ यद्वा । वेणति । वेणृ॰ । इन् ॥

वेणिवेधिनी । स्त्री॰ जलौकायाम् ॥

वेणी । स्त्री॰ केशबन्धे । प्रवेण्याम् । प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे ॥ यथा । जटानेयवेणीकृतकचकलापोनगरलगलेकस्तूरीयंशिरसिशशिरेखानतिलकम् । इयभूतिर्नाङ्गेप्रियविरहजन्माधवलिमापुरारातेर्भ्रान्त्याकुसुमशरकिमाव्यथयसि ॥ देवताडे ॥ नद्यादेरन्तरे ॥ सेतौ ॥ प्रवाहे ॥ मेण्याम् ॥ नदीविशेषे ॥ वेणति । वेणृगतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ इन् । कृदिकारादितिङीष् ॥

वेणीर ॰ । पुं॰ अरिष्टवृक्षे ॥

वेणु : । पुं॰ नृपविशेषे ॥ त्वक्सारे । वंशे ॥ वंशवाद्ये ॥ यथा । महानन्दस्तथानन्दोविजयोथजयस्तथा । चत्वारउत्तमाव शामतङ्गमुनिसम्मता ॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल । द्वादशाङ्गुलमानस्तुविजय परिकीर्त्तित । चतुर्दशाङ्गुलिमितोजयइत्यभिधीयते ॥ वेणति । वेणृगत्यादौ । बाहुलकादु ॥ यद्वा । अ

शे ॥ फलिन्याम् ॥ पुं॰ असुरविशे
षे ॥
वेत्रधर . । पुं॰ द्वारपाले ॥
वेत्रधारकः । पुं॰ द्वा स्थिते ॥
वेत्रवान् । त्रि॰ वेत्रधारके ॥
वेत्रवती । स्त्री॰ नदीविशेषे ॥ सातुमा
लवदेशात्॰कालपीसमीपेयमुनायां
मिलिता ॥ वेत्रासुरमालरि ॥ वेत्रा
णिसन्त्यस्याम् ' मतुप् । ङीप् ॥
वेत्रावती । स्त्री॰ वेत्रवत्यानद्याम् ॥
वेत्रासनम् । न॰ वेत्रनिर्मितासने ।
आसन्द्याम् ॥ स्याद्वेत्रासनमासन्दी
ति॰हेमचन्द्र . ॥
वेत्रासुर । पु॰ असुरविशेषे ॥
वेत्री । पु॰ द्वारपाले ॥ त्रि॰वेत्रयुक्ते ॥
वेद । पुं॰ आम्नाये । श्रुतौ । अनौ
पगृहीतवर्णात्मन्यपौरुषेयवाक्ये ॥
वेदयतिबोधयतिआत्मानम् । विद
ज्ञाने । कृत्यतोऽश्नात्पचाद्यच्
॥ नार्थंबुद्वावेदसृष्टि . कालिदासा
द्विवाक्यवत् । किन्तुश्वासवद्यत्नो
त्पन्नादतोऽपौरुषेयता ॥ यथाहुरा
र्यायामाचार्याः । वेदोऽनादितया
वायद्वापरमेश्वरप्रणीततया । भवति
परमप्रमाणं बोधेनास्तिस्वतश्चपरतो
वा ॥ नापेक्षतेयदन्यद्यदपेक्षन्ते ऽ
खिलानिमानानि । वाक्यतस्लिंग
मानामानत्वस्यायतीन्द्रियावगतौ ।
मानंप्रबोधयन्तं बोधमानेनयेतुभुक्ता
न्तें । एषोभिरेवदृष्टनदग्धुंवाञ्छन्ति
तेमहात्मान ' ॥ ४६ ॥ वेदोनादिर
मुख्यव्यञ्जकईशः स्वयप्रकाशात्मा ।
तदभिव्यक्तिमुदीच्यप्रोक्तोसौसूरि
भि ' प्रमाणमिति ॥ रूपाणामव
लोकेचक्षुरिवान्यत्रकारणदृष्टम् । त
द्वदृष्टावगतौवेदवदन्योनवेदकोहे
तुः ॥ निगमेषुनिश्चितार्थंतन्त्रं का
श्यपादिप्रकाशयति । तदिदमनुवा
दमाचप्रामाण्यं तस्यसिद्धतिनक्वि
चित् ॥ अमद्वयवर्तिनिगमेसाधयति
द्वैतमेवएकोंश । अद्वैतमेववस्तुप्र
तिपादयतिप्रसिद्धमपरोंश ॥ ५० ॥
सचवेदामन्त्रब्राह्मणभेदाद्विविध ।
विधिमन्त्रनामधेयनिषेधार्थवादभेदात्
पञ्चविधश्चभवति ॥ अज्ञातज्ञा
पकोवेदइतिप्रमाणविद ' ॥ अ
तोवेदार्थज्ञानप्रशंसामाहकूर्मपुराण
म् । नवेदपाठमात्रेणसन्तोषका
रयेद्बुध . । पाठमात्रावसानस्तुपङ्के
गौरिवसीदति ॥ योऽधीत्यविधिव
द्विप्रोवेदार्थंनविचारयेत् । ससान्व
य शूद्रसम ' पात्रतांनप्रपद्यते ॥
व्यासस्य । वेदस्याध्ययनसर्वंधर्मशा
स्त्रस्यचापियत् । अजानतार्थंतत्स
र्वंतुषाणाकण्डनयथा ॥ यथापशुर्भा
रवाहीनतस्यभजतेफलम् । द्विजस्त
थार्थानभिज्ञोनवेदफलमश्नुते ॥ पा
ठमात्रवतोनित्यं द्विजातीनांस्वार्थवर्जि

तान् । पशूनिबचतानप्राक्षोवाङ्माचेयापिनार्चयेत् ॥ श्रुतहीनमधीतयन्नेहनःसुचतन्नवेत् । श्रुतन्तु केवलमपिसमुद्धारायकल्पते । योधीतेनार्थतत्त्वज्ञस्तस्यतद्धारणाद्द्वथा । भारवाहीसभृतकः केवलक्लेशभागभवेत् ॥ तस्मादर्थपरिज्ञानेयत्नःकार्योविजानता । ज्ञानकर्मंचसयुक्तयुक्तार्थंकथितमया ॥ अधीतश्रुतसयुक्तं तथाश्रेष्ठंनकेवलम् । अधीत्ययत्किञ्चिदपितदर्थमवबुध्यच । स्वर्गलोकमवाप्नोतिधर्मानुष्ठानविद्द्विज : इति । अपिच । वेदार्थज्ञोजपजप्त्वातथैवाध्ययनंद्विज । कुर्वन्स्वर्गमवाप्नोतिनरकान्तुविपर्यये॰इतिव्यास ॥ मनु : । वेदशास्त्रार्थतत्त्वज्ञोयचतत्राश्रमेवसेत् । इहैवलोकेतिष्ठन्सब्रह्मलोकायकल्पते इति । व्यास । समुच्चितलोकमपिश्रुताधीतविशिष्यते । चतुर्णामपिवेदानाकेवलाध्ययनाद्द्विजा ॥ अन्तेभ्योग्रन्थिन : श्रेष्ठाग्रन्थिभ्योधारिणोवरा । धारिभ्यस्त्वार्थतत्त्वज्ञास्तेभ्योप्यध्यात्मचिन्तका : ॥ पुस्तकेवेदलिखननिषेध । पाद्मोत्तरखण्डे ११० ऽध्यायेयथा । वेदस्यलिखनकृत्वाय : पठेद्ब्रह्महाभवेत् । पुस्तकवाप्टहेस्थाप्यवज्रपातोभवेद्ध्रुवमिति ॥ विदन्त्यनेनधर्मम् । विदज्ञाने । इलर्थेतिघञ् ॥ वेदार्थवेदमहेतुत्वाद्दाकरणे ॥ व्याकरणेनहिपदादिविभागशक्त्यग्वेदादयोज्ञायन्ते ॥ अनुभवे । भावेघञ् ॥ इत्ती ॥ कोशवे ॥ इन्द्रियादिदेवताप्रकाशके ॥ मौनशरीरावच्छेदेनभगवन्तःक्यमितिन्यायशास्त्रम् ॥

वेदगर्भ । पु॰ अजयोनौ । ब्रह्मणि ॥ ब्राह्मणे ॥ वेदोगर्भेयस्यस ॥

वेदगर्भा । स्त्री॰ दुर्गायाम् । वेदजननित्याम् ॥ अस्यमहतोभूतस्यनिश्वसितमेतद्द्वग्वेद इत्यादिश्रुते । म मेवाद्यापराशक्तिर्वेदसञ्ज्ञापुरातनी । ऋग्यजु : सामरूपेणसर्गादौसप्रवर्त्तत इतिकूर्मपुराणे द्वादशाध्यायेश्री भगवद्वाक्ये तथाचचत्वारोवेदा : साङ्गा : सरहस्याबहुधाभिन्ना : । एकशतमध्वर्युशाखा । सहस्रवर्त्मा सामवेद : । एकविंशतिधावाह्वृच्यम् । नवधाथर्वणोवेदइतिमहाभाष्यम् ॥

वेदज्ञ । त्रि॰ वेदपारगे ॥ वेदंजानाति । ज्ञा॰ । आतोनुपसर्गेइतिक ॥

वेदनम् । न॰ अनुभूतौ । सवेदने ॥ विदज्ञाने । ल्युट् चेति॰ल्युट्कोबत्वम् ॥ विवाहे ॥

वेदना । स्त्री॰ ज्ञाने ॥ दु : खे । पीडायाम् ॥ विदवेदनाख्यानविवासेषुचुरादि : । ण्यासेतियुच् ॥ व

दृ। विदन्त्याने। चर्च्चिभिर्विदिभ्य श्चेतिवाच्यमितियुच्॥

वेदनास्कन्ध। प॰ विषयज्ञानप्रपञ्चे। विज्ञानस्कन्धजन्ययो सुखदुःखयो याप्रियाप्रियानुभवविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्थाचित्तस्य जायते॰ सवेदनास्कन्धइतिवाचस्पतिः। सुखादिप्रत्ययोवेदनास्कन्ध इत्यानन्दगिरि।

वेदनिन्दकः। पु॰ नास्तिके। वेदनिन्दाकरे॥ वेदंनिन्दति। णिदिकुत्सायाम्। ण्वुल्॥

वेदपारग। पु॰ मन्त्रब्राह्मणात्मकशाखाध्यायिनि॥ त्रि॰ अवगतवेदार्थतत्त्वे॰ ज्ञानिनि॰ सन्न्यासिनि॥ वेदस्यपारगच्छति। गम्लृ॰। अन्तात्यन्तेतिगमेर्ड॥

वेदभाग। पुं॰ मन्त्रब्राह्मणयो॥ पूर्वैरुदाहृतेषुदृत्वादिषु। तेयथा। हेतुर्निर्वचनं निन्दाप्रशंसासंशयोविधि। परकृतिः पुराकल्पोव्यवधारणकल्पनेतिहेत्वादय॥

वेदमाता। स्त्री॰ गायत्र्याम्॥ सर्वेषामादिजाः प्रोक्ताब्राह्मणस्यवेदमाता। उपासतेद्यादिदेवींगायत्रींवेदमातरम्॥ अपिच। योधीतेऽहन्यहन्येतांसावित्रींवेदमातरम्। विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिमिति॥ दुर्गायाम्॥

वेदमार्ग। पुं॰ वेदबोधितेपथि॥ यथा। कलौचनिरभिद्यन्तेसेतवोवर्णाश्रमेश्वरे। पाखण्डिनामसद्वादैर्वेदमार्गा कलौयथेतिश्री॰। अपिच। एतस्माद्वेदमार्गाद्धियदन्यदिहजायते। तत्सर्वंदुष्कर्मविज्ञेयरौद्रशैव विवर्ज्जितमितिव॰पु॰॥

वेदवती। स्त्री॰ कुशध्वजराजकन्यायाम्॥ विवेकप्रतीहार्याम्। वेदविद्याभिमानिन्यांदेवतायाम्॥

वेदवदनम्। न॰ व्याकरणे॥ यथा। योवेदवेदवदनसदनंहिसम्यग्ब्राह्म्याः सवेदमपिवेदकिमन्यशास्त्रम्। यस्मादतः प्रथममेतदधीत्यधीमान्शास्त्रान्तरस्यभवतिश्रवणेधिकारीतिसिद्धान्तशिरोमणिः॥ योगिनोतन्त्वेप्ययमेवपाठ॥

वेदवादरत। त्रि॰ वेदेयेसन्तिवादाः अर्थवादाः अक्षय्यहवैचातुर्मास्ययाजिनः सुकृतं भवतीत्येवमादयस्तेष्वेवरते। वेदार्थसत्यत्वेनैव मेवेतद्रितिमिथ्याविश्वासेनसन्तुष्टे॥

वेदवास। पुं॰ ब्राह्मणे। वेदस्यवासोयस्मिन्॥

वेदवित्। पुं॰ कर्मब्रह्माख्यवेदार्थविदि। कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकसर्ववेदार्थविदि॥ वेदज्ञे॥ कर्मवेदादयोवेदास्त्वास्तत्त्वानीतिवेदविद्वदति॥ वेदवेदार्थ

ज्ञवेत्ति॰विद्यते॰विन्ते वा । विद
ज्ञाने॰विदसत्तायाम्॰विदविचार
णे वा । सत्क्षिति॰क्षिप् ॥
वेदव्यासः । पुं॰ शुकदेवस्यपितरि ।
माठरे । द्वैपायने । पाराशर्य्ये ।
बादरायणे ॥ वेद व्यस्यति । असु॰
। अण् ॥ यथा । वेदमेकचतुर्भेदकृ
त्वाशाखाशतैर्विभुः ।करोतिबहु
लभूयोवेदव्यासस्वरूपधृक् । द्वापरे
तुयुगेविष्णुर्व्यासरूपीमहामुने । वे
दमेकंसबहुधाकुरुतेजगतोहित ॥
यथासुकुरुतेतन्वावेदमेकपृथक्प्रभुः
। वेदव्यासाभिधानातुमासामूर्त्ति
मधुद्विषइतिविष्णुपुराणम् ॥
वेदः । न॰ धने ॥ विद्यते॰लभ्यते ।
विदृलृलाभे । असुन् ॥
वेदसारः । पुं॰ श्रीदेवीभागवते ॥
वेदसन्यासी । पुं॰ वेदविहिताग्निहो
त्रादिकर्मत्यागिनि ॥
वेदस्वामी । पुं॰ आगमपे । आगमा
धिपतौ ॥ यथाचकालिदासः । सु
रूपनोङ्गारकराजपुत्राङ्गोयः क्रमे
णागमपाः प्रवीणः । निजागमे
शाङ्करिमेखलायाबभ्रुस्तदाचारकरो
निरुक्तः ॥ इति ॥ तदाचारकरः
॰तेषांविप्रादीनामाचारकृत्॰उक्त
म् ॥
वेदायणी । स्त्री॰ सरस्वत्याम् ॥
वेदाङ्गम् । न॰ शिक्षाकल्पोव्याकरणं
निरुक्तंछन्दोज्योतिषमितिस्मृतिमो
धितेषुषट्सु ॥ तत्राकारादिवर्णा
नांस्थलकरणप्रयत्नबोधिकाचकुहवि
सर्जनीयानाकण्ठइत्यादिकाशिक्षा
। यागक्रियाणामुपदेशः कल्पः ।
साधुशब्दान्वाख्यानंव्याकरणम् ।
वर्णागमोवर्णविपर्ययश्चेत्यादिनानि
रूपेणोक्तं निरुक्तम् । श्रुतिच्छन्दसा
प्रत्यायकंछन्दः । यज्ञादिगणन
शास्त्रं ज्योतिषमितिसङ्क्षेपः ॥
वेदस्यअङ्गम् ॥ पुं॰ परमेश्वरे ॥
वेदाअङ्गभूताअस्य ॥
वेदादिः । न॰ प्रणवे ॥
वेदानुवचनम् । न॰ नित्यस्वाध्यायल
क्षणेमन्त्रब्राह्मणाध्ययने ॥ वेदस्यअ
नुवचनम् ॥ वेदोऽनूच्यतेगुरूच्चार
णानन्तरपठ्यतेइति ॥ अथवा । वे
दस्यअनुपश्चात्गुरूपासनाऽनन्तरम्
वचनम्॰पठनम् ॥
वेदान्तः । पुं॰ उपनिषदि ॥ तदुपका
रिशारीरकसूत्रादौ ॥ तथाचवेदाना
मन्तोऽवसानभागोवेदान्तइतिव्युत्प
त्तियोगान्मुख्योवेदान्तशब्दोवेदशि
रोभागेतरभेदेषूपनिषत्सु॰शारीरका
दौतूपचरितइति ॥ वेदानामन्ते
निर्णये । प्रस्थानत्रयात्मकेशास्त्रे
॥ आसुप्तेरामृतेः कालंनयेद्वेदान्त
चिन्तयेतिसन्न्यासिनोयावज्जीवाग्नि
होत्रप्रयोगवच्छ्रवणंमविहितंश्रवणा

दि । यद्दध्यादीनान्तुश्रवणादिका
भ्यम् । तदुक्तम् । दिनेदिनेतुवेदा
न्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रू
षयालब्धात्कृच्छ्राऽशीतिफलंलभे-
दिति ॥ वेदेषुतिलेषुतैलवदन्तोऽ
वस्थितीय । तैलमद्दृदेवेदान्त उ
पनिषत्तद्भक्तिश्रवणात् ॥

वेदान्तकृत् । पुं० वेदान्तार्थसम्प्रदा
यप्रवर्त्तके वेदव्यासादौ ॥

वेदान्तग । त्रि० ब्रह्मज्ञे ॥ वेदा
न्तानामुपनिषदामर्थंब्रह्मगच्छति ।
गम्॰ । डप्रत्यय ॥

वेदान्तसार । पु० वेदान्तस्यमथि
तार्थ । वेदान्तस्यसार । ॥

वेदान्ती । पु० ब्रह्मतत्त्वज्ञे । येत्वे
तावित्यात्मिकाचेतोवृत्तिमुपेक्ष्यके
वलतदनुकूलयुक्त्यनुसन्धानकौश-
लेनैवतुष्यन्ति॰तेतुनैयायिकादिस
दृशानिन्दिताएव । तदुक्तम् । वेदा
न्तावहुतर्ककर्कशमतिग्रस्ता पर
मायया॰ भाट्टा । कर्मकलाकुला
हृतधियोद्वैतिनैश्रेणिका । अ
न्येभेदरताविवादकलहाक्षेतत्त्वतो
वञ्चितास्तस्मात्सिद्धमतस्वभावकम
यधीर । परसश्रयेत् । इति ॥ वे
दान्ताउपनिषद : प्रमाणमस्यास्ति
इनि । ॥

वेदाभ्यास । पुं० वेदानुशीलने ॥ स
पञ्चविधोयथादक्ष । द्वितीयेच
तथाभागेवेदाभ्यासोविधीयते । वे-
दाभ्यासोहिविप्राणांपरमंतपउच्य
ते । ब्रह्मयज्ञःपरःप्रोक्तःषडङ्गसहि
तस्तथा । वेदस्वीकरणंपूर्वंविचारो
ऽभ्यसनंजपः । तद्दानञ्चैवशिष्ये
भ्योवेदाभ्यासोहिपञ्चधा । अक्षर
लिखितो नवेदमनधीत्यान्यांवि
द्यामधीयीतान्यत्रवेदाङ्गस्मृतिभ्य ॥

वेदार । पु० कृकलासे । इ० त्रि०
प ।

वेदारण्यम् । न० कुम्भयादेशासमधि
ष्ठितेपुण्यस्थाने ।

वेदि । पु० पण्डिते । बुधे । वे
त्ति । विद् । सर्वधातुभ्यइन्निति
विदीतिइन् । न० अङ्गुलमुद्रायाम्
। स्त्री० परिष्कृतायाभूमौ ॥ प
रिष्कृता॰ यज्ञार्थं॰ पशुबन्धना
र्थं॰ यज्ञपात्रासादनायचाचितस-
स्कारभूमिवेदिरुच्यते ॥ विद्यते॰
ऽधर्मेनज्ञायते॰ विचार्यते॰ प्रा
प्यतेवा । पृंसंज्ञदृदेरिन् ॥ यद्वा ।
वेदयति॰ विद्वेदा । विदनिवा
सादौ॰ चुरादि । अच्छ ।॥ अ
ङ्गुलिमुद्रायाम् ।

वेदिका । स्त्री० चतुरस्रायांकर्मार्थंवे
द्याम् ॥ वितर्द्याम् । प्राङ्गणादि
युक्ते॰ उपवेशनस्थाने । स्वा
र्थेक ।

वेदिशा । स्त्री० द्वीपनाम् । इतिहै

मचन्द्र ॥
वेदित । त्रि० ज्ञापिते ।
वेदितव्य । त्रि० विदुरे । ज्ञातरि ॥ इ० हे० चन्द्र ॥
वेदी । पु० पण्डिते ॥
वेदी । स्त्री० सरस्वत्याम् ॥ वेदिश ब्दार्थे ॥
वेदीतीर्थम् । न० तीर्थविशेषे ॥
वेदीश । पुं० द्रुहिणे । विधौ । ब्रह्मणि ॥
वेदोदय । पुं० रवौ । सूर्ये ॥
वेदोदित । त्रि० वेदोक्ते ॥
वेदोपकरणम् । न० शिक्षादिवेदाङ्गे ॥ वेदस्य उपकरणम् ॥
वेद्धव्य । त्रि० ताडयितव्ये ॥
वेद्य । त्रि० वेदितव्यवस्तुनि । ज्ञेये । सविद्विषयभूते ॥ वेदितु योग्य: । विदेर्ज्ञानार्थात्कर्मणि ण्यत् । सचार्हकृत्यतृचश्चेत्यर्हार्थे । इत्याह भगवान् शङ्कराभाष्ये । नि: श्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्य इति ।
वेध: । पुं० व्यधे । वेधने ॥ वेधनम् । विधविधाने । घञ् ॥ खेपणे ॥ गभीरतायाम् । गहरा० इति भाषाप्र० ॥
वेधक । पुं० अम्लवेतसे ॥ कर्पूरे । न० धान्याके ॥ त्रि० वेधकर्त्तरि ॥
वेधनम् । न० वेधे । बींधना० इ०-भा० ॥ विध० ल्युट् ॥ वेधसाधने ॥ विध्यतेऽनेन । करणेति ल्युट् ।
वेधनिका । स्त्री० मणिशङ्खादिवेधनोपकरणे । आस्फोटन्याम् । भौरी० बर्मी० इ० भा० ॥ विध्यतेऽनया । विधविधाने । ल्युट् । स्वार्थेक ॥
वेधमुख्य । पुं० कर्चूरे । वेधिमुख्य ॥
वेधमुख्यक । पु० कर्चूरके ॥ द्राविडके । काल्यके ॥ स्वार्थेकन् ॥
वेधमुख्या । स्त्री० कस्तूर्याम् वेधिमुख्या ॥
वेधा । पुं० परमेष्ठिनि । धातरि ॥ बुधे ॥ विष्णौ । हृषीकेशे ॥ रवौ ॥ श्वेतार्के ॥ विदधाति । डुधाञ० । विधाञोवेधचेतिविधादेशोऽसिप्रत्ययस्य ॥ विधति । विधविधाने । असुन्वा ॥
वेधसम् । न० ब्रह्मतीर्थे । अङ्गुष्ठमूले । इ० श० च० का० ॥
वेधित: । छिद्रिते । विद्धे । बिंधा० बींधा० इ० भा० ॥ वेध्यतेस्म । विध० ण्यन्तोऽनेकार्थः । क्त: ॥
वेधी । पुं० अम्लवेतसे ॥ त्रि० वेधकर्त्तरि ॥ वेधविशिष्टे ॥
वेधिनी । स्त्री० रक्तपायाम् ॥ मेथिकायाम् ॥
वेध्यम् । न० लक्ष्ये ॥ त्रि० वेधनीये ॥
वेन । पुं० प्रजापतौ ॥ वनति ।

अज० । धापृ बस्यन्त्यतिभ्योम । अजीर्षौ ॥

वेन्ना । स्त्री० नद्याम् ॥ वनति । वन शब्दे सम्भक्तौवा । अनेरिच्चोपधाया ह्वति० न । लघूपधगुण ॥

वेपथु । पुं० कम्पे ॥ वेपनम् । टुवेपृकम्पने । ट्वितोऽथुच् ।

वेपनम् । न० कम्पने । टुवेपृ० । ल्युट् ॥

वेप । न० अनवद्ये ॥

वेपमान । त्रि० भयेनकम्पमाने ॥

वेम । पुं० वायदण्डे ॥ यथा । वायदण्ड पुंसिवेमावेमोनाविमनट्ठ्योरितिश०र०अ०ली० ॥

वेमा । पु० न०वायदण्डे । तन्तुवायदण्डोवेयु०इ०गौ०भा ॥ वयति० अनेन । वेञ्० । वेञ सर्वञ्ञति०इमनिच् । अर्द्धर्चादि । सामनी०वेमनी०इतिक्लिप्रयोगात् ॥

वेमन । त्रि० वेमवति ॥ वेमाऽस्यास्ति । पामादित्वात्०नः ॥

वेरम् । न० कलेवरे । शरीरे ॥ वार्त्ताकौ । वृन्ताके ॥ कुङ्कुमे । घुसृणे ॥

वेरकम् । न० कर्पूरे ॥

वेरट । पु० नीचे ॥ न०वरटीफले ॥ त्रि०मिश्रीकृते ॥

वेलम् । न० आरामे । उपवने । क्षिमवने ॥

वेला । स्त्री० काले समये ॥ मर्यादायाम् । सीमायाम ॥ हीरायाम् ॥ यथा । चतुर्विंशतिवेलाभिरहोराच प्रचक्षते । पश्चिमाद्दहोरात्राद्विहोरा याविद्यातिक्रमङ्० वह्निपुराणम च्व्ये । कूले ॥ अब्धेर्विकारे । अब्धावृवृद्धौ ॥ अक्लिष्टमरणे ॥ रागे ॥ ईश्वरस्यभोजने ॥ बुधस्यभार्यायाम् ॥ वाचि ॥ वेलति । वेल्लगतौ । पचाद्यच् ॥ वेल्यते०अनया वा । वेलकालोपदेशे । गुरोश्चहल इत्य । टाप् ॥

वेलाकूलम् । न० ताम्रलिप्तदेशे ॥

वेलायाम् । अ० कालपरिमाणे ॥

वेल्लम् । न० पुं०विडङ्गे ॥ वेल्लति । वेल्लचलने । पचाद्यच् ॥ अभ्यनुज्ञाने ॥

वेल्लजम । न० मरिचे ॥ वेलनम् । वेल्ल० । घञ् ॥ वेल्ल जायते । जनौ० । अन्तर्भावितण्यर्थ० । अन्ये ष्वोपीतिड ॥

वेल्लनम् । न० भूमावश्वस्यलुण्ठने । लुठने । अश्वपरिवर्त्तने ॥ वलनइ० प्र०रोटिकोनिर्माणार्थकाष्ठे ॥

वेल्लनी । स्त्री० मालादूर्वायाम् ॥

वेल्लन्तर । पुं० सजलदेशप्रसिद्धवृक्षविशेषे । वीरतरौ । तथा । वेल्लन्तरोजगतिवीरतरु.प्रसिद्ध श्वेतासिताकणविलोहितनीलपुष्प ः ।

आत्मातितुल्यकुसुम शमिसूक्ष्म पत्र स्रोत्कण्टकौघजलदेशजएष वृक्ष. ॥ वेल्लन्तरोरसिपाकेतिक्तास्त्. कफापह । मूत्राघातश्मजि द्व्याश्चोयेनिमूत्रानिलार्त्तिजित् ॥

वेल्लहल. । पुं॰ कौलिनागरे ॥

वेल्लि । स्त्री॰ लतायाम् ॥

वेल्लिकाख्या । स्त्री॰ वृक्षविशेषे । मरुन्मालायाम । विल्वपत्र्याम् ॥

वेल्लितम् । न॰ चेष्टिते ॥ गमने ॥ त्रि॰ कुटिले ॥ विधते । कम्पिते ॥ वेल्लतिस्म । वेल्ल॰ । गत्यर्थेतिक्त ॥

वेश । पुं॰ वेश्यागृहे ॥ गृहमात्रे ॥ नेपथ्ये । अलङ्कारादिकृतशोभायाम् ॥ विशन्त्यत्र । विशप्रवेशने । हलश्चेतिघञ् ॥ विशति॰वेशनम्॰ विश्यतेवा । विश॰ । पदरुजविश स्पृशोघञ् ॰अज्वा ॥ पण्यस्त्रिया. भृतौ ॥ प्रवेशे ॥

वेशकः । पुं॰ गृहे ॥ वेशएव । स्वार्थेकः ॥

वेशजीवी । त्रि॰ वेशवति ॥

वेशदान । पु॰ सूर्य्यशोभायाम् ॥

वेशधारी । पुं॰ छललपस्विनि ॥ त्रि॰ वेशधारके ॥

वेशनम् । न॰ चणकचूर्णे । वेसण॰ इ॰भा॰प्र॰ ॥ यथा । दोलयश्चणकानाम्तुनिस्तुषायन्त्रपेषिता । तच्चूर्णेवेशनप्रोक्तपाकशास्त्रविशारदे ॥

वेशनमोदक । पु॰ मुदियाकाला इ॰इतिख्यातेखाद्यप्रभेदे ॥ यथा मुक्तामोदकवत्कार्याविशनस्यचमोदका. । तेवल्यालघव : शीता : किञ्चिद्वातकरास्तथा । विष्टम्भिनो ज्वरघ्नाश्चपित्तरक्तकफापहा : ॥ *

वेशनवटिका स्त्री॰ पकौरी॰इ॰प्र॰ खाद्यद्रव्ये वटिकावेशनस्यापिकथिताचानिमज्जिता । रुच्याविष्टम्भजननीबल्यापुष्टिकरीस्मृता ॥

वेशन्त । पु॰ पल्वले । अल्पसरसि ॥ विशन्त्यत्रभेकादय । विश॰ । जूविशिभ्याभाच् ॥ वन्हौ ॥

वेशर : । पुं॰ अश्वतरे ॥

वेशवार । पुं॰ वेगर॰इ॰भा॰प्र॰मांसादिसाधकद्रव्य ॥ यथा । द्रव्याणिवेशवारस्यनागवल्लीदलानिहि । तण्डुलाश्चलवङ्गानिमरिचानिसमासत. ॥

वेशि । पुं॰ जन्मकालेसूर्याक्रान्तराशिद्वितीयेराशौ ॥ यथा । सूर्याद्वितीयगृहवेशिस्थानप्रकीर्त्तितवचनेराशि ॥

वेशोभाता । स्त्री॰ पुत्रदात्रीलतायाम् ॥

वेश्मकलिङ्ग । पुं॰ चटके ॥

वेश्मकूल : । पु॰ चव्याख्यायाम् ॥

वेश्म । न॰ गृहे । सद्मनि ॥ विशन्त्यत्र । विश॰ । मनिन् ॥

वेश्मनकुल । पुं० गन्धमूषिके ॥
वेश्मभू । स्त्री० गृहरचनावच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभूः ॥
वेश्यम् । न० वेश्यालये ॥ वेशेभव । दिगादित्वाद्यत् ॥
वेश्या । स्त्री० वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेनमेपण्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशेवेश्यागृहेभवावा । दिगादित्वाद्यत् ॥ वेश्र प्रवेशेसत्यस्यवा । यन्येभ्योपीतियत् ॥ पाठायाम् ॥
वेश्यागण : । पुं० वेश्यावारे । वेश्यासमूहे ॥
वेश्याचार्य्य । पु० पीठमर्द्दे ॥
वेश्याजनसमाश्रय । पु० । गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥
वेश्यालय : । पुं० वेशे ॥
वेष । पु० वेशे । प्रसाधने । अलङ्काररचनादिकृतशोभायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । घञ् ।
वेषण । पु० कासमर्द्दे । पचोपस्करे ।
वेषणा । स्त्री० वितुन्नके । धन्याके ॥
वेष्ट : । पु० वेष्टने ॥ निर्यासे ॥ श्रीवेष्टे । सरलरसे । वेष्टते । वेष्टवेष्टने । घञ् ॥
वेष्टक . । पु० कुष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न० उष्णीषे ॥ निर्यासे ॥ श्रीवेष्टे ॥ त्रि० वेष्टनकारके संवेष्टके ॥
वेष्टनम् । न० कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे ॥ वृतौ ॥ गुग्गुलौ ॥ व्यावर्त्तने । वेठन० लपेटन० इ० भा० प्र० ॥
वेष्टनक । पुं० रतिबन्धविशेषे ॥ यथा । ऊर्द्ध्वगपादमेकस्तुभुजान्तरैर्वेष्टयेद्यदि । कामकामाश्रितानारीबन्धोवेष्टनकः स्मृतः ॥
वेष्टनवेष्टक । पुं० रतिबन्धविशेषे ॥ यथा । ऊर्द्ध्वपादद्वयनार्याभुजाभ्यांवेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यबन्धोवेष्टनवेष्टकः ॥
वेष्टनिका । स्त्री० वेढमिकायाम् ॥
वेष्टवंश । पु० कण्टकिनि ॥
वेष्टसार । पु० श्रीवेष्टे ॥
वेष्टित . । त्रि० वलयिते । संवीते । रुद्धे । आवृते ॥ न० लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । विष्टवेष्टने । क्त ॥
वेष्य । पु० जले । नीरे । पानीये ॥ विवेष्टि । विष्लृ० । पानीर्विभ्य. प । कृतिप ॥
वेष्य । पु० नटे ॥ विषिणाकुविनाका रेणसम्पद्यते ॥
वेष्यो । स्त्री० गणिकायाम् ॥ वेवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत् ॥
वेसनम् । न० चणकदालिचूर्णे । वेशने ॥
वेसर । पुं० सङ्कराश्वे । अश्वतरे ॥

वेसवार । पुं॰ व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ । उपस्करे ॥ द्रव्याणिवेसवारस्तुनागवल्लीदलानि हि । तण्डुलाखलवङ्गाश्चिमरिचानि समासतः ॥ सर्वव्यञ्जनपरिभाषाया न्तु । हिङ्ग्वार्द्रमरिचजीरकहरिद्राधा न्यकानथा । क्रमेणवर्द्धितैर्यासर्वैर्वेसवार मिमंजगुः । स्तोकेनवारिणासर्वमं ट्टितंवस्त्रगालितम् । मात्रयाव्यञ्जने देयमासमर्द्दंचतत्स्मृतम् ॥ वेसन म् । विसर्पणे । घञ् । वेसर्पण वारयति॰ वृणोतिवा । वृञ् । कर्मण्यण् ॥

वेहत् । स्त्री॰गर्भोपघातिन्यामगवि ॥ विहन्तिगर्भम् । सद्यतत्पद्वेहद्विय तिप्रत्ययेनसाधुः ॥

वेहार । पु॰ स्वनामाख्यातेदेशविशे षे ॥ यथा । वेहारेचैवश्रीहट्टे वीश्व लेशमकर्णिके । अष्टादशभुजाकार्या माहेन्द्रेचहिमालये॰ इतिमत्स्यसू क्ते ५॰ पटल ॥ माहेषासुरमर्द्दि नीतिशेषः ॥

वै । अ॰ हेतौ ॥ पादपूरणे ॥ सम्बो धने ॥ विशेषे ॥ स्मरणार्थे ॥ अनुन ये ॥ प्रसिद्धौ ॥ निश्चये ॥ वाति । वागतिगन्धनयोः । ॰बौगत्यादौवा । डै ॥

वैंशतिक : । त्रि॰ विंशत्याक्रीते ॥

वैकक्षम् । न॰ तिर्यग्वक्षोलम्बिमा

ल्ये ॥

वैकक्षकम् । न॰ उरस्युपवीतवत्ति र्यक्क्षिप्तमाल्ये ॥ विशिष्ट कक्षो स्मात्॰विकक्षमुरस्तत्रभवम् । तत्र भवद्दत्यण् । स्वार्थेकन् ॥

वैकङ्कत । पु॰ विकङ्कते ॥ विकङ्क तस्यावयवोविकारोवा । पलाशादि त्वादञ् ॥

वैकटिक । पु॰ मणिकारे ॥

वैकर्ण : । पुं॰ वात्स्ये ॥ विकर्णस्या पत्यम् । विकर्णशुङ्गच्छगलाद्वत्सभ रद्वाजात्रिष्वित्यण् ॥

वैकर्णेय । पुं॰ काश्यपे ॥ विकर्ण स्यापत्यम् । विकर्णकुषीतकात्का श्यपइतिढक् ॥

वैकल्पिक । त्रि॰ विकल्पेनभवे ॥

वैकल्यम् । न॰ विकलतायाम् ॥ अ विवेके ॥ विकलस्यभावः । ष्यञ् ॥

वैकारिक । पु॰ देवःसाङ्ख्यसा त्त्विकाहङ्कारे ॥ देवतावर्गे ॥ बन्ध विशेषे ॥ सप्तबन्धस्तेषा॰येविकारा नेवभूतेन्द्रियाहङ्कारबुद्धिरूपान॰पु रुषबुद्ध्यापासते । तान्प्रतीदमुच्य ते॰दशमन्वन्तराणीहतिष्ठन्तीन्द्रिय चिन्तकाः । भौतिकास्तुशतंपूर्णंस हस्रन्त्वाभिमानिकाः ॥ बौद्धादशस हस्राणितिष्ठन्तिविगतज्वराः । पुरु षनिर्गुणप्राप्यकालसङ्ख्यानिवर्त्त ते ॥ तेखल्वमीविदेहायेषांवैकृति

कोऽयम् ॥

वैकुण्ठ । पुं० विष्णो । क्षर्णं । वि
ष्टरश्रवसि ॥ विकुण्ठाया अपत्यम् ।
शिवाद्यण् । यथोक्तं विष्णुपुराणे ।
चाक्षुषस्यान्तरेदेवो वैकुण्ठ पुरुषो
त्तम । विकुण्ठायामसौजज्ञे वैकु
ण्ठे देवतै सहेति ॥ अपिच । कु
ण्ठजडस्तं विष्ण्वोव विशिष्टस्तं करोति
या । विकुण्ठांप्रक्तेतिवेदाश्वत्वारस्त
वदन्तितम् ॥ गुणाश्रयेयभगवान्
तस्याजात . स्वरूपे । परिपूर्णंत
मतेन वैकुण्ठस्तंविदुर्बुधा : ॥ विग
ताकुण्ठानाशोयस्यसविकुण्ठ . ० वि
कुण्ठस्यानज्ञानशक्तिस्वरूपस्तेन
चाश्रयत्वेनवाऽस्या । ज्योत्स्नादि
त्वादण् ॥ यद्वा । विविधाकुण्ठा
मायाविद्यतेऽस्य ॥ अण् ॥ यद्वा ।
विकुण्ठानांजीवानामय नियन्ता०
ज्ञातावा । तस्येदमिति ० शेषइतिवा
० अण् ॥ विगताकुण्ठाऽस्मात्प्रज्ञा
द्यण् ॥ स्त्रं तल्लोपाभिधेविष्णोर्धाम
विशेषे । तद्वर्णनयथा । उपरिष्टा
त्त्रिर्चितेरष्टौकोटय : सत्यमीरितम्
। सत्यादुपरिवैकुण्ठोयोजनानाप्रमा
णत . ॥ भूर्लोकात्परिसङ्ख्यात
कोटिरष्टादशप्रभो । यत्रास्ते श्रीप
ति साक्षात्सर्वेषामभयप्रद ॥
वैकुण्ठादुत्तरेशैवोलोक . षोडश
कोटय : । तिर्यगेवमहाराजकोला



साध्यसुपर्वत ॥ पार्षत्यासहित
शम्भुर्यत्रास्ते स्वगणैर्वृत । इति
पाद्मे स्वर्गखण्डे ६ अध्याय . ॥
अपिच । अमृतंशाश्वतनित्यमनन्त
परमपदम् । हिरण्मयमोक्षप्रदब्र
ह्मानन्दसुखाह्वयम् ॥ एवमादिगु
णोपेततद्विष्णो परमपदम् । यज्ञ
त्वानविवर्णन्तेतत्रामपरमर्षये ॥
नहिवर्णयितुंशक्यकल्पकोटिशते
रपि । अपिद्रष्टुमशक्यन्तब्रह्मरुद्रा
दिदैवतै : ॥ ज्ञानेनशास्त्रमार्गेण
द्रक्ष्यतेयोगिपुङ्गवै । तत्स्थानमनु
पमोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
श्रीमाडम्बिभक्तिसेवैकरसाभोगविव
र्जिता । महात्मानोमहाभागाभ
गवत्पदसेवका . ॥ तद्विष्णो . प
रमधामयान्तिब्रह्मसुखप्रदम् । ना
नाजनपदाकीर्णं वैकुण्ठ तत्परं . प
दम् ॥ प्राकारैश्चविमानैश्चसौधैर
त्नमयैर्युतम् । तन्मध्ये नगरीदिव्या
स योध्य तिप्रकीर्त्तिता ॥ चतुर्द्वार
समायुक्ताहेमगोपुरस युता । च
ण्डादिद्वारपालैश्चकुमुदाद्यै सु
रक्षिता ॥ चण्डप्रचण्डौप्राग्द्वारे
याम्येभद्रसुभद्रकौ । वारुण्याजय
विजयौसौम्येधातृविधातरौ । कु
मुद कुमुदाक्षश्चपुण्डरीकोऽथवाम
न : । शङ्कुकर्ण . सर्वनिद्र सुमु
ख . सुप्रतिष्ठित . तस्मिन्नृवन्यवि

निर्मुक्ताः प्राप्नुवन्ति सुसुखं परम् । यत्प्राप्य न निवर्त्तन्ते तद्धाम्नो वैकुण्ठदाहृत ॥ तेषां परं पदं लिङ्गमस्तु विष्णुमन्दिरम् । अक्षरं परमं धाम वैकुण्ठं शाश्वतं परम् ॥ नित्यञ्च परमं व्योम सर्वोत्कृष्टं सनातनम् । पर्यायवाचकान्यस्य परधाम्नो श्रुतस्मृति ॥ इति पाद्मोत्तरखण्डे २८ ऽध्यायः ॥ विकुण्ठस्य तन्नामसार्थस्य भाष्यकारैः विविधा कुण्ठा गतिः प्रतिहतिर्विकुण्ठा तस्याः विकुण्ठायाः कार्यं वैकुण्ठं । तस्येदमित्यण् । जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिप्रतिबन्धाति । यथा संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुस्तेजसा साहैर्वैकुण्ठत्वं ततोऽमन्येति शान्तिपर्वणीति ॥ भूमिरद्भिः सार्द्धं यथा संश्लेषिता परस्पराधारेण स्थापिता पृथिव्यादीनि भूतान्युत्तरैरुत्तरैः संगुणैर्विकुण्ठयामीति विकुण्ठः विकुण्ठ एव वैकुण्ठः इति विकुण्ठाया अपत्यमिति वैतिस्तोवार्थः ॥ शक्रे । वासवे । सितार्जके ॥

वैकृतम् । त्रि॰ सात्त्विके । न॰ वैकृत्ये । बीभत्सरसे ॥ विकृतमेव । प्रज्ञादाण् ॥ त्रि॰ बीभत्सरसालम्बने मांसशोणितादौ । दुर्निमित्ते ॥

वैकृतालङ्कारः । पुं॰ सात्त्विकाभिमानि ॥

वैकृत्यम् । न॰ बीभत्सरसे ॥ त्रि॰ तदालम्बने

वैक्रान्तम् । न॰ मणिविशेषे । तत्पर्य्यायगुणौ यथा । वैक्रान्तं वज्रविक्रान्तं नीचवज्रं कुवज्रकम् । गोनासः क्षुद्रकुलिशं चौर्य्यवज्रं घनासः ॥ वज्राभावे च वैक्रान्तं रसवीर्य्यादिकैः समम् । क्षयकुष्ठविषघ्नं स्यात्पुष्टिदं सुरसायनम् ॥ वैक्रान्तं वज्रसादृश्याद्वज्रवद्रसवीर्य्यकम् । अथाप्यभावे वज्रस्य वैक्रान्तमुत्तमम् ॥ व्याकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् । तद्विक्रान्ति धर्त्त तद्वैक्रान्तं बुधैरिदं कथितम् ॥

वैक्लव्यम् । न॰ वैवर्ण्ये ॥ व्याकुलतायाम् ॥

वैखरी । स्त्री॰ बुद्ध्युत्थितकण्ठगतनादरूपवर्णः ॥ यथा । मूलाधारात्प्रथममुदितो यस्तु तारः पराख्यः पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः । वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्णा बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः ॥ इत्यलङ्कारकौस्तुभे प्रथमकिरणः । अस्यार्थः । यस्तारो नादवर्णरूपः स नाभिरूपमूलाधारात्प्रथममुदयप्राप्तस्तु पराख्याख्यासंज्ञो यस्तथाभूतो भवति । अथानन्तरं स एव

वैजयन्तीशब्दाद्देवप्रतिकृताविति कन् ॥

वैजयन्ती। स्त्री॰ पताकायाम् ॥ जयन्तीपादपे ॥ अग्निमन्थे ॥ विजयते। जयाभिभवे। तृभूवहीति झच्। विजयन्त्येयम्। तस्येदमित्यण् ॥ पञ्चवर्णमय्यामाजानुपर्य्यन्तलम्बितायां मालायाम् ॥ सा चोक्ता- विष्णुपुराणे। पञ्चरूपा या मा- ला वैजयन्ती गदाभृत। सा भूतहेतुसङ्घातभूतमाला च वै द्विज इति। पञ्चरूपा मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णा हरेर्या वैजयन्त्याख्या माला। सा भूतहेतुना पञ्चतन्मात्राणां सङ्घात पञ्चक्ति भूत माला च महाभूतपङ्क्तिश्चेति सूक्ष्मस्थूलभूतमयीत्यर्थः ॥

वैजयि। पु॰ अर्जुनात्मजे ॥ विजयस्यापत्यम्। इञ् ॥ जिनचक्रवर्त्तिविशेषे। मघवति ॥

वैजयिक। त्रि॰ विजयस्य निमित्ते॰ विजयस्य निमित्तं संयोग उत्पातो वा। तस्य निमित्तमिति ठञ् ॥

वैजवाप। पु॰ गृह्यभेदे ॥

वैजिक। पु॰ सद्योऽङ्कुरे ॥ न॰ शिग्रुतैले ॥ हेतौ। कारणे ॥ त्रि॰ बीजसम्बन्धे ॥ प्रतिषिद्धमैथुनसङ्कल्पादिना अपेक्षकरेतोदोषजे पापे ॥

वैज्ञानिकः। त्रि॰ प्रवीणे। निपुणे। शिक्षिते। ज्ञातसुखे। कुशले ॥ विज्ञानजनिते ॥ विज्ञानवृत्ति विज्ञानेनयुक्ते। तत्र नियुक्त इति ठक्। यद्वा। विज्ञानेन जयति। तेन दीव्यति खनति जयति जितमिति ठक् ॥

वैडाल। त्रि॰ विडालसम्बन्धिनि ॥

वैडालव्रतम्। न॰ दुष्टाचारविशेषे ॥ यथा। यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥

वैडालव्रतिक। पुं॰ छद्मतापसे। सर्वाभिसन्धिनि ॥ यथा मनुः। धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥ इति ॥ विडालव्रतेन चरतीति वैडालव्रतिकः। विडालो हि प्रायेण मूषिकादिहिंसार्थितया ध्याननिष्ठ इव विनीतः सन्नवतिष्ठत इत्युपचरितोऽयं शब्दः ॥

वैडालव्रती। पुं॰ भण्डतापसे ॥ वैडालव्रतिनः पापाः सर्वधर्मविनाशकाः। सद्यः पतन्ति पापेषु कर्मणस्तस्य तत्फलम् ॥

वैणवम्। न॰ वेणुफले ॥ वेणोः फलम्। बिल्वादिभ्योऽणिति विधिर्नाणो लुक्। त्रि॰ वेणोर्विकारे दण्डादौ ॥ वेणोर्विकारः। पूर्ववदण् ॥ पुं॰ दण्डे। उपनयने वैणवदण्डे ॥

वैणविक॰। त्रि॰ वेणुवादे। वैणुर्गो॥ वेणोर्विकारः। वे॰रञ्। वेणव शिल्पमस्य। शिल्पमितिठक्॥

वैणवी। स्त्री॰ वंशरोचनायाम्। वेणोर्विकारः। बिल्वाद्यण्। ङीप्॥

वैणिक। त्रि॰ वीणावादे वीणा॰ तद्वादनं शिल्पमस्य। शिल्पमितिठक्॥

वैणुक.। पु॰ वेणुवादिनि॥ न॰ तोत्रे। गजप्रतोदनदण्डे। इस्तिचालनार्थे तोत्रमुखिवंशदण्डे॥ वेणुनाभिहन्तम्। निर्वृत्तेऽक्षद्यूतादिभ्यइतिठक्। इसुसुक्तान्तात्कः॥ साधर्ये॰गुडादिभ्यष्ठञ्॥

वैण्य। पु॰ पृथुनाम्निधराधीशे॥ यथा। वैण्यस्त्वमथितेपाणौसम्बभूवमहामुने। वैण्योनामसहीपालोयःपृथु परिकीर्त्यते॥

वैतसिक। त्रि॰ कौटिके। मांसिके। मांसविक्रेतरि॥ वीतसेनमृगपक्ष्यादिवधनोपायेनचरति। चरतीतिठक्॥

वैतण्डिकः। त्रि॰ वितण्डावादिनि॥

वैतत्यम्। न॰ महत्वे॥ विततस्यभावः। ष्यञ्॥

वैतथ्यम्। न॰ वितथस्यभावे। असत्यत्वे॥ वैतथ्यंसर्वभावानांस्वप्नाहुर्मनीषिणः। भावेष्यञ्॥

वैतनिक॰। त्रि॰ भृतके। भृतिभुजि। वेतनेनकर्मकृति॥ वेतनेनजीवति। वेतनादिभ्योजीवतीतिठक्॥

वैतरणि। स्त्री॰ वैतरण्याम। भूतिरुद्र

वैतरणी। स्त्री॰ यातुमातरि। राक्षसानांजनन्याम॥ तीर्थविशेषे॥ नरकनद्याम। विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसादिव्याप्तिनद्याम्॥ यथा। नदीवैतरणीनामदुर्गन्धारुधिरावहा। उष्णतोयामहावेगाऽस्थिकेशतरङ्गिणीति यमद्रुमे।॥ विगतस्तरणिर्यत्र॰तत्रभवा। तत्रभवइत्यण्॥ विगतातरणिर्नौर्यत्रवा। प्रज्ञाद्यण्॥ वितरणेनदानेनलभ्यते॰इतिवा। शेषइत्यण्। ङीप्॥ यमद्वारेमहाघोरेतप्तावैतरणीनदी। तांसन्तर्तुंन्ददाम्येनांकृष्णांवैतरणींगामितिवैतरणीगोदानानन्तरप्रार्थनामन्त्र॥

वैतस.। पु॰ अम्लवेतसे॥

वैतानम्। न॰ श्रौतकर्मणि। गार्हपत्यकुण्डस्थानम्नेः॰ आहवनीयादिकुण्डेषुवितत्यक्रियतइति।

वैतानिक.। पुं॰ श्रौतहोमे। अग्निहोत्रे। गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारोवि॰ तन्मम्॰ तत्रभव। ठक्कर्मयोगिनि॥

वैतालिक.। पुं॰ स्तुतिपाठे॥

त्रि० वोधकरे । मङ्गलपाठके । स्तुत्यादिना प्रातर्जागरणकारिणि ॥ विविधेन तालेन० शब्दं नयति । यतीतिठक् ॥ वैतालिकास्तु कविभि कथ्यन्ते सौख्यशायिका० इत्यन्यच ॥

वैतालीयम् । न० छन्दोभेदे ॥ षड्विषमे ऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा । न समात्र पराश्रिता कला-वैतालीयेन्ते रलौ गुरु ॥ यथा । कुसुमं नमदेन चर्चितं तनयन्निन्दति राधिके कुचम् । सुदमा तनुते ऽव कञ्चिमतद्वैतालीयफलं हरे ॥

वैदग्धी । स्त्री० भङ्ग्याम । इभनि मौलिकायाम ॥ वैदग्ध्ये ॥ शोभायाम ॥ विदग्धस्य भावः । ब्राह्मणादित्वात्० ष्यञ । षित्वात् ङीष । यलोपः ॥ भर्त्तारि न प्रवसितेप्यसूयति० मनोजिघ्र . सपत्नीगण० प्रश्रयं रञ्जितदैवत० नयनयोरीहालिखीयान्तर । तद्दूरादयमञ्जलि० किमनुना दृग्भङ्गिभागी न तैवैदग्धीमधुरप्रबन्धरसिकव्यर्थोयमत्र श्रम ॥

वैदग्ध्यम् न० विदग्धभावकर्म्मणो । चातुर्यं ॥ ब्राह्मणादित्वात् ष्यञ् ॥

वैदर्भ । पु० विदर्भदेशाधिपतौ ॥ सतु दमयन्त्यो पिता भीमसेन० रुक्मिणीजनको० भीष्मकश्च ॥ दन्तरोगविशेषे । यथा । घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् । भवन्ति दन्ताश्च चला सवैदर्भोऽभिघातज ॥ ८ न० वाक्यवक्रत्वे । त्रि० विदर्भसम्बन्धिनि ॥

वैदर्भी । स्त्री० काव्यरीतिभेदे ॥ यथा माधुर्यव्यञ्जकैर्वर्णैरचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ उपनागरिकावृत्त्यनुप्रासघटकवृत्तिभेदे ॥ लोपामुद्रायाम् । दमयन्त्याम् । रुक्मिण्याम् ॥

वैदल । पु० पिष्टके । पूपे ॥ शमीधान्ये ॥ तद्गुणा यथा । वैदला मधुरा रूक्षा कषाया कटुपाकिन । वातला कफपित्तघ्ना बद्धमूत्रमला हिमा ॥ ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारका । मुद्गमसूरयोरनाध्मानकारित्वमन्यवैदलापेक्षया० न च सर्वथा० एतयोरपि किञ्चिदाध्मानकारित्वदर्शनात् ॥ न० भिक्षुपात्रविशेषे ॥ यथा । अलाबुदारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥

वैदिक । पु० वेदज्ञब्राह्मणे ॥ त्रि० श्रुत्युपनिबद्धे धर्मादौ । वेदोक्ते । यथोक्तं श्रीदेवीभागवते । यथा ।

शुकउवाच । सन्देहोवर्त्ततेचित्ते
नहिगच्छतिमेक्वचित् । भवताकथि
तयत्तच्छ्रुतवतीमेनराधिप ॥ वेदधर्मे
षुहिंसास्यादधर्मेबहुलाहिंसा । क
थं मुक्तिप्रदोधर्मोवेदोक्तोभवतभूपते ॥
प्रत्यक्षेयज्ञनाचार . सोमपाननरा
धिप । पशूनांहिंसनतद्वद्भक्ष्य चा
मिषस्यतु ॥ सौत्रामणौतथाप्रोक्त '
प्रत्यक्षेणसुराग्रह ' । द्यूतक्रीडात
थाप्रोक्ताव्रतानिविविधानिच ॥ -
व्रतानि • व्रह्मचारिपुंस्त्योमैथुनादी
नि - ॥ श्रूयतेऽम्पुरासीच्छशवि
न्दुर्नृपोत्तम । यज्वाधर्मपरोनि
त्य वदान्य सत्यसागर ॥ गोप्ता
चधर्मसेतूनांशास्ताचोत्पथगामिना
म् । यज्ञाश्चविहितास्तेनवहवोभू
रिदक्षिणा ' ॥ चर्मणांपर्वतोजातो
विन्ध्याचलसम ' पुन ' । मेघाम्बुप्ला
वनाज्जातानदीचर्मण्वतीशुभा ॥
सोपिराजादिवयात : कीर्त्तिरस्या
चलाभुवि । एवंधर्मेषुवेदेषुनमेबु
द्धि ' प्रवर्त्तते ॥ - स्वर्गीयनित्यफ
लकाम्यार्थ दोष्ठकर्मण - ॥ स्त्री
सक्चन्दनसदाभोगैसुखमाप्नोतिमानव
। अलाभेदु खमत्यन्तं जीवन्मुक्त '
कथंभवेत् ॥ जनकउवाच । हिंसा
यज्ञेषुप्रत्यक्षासाऽहिंसापरिकीर्त्ति
ता । उपाधियोगतोहिंसानान्यथेति
विनिर्णय . ॥ - अहिंसेतिच्छेद :
अहिंसन सर्वभूतानान्यत्रतीर्थेभ्यइ
तिश्रुते । उपाधियोगत इति ।
रागरूपोपाधिनाकृतातुहिंसैवभव
ति - ॥ यथाचेन्धनसयोगादग्नौधू
म ' प्रवर्त्तते । तद्वियोगेतथातस्मि
न निर्धूमस्य विभातिवै ॥ अहिंसा
त्ततथाविद्धिवेदोक्तामुनिसत्तम । रा
गिणासापिहिंसैवनिस्पृहाणानसाम
ता ॥ आर्द्रेन्धनोपाधिनावह्नेः स
धूमत्वमन्यथानिधूमत्वम् । तथा
रागाद्युपाधिनापशुलम्भस्यहिंसा
त्वमन्यथाहिंसात्वाभावइति - ॥
अरागेणचयत्कर्मतथाहङ्कारवर्जि
तम् । अकृतंवेदविद्वांस प्रवदन्ति
मनीषिण ॥ गृहस्थानान्तुहिंसैव
यायज्ञे द्विजसत्तम । -गृहस्थानांरा
गिणामित्यर्थ ' । - । अरागेणचय
त्कर्मतथाहङ्कारवर्जितम् ॥ साहि
सैवमहाभागमुमुक्षूणाजितात्मना
मित्यष्टादशोध्याय . प्रथमस्कन्धे ॥
वेदेभव । अध्यात्मादित्वाट्ठञ् ॥
न । वेदार्थज्ञाने ॥

वैदिकदर्शनम् । न० वैदिकानांसिद्धा
न्त । यथा । अन्योविज्ञानमयतच्चा
नन्दमयआन्तर ' । अन्तौर्ध्वंवीपल
क्ष्यइतिवैदिकदर्शनमिति ॥

वैदुष्यम् । न० विद्वत्तायाम् ॥ यथा ।
वाग्वैखरीशब्दझरीशास्त्रव्याख्या
नकौशलम् । वैदुष्यविदुषांतद्वद्भु

कर्थमचमुत्तायेद्धति ॥ विदुष कर्मं भावोवा । ब्राह्मणादित्वात्ष्यञ् ।

**वैदूर्य्यम्** । न० लसुनिया इतिख्याते कृष्णपीतवर्णमणौ । बालवायजे । बालसूर्य्ये । केतुरत्ने ॥ तच्छायालक्षणंयथा । एकवेणुपलाशकोमलरुचामायूरकण्ठत्विषामार्जारेक्षणपिङ्गलच्छविजुषाज्ञेयन्त्रिधाछायया । यद्गात्रं गुरुतांदधातिनितरांस्निग्धन्तुदोषोज्झितवैदूर्य्यंविमलंवदन्तिसुधिय स्वच्छन्तुतच्छोभनम् ॥ तस्य कुलक्षणं यथा । विच्छायंमृच्छिलागर्भंलघुरूक्षञ्चसक्षतम् । सत्रासपरुषं कृष्णं वैदूर्य्यंदूरतांनयेत् ॥ तत्परीक्षायथा । घृष्टं यदात्मनास्वच्छं स्वच्छायांनिकषाश्मनि । स्फुटंप्रदर्शयेदेतद्वैदूर्य्यंजात्यमुच्यते ॥ विशेषो गारुडे युक्तिकल्पतरौचद्रष्टव्यः ॥ विदूरात्प्रभवति । विदूराञ्ञ्य । अथ नन्वर्थसङ्गतिः बालवायात्प्रभवति विदूरेतुसंस्क्रियते । सत्यम् । बालवायस्यापिविदूरमितिसंज्ञा । अथवा । बालवायस्य विदूरत्वादेशः । अतएवभाष्ये बालवायोविदूरञ्च प्रकृत्यन्तरमेवेतिसमाहितम् ॥

**वैदूर्य्यभूमि** : । स्त्री० बालवायप्रभवस्थाने ॥ उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः सद्योदितमेघध्वनेर्विदूरभूमिरत्नाङ्कुराभवतीतिप्रसिद्धिः । उरगमूर्द्धन्यरत्नसन्निधानात्कालेऽपिमेघागर्जनीतिवार्त्ता । केचित्तुयत्रवैरोगरत मेघरसितस्य तत्रैववैदूर्यभूमिरित्याहुः ॥

**वैदेह** : । पु० वणिजि ॥ निमिराजपुत्रे । जनके ॥ वैश्याद्ब्राह्मण्यामुत्पन्नेसङ्करजात्यन्तरे ॥ त्रि० विदेहदेशजाते ॥

**वैदेहक** : । पु० वाणिजके ॥ शूद्राद्वैश्यासुते ॥ विदेहेषुभवः । धूमादिभ्यस्तिवुञ् ॥ विदेग्धिवा । दिह० । ण्वुल् । प्रज्ञाद्यण् ॥ वैनिश्चित देहउपचयोयस्येतिवा । विदेहेषुभवः । तत्रभवइत्यण् विदेहस्यापत्यंवा । जनपदेत्यञ् । कस्वार्थे ॥

**वैदेही** । स्त्री० रोचनायाम् ॥ सीतायाम् । जानक्याम् ॥ वणिक्स्त्रियाम् । वैदेहनार्य्याम् ॥ पिप्पल्याम् ॥ विदेहेषुभवा । अण् । ङीप् ॥

**वैद्य** : । पुं० भिषजि । रोगहारिणि । अगदङ्कारे । चिकित्सके ॥ सचतुर्विधः । रोगहरः १ । विषहरः २ । शल्यहरः ३ । कृत्याहर ४ । इतिभेदात् ॥ सत्वयत्त्वप्रकोपस्यप्रसरस्थानमेवच । दोषाणाञ्चैवयोवेद सभवेद्भिषगुत्तमः ॥ व्याधेस्तत्त्वपरिज्ञानवेदनायाश्चनिग्रहः । एतद्वैद्यस्यवैद्यत्वंनवैद्यः प्रभुरायुषः ॥

कुचेलः कार्कश्यादीनः कुग्रामीस्त समागतः । पश्चाद्वैद्यानपूज्यन्ते धन्वन्तरिसमाअपि ॥ सुश्रुतनश्रुतयेन हारीतयेनहारितम् । नालोकितचरकयेनसवैद्योवैद्यनिन्दितः ॥ हितौलिङ्गप्रशमनेरोगाणामपुनर्भवे । ज्ञानचतुर्विधंयस्यसराजार्होभिषक्तमः ॥ अपिच । एकशास्त्रमधीयानोनविद्याच्छास्त्रनिश्चयम् । तस्माद्बहुश्रुतः शास्त्रंविजानीयाच्चिकित्सकः ॥ शास्त्रं गुरुमुखोद्गीर्णमादायोपास्यचासकृत् यः कर्म कुरुतेवैद्यः सवैद्योऽन्येतुतस्कराः ॥ इतिसुश्रुतः विद्यामधीते । तदधीतेतद्वेदवा ॥ वासकवृक्षे ॥ पण्डिते ॥

वैद्यकम् । न० आयुर्वेदे । चिकित्साशास्त्रे ॥

वैद्यनाथः । पुं० देशविशेषे ॥ शिवे । महालिङ्गविशेषे ॥ यथा । भारखण्डवैद्यनाथोवक्रेश्वरस्तथैवच । वीरभूमौसिद्धिनाथोराढेवतारकेश्वर ॥ भैरवविशेषे ॥ यथा । हार्दपीठवैद्यनाथेवैद्यनाथस्तुभैरवः । देवताजयदुर्गाख्या नेपालेजानुनीमम ॥ इति ॥

वैद्यबन्धुः । पुं० आरग्वधवृक्षे ॥ ॥

वैद्यमाता । स्त्री० अटरूषे । वासके ॥ वैद्यस्यमातेव ॥

वैद्यसिंही । स्त्री० वासकवृक्षे ॥

वैद्या । स्त्री० काकोल्याम् ॥

वैद्यी । स्त्री० वैद्यपत्न्याम् ॥

वैधः । त्रि० विधिबोधिते ।

वैधहिंसा । स्त्री० वेदबोधितप्राणिवधे ॥ साचाहिंसैव । यथाहमनुः । या वेदविहिताहिंसानियतास्मिँश्चराचरे । अहिंसामेवतांविद्याद्वेदाद्धर्मोहिनिर्बभाविति ॥

वैधात्रः । पुं० सनत्कुमारे ॥ विधातुरपत्यम् । अण् ॥ त्रि० विधातृसम्बन्धिनि ॥ यथाह । कालश्च वैधात्रकृतिर्मतिभज्जनकाच्य श्रियोदेव्याः कोवानभवतिपतिः कोरपिधनैः । महादेवहित्वातवसतिसतीनामचरमेकुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभइति ॥

वैधात्री । स्त्री० ब्राह्म्यामोषधौ ॥

वैधृतिः । पुं० विष्कम्भादिषुशेषयोगे ॥ तत्रजातस्यफलंयथा । मैत्रीविहीनः कुटिलः खलश्चमूर्खोदरिद्रः परवञ्चकश्च । कुकर्मकर्त्ता परदारभर्त्ताभवेन्नरोवैधृतिलब्धजन्मा ॥

वैधेय । त्रि० मूर्खे ॥ विधेयः विधानम् । तस्यायमधिकारी अविद्यावद्दूषयत्वाच्छास्त्राणाम् । तस्येदमित्यण् । स्त्रियां वैधेयी ॥

वैध्यतः । पुं० यमप्रतीहारे ॥

वैनतेयः। पुं॰ खगेश्वरे। गरुडे॥ पक्षिणामध्ये गरुडो भगवद्विभूतिः। वैनतेयश्च पक्षिणामित्युक्तेः। विनताया अपत्यम्। स्त्रीभ्यो ढक्॥ अरुणे। सूरसूते॥

वैनयिकः। पुं॰ शस्त्राभ्यासरथे। योग्यरथे॥ गुणविशेषे॥ यथा। लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः। यस्तु सद्ययावज्जितलोकवुद्धेर्गुरुतः शास्त्राद्वा॰ समर्जितः स वैनयिको भाति। समर्ज्जितो वैनयिको मनोवाक्तनुचेष्टया। यो मनोवाक्तनुचेष्टया शुद्धव्यापारैरार्ज्जितः स वैनयिको बोद्धव्यः॥ त्रि॰ विनयान्विते॥ विनयादिभ्यष्ठगिति स्वार्थे ठक्॥

वैनायिकः। पुं॰ बौद्धे॥ सर्वं क्षणिकत्वादि निपुणं वैनायिके॥

वैनाशिकः। त्रि॰ क्षणिके। परतन्त्रे। परायत्ते॥ बौद्धे। असद्वादिनि॥ पुं॰ जर्णनाभे॥ न॰ नाडीभक्षविशेषे॥ निधनतारायाम्॥

वैनीतकः। पुं॰ न॰ परम्परावाहने॥ वोढृपरम्परया॰ यद्वाह्य॰ वहवो ह्युपानराः स्ववहन्ति॰ शकटशिविकादि यथा॰ तद्वैनीतकम्। विनीतकानामिदम्। तस्येदमित्यण्॥ यद्वा। विनीयते स्म। क्त। स्वार्थे कन्॥

वैपरीत्यम्। न॰ व्यत्यासे। विपर्यासे। विपर्यये। व्यत्यये॥ द्व॰ द्वे॰ न्द्र॥ विपरीतस्य। भावः। ष्यञ्॥

वैपरीत्यलज्जालु। पुं॰ स्त्री॰ स्वल्पक्षुपवृत्तफलायां लज्जालौ॥ यथा। लज्जालुर्वैपरीत्यो न्या स्वल्पक्षुपवृत्तफला। वैपरीत्या च लज्जालुश्चाभिधाने प्रयोजयेत्। लज्जालुर्वैपरीत्याख्या कटुरुष्णा कफापनुत्। रसे नियामकस्तम्भमानो विज्ञानकारकः॥ द्र॰ रा॰ नि॰ ष्ट॥

वैवधिकः। त्रि॰ वार्त्तावहे। कांवडिया॰ इ॰ भा॰ प्र॰॥ विवधेन॰ वीवधेन वा॰ हरति। विभाषा विवधादिति पक्षे ठक्। एकदेशविकृतस्यानन्यत्वात् वीवधादपि ठक्॥

वैवोधिकः। पुं॰ वैतालिके। विवोधः शीलमस्य। शीलमिति ठक्॥

वैभवः। पुं॰ विभवस्वरूपे॥ न॰ ऐश्वर्ये॥

वैभाजित्रम्। न॰ विभाजयितुर्धर्म्ये॥ तस्य धर्म्यमित्यधिकारे विभाजयितुर्णिलोपश्चाञ् वक्तव्य इत्यञ् णिलोपश्च॥

वैभ्राजम्। न॰ सुराणामुद्यानविशेषे॥ विपुलाख्यशाद्रे मूर्ध्नि॰ वैभ्राजाख्यं नाम वनमस्ति। यथा। वैभ्राजवैपुलेमूले सितोदस्यकृदोत्तम। देवैर्निषेव्यते स्वत्र॰ कामवरमत प्रभो॥

वैमात्र : । पुं॰ विमातृजे ॥ विमातुरपत्यम् । अण् ॥

वैमात्री । स्त्री॰ विमातुः कन्यायाम् ॥

वैमात्रेय । पुं॰ वैमात्रे ॥ विमातुरपत्यम् । शुभ्रादिभ्यश्चेति ढक् स्त्रीभ्यो ढगित्यत्र॰ स्त्रीप्रत्ययान्तस्यग्रहणात् ॥

वैमात्रेयी । स्त्री॰ विमातृकन्यायाम् ॥

वैमानिक । त्रि॰ विमानयायिनिदेवादौ ॥ विमानेनचरतीत्यर्थे ठक् ॥

वैमेय । पुं॰ विनिमये ॥

वैम्बकि : । पुं॰ बिम्बात्मजे ॥ बिम्बस्याजात्यन्तरस्यापत्यम् । व्यासवरुडेत्यादिनेञ् ॰ प्रकृतेरकङादेशः

वैयाकरण । त्रि॰ व्याकरणशास्त्राभिज्ञे ॥ व्याकरणमधीते॰ वेदवा॰ तदधीतेतद्वेदेत्यण् । ऐजागमः ॥ व्याकरणस्यव्याख्यानं व्याकरणेभवोवावैयाकरणः । अण् ऋतयनादिभ्यश्चेत्यण् ॥ स्त्री वैयाकरणी ॥

वैयाघ्र : । त्रि॰ व्याघ्रचर्मावृतस्यन्दने । द्वैपि ॥ व्याघ्रस्यविकारः । प्राण्यरजतादिभ्योञ् । वैयाघ्रेणचर्मणापरिवृतोरथः । द्वैपवैयाघ्रादञ् ॥

वैयाघ्रपद्य : । पुं॰ गोत्रसुतो॰ मुनिविशेषे ॥ व्याघ्रपदोऽपत्यम् । आङ् । कुन्द्रद्युस्नसुनौ ॥ व्याघ्रपदोगोत्रापत्यत्वात् ॥ यद्वा । व्याघ्रस्येवपादावस्येतिबहुव्रीहौपादस्यलोपश्च तिलोपिगर्गादित्वात्यञिपाद् . पदितिपद्भावेनव्याघ्रादिभ्यश्चेति च ॥

वैयात्य म् । न॰ अविनीततायाम् ॥ विरूपयातंगमनम्॰ चेष्टनंयस्य । वियातस्यभावः । दृढादित्वात् ष्यञ् ॥

वैयासम् । न॰ व्यासोपन्यस्तेवचसि ॥ शेषइत्यण् ॥

वैयासकि : । पुं॰ शुकदेवे ॥ व्यासस्यापत्यम् । व्यासवरुडनिषादचण्डालबिम्बानाञ्चेतिवक्तव्यमितिवार्त्तिकादिञ्॰ अकङादेशश्च । नड्वाभ्यामित्यैजागमः ॥

वैरम् । न॰ विरोधे ॥ तच्चसमुत्थानपञ्चविधम् । स्त्रीकृतम् १ यथाकृष्णशिशुपालयोः । वास्तुजम् २ यथाकौरवपाण्डवानाम् । वाग्जम् ३ यथाद्रोणद्रुपदयोः । सापत्नम् ४ यथामूषिकमार्जारयोः । अपराधजम् ५ यथापूजनीब्रह्मदत्तयोः ॥ वीरस्यकर्म । वैरमैथुनिकयोरितिनिर्देशात्॰ युवादित्वादाण् ॥ अतिवादांस्तितिक्षेतनावमन्येतकञ्चन । नचेमंदेहमाश्रित्यवैरंकुर्वीतकेनचित् ॥

वैरङ्गिक : । त्रि॰ विरागयोग्ये ॥ विरागंनित्यमर्हति । छेदादिभ्यो॰ वि

वसरतानात्मनिरता ' ॥ विराग एव । स्वार्थेष्यञ् ॥

वैराजम् । न० सामविशेषे ॥ पुं० ब्रह्मरूपेविराजोदेहे ॥

वैराज्यम् । न० अणिमादिसिद्धिविभाक्त्वे ॥ विराजोभाव , । ष्यञ् ॥

वैराट : । पुं० विराटतनये ॥ इन्द्रगोपकीटे ॥

वैराटो । स्त्री० उत्तरोयाम् । अभिमन्युपत्न्याम् ॥ विराटस्यापत्य स्त्री । अण् । ङीप् ॥

वैरातङ्क । पुं० अर्जुनवृक्षे ॥

वैरिञ्च : । पु० सनकादिषु ॥ त्रि० विरिञ्चसम्बन्धिनि ॥

वैरी । पुं० रिपौ । अशौ वैरमस्यास्ति । इनि ॥ षष्ठभवने ॥

वैरूपम् । न० सामविशेषे ॥

वैरूप्यम् । न० विरूपतायाम् ॥

वैरोचन । पुं० रवेस्तनये ॥ विष्णुपुत्रे ॥ बलिदानवे ॥ सिद्धगणे बुद्धे ॥ अग्निपुत्रे ॥ त्रि० सवितु . सम्बन्धिनि ॥ विरोचनस्याय म् । अण् ॥

वैरोचननिकेतनम् । न० पाताले ॥

वैरोचनि । पु० अर्कपुत्रे ॥ बलिदैत्ये ॥ सुगते ॥ विरोचनस्यापत्यम् । अतइञ् ॥

वैरोचि : । पु० बाणासुरे ॥

वैरोद्धार' । पु० कृतापकारस्यप्रत्यपकारे । प्रतीकारे । वैरनिर्यातने ॥

वैलक्षण्यम् । न० विलक्षणत्वे ॥

वैलक्ष्यम् । न० व्यलीके ॥ विलक्षणस्यविस्मयान्वितभाव । ष्यञ् ॥

वैल्व : । पुं० बिल्वस्यकाण्डे ॥ बिल्वविकारे ॥ बिल्वस्यावयवोविकारोवा । बिल्वादिभ्योण् । वैल्व : स्वादिरोव्यायूप स्यात् ॥ न० बिल्वशाके ॥ बिल्वफले ॥ त्रि० बिल्वसम्बन्धिनि ॥

वैवधिक . । पु० वार्त्तावहे ॥ प्रसोदौ० कू० भा० प्र० विवधेनधान्यतण्डुलादिनाव्यवहरति । ठक् ॥ कृषिवद्ध्यादिजीवे ॥

वैवर्ण्यम् । न० विवर्णतायाम् ॥

वैवस्वत : । पु० श्राद्धदेवे । अन्तके । यमे ॥ सप्तमेमनौ ॥ विवस्वतोऽपत्यम् । अण् ॥ रुद्रविशेषे ॥ शनैश्चरे ॥

वैवस्वती । स्त्री० दक्षिणस्यादिशि ।

वैवाहिकम् । न० धनविशेषे ॥ यथा । वैवाहिकन्तुतद्द्रव्यंयत्प्राप्तम्भार्ययासह । भार्याप्राप्तिकालेलब्धमित्यर्थ ॥ त्रि० विवाहसम्बन्धिन्यग्न्यादौविवाहेभव । अध्यात्मादेठञ् इष्यते ॥

वैवाह्य . । त्रि० सम्बन्धिनि ॥

वैशम्पायन । पुं० यजुर्वेदधरे० व्यासशिष्येमुनौ ॥ विशम्पस्यगोत्रापत्यम्

स्थम्। अश्वादिभ्यः फञ्॥

वैशसम्। न० हिंसायाम्॥ यथा। वरकुतवह्निज्वालापुञ्जस्यान्तर्व्यवस्थितिः। नशौरिचिन्ताविमुखजनसंवासवैशसमिति कात्यायन०॥ शौरिचिन्ताविमुखेषु तन्निन्दापरेषु जनेषु यः सवास स एव वैशसहिंसातः परमित्यर्थः॥ नरकविशेषे॥

वैशस्त्रम्। न० विशसितुर्धर्म्ये॥ विशसितुरिड लोपश्चाञ् वक्तव्य.॥

वैशाख.। पुं० मासविशेषे। माधवे। राधे॥ वैशाखीपौर्णमास्यस्मिन् सास्मिन् पौर्णमासीत्यण्। खजके। मन्थानदण्डे। रत्न० कू० भा० प्र०॥ विशाखाप्रयोजनमस्य। विशाखाषाढादित्यण्॥ न० धन्विनांस्थानभेदे। वितस्त्यन्तरे यस्थितेपादद्वये विशाखाख्यस्थानंभवति। विशाखएव। स्वार्थेऽण्॥

वैशाखी। स्त्री० वैशाखपूर्णिमायाम्॥ विशाखयायुक्ता पौर्णमासी। नक्षत्रेणयुक्त कालइत्यण्। ततोङीप्॥ रक्तपुनर्नवायाम्॥

वैशारदी। स्त्री० मायायाम्॥ विशारदईश्वरः। तस्येयम्। अण् ङीप्॥

वैशारद्यम्। न० विशुद्धौ॥ विशारदस्यभावः। दृढादिषु०पठितत्वा भमतिमनःशारदानामितिष्यञ्॥



वैशिकः। पुं० त्रिविधनायकान्तर्गतनायकविशेषे॥ बहुवेश्याभोगीरसिकोवैशिकइतितल्लक्षणम्॥

वैशिष्ट्यम्। न० विशिष्टत्वे। सम्बन्धपदार्थे। विशिष्टधीनियामके॥

वैशेषिक। पुं० कणादमुनिकृतदर्शनविशेषे। परमार्थतोद्रव्यादिसमवायान्तषट्पदार्थवादिनि। यथात्मनोद्रव्यत्वं तस्यगुणाबुद्ध्यादयोनव। आसनात्वेनवेदोत्कृतिवैशेषिकादय बुद्ध्यादिधर्मिणामन्तः। करणमेवात्मेतिभामित्या॰ त्मगुणाएववासनात्वे न० यथा। महारजनमित्यादिसूत्रोच्यतद्गतिवर्द्धनकाणादादृक्ष्यर्थः॥ अथवैशेषिकग्रन्थविवरणम्। सतु विशेषपदार्थनिरूपकग्रन्थः। अस्यमत न्यायदर्शनमततुल्यम्। अस्यजगत. कारण परमाणुपर्यन्तं निरूपितम्॥ दुःखबहुलानिखलुप्राणिनांसंसारप्रतिकूलवेदनीयतयानिखिलात्मसंवेदनसिद्धदुःखंजिहासतस्तस्यतानोपायजिज्ञासु परमेश्वरसाक्षात्कारमुपायमाकलयति। यदाचर्मवदाकाशंवेष्टयिष्यन्तिमानवा.। तदाशिवमविज्ञायदुःखस्यान्तोभविष्यतीत्यादिवचन०निगमप्रामाण्यात्। परमेश्वरस्यसाक्षात्कारश्च०श्रवणमननभावनाभिर्

वैशेषिकः

वनीयः। यदाह। आगमेनानुमानेनध्यानाभ्यासरसेनच। त्रिधा प्रकल्पयन्प्रज्ञांलभतेयोगमुत्तममिति। तत्रमननमनुमानाधीनम्। अनुमानञ्चव्याप्तिज्ञानाधीनम्०। व्याप्तिज्ञानञ्चपदार्थविवेकसापेक्षम्। अत०पदार्थषट्कम्॥ अथातो धर्मंव्याख्यास्याम०। इत्यादिका याद्यशलक्षणांकणभक्षभगवता-व्यवस्थायि। तत्राह्निकद्वयात्मके प्रथमेध्याये० समवेताशेषपदार्थकथनमकारि। तत्रापिप्रथमाह्निके जातिमन्निरूपणम्द्वितीयाह्निकेजातिविशेषयोर्निरूपणम्। आह्निकद्वयात्मकेद्वितीयेभूतविशेषलक्षणम्। तत्रापिप्रथमाह्निकेभूतविशेषलक्षणम्। द्वितीयेदिक्कालप्रतिपादनम्। आह्निकद्वयात्मकेतृतीये० आत्मान्तःकरणलक्षणम्। तत्राप्यात्मलक्षणंप्रथमे। द्वितीयेऽन्तःकरणलक्षणम। आह्निकद्वययुक्ते चतुर्थे० शरीरतदुपयोगिविवेचनम। तत्रापिप्रथमेतदुपयोगिविवेचनम्। द्वितीयेशरीरविवेचनम्। आह्निकद्वयवतिपञ्चमे० कर्मप्रतिपादनम्। तत्रापिप्रथमेशरीरसम्बन्धिकर्मचिन्तनम्। आह्निकद्वयशालिनिषष्ठे० श्रौतधर्मनिरूपणम्। तत्रापिप्रथमेदानपरिग्रहधर्म

वैश्यः

विवेकः। द्वितीयेचातुराश्रम्योचितधर्मनिरूपणम्। तथाविधेसप्तमे गुणसमवायप्रतिपादनम्। तत्रापिप्रथमेबुद्धिनिरपेक्षगुणप्रतिपादनम्। द्वितीयेतत्सापेक्षगुणप्रतिपादनम्०समवायप्रतिपादनञ्च०। अष्टमेनिर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमेबुद्धिविशेषप्रतिपादनम्। दशमेअनुमानप्रतिपादनम्। तथोद्देशोलक्षणपरीक्षाचेतित्रिविधास्यशास्त्रस्यप्रवृत्तिरितिवैशेषिकग्रन्थविवरणम्॥ काणादमुनिकृतदर्शनशास्त्रविशेषे। औलूक्ये॥ विनयादिभ्योस्वार्थे ठक्॥ चि० विशेषविद्॥

वैशेष्यम्। न० भागाधिक्ये॥ भावेष्यञ्॥

वैश्यः पु० ऊरव्ये। ऊरुजे। भूस्पृशि। तमउपसर्जनरजः प्रधानेतृतीयवर्णे॥ तस्यचकृष्यादीनतादृशानिकर्माणिभवन्ति॥ तानिचवर्णाश्रमशब्दे द्रष्टव्यानि। निषिद्धानियथा। वैश्यानांधनलोभेनभिष्याम्यूल्यप्रकाशनम्। अपालनपशूनाञ्चनिन्द्याविभवेसतीतिपाद्मे स्वर्गखण्डे २७ अध्याय॥ सच्च पातु। विशत्याशुपशुभ्यश्चकृष्यादानरुचिः शुचिः। वेदाध्ययनसम्पन्नः सवैश्यइतिसञ्ज्ञित॥ विशति।

विश॰ क्विप्। स्वार्थे॰ ष्यञ् ॥

वैश्यकर्म। न॰ कृषिगोरक्ष्यवाणिज्यादौ॰

वैश्या। स्त्री॰ अर्य्याणाम्। आर्य्याम्। बुधशक्त्यन्तरे॥ तारायाम् ॥

वैश्रवण। पु॰ कुवेरे॥ विश्रवसोऽपत्यम्। शिवादिषु विश्रवसो विश्रवणरवणावादेशौ निपातितौ॰ अण् च ॥

वैश्रवणालय। पुं॰ वैश्रवणावासे ॥ वटवृक्षे ॥

वैश्रवणावासः। पुं॰ वटद्रुमे ॥ कुवेरपुर्य्याम् ।

वैश्रवणोदय। पुं॰ वटवृक्षे ॥

वैश्व। पुं॰ उत्तराषाढनक्षत्रे ।

वैश्वदेव। पुं॰ अन्नसाध्ये होमबलिदानातिथिभोजनात्मके सायम्प्रातर्गृहस्थप्रतिविहिते कर्मविशेषे ॥ विश्वेदेवा देवता अस्य। सास्य देवतेत्यण्। ॥ न॰ उत्तराषाढाना॰ ॥

वैश्वदेवी। स्त्री॰ आमिक्षायाम् ॥ जगतीछन्दःप्रभेदे ॥ तल्लक्षणादि यथा। बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ। यथा। अर्चामन्येषां त्वं विहायामराणामद्वैतेनैकं विष्णुमभ्यर्चयंभक्त्या। तत्राशेषात्मन्यर्चिते भाविनी ते भ्रातः सम्पन्नाराधना वैश्वदेवी ॥

वैश्वदेव्यम्। न॰ सामविशेषे ॥

वैश्वानरः। पु॰ अग्नौ। वह्नौ ॥ अग्न्यभिमानिन्यां देवतायाम् ॥ जाठराग्नौ ॥ चित्रकवृक्षे। विश्वे नरा अस्य। नरे संज्ञायामिति विश्वशब्दस्य दीर्घः ॥ विश्वानरस्यापत्यम्। ऋष्यण्। गोत्रापत्ये॰ शिवादित्वादण् वा। विश्वे च ते नरा यानकर्त्तरि ॥ ब्रह्मणि। जीवे ॥ विश्वनराभिमानित्वात्॰ स्थूलसमष्ट्युपहितचैतन्ये ॥ विश्वे च ते नराश्च॰ विश्वानराः। पूर्वपदस्य दीर्घः। विश्वानरान् भोक्तृत्वेनव्यवस्थितान् प्रति॰ अनेकधा धर्माधर्मकर्मानुसारेण॰ सुखदुःखादिप्रापणात्॰ अयं परमात्मा कर्मणां फलदाता॰ वैश्वानरशब्दितो भवति ॥ अथवा। विश्वश्चासौ नरश्च॰ विश्वानरः। नरे संज्ञायाम्। विश्वानर एव। वैश्वानरः। स्वार्थेऽण् ॥

वैश्वानरमार्गः। पुं॰ दहनवीथ्याम्। पूर्वोत्तराषाढयोः समीपे ।

वैश्वानरीवीथी। स्त्री॰ दक्षिणमार्गे नक्षत्रविशेषाणां सज्ञाविशेषे ॥ यथा। शतभिषक्तथा। वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता। एतास्तु वीथयस्तस्रो दक्षिणो मार्ग उच्यत इति ॥

वैश्वी। स्त्री॰ उत्तराषाढानक्षत्रे ॥

वैषम्यम्। न॰ विषमत्वे ॥ भावे॰ ब्राह्मणादित्वात् ष्यञ् ॥

वैषयम्। न॰ विषयाणां समूहे अ

ष्टाद्यण् ।

वैषयिक । त्रि० विषयसम्बन्धिनि ॥

वैष्टुतम् । न० हुतभस्मनि ॥

वैष्टम् । न० विष्णौ ॥ विष्टपे ॥ वेवेष्टि । विश० असूजिगमिनमिहनि विश्यशाद्वच्छिर्तिष्टन ॥ दिवि ॥ वायौ ॥

वैष्णव । त्रि० विष्णूपासके । विष्णुमन्त्रदीक्षिते । काष्णे । हरौ ॥ तल्लक्षणमाहात्म्यादिर्यथा । फलसन्धानरहिताविष्णुभक्ताश्चवैष्णवा । मत्प्रीतिभक्तिकामास्ते सर्व्वदास र्व्वकर्मसु । गुरुवक्त्राद्विष्णुमन्त्रोयस्य कर्णे प्रविश्यते । जीवन्मुक्त वैष्णव तवेदा सर्व्वेवदन्तिच ॥ पुरुषाणां शतपूर्व्वंपैत्रकश्चशतपरम । मातामहश्चचशतमातरमात्रमातरम् भगिनीम्भ्रातरञ्चैवभागिनेयञ्चमातुलम् । श्वश्रूञ्चश्वशुरञ्चैवगुरुपत्नीं गुरोः सुतम् । गुरुञ्चज्ञानदातारमिवञ्चसहचारिणम् । भृत्यं शिष्यंतथाचेटींप्रजा स्वाश्रमसन्निधौ ॥ उद्धरेदात्मनासार्द्धंमन्त्रग्रहणमात्रतः । मन्त्रग्रहणमात्रेणजीवन्मुक्तोभवेन्नरः । तत्रसंस्पर्शमात्रेणपूतं तीर्थञ्चभारतम् । तस्यैवपादरजसासद्यः पूतावसुन्धरा ॥ पादोदकन्तुतस्यान्नं तीर्थमेवभवेद्ध्रुवम् । इ० ब्र० वै० ब० पुराणम् । येकण्ठलग्नतुलसीमयकाष्ठमालायेद्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः । येकृष्णभक्तिसुदृढाधृतशङ्खचक्रास्तेवैष्णवाभुवनमाशुपवित्रयन्ति ॥ अपिच । पशुर्मनुष्यः पक्षीवायेचवैष्णवसंश्रयाः । तेनैवतेप्रयास्यन्तितद्विष्णोः परमंपदमिति ॥ अस्याचारश्च । सर्व्वान्कामानपरित्यज्यदृष्टभक्तिञ्चसाधयेत् । सएववैष्णवाचारकामसङ्कल्पवर्ज्जितः ॥ विष्णोरयम् । अण् ॥ न० विष्णुपुराणे ॥ यथा । चयोविंशतिसाहस्रं वैष्णवपरमाद्भुतमिति ॥

वैष्णवी । स्त्री० विष्णोः शक्तौ ॥ यथा । एषाचिच्छक्तिरुद्दिष्टानयासिद्धास्तगामिनी । एषाश्वेतापराशक्तिः सात्त्विकीब्रह्मसंस्थिता ॥ एषैवरक्तारजसिवैष्णवीपरिकीर्त्तिता । एषैवकृष्णातमसिरौद्रीदेवीप्रकीर्त्तिता । अष्टादशतथाकोट्योवैष्णव्याभेदउच्यते । याविष्णोराजसीशक्तिः पालनीचैववैष्णवी ॥ इतिवाराहपुराणम् ॥ दुर्गायाम ॥ यथा । शङ्खचक्रगदाधारिविष्णुमातातथारिहा । विष्णुरूपाथवादेवीवैष्णवीतेनगीयते ॥ इतिदेवीपुराणम् ॥ गङ्गायाम ॥ तुलस्याम् ॥ अपराजितायाम ॥ शतावर्याम ॥

वैसादृश्यम । न० विसदृशत्वे ॥

वैसारिण । पु० मत्स्ये ॥ विविषसरति । स० । ग्रह्यादित्वात्णिनि । ततोविसारिणोमत्स्यइति स्वार्थेऽण ॥ सिवे ॥

वैहायस । पु० खेचरे ॥

वैहायसी । स्त्री० भारतवर्षस्थनद्यन्तरे ॥

वैहर्थ्य । त्रि० परिहासेनलाखनी येऽग्याखसवध्यादौ ॥

वैहासिक । पु० वासन्तिके । कौलिके । विदूषके । प्रहासिनि ॥

वैाटा । स्त्री० चेट्याम् । दास्याम् ॥ इ० हे० म्द्र० ॥

वैाडू । पु० गोनसाहौ ॥ भाषान्तरे ।

वैाड्री । स्त्री० पणचतुर्थांशे । बुडि० इ० गो० दे० भा० प्र० ॥

वैाढ्य । त्रि० बहुमौये ॥

वैाढु । पु० मुनिविशेषे ॥

वैाढा । पु० भारिके । सूते । वैाढु अर्ह० । वह० । अर्हेत्लाच्छतृचस्तितृच् । ढत्वधत्वष्टुत्वढलोपा । सहिवहोरोदवर्णस्येत्योकार ॥ चनडुहि । ऋषभे । परिणेतरि ॥ मूढे ॥

वैाद । त्रि० चार्द्रे ॥

वैादाल । पु० पाठीनमत्स्ये ॥

वैाद्र । पु० गोनसाहौ ॥ भाषान्तरे ॥

वैाद्री । स्त्री० पणपादे । काकिन्याम् ॥

वैारक । पु० लेखके ॥ इ० वि० शेष ॥

वैारट । पु० कुन्दपुष्पे ॥ इ० वि० शेष ॥

वैारपट्टी । स्त्री० मन्द्रायाम् । मादरी० काट्० चटाइ० इ० भा० प्र० ॥

वैारव । पु० वोरो० इ० गौ० भा० प्र० धान्यविशेषे ॥ यथास्यगुणा । वैारवस्तुवुधै । प्रोक्तक्षिदोषघ्नप्रकोपणः । मधुरश्चाम्लपाकश्चशौहि । पित्तकरोगुरु ॥

वैारुखाम पु० पाटलवर्णाश्वे ॥ इ० हे० म्द्र० ॥

वैालम् । न० गन्धरसे । अस्यगुणा । वैालरक्तहरशीतमेध्य दीपनपाचनम् । मधुरकटुतिक्तघ्नयहस्वेदृग्विदोषजित् । ज्वरापस्मारकुष्ठघ्न गर्भाशयविशुद्धिकृत्॥अपिच । वैालश्चकटुतिक्तोष्णकषायरक्तदोषनुत् । कर्णापत्तामयान्स्त्रीप्रदरादिकनाशनम् । पु० रसगन्धे ॥ वैालयति । कुलमन्नने । अच् । वातिवा । वा० । पिञ्छादित्वादूलच् ॥

वैालक । पु० लेखके ॥

वैाला । स्त्री० दोलावर्त्ते ॥ यथा । हिमुषितरविमितकलितकलाभिर्लिलतजिवहा० मड्गलमिश्रभणितगणितकलयाकिशनवा । एकादशकलविरतिविदितमृदुगतिरिच-

शीला॰ यशसापूरितभुवनभुवनर
सनासनशीला ॥

वोक्काण । पुं॰ अश्वविशेषे ॥ यथा
वोक्काणस्त्वथसे स्यात्पाण्डुकेशर-
बालधि ॥ इ॰ हे॰ चन्द्रः ॥

वोढ्यम् । न॰ यानपात्रे । पोते ।
जहाज॰ इ॰ भा॰ प्र॰ ॥ इ॰ हे॰
चन्द्रः ॥

वौषट् । अ॰ देवहविर्दानमन्त्रे ॥ स्वा
हादेवहविर्दाने श्रौषट्वौषटवषट्स्व
धेत्यमर ॥ उह्यतेऽनेन । वह॰ ।
बाहुलकात्॰ डौषट् ॥

व्यंशक । पुं॰ पर्वते ॥ इ॰ मुद्राङ्कि
तशेष चन्द्र ॥

व्यंसक । पुं॰ धूर्त्ते ॥

व्यसित । त्रि॰ वञ्चिते ॥

व्यक्त । त्रि॰ स्फुटे ॥ मनीषिणि ॥
प्रत्यक्षे । हेतुमदनित्यमव्यापिस
क्रियमनेकमाश्रितं लिङ्गम् । सावय
वं परतन्त्रं व्यक्तम् । इति लक्षिते
॥ स्थूले ॥ यथा । अव्यक्तो व्यक्तका
रणमिति ॥ व्यज्यते स्म । अञ्जू व्य
क्त्यादौ । क्तः । विपूर्वादस्मा
त्तु॰ अञ्जेनत्वे व्यक्तप्रतिषेध इति
निष्ठातस्य चस्तोनपादानक्तिमन-
त्वम् ॥

व्यक्तकाल । पुं॰ स्थितिकाले ॥

व्यक्तदृष्टार्थ । पुं॰ प्रत्यक्षिणि ॥
साक्षिणि । इ॰ त्रि॰ शेष ॥

व्यक्तविशेष । पुं॰ बुद्धे ॥

व्यक्ति । स्त्री॰ पृथगात्मताम् ॥ प्र
त्यक्षे । स्पष्टतायाम् । शरीरवि
षयादिरूपायां भोगभूमौ ॥ प्रभा
वे ॥ व्यक्तिलक्षणमाह गौतम ।
यथा । व्यक्तिर्गुणविशेषाश्रयो मूर्त्ति
रिति । अस्यार्थः । यद्यपि जात्या
देरपि व्यक्तित्वात्प्रमेयत्वमेव व्यक्ति
त्वम्॰ तथापि जात्याकृतिशक्तिवि
षयव्यक्तेरिदं लक्षणम् । तथाच॰
गुणविशेषो जात्याकृतिसमानाधि-
करणो गुण॰ सङ्ख्यादिभिन्नस्तदा
श्रय॰ मूर्त्ति व्यक्तिरिति समाना
र्थकमित्यर्थः । परेतु॰ गुणा रूपा
दय॰ विशेषा विशेषका॰ उत्क्षे
पणादयस्तेषामाश्रयो द्रव्यम्॰ तेन
जात्याश्रयो व्यक्तिरित्याशय । वि
शेषलक्षणमाह मूर्त्तिरिति । मूर्त्तिः
सख्योनविशेषवत्तानित्याहु । अ
पचमध्यमपदलोपी समास इत्याशय
। अन्येतु॰ व्यक्तेर्लक्षणं मूर्त्तिरि
ति॰ सैवेत्याह । गुणविशेषाश्रय
इति । गुणविशेषस्य॰ अवच्छिन्नप
रिमाणस्याश्रय इत्यर्थ इत्याहुः ॥
१३२ ॥ व्यज्यतेऽनया । अञ्जू॰ ।
स्त्रियांक्तिन् ॥ जने ॥ इ॰ हे॰
चन्द्रः ॥

व्यग्र । त्रि॰ व्यापृते । व्याकुले ॥ अस
र्जिते ॥ सोद्यमे । व्यासक्ते ॥

त्रिविध॰ विविधैर्वाव्ययमव्ययदा। विरुद्धमगतिर्वा अग॰ कर्त्त्रेन्द्रेतिसाधु ॥

व्यङ्कट । पुं॰ अद्रिप्रभेदे ॥

व्यङ्ग । पुं॰ भेके ॥ मुखरोगविशेषे ॥ तल्लक्षणयथा । क्रोधायासप्रकुपितोवायुः पित्तेनसयुतः । मुखमागम्यसहसामण्डलविसृजत्यत ॥ नीरुजंतनुकंश्यावमुखेव्यङ्गतमादिशेत् ॥ त्रि॰ हीनाङ्गे॰ छिन्ननासिकादौ ॥ विगतानि॰विगतानि वाअङ्गान्यस्य ॥ विकले॰ विगतमङ्गमस्य ॥

व्यङ्गा । पुं॰ शैले । पर्वते हृ॰ त्रि॰ शेष : ॥

व्यङ्गाङ्ग : । त्रि॰ विकलाङ्गे । व्यङ्गमङ्गयस्य : ॥

व्यङ्ग्य : । त्रि॰ व्यञ्जनयाबोध्येऽर्थे ॥ यथा । वाच्योऽर्थोऽभिधयाबोध्यो॰ लक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रः शब्दस्यशक्तय ॥ प्रकाश्ये । आन्तरेशब्दे ॥

व्यज : । पुं॰ तालवृन्ते । व्यजन्त्यनेन । अज॰गोचरसञ्चरेतिघप्रत्ययान्तोनिपातित : ॥

व्यजनम् । न॰ व्यजे । तालवृन्ते ॥ चामरे ॥ व्यजन्त्यनेन । अज॰ । करणेल्युट् । वीयाभावीतिपक्षेवीन ॥

व्यञ्जक । पुं॰ अभिनये ॥ त्रि॰व्यक्तिकारके । प्रकाशके ॥ वैखरीरूपेशब्दे ॥ घटप्रत्यक्षसमयेआलोकोव्यञ्जकोयथा । व्यञ्जनयाप्रतिपादके ॥ दू॰सा॰द॰प॰ ॥ व्यनक्ति । अञ्जू॰ । ण्वुल् ॥

व्यञ्जनम् । न॰ निष्ठाने । तेमने । दधिघृतादौ । सूपशाकादौ । तौंवणा हृ॰भा॰प्र॰ ॥ चिह्ने ॥ श्मश्रुणि ॥ अवयवे । स्त्रीपुंसयोः गुह्यदेशे । स्त्र्यादिचिह्ने ॥ अहनि । दिने ॥ व्यज्यतेऽनेनवाल्युट् ॥ स्वरहीनवर्णे ॥ अभ्व्यक्तस्योच्चारणन भवति । सपुनरन्तरेणाच व्यञ्जनस्योच्चारणमपिभवतीतिभाष्योक्ते ॥

व्यञ्जना । स्त्री॰ शब्दस्यवृत्तिविशेषे ॥ तस्यालक्षण यथा । विरतास्वभिधाद्यासुययार्थोबोध्यतेपर : । सावृत्तिर्व्यञ्जनानामशब्दस्यार्थादिकस्यच ॥ शब्दबुद्धिकर्मणांविरम्यव्यापाराभावइतिनयेनाभिधालक्षणातात्पर्याख्यासुतिसृषुवृत्तिषुस्वस्वमर्थंबोधयित्वोपक्षीणासु॰ययान्योऽर्थोबोध्यते॰साशब्दस्यार्थस्यप्रकृतिप्रत्ययादेश्चवृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयाव्यञ्जनानाम ॥ विशेष : साहित्यदर्पणादौद्रष्टव्य : ॥

व्यञ्जित । त्रि॰ प्रकटीकृते ॥

व्यडम्बक । पुं॰ एरण्डे ॥ व्यडम लमम्बयति । अविस्त सने । णिच् । ण्वुल् ॥

व्याडम्बनम् । न॰ एरण्डे ॥ व्यडमलम म्बयति । अवि॰ । ल्युट् ॰ युज्वा ॥ शुक्लैरण्डे ॥

व्यतिकर । पुं॰ व्यसने ॥ व्यतिष ङ्गे॰ ॥ मिश्रणे ॥ क्षोभे ॥ स म्बन्धे ॥

व्यतिकीर्ण॰ । त्रि॰ सङ्कीर्णे ॥

व्यतिक्रम । पु॰ व्यत्यये । अन्यथा त्वे । क्रमविपर्यये ॥ यथा । सर्व अप्राङ्मुखोदातायदीतावउद्ङ्मु ख॰ । एवमेवविधिर्दानेविवाहेतु व्यतिक्रम ॥ व्यतिक्रमणम् । क्र म॰ । घञ् । नोदात्तोपदेशेतिन वृत्ति॰ ॥ अन्याये ॥

व्यतिभेद । पुं॰ समावेशे ॥

व्यतिरिक्त । त्रि॰ व्यतिरेकविशिष्टे । भिन्ने । अन्यस्मिन् ॥ व्यतिरि च्यतेस्म । रिचिर्विरेचने । क्त ॥

व्यतिरेक: । पु॰ अभावे । विरहे ॥ कारणेकार्याद्व्यावृत्तौ । कार्यव्य तिरेकप्रयोजकव्यतिरेकप्रतियोगि त्वे ॥ अलङ्कारविशेषे । यथा । व्य तिरेकोविशेषस्तेदुपमानोपमेययोः शैलाइवोन्नताः सन्तः किन्तुप्रकृ तिकोमला ॥ अथमुपमेयाधिक्य पर्यवसायीव्यतिरेक . ॥ यथावा । पल्लवत काल्पतरोरेषविशेष क रस्तवीर । भूषयतिकर्णमेक प रस्तुकर्णं तरस्कुरुते । तन्न्यून त्वपर्यवसायी । यथा । रक्तस्त्व नव पल्लवैरहमपिश्लाघ्यै॰ प्रियायागु ै स्त्वामायान्तिशिलीमुखा स्मरधनु र्मुक्ता॰ सखेमामपि । कान्तापाद तलाहतिस्तवमुदेतद्वन्ममाप्यावयो:स र्वं तुल्यमशोककेवलमहधात्रासशो क कृत ॥ अनुभयपर्यवसायीय था । दृढतरनिबद्धमुष्टे कोषनि षसस्यसहजमलिनस्य । कृपणस्यकृ पाणस्यकेवलमाकारतोभेद । वि शिष्ट॰ अतिरेक॰ पृथग्भाव ॥ विपर्यये ॥

व्यतिरेकव्याप्ति । स्त्री॰ साध्यनिषे-धेसाधननिषेधरूपेण॰ प्रवृत्तायाव्या प्तौ । यथा । यत्रवह्निर्नास्ति॰ तत्र धूमोनास्तीति॰ यथाह्रदे ॥

व्यतिरेकसञ्ज्ञा । स्त्री॰ वैराग्यविशेषे । परिपाचनेचानुष्ठीयमानेकेचित्क षाया॰ पक्का॰ पच्यन्तेकेचित् तत्रैवपूर्वापरीभावेसतिपच्यमाने भ्य कषायेभ्य पक्कानांव्यतिरेके णावधारणे । स्वचित्तेपूर्वविद्यमा नदोषाणांमध्येऽभ्यस्यमानविवेकेने तेपक्का॰ एतेऽवशिष्टाइतिचिकित्स कवद्विवेचनस्वरूपे ॥

व्यतिरेक्युदाहरणम् । न॰ उदाहरण

विशेषे अनुगीतम । तद्विपर्यया दाविपरीतव्यतिरेक्युदाहरणमिति अस्यार्थ . । तद्विपर्ययात् साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथाचसाध्यसाधनव्यतिरेकव्याप्त्युपदर्शको दाहरण व्यतिरेक्युदाहरणम् । यथाजीवच्छरीरं सात्मकम्प्राणादिमत्वात् यन्नैवम् तन्नैवम् यथाघटइति । वाकार प्रयोगमपेक्ष्य तथाचान्वय्युदाहरणं व्यतिरेक्युदाहरणवाप्रयोक्तव्यमित्यर्थं ॥ ३६ ॥

व्यतिषक्त । त्रि॰ सम्बन्धाक्रान्ते । सम्बद्धे । व्यतिषज्यतेस्म । षञ्जसङ्गे । क्त । उपसर्गात्सुनोतीत्यादिनाषत्वम् ॥

व्यतिषङ्ग । पुं॰ विनिमये ॥ सङ्गे । परस्परमेलने ॥ व्यतिषञ्जनम् । षञ्ज॰ । घञ् ॥

व्यतिहार । पुं॰ विनिमये । परस्परकरणे ॥ यथा॰ त्वमहमस्मि॰ अहन्त्वमसीतिव्यतिहार । सचैक्यतात्पर्यावगमाद्भवतीति । व्यत्यये । अन्यस्मिन्नन्याबभासे ॥ व्यतिहरणम् । हृञ् । घञ् । व्यतिह्रियतेऽनेनावा । घञ् । उपसर्गस्येतिपाक्षिको दीर्घाभाव . ॥

व्यतीत । त्रि॰ विगते । विशेषेण॰ अतीत ॥

व्यतीपात । पुं॰ महोत्पाते । उपद्रवे ॥ अपयाने । पलायने । योगविशेषे ॥ तत्रजातस्यफलयथा । कठोरशाक्य । पिशुनस्वभावोगदातुरोमातृद्विष्टोमनुष्य । परस्वकार्येकृतपक्षपातोयस्यप्रसूतौव्यतिपातयोग । व्यतिक्रम्यपतनम् । पत्लृगतौ । घञ् । उपसर्गस्येतिदीर्घ ॥ अन्ययोगे ॥

व्यतीहार । पुं॰ परीवर्त्ते । व्यतिहरणम् ॰ व्यतिह्रियतेवा । हृञ् ॰ । घञ् । उपसर्गस्येतिपाक्षिकोदीर्घ . ॥ परस्परमेकजातीयक्रियाकरणे ॥

व्यत्यय : । पुं॰ व्यतिक्रमे । व्यत्यासे । विपर्यासे । विपर्यये । व्यत्ययनम् इण् । एरच् ॥

व्यत्यस्त : । त्रि॰ व्यतिक्रमसहिते ॥ यथा । व्यत्यस्तपाणिनाकार्यमुपसंग्रहणंगुरो । सव्येनसव्य स्प्रष्टव्योदक्षिणेनचदक्षिणइतिमनु : ॥ उत्तानाभ्यांहस्ताभ्यादक्षिणोपरिभावेनव्यत्यास मिहसमाचारात् बोध्य ॥

व्यत्यास । पुं॰ व्यतिक्रमे । व्यत्यये ॥ व्यत्यसनम् । असुक्षेपणे । घञ् ॥

व्यत्यासित । त्रि॰ वैसादृश्यप्रापिते ॥ तारकादित्वादितच् ॥

व्यथक: । त्रि॰ व्यथाकारिणि । दुःख जनके ॥ भयङ्करे । व्यथयतिव्यथभयचलनयो: । बहुलमन्यत्रापीति कुन् ॥

व्यथा । स्त्री॰ पीडायाम् । दुःखे ॥ व्यथ॰ । षटादय षितदृतिषित्वादङ् । टाप् ॥

व्यथित । त्रि॰ दुःखिते । पीडिते ॥ व्यथासञ्जातास्य । तारकादित्वादितच् ॥

व्यध. । पुं॰ वेधे ॥ व्यधनम् । व्यधताडने । व्यधजपोरिस्यप् ॥ ताडने ॥

व्यधनम् । न॰ वेधने ॥

व्यध्य । पु॰ प्रतिकार्ये । धनुर्गुणे ॥

व्यध्व । पु॰ दुरध्वे । विपथे । निन्दितेवर्त्मनि ॥ विरुद्धोध्वा । प्रादयो गताद्यर्थे इतिसमास: । उपसर्गादध्वनइत्यच् ॥

व्यपगत: । त्रि॰ निवृत्ते ॥

व्यपदेश: । पु॰ शब्दे । नामनि ॥ कपटे ॥ विशिष्टोऽपदेश: । वाक्यविशेषे यथा । व्याजेनात्माभिलाषिणिव्यपदेशइतीर्यतइत्युज्ज्वलनीलमणि: ॥

व्यपवर्ग: । पुं॰ । व्यपवृक्तिभेदे ॥

व्यपाकृति । स्त्री॰ अपकृते । अपकारे ॥

व्यपाश्रय । पुं॰ शरणे ॥

व्यपेत: । त्रि॰ अपगते ॥

व्यपोढ: । त्रि॰ विपरीते ॥

व्यपोह: । पुं॰ व्यपोहने ॥

व्यपोहनम् । न॰ अपाकरणे ॥

व्यभिचार: । पु॰ कदाचारे । भ्रष्टाचारे ॥ परिलिपि । स्खालित्ये ॥ दोषविशेषे ॥ तस्य लक्षणं यथा । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववृत्तित्वं हि व्यभिचारइतिव्यधिकरणधर्मावच्छिन्नाभावचिन्तामणि ॥ स त्रिविध । साधारणासाधारणानुपसंहारिभेदात् । तत्र विपक्षवृत्तित्वं साधारणत्वम् । सर्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावोयत्र सर्वं त्वभिमतोऽनुपसंहारी । इतिसव्यभिचारचिन्तामणि ॥ विशिष्टोभिचार: ॥ व्यभिचरणं वा । चर॰ । घञ् ॥

व्यभिचारिणी । स्त्री॰ परपुरुषगामिन्याम् । कुलटायाम् । यथा । हताधिकारांमलिनांपिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यावासयेद्व्यभिचारिणीम् ॥ व्यभिचारोव्यतिक्रमोऽस्त्यस्या: । इनि: । ङीप् ॥

व्यभिचारी । पुं॰ चतुस्त्रिंशत्प्रकारशृङ्गारभावविशेषे । तेयथा । निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमा: । आलस्यं चैव दैन्यं च चिन्तामोह: स्मृतिर्धृति: ॥ व्रीडाचपलता

हर्षश्चावेगोजडतातथा गर्वोविषाद
औत्सुक्यनिद्रापस्मारएवच ॥ सुप्तो
विबोधोऽमर्षश्चावहित्थमोग्रतामति
। उपलम्भस्वव्याधिस्तउन्मादोमरणं त
था ॥ त्रासश्चैववितर्कश्चविज्ञेयाव्य
भिचारिणइतिहेमचन्द्र ॥ साहित्यद
र्पणे त्रियस्त्रिंशदुक्ता । यथा । वि
शेषादाभिमुख्येनचरन्तोव्यभिचारिण
। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च
तद्भिदा ॥ स्थिरतयावर्त्तमानेहि
रत्यादौनिर्वेदादय प्रादुर्भावतिरो
भावाभ्यामाभिमुख्येनचरणाद्व्यभि
चारिण कथ्यन्ते । केचि॰ तुला
ह । निर्वेदावेगदैन्यश्रममदजडता
औग्र्यमोहौविबोध स्वप्नापस्मारग
र्वामरणमलसतामर्षनिद्रावहित्था ।
औत्सुक्योन्मादशङ्का : स्मृतिम
तिसहिताव्याधिसन्त्रासलज्जाहर्षासू
याविषादा सधृतिचपलताग्लानि
निचिन्तावितर्का इति ॥ त्रि॰व्य
भिचारविशिष्टे ॥

व्यय । पुं॰ अर्थापचये । वित्तस्था
पगमे । उठाव॰खरच॰इ॰भा॰ ॥
पूर्वगृहीतदेहेन्द्रियादिवियोगे ॥ ध
र्मादिषुविनियोगे ॥ क्षये ॥ व
त्सरविशेषे ॥ तत्फलयथा । दुर्भि
क्ष जायतेघोरसर्वोपद्रवसंयुतम् ।
अनावृष्टि समाख्याताव्ययेसंवत्स
रेप्रिये ॥ २॰ ॥ न॰लग्नाद्द्वादशभव
ने व्ययनम् । व्ययवित्तसमुत्सर्गे
ऽदन्त । घञ्॰अच्॰वा ॥ विपूर्वा
दिणएरच्चा ॥

व्ययित । त्रि॰ कृतव्यये ॥

व्ययी । त्रि॰ व्यययुक्ते ॥ यथा। द्रविणं
परिमितमधिकव्ययिनजनमाकुली
कुरुते । कौशांशुकमिवपीनस्तनज
घनाया कुलीनाया ॥

व्यर्थ । त्रि॰ निरर्थके । मोघे । वि
फले ॥ यथा । भर्त्तानिश्वसितेऽप्य
सूयतिमनोजिघ्र सपत्नीगण श्व
श्रूरिङ्गितदैवतनय नयोरीहालिहो
यातर । तद्दूराद्यमञ्जलि किं
मधुनाहग्भङ्गिभागेनतेवैदग्धीमधु
रप्रबन्धरसिकव्यर्थोऽयमत्रश्रमइति
॥ विशेषणगत अर्थोयस्मात् ॥

व्यर्थभाषणम् । न॰ निरर्थकवाग्व्या
पारे ॥ यथा। देशराष्ट्रप्रसङ्गाश्चपरा
र्थपरिकल्पनात् । नर्महासप्रसङ्गा
श्चभाषणंव्यर्थभाषणमितिदेवल ॥

व्यलीक । पुं॰ नागरे । खिङ्गे ॥
न॰अप्रिये ॥ अकार्ये ॥ वैलक्ष्ये ॥
पीडने ॥ व्यङ्गे । विशेषणचलति ।
अलभूयादौ । अलीकादयश्चेति
साधु ॥ विगतान्तते । विगतम
लीकम् ॥ विपर्ययेप्रीतिस्वामी ॥

व्यवकलनम् । न॰ वियोगे । क्षीणे ॥
अङ्कशास्त्रकरणे । बाकिकाटा॰
इ॰गौ॰दे॰भा॰ ॥

व्यवकलित : त्रि॰ कृतव्यवकलने । वियोजिते । न॰ व्यवकलने ॥

व्यवच्छिन्न : । त्रि॰ भिन्ने ॥ विशेषिते ॥

व्यवच्छेद : । पुं॰ पृथक्त्वे ॥ बाणमुक्तौ ॥

व्यवच्छेदकम् । न॰ विशेषणे ॥

व्यवच्छेद्यम । त्रि॰ विशेष्ये ॥

व्यवधा । स्त्री॰ अन्तर्धायाम् । तिरोधाने ॥ व्यवधानम् । डुधाञ्॰ । आतश्चोपसर्गे इत्यङ् ॥

व्यवधानम् । न॰ अन्तर्धौ । तिरोधाने । वस्त्वन्तरकृतेऽवच्छेदे । खड्गादेः कोषादिवदावरणे ॥ व्यवपूर्वाद्धाञोल्युट् ॥

व्यवधायक । त्रि॰ व्यवधानकर्त्तरि ॥

व्यवधि । पुं॰ पिधाने । व्यवधाने ॥ व्यवधानम् । डुधाञ्॰ । उपसर्गे घोः किः ॥

व्यवसर्ग : । पुं॰ दाने ॥ व्यवसर्जनं सृज॰ । घञ् ॥

व्यवसाय : । पुं॰ उपजीविकायाम् ॥ उद्यमे ॥ फलाव्यभिचार्युद्यमे ॥ यथा । व्यवसायिनाव्यवसाय फलाव्यभिचार्युद्यमोभगवद्विभूतिरिति । निश्चये ॥

व्यवसायात्मिका । स्त्री॰ निश्चयात्मिकायां बुद्धौ ॥ व्यवसायोनिश्चय: आत्मायस्या ॥

व्यवसायी । त्रि॰ कृतनिश्चये ॥ सोद्यमे ॥ व्यवसायविशिष्टे ॥ वाणिज्यकारके ॥ अनुष्ठातरि ॥

व्यवसित । त्रि॰ निश्चये ॥ प्रतारिते ॥ अनुष्ठिते ॥ विशिष्टमवस्यतिस्म॰ अवसीयतेस्मवा । षोऽन्तकर्मणि । क्त । द्यतिस्यतीतीत्वम ॥

व्यवस्था । स्त्री॰ संस्थायाम् । सद्विषयकत्वनिर्धारणे ॥ विशिष्टाऽवस्था ॥ शास्त्रनिरूपितविधौ ॥ रचनानियमे ॥ व्यवतिष्ठतेऽनया । ष्ठा॰ । आतश्चोपसर्गइत्यङ् । टाप् ॥ व्यवस्थानवा ॥

व्यवस्थान । पुं॰ श्रीहरौ ॥ यस्मिन् व्यवस्थितिं सर्वस्य ॥ जातिवर्णाश्रमतद्धर्मादिकान्विभज्यकरोतिवा । कृत्यल्युटोबहुलमिति॰ बहुलग्रहणात्कर्त्तरिल्युट् । व्यवतिष्ठतेसर्वंजगदस्मात्क्रमेणात्र । अधिकरणेल्युटवा ॥ न॰ व्यवस्थितौ ॥

व्यवस्थापक । पुं॰ व्यवस्थादातरि ॥

व्यवस्थापित । त्रि॰ निश्चिते ॥

व्यवस्थित : । त्रि॰ अप्रचलिते । तत्तद्योगेनावस्थिते । प्रतिष्ठिते ॥ विशेषेणावस्थित : ॥ व्यवस्थांप्राप्ते ॥ इतच् ॥

व्यवस्थिति : । स्त्री॰ अवस्थाने । व्यवस्थाने ॥

व्यश्च । च० निश्चिर्थे स्वर्थे ॥

व्यवहरणम् । न० व्यवहारे ॥

व्यवहर्त्ता । पुं० व्यवहारकर्त्तरि ॥ प्राड्विवाके ॥

व्यवहार: । पुं० शास्त्रीयलौकिकादि व्यवहरणे । व्योहार० इ० भा०॥ यथाहु: । चहमिदमितिचमति व्यासततव्यवहरतिसर्वलोकोपि । प्रथमाप्रतीचिवरमानिवसतिवपु-रिन्द्रियादिवाह्यार्थे ॥ इति ॥ द्रुम प्रभेदे । व्यासे ॥ पणे ॥ स्थितौ व्युत्पत्तौ ॥ विवादे । स्वत्वादाना दिविषयचतुर्व्याख्यायै ॥ स्वत्वादाना ष्टादशविषयो० विरुद्धार्थिप्र-त्यर्थिवाक्यजनितसन्देहहारोवि-चारएवव्यवहार: । यथाहकात्या यन । विनानार्थेऽवसन्देहहरण हारउच्यते । नानासन्देहहरणा व्यवहारइतिस्मृतइति ॥

व्यवहारज्ञ: । पुं० प्राप्तव्यवहारे ॥ सतुषोडशवर्षानन्तरंभवति । यथा । बालचाषोडशाद्वर्षात्पौगण्डोपि निगद्यते । परतोव्यवहारज्ञ स्वतन्त्र: पितरावृतेइति ॥ वि० व्यवहार ज्ञातरि ॥

व्यवहारदर्शनम् । न० न्यायदर्शने । विचारकरणे ॥

व्यवहारपदम् । न० वादिनाराज्ञिनि वेदने ॥ यथाहयाज्ञवल्क्य । स्मृ

त्याचारव्यपेतेन० मार्गेणाधर्षित: परै: । आवेदयतिचेद्राज्ञिव्यवहा रपदंहितदिति ॥

व्यवहारपाद । पुं० व्यवहारांशे ॥ य था । पूर्वपक्ष: स्मृत: पादोद्वि पादश्चोत्तर: स्मृत: । क्रियापा दस्तथाचान्यश्चतुर्थोनिर्णय: स्मृत इति ॥

व्यवहारमातृका । स्त्री० व्यवहारोप योगिक्रियायाम् । साचमिताऽच राणानुसन्धेया ॥

व्यवहारमार्ग: । पुं० व्यवहारविषये । व्यवहारपदे ॥

व्यवहारविधि: । पुं० धर्मशास्त्रे । व्यवहारस्यविधाने ॥

व्यवहारविषय: । पुं० व्यवहार-पदे ॥

व्यवहारिका स्त्री० लोकयात्रायाम् ॥ वर्हन्याम् । सम्मार्जन्याम् ॥ इङ्गुदे ॥

व्यवहारी । त्रि० व्यवहारविशिष्टे ॥

व्यवहार्य्य: । त्रि० व्यवहरणीये । व्य वहर्त्तव्ये । व्यवहारयोग्ये ॥

व्यवहित । त्रि० दूरेस्थिते ॥ व्यवधान विशिष्टे । सान्तरे । भित्त्याद्यन्तरि ते ॥ तिरोहिते ॥

व्यवहृत: । त्रि० कृतव्यवहारे ॥

व्यवहृति: । स्त्री० व्यवहारे ॥

व्यवाय: । पुं० सुरते । ग्राम्यधर्मे ।

मैथुने ॥ अनर्थे । व यवधाने ॥ शुद्धाविति धरणिः ॥ न० तेजसि ॥ व्यवायनम् । कृष्णगतौ० व्ययगतौ वा । एरच्० घञ् वा ॥
व्यवायी । पु० स्त्री० कामुके ॥ त्रि० द्रव्यविशेषे ॥ व्यवायोऽस्मिन् वाऽस्ति । इनिः ॥
व्यश्नुवान: । त्रि० व्याप्नुवति ॥ अक्षो तेर्लट्. शानजादेश ॥
व्यष्टि । स्त्री० व्यस्तव यापिनि ॥ विशेषे ॥ अध्यात्मादिविभागेन व्याप्ति व्यष्टिरितीरिता ॥
व्यसनम् । न० अशुभे ॥ सक्तौ ॥ दैवानिष्टफले । भ से ॥ पापे ॥ विपत्तौ । निष्फलोद्यमे ॥ स्त्रीपानमृगयादिष्वष्टादशविधेषु ॥ यथोक्तम मनुना । मृगयाक्षोदिवास्वप्न. परिवाद. स्त्रियोमद ' । तौर्य्यत्रिकं वृथाट्या च कामजोदशकोगण: ॥ पैशुन्य' साहसद्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्य क्रोधजोऽपि गणोऽष्टक ' ॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपति । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयोविदु ' । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षा . स्त्रियश्चैव मृगया च यथाक्रमम । एतत्कष्टतमं विद्याच्चतुष्कं कामजेगणे ॥ दण्डस्यपातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकंसदा ॥ सप्तकस्यास्यवर्गस्य सर्वत्रैवानुषङ्गिण: । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ तथाहि द्यूतात्पानकष्टतरम्० मद्यपानेन मत्तस्य सञ्ज्ञाप्रणाशात्० यथेष्टचेष्टया देहधनादि विरोध कृत्याद्योदोषा ' ० द्यूतेतु पाक्षिको धनाद्यागमोऽप्यस्ति । स्त्रीव्यसनात्० द्यूतकष्टम्० द्यूतेहि वैरोद्भवाद्योनित्यास्त्रीणादोषा ' ० मूत्रपुरीषवेगधारणाच्च व्याध्युत्पत्ति ० स्त्रीव्यसनेपुनरपत्योत्पत्त्यादिगुणयोगोऽप्यस्ति । मृगयास्त्रीव्यसनयो स्त्रीव्यसनदुष्टम० तत्रादर्शनकार्याणांकालातिपातेन धर्मलोपाद्यो दोषा ० मृगयायांतुव्यायामेनारोग्यादिगुणयोगोऽप्यस्तीत्येव कामजचतुष्कस्य पूर्वं पूर्वं गुरुदोषम् ॥ क्रोधजेष्वपित्रिषु० वाक्पारुष्यात्० दण्डपारुष्यं दुष्टम्० अङ्गच्छेदादेरशक्यसमाधानत्वात्० वाक्पारुष्येतु० कोपाग्निसो० दानमानपानीयसेकै शक्य शमयितुम् । अर्थदूषणात्० वाक्पारुष्यदोषवन्मर्मपीडाकरम्० वाक्पारुष्यस्य दुश्चिकित्स्यत्वात् । एवं पूर्वं पूर्वं दुष्टतरं त्वजेदित्यर्थ: । यतोव्यसनासक्तिरनर्थावहा । व्यसनस्यचमृत्योश्च व्यसनं कष्टमुच्यते। व्यसनीधोधो

व्रजति स्वर्गोऽध्व यसनी स्मृत ' ॥ इ
ति ॥ अन्यत्रापि । एक एव व्यसना
सक्ता सर्वे संख्युपगता ' । य '
पुन सहितान्सर्वैर्विषयान्विषयी
नर . । सपतिं भ्रष्टैश्वर्याच्छिन्नमूल
द्रुमवद्गुमवृत्ति ॥ चौर्य्ये वव्यसनान्यद्य
कामजानि भवन्त्युत । मिथ्यावाक्य
परमक्रतस्माद्गुरुतराबुभौ ॥ परदा
राभिगमनं विना वैरञ्चरौद्रतेति रामा
यणम् ॥ व्यस्यति । असुक्षेपणे । भा
वकर्मकारणादौ ल्युट् ॥ सर्वथैतत्
सम्पादयिष्यामीत्याग्रहो व्यसनम् ॥

व्यसनवारक । पु० राजर्षिविशेषि

व्यसानार्त्तं . । त्रि० उपरक्ते । दैवमा
नुषान्यतरपीडायुक्ते ॥ व्यसनति श्रे
योमार्गात् ० व्यसनम् ० तेनार्त्तं ॥

व्यसनी । त्रि० व्यसनयुक्ते । पशुभ
द्रे ॥ व्यसनमस्यास्ति ० अस्मिन्नृणा ।
इनि ॥

व्यस्त : । त्रि० व्याकुले । व्याप्ते ॥
प्रत्येकम् । पृथक् पृथगर्थे ॥
विपरीते ॥ व्यस्यतिस्म । असुक्षेप
णे । क्त . ॥ विभक्ते ॥ विक्षि
प्ते ॥ *

व्यस्तपदम् । न० क्षतादोनाभियोगेप
टान्तरेणोत्तरे ॥ यथा ॥ सुवर्णश
ताभियोगे ० अनेनाहताडितइति ॥

व्यस्तारम् । न० हस्तिनोमदप्रयोगे ॥

व्याकरणम् । न० वेदस्थानेशब्द
शास्त्रे ॥ विशेषेणव्याक्रियन्तेव्युत्पा
द्यन्तेशब्दाअनेन । डुकृञ् ०
ल्युट् । प्रादिसमास ॥ अस्यार
म्भेप्रयोजनं यथा । नवेष्वध्वराख्याग
मारम्भकालस्तीशिमुषीशोभनोवि
च्छिन्नेषु । वलच्छिन्नमेवोडुश्वाश्रिते
षुक्षतोधर्मशास्त्रादिकारम्भकालमि
ति । अत्रोक्तं महाभाष्ये । पुराक
ल्पएतदासीत् । संस्कारकालोत्त
रत्राह्मणाव्याकरणं स्माधीयते ० ते
भ्यस्तत्तत्स्थानकरणनादानुप्रदा
नज्ञेभ्योवैदिका शब्दाउपदिश्यन्ते ०
तदद्यत्वे नतथा ० वेदमधीत्यत्वरिता
वक्तारोभवन्तीति । त्वरिताविषो
ढादाश्चित्किंयट . । संस्कारउपन
यनम् । करणमाभ्यन्तरप्रयत्न ।
अनुप्रदाननादादिवाह्य ' प्रयत्न .
। तेनअधीतव्याकरणशिष्टेभ्यइत्य
र्थं इतिविवरणम् ॥

व्याकार । पु० व्याकरणे ॥ कृञो
घञ् ॥

व्याकीर्णं . । त्रि० विकीर्णे । विक्षि
प्ते । *

व्याकुल : । त्रि० शोकादिभिरितिक
र्त्तव्यतापरिज्ञानशून्ये ॥ विह्वले ॥
व्याकौलति । कुलसंस्त्याने अन्तर्भु
क्ष । इगुपधेति क ' ॥ उपद्रुते ॥
सम्भ्रान्ते ॥

व्याकुलात्मा । त्रि० शोकादिभिर्व्याकुले

व्याकृत । पुं॰ कार्यब्रह्मणि । सभूतौ । हिरण्यगर्भे ॥

व्याकृति । स्त्री॰ भङ्ग्या ॥ व्युत्पत्तौ ॥ व्याकरणम । डुकृञ॰ । क्तिन् ॥ विशिष्टाआकृतिर्वा ॥ व्यञ्जने ॥

व्याकोश । त्रि॰ व्याकोषि । विकसिते ॥ व्यावृत्त कोश सङ्कोचोऽस्मात् । प्रादिसमास ॥

व्याकोष । पुं॰ प्रफुल्ले । उतफुल्ले । विकसिते ॥ व्यावृत्त कोष सङ्कोचोऽस्मात् । प्रादिभ्यो धातुजस्येतिसमास ॥

व्याक्षेप । पुं॰ अन्तराये ॥ व्याक्षेपोभविष्यन्त्या कार्यसिद्धेर्हिलक्षणम् ॥

व्याख्या । स्त्री॰ विवरणे ॥ व्याख्यानम् । ख्या॰ । आतश्चोपसर्गेइत्यङ् । टाप् ॥

व्याख्यागम्यम् । न॰ उत्तराभासभेदे ॥ यथा व्यस्तव्यस्तपदव्यापिनिगूढार्थं तथाकुलम् । व्याख्यागम्यमसारत्वमोत्तरमध्यतेबुधैः ॥ व्याख्ययागम्यज्ञायतेयत गम्लृ॰ । पोरदुपधादितियत् ॥ *

व्याख्यात । त्रि॰ विवृते । कथिते । विस्पष्टमाख्याते ॥

व्याख्याता । त्रि॰ विवरणकर्त्तरि ॥

व्याख्यानम् । न॰ व्याख्यायाम् ॥ यथास्वलक्षणम् । पदच्छेदः पदार्थोक्तिर्विग्रहोवाक्ययोजना । आक्षेपश्चसमाधानव्याख्यानं पञ्चलक्षणम् ॥ व्याख्यानसाधने ॥ व्याख्यायतेऽनेन । ख्या॰ । करणेल्युट् ॥

व्याघात । पुं॰ विष्कम्भादियोगान्तर्गतयोगभेदे ॥ अत्रजातस्यफलं यथा । व्याघातजातोचसतांनितान्तव्याघातजन्मामनुजः कठोरः । असत्यभाषीकृपयाविहीनोमन्दश्चयोदीर्घतनुः कृशाङ्गः ॥ अन्तराये । विघ्ने ॥ घाते । प्रहारे ॥ विशिष्टआघात ॥ अलङ्कारविशेषे ॥ तल्लक्षणं यथा । तद्यथ साधितं केनाप्यपरेणतदन्यथा । तथैवयद्विधीयेतसव्याघातइतिस्मृतः ॥ येनोपायेनयदेकेनोपकल्पितं॰ तस्यान्येनजिगीषुतयातदुपायकमेवयदन्यथाकरणं॰ सस्वसाधितवस्तुव्याहतिहेतुत्वात्॰ व्याघात ॥ उदाहरणम् । दृशादग्धमनसिजं जीवयन्तिदृशैवयाः । विरूपाक्षस्यजयिनीस्ताः स्तुवेवामलोचनाः ॥

व्याघ्र । पुं॰ शार्दूले । द्वीपिनि । रक्तैरण्डे ॥ करञ्जे ॥ नराद्युत्तरस्थः श्रेष्ठे ॥ यथानरव्याघ्र । व्याजिघ्रति । घ्रा॰ । व्याङिघ्रातीअजातिविति । यद्वा आतश्चोपसर्गेइतिक । पाघ्राध्माधेटदृशः

भवतिशीन। अ. सञ्ज्ञायामितिनिषेधात्॥

व्याघ्रदल। पुं॰ एरण्डे॥

व्याघ्रनख। पुं॰ स्नुहीवृक्षे॥ व्यालनखे। व्यस्तफले॥ व्याघ्रस्यनखे॥ न॰ नखीनामगन्धद्रव्ये। व्याडायुधे। करजे। चक्रकारकीकन्दविशेषे॥ नखक्षतविशेषे॥ व्याघ्रस्यनखमिव॥

व्याघ्रनखकम्। न॰ नखक्षते॥

व्याघ्रनायकः। पुं॰ शृगाले। दू॰ रा॰ घट॰॥

व्याघ्रपात्। पुं॰ विकङ्कते। ग्रन्थिले॥ व्याघ्रस्यपादाएवपादमूलान्यस्य॥ मुनिविशेषे॥ त्रि॰ व्याघ्रतुल्यचरणे॥

व्याघ्रपादः। पुं॰ विकङ्कतवृक्षे॥ विकण्टकवृक्षे॥ मुनिविशेषे॥ रक्तैरण्डे॥

व्याघ्रपुच्छः। पुं॰ एरण्डमात्रे। व्याघ्रपुच्छमिवपुच्छमस्य॥

व्याघ्राटः। पुं॰ भरद्वाजपक्षिणि॥ व्याघ्रमटति। अट॰। कर्मण्यण्। व्याघ्रइवअटतिवा। अच्॥

व्याघ्रादनी। स्त्री॰ चित्रतायाम्॥

व्याघ्रायुधम्। न॰ नखाख्यगन्धद्रव्ये॥

व्याघ्रास्यः। पुं॰ बिडाले॥ न॰ व्याघ्रमुखे॥

व्याघ्री। स्त्री॰ निदिग्धिकायाम्। कण्टकार्याम्॥ व्याजिघ्रति। घ्रा॰। व्याघ्रादिभिरितिलिङ्गादातश्चोपसर्गइतिक॰ नतुश॰। गौरादि॥ धूम्रवर्णायाम्वराटिकायाम्॥ व्याघ्रस्त्रियाम्॥ यथा। व्याघ्रीवास्तेजरापायुर्यातिभिन्नघटाम्बुवत्। निघ्नन्तिरिपुवद्रोगास्तस्माच्छ्रेयसमाचरेत्॥ इ॰ कुलार्णवः॥

व्याङ्गिः। पुं॰ व्याडमुनौ॥ अपत्येइञ्। स्वागतादीनाञ्चेतिवृद्धिनिषेधऐजागमश्चन॥

व्याचिख्यासित। त्रि॰ व्याख्यातुमिष्टे॥

व्याचिख्यासुः। त्रि॰ व्याख्यातुमिच्छौ॥

व्याजः। पुं॰ शाठ्ये। कृतौ॥ स्वरूपाच्छादने। अपदेशे। मिषे॥ व्यजन्ति॰ क्षिपन्त्यनेन। अज॰। हलश्चेतिघञ्। निष्ठायामसेट्त्वान्नकुत्वम्॥

व्याजनिन्दा। स्त्री॰ अलङ्कारविशेषे॥ यथा। निन्दायानिन्दयाव्यक्तिर्व्याजनिन्देतिगीयते। विधेसनिन्द्योयस्तेप्रागेकमेवाहरच्छिरः॥ अत्रहरनिन्दया॰ विषमविपाकंसंसारप्रवर्त्तयतोविधेर्निन्दाव्यङ्ग्या॰ व्याजनिन्दा॥ यथावा। वि

धिरेवविशेषगर्हणीय कराटस्त्वं रट
कस्तवापराध । सहकारतरौ चकार
योऽसौ सहवाससरलेन कोकिलेन ॥ अ
न्यस्तुत्या • अन्यस्तुत्यभिव्यक्तिरिति
पञ्चमप्रकारव्याजस्तुतिप्रतबन्धः
व्याजनिन्दा ॥ कपटकुत्सायाम् ॥

व्याजस्तुति । स्त्री॰ अलङ्कारविशेषे
॥ यथा । उक्तिर्व्याजस्तुतिर्निन्दा
स्तुतिभ्यां स्तुतिनिन्दयोः । क स
धुनि विवेकस्ते पापिनो नयसे दिवम्
॥ साधुदूति पुनः साधु कर्त्तव्य
किमतः परम । यन्मदर्थे विलू
नासि दन्तैरपि नखैरपि ॥ निन्दया
स्तुतेः • स्तुत्या निन्दाया वा • अवग
मनं व्याजस्तुतिः । क . सधुनी
त्युदाहरणे • विवेको नास्तीति निन्दा
व्याजेन • गङ्गायाः मुक्तिप्रदेव • महा
पातकिनोऽपि • स्वर्गं नयतीति व्याज
रूपया निन्दया तत्प्रभावातिशयस्तु
तिः । साधुदूतीत्युदाहरणे • म
दर्थमियन्तं क्लेशमनुभूतवत्यसीति
व्याजरूपया स्तुत्या • मदर्थं न गतासि
• किन्तु रन्तुमेव गतासि • धिक् त्वां दू
तिकाधमं विश्वासघातिनीमिति नि
न्दावगम्यते ॥ कपटप्रशंसायाम् ॥

व्याजोक्तिः । स्त्री॰ छलवाक्ये ॥ अ
लङ्कारविशेषे ॥ यथा ॥ व्याजो
क्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।
सखि पश्य गृहारामपरागैरस्मि धूस
रा ॥ अत्र चौर्यरसक्रान्तसङ्केतभूपृष्ठ
लुण्ठनसम्भूधूलिजालस्य गोपनम् ॥
कस्य वा न भवेद्रोष प्रियायाः . स
व्रणे धरे । सभृङ्गपद्ममाघ्रासीर्वारि
तापि मयाधुना ॥ उपपतिनाख
ण्डिताधराया नायिकाया . सका
शमागच्छन्तं प्रियमपश्यन्त्येव सख्या
नायिकाप्रतिहितोपदेशवयोजनत
म्रंति • नायिकापराधगोपन च्छेका
पह्नुतिरस्यास्यायं विशेष । यत्तस्याव
चनस्यान्यथानयनेनापह्नव । अस्या
माकारस्य हेत्वन्तरवर्णनेन • गोपन
मिति • लक्षणा • लक्ष्यनाम्नि चोक्तिय
हणस्याकारस्य गोपनार्थं हेत्वन्तरप्रत्या
यकव्यापारसाचेयलक्षणम् ॥

व्याड । पुं॰ हिंस्रपशौ ॥ मांसा
दिपशौ ॥ सर्पे ॥ व्याडति । अ
डउद्यमे । व्याडपूर्वः । पचाद्य
च ॥ खले । वञ्चके ॥ इन्द्रे ।

व्याडायुधम् । न॰ व्याघ्रनखाख्यगन्धद्र
व्ये ॥ व्याडस्य व्याघ्रस्यायुधमिव ॥

व्याडिः । पुं॰ मुनिभेदे । विन्ध्यस्थे
नन्दिनीसुते । मेधाविनि । व्यड
स्यापत्यम् । इञ् । स्वागतादित्वा
द्वृद्धिनिषेधऐजागमश्च ॥

व्यात्तः । त्रि॰ विवृते । वाचा॰ इ॰
भा॰ प्र॰ । यथा व्यात्तानन : ॥

व्यात्युक्षी । स्त्री॰ रसिकजनानाम
न्योन्यजलक्रीडने । करपाखे । उ

लक्रीडायाम् । करपचिकायाम् । छींटाखेलना • कृ • छींटाछींटीसेखेलना • कृ • च • भा • । व्यतिहारेणउक्षणम् • परस्पराभ्युक्षणम् । उक्षसेचने । कर्मव्यतिहारेणच् स्त्रियामिति णच्प्रत्यय । णच. स्त्रियामञ् । टिड्ढाणञित्यादिनाङीप् ॥

व्यादित : । त्रि• प्रसारिते ॥

व्यादिष्ट : । त्रि• सन्दिष्टे ॥ व्याङ्पूर्वाद्दिशेः क्त ॥

व्याध : । पुं• मृगवधाजीवे । मृगयौ । लुब्धके ॥ व्ययसर्वंविभायोयोऽचवियाज्ञात । यथोक्तंब्रह्मवैवर्त्ते । मापितात्गोपकन्यायासर्वंत्री• तज्ययोषिति । व्याधभूव व्याधलवलवान् मृगहिंसकइति ॥ दुष्टे ॥ ताराभयेषि ॥ मेदनी ॥ विध्यति । व्यधताडने । श्याद्व्यधेतिण ॥

व्याधभीत : । पुं• मृगे ॥

व्याधाम : । पुं• वज्रे ॥ कृ• है• न्द्र : ॥

व्याधि : । स्त्री• कुष्ठौषधौ ॥ रोगे । धातुवैषम्यनिमित्ते • ज्वरातीसारादिरूपेविकारे ॥ चिकित्साशास्त्रे • प्रशमनाभूतशरीरसमवाय: पुरुषइत्युच्यते । तस्मिन्क्रियासोऽधिष्ठानम• कस्माल्लोकस्यदेविध्यात् । लोकोहिद्विविध • स्थावरोजङ्गमश्च । द्विविधात्मकएवाग्नेयसौम्यश्च• तद्भूयस्त्वात् । पञ्चात्मकोवा । तत्रचतुर्विधोभूतग्राम । स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः । तत्रपुरुषप्रधानम् । तस्योपकरणमन्यत् । तस्मात्पुरुषोधिष्ठानम् । तद्दुःखसंयोगाव्याधयइत्युच्यन्ते । तेचतुर्विधा • आगन्तव • शारीरा• मानसा • स्वाभाविकाश्चेति । तेषामागन्तवोभिघातनिमित्ता । शारीरास्त्वन्नपानमूलावातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता । मानसास्तु• क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति । स्वाभाविका . क्षुत्पिपासाजरामृत्यु-निद्राप्रभृतय । तएतेमन. शरीराधिष्ठाना : ॥ तेषांसंशोधनसंशमनाहाराचारा . सम्यक्प्रयुक्तानिग्रहहेतव . इत्यादिसुश्रुतेप्रथमाध्याय । विगतव्याधिरनेन ॥ विविधाव्याधयोस्माद्वा ॥ व्याधानवा । उपसर्गेघो किः ॥

व्याधिघात : । पुं• आरग्वधे ॥ व्याधीन्हन्ति । हन• कर्मण्यण् । हनस्तोचिण्णलो : ॥

व्याधित : । त्रि• व्याधियुक्ते । आमयाविनि । आतुरे ॥ व्याधः संज्ञा

तोस्य । तद्स्यसञ्जातंतारकादिभ्य इतच् ॥

व्याधितः । पुं॰ धाराकदम्बे ॥ त्रि॰ व्याधियुक्ते ॥

व्याधूत : । त्रि॰ कम्पिते ॥ विशेषेण आसमन्ताद्धूत ॥

व्यान । पुं॰ शिरःस्थागमनवत्यखिल शरीरवर्त्ति निदेहस्थपञ्चवाय्वन्तर्गतानिलविशेषे ॥ प्राणापानयोर्निर्गमनकर्माचरणामन्युत्पादनादिवीर्यवत्कर्महेतुत्वादखिलशरीरवर्त्ती व्यानइत्यर्थः ॥ व्यानोविनामयत्यङ्गव्याने व्याधिप्रकोपण । प्रतिदानतथाकण्ठाद्व्यापनाद्व्यानउच्यते । व्याप्त्यानिलमेनइत्यस्ते तिघञ् ॥

व्यानतम् । न॰ रतिबन्धान्तरे ॥ यथा । स्वेच्छयाभ्रमतिगच्छमेपियायेत्पिदाचरतिवच्चभावितम् । व्यानतरतमिदयन्तिप्रियाख्यादधोमुखचतुष्पदाकृति ॥

व्यानद्ध : । त्रि॰ विशेषिणबद्धे ॥

व्यापक । त्रि॰ अपरिच्छिन्ने । अन्यूनदेशकालवृत्तौ ॥ विष्णौ ॥ स्वसत्ताप्रकाशाभ्यांनामरूपेऽव्याप्नोति । आप्लव्याप्तौ । ण्वुल्तृचावितिण्वुल् ॥ तद्भिन्नधात्यन्ताभावाऽप्रतियोगिनि । यथा । साध्यस्याव्यापकोयस्तुहेतोरव्यापकस्तथा । सउपाधिर्भवेत्तस्यनिष्कर्षोयंप्रदर्श्यते ॥ इ॰भा॰प॰ ॥ आच्छादके ॥ यथा । पद्मस्यव्यापकसारसमस्निग्धमनाकुलम् । अव्याख्यागम्यमित्येवमुत्तरतद्विदोविदुः ॥ पद्मस्य॰ भावार्थस्य॰ व्यापकमाच्छादकम्॰ अभियोगाप्रतिकूलमित्यावत् । इतिव्यवहारतत्त्वम् ॥ लिङ्गिनि ॥ येनचप्रतिबद्धतद्व्यापकम ॥ ब्दी ॥

व्यापकता । स्त्री॰ व्यापकत्वे ॥

व्यापत्ति । स्त्री॰ व्यापौ । मरणे ॥

व्यापद् । स्त्री॰ आपदि ॥ मृत्यौ ॥ व्याङ्पूर्वात्पदे क्विप् ॥ विशिष्टाआपद ॥

व्यापनम् । न॰ आच्छादने ॥ व्याप्तौ ॥

व्यापन्न । त्रि॰ मृते ॥

व्यापाद । पुं॰ द्रोहचिन्तने ॥ व्यापादनम् । व्याङ्पूर्वकपदधातोर्ण्यन्ताद्भावेघञ् ॥

व्यापादनम । न॰ मारणे ॥ व्याङ्पूर्वात्पदधातोर्ण्यन्ताल्ल्युट् ॥

व्यापादित । त्रि॰ मारिते ।

व्यापार । पु॰ कर्मणि । क्रियायाम् ॥ द्यमभवने ॥

व्यापारित । त्रि॰ नियुक्ते ॥

व्यापारी । त्रि॰ व्यापारविशिष्टे व्यवसायिनि ॥

व्यापिका । स्त्री॰ व्यापिन्याम॥व्या

प्नोति । आप्लृ• खल् । टाप् । ह्रस्वम् ॥

व्यापी । त्रि• विभौ । व्यापके । आत्मनि । पुं• ॥ सकलवस्तुव्यापनशीले ॥ व्याप्तुं शीलमस्य आप्लृ० । सुप्यजाताविति णिनि ॥

व्यापिनी स्त्री• व्यापिकायाम् ॥

व्यापृण्वान । त्रि• व्याप्रियमाणे ॥

व्यापृतः । पुं• कर्मसचिवे । आयुक्ते ॥ त्रि• व्यापारयुक्ते ॥

व्यापृतिः । स्त्री• व्यापारे ॥

व्याप्तः । त्रि• ख्याते ॥ समाक्रान्ते ॥ यथा । यद्यत्कार्यं कारणेन व्याप्तमन्नवं क्लृप्तेति । कारणत्वेन सर्वकार्याणां व्यापनाद्व्याप्तः । परमात्मा । पुं• ॥ व्याप्यतेस्म ॥ आप्लृ• । गत्यर्थाकर्मकेति क्तः ॥ कार्त्स्न्येन समस्तं तत् सर्वं कार्यमुपादानत्वेन व्याप्नोति । विपूर्वादाप्नोतेः पूर्वेणकर्त्तरि क्तः ॥

व्याप्तिः । स्त्री• व्यापने ॥ रत्नं । इति मेदिनी ॥ लम्भने । इति हेमचन्द्रः ॥ यत्र धूमस्तत्राग्निरिति साहचर्यनियमे ॥ व्यापनम् । आप्लृ • । स्त्रियां क्तिन् ॥ प्राप्तौ ॥

व्याप्यम् । न• लिङ्गे । साधने ॥ न्यूनदेशकालनियतव्याप्यम् ॥ व्याप्त्याभाविव्याप्याभावी व्याप्यः ॥

व्याप्यते । आप्लृ• । ऋहलोर्ण्यत् ॥ कुष्ठौषधौ । पालके । व्याधौ । उत्पले ॥ त्रि• व्याप्तिविशिष्टे । व्याप्तिकर्मणि ॥ आकरे ॥ शङ्कितसमारोपितोपाधिनिराकरणेन स्वभावप्रतिबद्धं व्याप्यमिति सांख्याः ॥ अस्यार्थः । सम्यग्युक्तः शङ्कितः •विपर्ययुक्तः समारोपितः •उपाधिर्विशेषणम् स्वभावेति । भावः सत्ता•तया प्रतिबद्धमित्यर्थः ॥ प्रत्यंशे तत्रैव मन्तेन लिङ्गसत्ताभावेनानुमानं सिद्ध्यतीति भावः ॥

व्याप्यत्वासिद्धः । पुं• सोपाधिके ॥ साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धहेत्वाभासः ॥

अव्यभिचारितसामानाधिकरण्याभावे ॥

व्याम. । पुं॰ बाह्वो सकरयोस्तयोस्तिर्यगन्तरे । स्वस्वपार्श्वप्रसारितयोर्बाह्वोर्मध्ये । व्यायामे । न्यग्रोधे ॥ विशेषिण्यस्य ९ऽमेन । अमगतौ । हलश्चेतिघञ् ॥

व्यामनम् । न॰ व्यामे ॥

व्यामिश्र । त्रि॰ सङ्कीर्णे ॥

व्यामृष्ट । त्रि॰प्रमृष्टे ॥

व्यामोह . । पु॰ मोहे । विपरीतज्ञाने ॥

व्यायच्छमान । त्रि॰ व्यायामकुर्वति ॥

व्यायत । त्रि॰ व्यापृते ॥ दीर्घे ॥ दृढे ॥ अतिशये ॥ विशेषेणायत ॥

व्यायाम । पु॰ नियामे ॥ दुर्गसञ्चरे ॥ शरीरायासजनककर्मविशेषे । मल्लक्रीडायाम् ॥ अस्यगुणा यथा । व्यायामोहितसदापथ्योबलिनां स्निग्धभोजिनाम् । सचशीतेवसन्तेचतेषां पथ्यतम स्मृत । सर्वेष्वृतुषुसर्वैहिं शूरैरात्महितार्थिभि । शक्त्यर्द्धेनतुकर्त्तव्योव्यायामोहन्त्यतोव्यथाम् ॥ कुचौललाटेयोवायोर्यदावर्म प्रवर्त्तते । शक्त्यर्द्धन्तविजानीयाद्दायतोप्च्छासमेवच ॥ लाघवकर्मसामर्थ्यंस्थैर्यं क्लेशसहिष्णुता । दोषक्षयोग्निवृद्धिश्चव्यायामादुपजायते ॥ व्यायामकुर्वतोनित्यंविरुद्धमपिभोजनम् । विदग्धमविदग्धंवानिर्दोषं परिपच्यते ॥ नचव्यायामसदृशमन्यत्स्थौल्यापकर्षणम् । अथव्यायामिन मर्त्यंसर्दयन्त्यरयोवलात् ॥ नचैनं सहसाक्रम्यजरासमधिगच्छति । व्यायामक्षुण्णगात्रस्यपद्भ्यामुद्वर्त्तितस्यच ॥ व्याधयोनोपसर्पन्ति वैनतेयमिवोरग ॥ रक्तपित्तीक्षयीशोषीकासीश्वासीक्षतातुर । भुक्तवान्स्त्रीषुचक्षीणो व्यायामंपरिवर्ज्जयेत् ॥ वातपित्तामयीबालोवृद्धोऽजीर्णीचसन्त्यजेत्॥ अतिव्यायामत. कासोरक्तपित्तप्रजायते । श्रम क्लम क्षयस्तृष्णा ज्वरश्छर्दिश्चजायते ॥ इतिराजवल्लभ ॥ व्यामे ॥ इतिहेमचन्द्र ॥

व्यायामवान् । त्रि॰व्यायामिनि व्यायामोऽस्त्यस्य बलादित्वात्पक्षे मतुप् तदभावे॰इनि ॥व्यायामी॥

व्यायास । पुं॰ परिश्रमे ॥ विशिष्ट आयास : ॥

व्यायोग । पुं॰ दशविधरूपकान्तर्गत रूपकविशेषे ॥ यथा । नाटकप्रकरण भाण प्रहसनं डिम । व्यायोग समवाकारोवीथ्यङ्केहामृगा इति । अभिनेयप्रकारा . सुभाषो. घट स्वतादिका : ॥ इतिहेमचन्द्र ॥

व्याल । पुं॰ दुष्टगजे ॥ सर्पे ॥ श्वापदे ॥ सिंहे ॥ त्रि॰ खले ॥ शठे ॥ व्याडति । अडउद्यमेव्या ङ्पूर्वं । पचाद्यच् । डलयोरैक्यस्मरणाद्व्यालः यद्वा विरुद्धमासमन्ताद्दलति॰ अडतिवा ॥ अड॰ । डलयोरैक्यत्वम् । पचाद्यच् ॥

व्यालक । पुं॰ दुष्टगजे । गर्म्भीरवेदिनि ॥ द्व॰ त्रि॰ शेष ॥

व्यालखङ्गः । पुं॰ व्याघ्रनखे ॥

व्यालगन्धा । स्त्री॰ नाकुल्याम् । रास्नायाम् ॥

व्यालग्रह । पुं॰ व्यालग्राहिणि ॥

व्यालग्राही । पुं॰ आहितुण्डिके ॥ व्यालंगृह्णाति । नन्द्यादीति-णिनिः ॥

व्यालजिह्वा । स्त्री॰ महासमङ्गायाम् ॥

व्यालदंष्ट्रः । पुं॰ गोक्षुरे ॥

व्यालनख । पुं॰ गन्धद्रव्यविशेषे । व्याघ्रनखे ॥

व्यालपत्रा । स्त्री॰ एर्वारौ ॥

व्यालबल । पुं॰ व्यालनखे ॥

व्यालमाल । पुं॰ शिवे ॥ व्याला॰ सर्पाएवमालायस्य ॥

व्यालमृग । पुं॰ चित्रव्याघ्रे ॥

व्यालम्ब । पुं॰ रक्तैरण्डे ॥

व्यालायुधम् । न॰ व्याघ्रायुधे ॥ व्यालस्येवायुधमित्र ॥

व्याली । त्रि॰ व्यालवति ॥

व्याली । स्त्री॰ दुष्टायाम् ॥

व्यालोडनम् । न॰ विमर्द्दने ॥

व्यालोलित । त्रि॰ विलुलिते ॥

व्यावक्रोशी । पुं॰ परस्पराक्रोशने

व्यावर्त्तः । पुं॰ रोगभेदे ॥ विशिष्टआवर्त्ते ॥

व्यावर्त्तकः । त्रि॰ भेदके ॥

व्यावर्त्तनम् । न॰ इतरेतरवियोगस्थाने ॥ वेष्टने । वेठन॰ इ॰ भा॰

व्यावर्त्तयितुम् । अ॰ बाधितुमित्यर्थे

व्यावर्त्तिका । स्त्री॰ बाधिकायाम् प्रतिबन्धिकायाम् ॥ यथा । सो मत्याप्रतिभान्तिविप्रविमया किन्तुस्य हायुष्मती॰ दिङ्मात्रमथयोम तोनिविशतेगाढोग्रहेष्ठ्याहः । अत्रोपायमितिस्फुरत्यपिहृदिव्यावर्त्तिकावासना॰ कानामेयमतक्यं मोहगहनादेवीसतायातना ॥

व्यावर्त्तित । त्रि॰ बाधिते । पराङ्मुखीकृते ॥

व्यावहारिक । त्रि॰ व्यवहारसिद्धे ॥ व्यवहारेणचरति । चरती तिठक् । खागतादिः ॥ विनयादित्वात्स्वार्थेवाठक् ॥

व्यावृत्त : । त्रि॰ निवृत्ते ॥ वृते ॥

व्यावृत्ति. । स्त्री॰ व्यतिरेके । निरसने ॥ खण्डने ॥ आवृत्तौ ॥ यथा सर्वंसपक्षव्यावृत्तिरेवदोषा॰ नविपक्षव्यावृत्तिरपितस्याननुगुणत्वात् ॥

व्याश्रय. । त्रि॰ विभिन्नाश्रये । नानापक्षसमाश्रये ॥ विभिन्नआश्रय. ॥

व्यास । पुं॰ मुनिविशेषे । बादरायणे । पाराशर्य्ये । भगवति॰ कृष्णद्वैपायने । मुनीनामप्यहंभगवतोविभूतौ ॥ येन॰ ऋग्वेदादिविभागेन॰ चतुर्धावेदाव्यस्ता । तत्रर्ग्वेदएकविंशतिधाकृत यजुर्नवाधिकशतधाकृत । सामवेद सहस्रधाकृत अथर्वण पञ्चाशच्छाखाभेदेनकृत । एवविभागेनचतुर्वेदाव्यस्ता : । अन्यानिचपुराणानि॰ व्यस्तान्यनेनेतिव्यास ॥ तवेदशास्त्रपरिनिष्ठितशुद्धबुद्धि- चर्माम्बरसुरमुनीन्द्रनुतकवीन्द्रम्- । कृष्णत्विषकनकपिङ्गजटाकलापव्यासनमामिशिरसातिलकमुनीनाम् ॥ व्यस्यतिविभजतिविस्तारयतिविपूर्वोदस्यतेर्वाहुलकात्कर्त्तरिघञ ॥ वेदविस्तारकरणाद्व्यासनामाभवन्मुनिरितिभागवतम् ॥पाठकब्राह्मणे ॥ यथा । विस्पष्टमद्रुतशान्त स्पष्टाक्षरपदन्तथा । कलस्वरसमायुक्त रसभावसमन्वितम् ॥ बुद्ध्यमान सदर्थैर्ग्रन्थार्थकृत्स्नशोनृप । ब्राह्मणादिषुसर्वेषुग्रन्थार्थंचार्पयेन्नृप । यएववाचयेद्ब्रह्मन्सविप्रोव्यासउच्यते ॥ विस्तृतौ । प्रपञ्चे । विस्तारे ॥ मानभेदे ॥ गोलस्यमध्यरेखायाम ॥ व्यसनम् । असुपर्णपणे । घञ ॥

व्यासक्त । त्रि॰ व्यापृते । विशेषेणासक्ते । संलग्ने ॥ व्यासक्त कार्यान्तरविस्मरतीत्यसावधानोक्ति ॥

व्यासङ्ग. । पुं॰विच्छेपे ॥ विशिष्टासङ्गे ॥ विशेषेणआसङ्ग . ॥ घ व्यासि ॥

व्यासमाता । स्त्री॰ सत्यवत्याम् । वासव्याम् ॥

व्यासिद्ध . । त्रि॰ निषिद्धे ॥

व्यासेध . । पु॰ प्रतिषेधे । व्यासेधम् । व्याङ्पूर्वात्सिधतेर्घञ् ॥

व्याहत . । त्रि॰ वाधिते ॥ विधूनिते ॥ अपनीते ॥ विशेषेणआहत . ॥ व्यर्थे ॥

व्याहति : । स्त्री॰ व्याघाते ॥

व्याहन्यमान । त्रि॰ प्रतिषिद्ध्यमाने ॥

व्याहरणम् । न॰ व्याहारे । यथा । स्नातुस्तुवरुणस्तेजोजुह्वतोऽग्निश्रियहरेत् । भुञ्जानस्ययमस्त्वायुस्त

स्यान्नवयाहरेत्चित्स्थितिभविष्योस
रपुराणम् ॥
व्याहरन् । त्रि० शब्दयति ॥
व्योहार । पुं० उक्तौ । लपिते ।
वचसि ॥ व्यवहरणम् । वयाङ्
पूर्वात्० हञोभावेघञ् ॥
व्याहृतम । त्रि० उक्ते ॥ सन्दिष्टे ।
व्याहृति । स्त्री० भूरादिषु ॥ व्या
हरतिभूरादिसप्तलोकान् । हञ्०
। वाङ्पूर्वस्तत ० क्तिन् । वा
हारे ॥
व्युच्छिन्न । त्रि० विमुक्ते । विशेषे
णोच्छिन्ने ॥
व्युत । त्रि० स्यूते ॥ द्व०हि०को
ष ॥
व्युति । स्त्री० व्यूतौ ॥ द्वि०को
ष ॥
व्युत्क्रम । पुं० क्रमविपर्यये । व्यति
क्रमे । उत्क्रमे । अक्रमे । विभिष्टउ
त्क्रम ॥
व्युत्क्रमणम् । न० पृथगवस्थाने ॥
व्युत्पूर्वात्क्रमेर्ल्युट ॥
व्युत्थानम् । न० स्वातन्त्र्यकृत्ये । चि
त्तमूढक्षिप्ताख्यभूमित्रये । समा
धिपारणे ॥ विरुद्धसमुत्थानम् । प्रा
दयोगतेतिसमास ॥ वैपरीत्येनो
त्थानवा ॥ विरोधाचरणे । न्याय्यां
वृत्तिसमुल्लङ्घ्यतद्विरुद्धतयास्थि
ति । व्युत्थानमुदितराज्ञ . साम
न्तोवयुत्थितोयथा ॥ एषयानुगुणात
यास्थितिमतिक्रम्यततप्रतिकूलत्वेन
०यास्थिति सा०व्युत्थानमित्यु
दितमहर्षिरितिशेष । तत्रप्रसि
द्धिप्रमाणयति । राज्ञइत ॥ प्र
तिरोधने । नृत्यभेदे ॥ विशेषेणो
त्थाने ॥
व्युत्थापनम् । न० बाधने ॥
व्युत्पत्ति । स्त्री० सम्यग्ज्ञाने ॥
संस्कारे ॥ विशेषेणोत्पत्ति ॥ वि
विधाबोत्पत्ति ॥ शक्तिज्ञाने ॥
व्युत्पन्न । त्रि० व्युत्पत्तियुक्ते ॥ स
म्यग्ज्ञानवति ॥ संस्कृते ॥ विशेषे
णास्यन्तम्०उत्पन्न परिचित ॥
व्युत्पादक । पुं० व्युत्पत्तिजनके ॥
व्युदसनम् । न० निरसने ॥
व्युदस्त । त्रि० प्रतिषिद्धे ॥
व्युदाम । पुं० प्रतिषेधे ॥
व्युषित । त्रि० पर्युषिते । वुसा०द्व
तिभाषाप्रसिद्धे ॥ व्युष्यतेस्म । उ
ष० । क्त ॥ देशान्तरङ्गते ॥
व्युष्टम् । न० फले । प्रभाते । काल०
द्व०भा० ॥ फले ॥ दिने ॥ त्रि०
उषिते । पर्युषिते ॥
व्युष्टि । स्त्री० फले ॥ समृद्धौ ॥
स्तुतौ ॥ व्युष्टनम्०व्युष्टातेवा । उ
ष्टोविवासे ॥ स्त्रियांक्तिन् ॥ सक
रणसवेद्यविश्रुतत्वे । अपरोक्षख्या
तौ ॥

व्यूढ । त्रि॰ विन्यस्ते । व्यूहरचनया स्थिते ॥ संहते ॥ पृथुले ॥ विशेषेणोढतैस्य । वहप्रापणे । क्तः ॥

व्यूढकङ्कट त्रि॰ सन्नद्धे । वर्म्मिते । सज्जे . दंशिते । धृतसन्नाहे ॥ गूढोधृत ॰ कङ्कट सन्नाहोयेन ॥

व्यूढि । स्त्री॰ व्यूहे ॥ विन्यासे ॥ संहतौ ॥ पृथुलतायाम् ॥

व्यूत । त्रि॰ ऊते । तन्तुसन्तते ॥

व्यूति । स्त्री॰ वस्त्रादिवानेवायो ॥ विशिष्टाऊतिः । वेञ् ॰ ऊतिप्. तीथ्यादिनाक्तिनिनिपातित ॥

व्यूह . । पुं॰ निर्माणे ॥ वृन्दे । समूहे । विभागे ॥ तर्के ॥ देहे ॥ विस्तारे ॥ बलविन्यासे । युद्धार्थसेनारचनायाम् । युद्धार्थसैन्यस्यदेशविशेषेविभज्यदुर्लङ्घ्यत्वनिमित्तस्थापने । व्यूहते । ऊह तर्के । दुरुपधेतिकः ॥ व्यूह्यतेवा । घञ् ॥ विशिष्टऊहोवा ॥

व्यूहनम् । न॰ सैन्यसस्थाने ॥

व्यूहपार्ष्णिः । पुं॰ व्यूहपृष्ठे । प्रत्यासारे । सैन्यस्य पृष्ठेधनु . श तद्वयान्तरेस्थितसैन्ये ॥ व्यूहस्य पार्ष्णिः पृष्ठभाग ॥

व्यूहभेदः । पु॰ बलविन्यासस्यप्रभेदे । व्यूहस्यभेदोविशेष ॰ । यथाहु । समयस्तुसैन्यस्यविन्यासस्याभेदतः । सव्य दण्डतिविख्यातोयुधिष्ठिरपृथिवीभुजाम् ॥ व्यूहभेदास्तुचत्वारोदण्डोभोगोऽथमण्डलम् । असहतश्चनिर्णीतानीतिसारादिसम्मता . ॥ अन्येपिप्रकृतिव्यूहा . क्रौञ्चचक्रादय . क्वचित् । त च । तिर्यग्वृत्तिस्तुदण्ड स्याद्भोगोन्वावृत्तिरेवच । मण्डल सर्वतोवृत्ति : पृथग्वृत्तिरसहत ॥ इति ॥ दण्डवद्वस्थान दण्ड ॰ । अन्योन्यानुगतावृत्तिर्भोग ॰ । सर्पशरीरवदवस्थान मण्डलम् । गजादीनाविजातीयैरमिश्रितानांस्थानम संहत । शकटमकरपताकासर्वतोभद्रदुर्ज्जयादयोऽन्येपिव्यूह स न्तितेषास्वरूपभारतादिषुद्रष्टव्यम् ॥

व्यो । अ॰ लोहे ॥

व्योकार ॰ । पुं॰ लोहकारके ॥ व्योकृत्यव्ययलोहवाचीतिश्रीभोज : । व्योकरोति । डुकृञ् ॰ । कर्मण्यण् ॥

व्योम : । पु ॰ मयसु पुत्रे ॥

व्योमकेश . । पुं॰ शिवे ॥ व्योमक्लिष्टमायज्ञ गङ्गाधारणायव्योमव्यापिन केशायस्येतिवा ॥

व्योमचारी । पु॰ देवतायाम् ॥ विहङ्गमे । ग्रहे ॥ चिरजीविनि ॰ त्रि॰व्योमचरे ॥

व्योमचारिपुरम् । न॰ देवानापुरे ॥ व्योमचारिणापुरम् । शौभे ॥

व्योमधूम ॰ । पु॰ मेघे ॥

ति । कृञ् । क्विप् । तुक् ॥
त्रि० यतकारके ॥
व्रणकेतुघ्नी । स्त्री० दुग्धफेन्याम् ।
गोआपघ्याम् ॥
व्रणाहट् । पुं० ब्राह्मणयष्टिकायाम्
॥ त्रि० व्रणद्वेषके ॥
व्रणशोधनम् । न० व्रणपरिष्कारणे
यथा । व्रणस्य तत्त्वविशुद्धस्य शु
द्धिकार पर । पटोलनिम्बयवज्ञ
सर्व्वं चैव प्रयुज्यते । वातिकेद्रव्यमू
लानांचोरणापे तिक्तकेव्रणे । आर
ग्वधादि कफजेकषाय शोधनंहि
तम ॥
व्रणाह । पुं० एरण्डवृक्षे ॥ त्रि० व्रण
घातके ॥
वृषघ्ना । स्त्री० गुडूच्याम् ॥
वृणाङ्कत् । पुं० कालकारीहक्षे ॥
वृषारिः । पुं० वीणे ॥ नगरकवृक्षे ॥
व्रतम् । न० पुं० अशने । भक्षणे
॥ वृध्यादिकीष ॥ पुण्यजनको
पवासादौ । नियमे । शास्त्रविहिते
नियमानुष्ठाने । मधुमांसवर्जनादि
नियमे ॥ तथाचवेदे० पयोव्रतोब्रा
ह्मणोयवागूव्रतोराजन्य आमिक्षा
व्रतोवैश्यइत्युच्यते । व्रतस्तनामच
भ्यवहारार्थमुपादीयते । अक्ष्यस्या
नेनशालिमांसादीन्यपिव्रतयितुम्
। तत्रनियम । क्रियते० इतिभाष्य
म् । सत्यासधिं तायां पयपवृतय
लीति नयने यन्तुत्रिभिरितिकैयट
॥ उपनयने ॥ व्रियते । वृञ् ० इड
भा । पृषिरञ्जिभ्याकित्न्यतच् ।
बाहुलकादन्यापि । क्रिस्वाग्रगुणा
॥ यत् । व्रतबन्धेनस्वर्गम् । गौव
रसघ्नेरेतिव । पृषोदरादि । वा
न्यासङ्क्रन्यादौ लौयोंव्रतनिषेध
य तकालिङ्ग सोयथा । वर्णिनीनां
व्रतोपासननाहितकुम्भतीर्थोदयेव
र्णिनीस्वेच्छरी । देवतासुप्तकालेऽथ
मासिधिकेप्रबुद्धे देवेव्यदेवेव्ययेरस्तके
॥ कुम्भतीर्थोदये० कुम्भे घटे० तीर्थेयो
निरुत्पत्तिर्यस्य ० कुम्भतीर्थ
० अगस्ति तस्योदये ॥ रयेदकर्त्तव्य
मिदनकर्त्तव्यमिस्येवविधसङ्कल्पवि
शेषे ॥
व्रतति । स्त्री० विस्तारे ॥ वल्ल्या
म् ॥ व्रजन्तीततिर्विस्तृतिरस्याः ।
। पृषोदरादि ॥ यद्वा । प्रतनो
ति । तनु विस्तारे । क्तिच्क्तौच्स
ञ्ज्ञायाम् । पृषोदरादित्वात्पस्य
वः ॥ व्रतमिनकरोति । व्रतश
ब्दात् ० तत्करोतीतिण्यन्ताद्बाहुल
काड्डतिर्वा ॥
व्रतती । स्त्री० वल्ल्याम् ॥ विस्तारे
। ङी० ङिङ्गपकीष ॥
व्रतबन्ध । पुं० उपनयने ॥ व्रतानाम
ब्रह्मचर्याणांनियमानांबन्धोयस्मिन-
यस्मिन्स ॥

व्रतयज्ञ । पुं० संध्यितव्रते ॥
व्रतसङ्ग्रह । पुं० दीक्षायाम् ॥
व्रतस्थ । पुं० व्रह्मचारिणि ॥
व्रतादेश । पुं० उपनयने ॥
व्रती । पुं० यजमाने ॥ साधकि ॥ व्रह्मचारिणि ॥ चान्द्रायणादिव्रतकारिणि ॥ व्रतमेषामजिनादिधारणभोजनादिनियमोवास्त्यस्ति । व्रनि । यद्वा। व्रतयति । व्रताद्भोजनतन्निवृत्त्योरितिणिच् । व्रतेस्तिणिनि ॥
व्रतोपनयन । न० व्रतस्योद्यापने ॥
व्रतोपायनम् । न० वायने ॥
व्रश्चन । पुं० स्वर्णादिच्छेदनद्रव्ये । पत्रपरशौ । छिनो० व्र० भा० व्रश्चतेऽनेन । ओव्रश्चू० । करणेतिल्युट् । न० छेदने ॥
व्राज । स्त्री० वायौ ॥ वाताली ॥ व्रजति । व्रजगतौ । वसिवपीत्यादिना० इञ् ॥
व्रात । पुं० सङ्घे । नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनांसङ्घे ॥ न० तेषांकर्मणि ॥ व्रियते० नियम्यते० मुखेभिश्रेतिवाद्यन्तात्व्रतशब्दात्० घञ् । व्रातच्फञोरितिलिङ्गाद्वृत्तिः ॥ पुं० समूहमात्रे ॥ व्याधादौ ॥
व्रातीन । त्रि० सङ्घजीविनी ॥ शरीरायासजीविनि ॥ व्रातेनशरीरायासेनजीवति० नतुवृत्तिंविभवेन । व्रातेनजीवतीतिखञ् ॥
व्रात्य । पुं० षोडशादिवर्षपर्यन्तमप्यसंस्कृतेऽध्ययगायत्र्यादिविप्रादौ । संस्कारहीने ॥ यथाहमनु । आषोडशाद्ब्राह्मणस्यसाविचीनातिवर्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः . अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृता साविचीपतिताव्रात्याभवन्त्यार्यविगर्हिता ॥ नैतैरपूतैर्विधिवदापद्यपिहिकर्हिचित् । ब्राह्मान्यौनांश्चसम्बन्धा-नाचरेद्ब्राह्मणःसहेति ॥ शरीरायासजीवीव याधादिव्रात. सङ्घश्चशाखादिभ्योय . ॥ यद्वा । व्रातमर्हति । दण्डादिभ्यइतियत् ॥ उपनयनादिसंस्कारहीने ॥
व्रात्यस्तोम । पुं० यज्ञविशेषे ॥
व्रीड । पुं० लज्जायाम ॥ भावे घञ् ॥
व्रीडनम् । न० लज्जायाम् ॥
व्रीडा । स्त्री० लज्जायाम् । त्रपायाम् ॥ गुरोश्चेत्य . । टाप् ॥
व्रीडाकरवात । पुं० गुदरवे । पर्दे ॥
व्रीडित । त्रि० लज्जिते ॥ भावेक्त . ॥
व्रीहि । पुं० धान्यमात्रे ॥ आशुधान्ये ॥ वर्हति० उपचयंगच्छति । वृहवृद्धौ । इगुपधात्कि

व्रीहिमय:

द्वितीन् । पृषोदरादि ॥ व्रीयते ।

व्रीङ् गत्याम् । बाहुलकात्किन्वा ॥

व्रीहि फलवा•व्रीहि । बिल्वादि

भ्योऽण् । फलपाकशुषामिति•लु

पि•युक्तवज्ञाव: ॥

व्रीहिक । पुं• धान्यविशिष्टे ॥

ठन् ॥

व्रीहिकाञ्चन: । पु• मसूरे

व्रीही । त्रि• व्रीहियुक्तचेत्रादौ ॥

व्रीह्यादिभ्यश्चेतिठनि ।

व्रीहिपर्णी । स्त्री• शालपर्ण्याम् ॥

व्रीहिमय । पुं• पुरोडाशे ; व्रीहेवि

कारः पुरोडाशे । व्रीहेः पुरोडा

शइतिमयट् ॥

व्रीहिराजक । पुं• कामलिकाया

म् । कङ्गुधान्ये ॥ चीनकधान्ये ॥

व्रीहिश्रेष्ठ । पु• शालिधान्ये ॥

व्रीह्यगारम् । न• कुसूले । धान्य

गृहे ॥

व्रैह । त्रि• व्रीहिनिर्मिते ॥

व्रैहेयम् । न• व्रीहिभूस्थले। धान्यसा

मान्यशकलमादिशोत्पत्तियोग्ये चे

त्रे ॥ व्रीहीणाभवनक्षेत्रम् । व्री

हिशाल्योर्ढक् ॥

मूत्थादि गौडकुलोत्पन्ना डीचवास्तं प्रधानी पनाम तुलाराम मिश्रात्मज

श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राज

काचार्य श्री मधरिहरानन्द नाथ भारती शिष्येण ब्रह्मावधूत श्री

सुखानन्दनाथ परनामधेयेन विरचिते शब्दार्थचिन्तामणौ वर्गः .

समाप्तिकृत

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्रह्मावधूत

श्री जगदानन्दनाथ प्रीतिकामी ., श्रीमन्महा राजाधिराज रविकुलाव

तस महीमहेन्द्र यावदार्यकुलकमल दिवाकरै मेदपाटदेशाधीशे. चांखल

भूपाल मौलिमणिभि • श्री १•८ श्रीयुत सज्जनसिंहै : सस्थापिते

उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास

प्रेरणया पण्डितवाजपेयि वशीधरेण पकिञ्चनाजितदेव शर्मणापशोधितः

हैडजीवनराम शम्भूनाथ गुलाबराम लक्ष्मीनाथ प्राणनाथ लालसिंह

प्रभृतिभिर्हिजै • नवक्रमेणाद्भिर्त सर्दारवेग यवनेन गौरीशङ्करेण च

मार्गशीर्षशुक्ला चतुर्दश्या सोमवासरे शब्दार्थ-

चिन्तामणिकोशस्य यवर्गोमुद्रित

एकोनविंशत्यैकाधिकचत्वारिंशत्तमे १९४१ वैक्रमाब्दे राजधा
न्युदयपुरे सज्जनयन्त्रालये श्रीमेदपाटेश्वर
कोशधनव्ययात् वाजपेयिवंशीधरस्य
प्रबन्धतोमुद्रित .

स्याद्वैपशस्तात्कोटि ॥ कलौषट्श
काकारकानाह । युधिष्ठिरोविक्रम
शालिवाहनौनराधिनाथौविजया-
भिनन्दन । स्तमेनुनागार्जुनमेदि
नीविभुर्बलि क्रमात्षटशककार
का कलौ ॥ एषामन्तरालवर्षाख्या
ह । युधिष्ठिराद्दयुगाव्वराजय
३०४४ ॥ तत्त्व्वरविप्रशे १३५
ऽमखवाष्टभूमय १८००० वनायु
त १०००० लक्षचतुष्टय४०००००
क्रमात्मनहा हनागा ८२१ बूति
शाकवत्सरा ॥ एषाजन्मभूमि
माह ॥ युधिष्ठिरोभूद्धस्तिना
पुरे॰ तथोज्जयिन्यापरोविक्रमा
ह्वय । शालेयधाराभ्रतिशालिवा
हन सुचित्रकूटेविजयाभिनन्दन
॥ नागार्जुनोरोहितकेक्षितौबलि
र्भविष्यतीन्द्रोभ्रगुकच्छपत्तने । क्र
तप्रशस्तिकाद्दनन्तरभवेत्तद्दाभवि-
ष्यत्त्यवनीभ्रतोऽवंत ॥

शकट । पुं॰ न॰ अनसि । कक
डा॰ इ॰ भा॰ ॥ गन्त्र्याम् । गा
डी॰ इ॰ भा॰ ॥ शक्नोतिभार-
वोढुं॰ जोढयितुंवा । शक्लृ शक्तौ
। शकादिभ्योऽटन् ॥ तिनिशद्र
मे ॥

शकटव्यूहः । पुं॰ शकटाकारेबलवि
न्यासे । सूच्याकाराग्र पश्चात्
पृथुल : शकटव्यूहोभवति । तेन
पृष्ठतोभयेसतियातव्यंमार्गंगच्छे
त् ॥

शकटहा । पु॰ श्रीकृष्णे ॥ नि॰
शकटनाशके ॥

शकटाख्या । स्त्री॰ रोहिणीनक्षत्रे ॥

शकटिका । स्त्री॰ गन्त्र्याम ॥

शकटी । स्त्री॰ सुनीनावाह्नविशेषे
॥ बह्वादित्वात् ङीष् ॥

शकट्या । स्त्री॰ शकटसङ्घे ॥ शक
टानांसमूहः । पाशादिभ्योयः ॥

शकल । पुं॰ न॰ खण्डे एक
देशे ॥ न॰ रोहितादिमत्स्यानां
त्वचि ॥ रागवस्तुनि ॥ वल्कले ॥
पुं॰ ऽत्यन्तरे । शकयते॰ शक्नो
तिवा । शक्लृ शक्तौ । शकिशम्यो
र्नित्॰ ततकल ॥

शकली । पुं॰ मत्स्ये ॥ शकल॰ मस्त्य
स्मास्ति । अतइनि ॥

शकलीकृत । त्रि॰ खण्डीकृते ॥

शका । स्त्री॰ भाषान्तरे ॥ शक्नोतीत्य
र्थेपचाद्यच्

शकान्तक । पु॰ विक्रमादित्ये ॥

शकार । पुं॰ राज्ञोऽनूढाया स्त्रि
याभ्रातरि ॥ यथा । मदमूर्खताभि
मानीदुष्कुलतैश्वर्यसंयुक्त । सोय
मनूढाभ्रातारज्ञ : स्याल शकार
इत्युक्त ॥

शकारि । पु॰ विक्रमादित्ये । माह
साङ्के ॥

शकुन । पुं० पक्षिमात्रे ॥ पक्षिविशेषे । गृध्रे ॥ चित्रप्रभेदे । उत्सवादिषु मङ्गलार्थं गेयगीतविशेषे ॥ न० शुभाशुभशंसिनिमित्ते । शुभाशुभज्ञाननिर्णयहेतौ ॥ यथा । शकुनं कथ्यते तत्तु यच्छुभाशुभसूचकम् । तथाहि । विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरवेश्यावाद्यमयूरचाषनकुला बद्धैकपश्वामिषम् । सद्वाक्यकुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यकारत्नोष्णीषसितोक्षमद्यससुतास्त्रीदीप्तवैश्वानराः ॥ आदर्शाञ्जनधौतवस्त्ररजकामीनाज्यसिंहासनशावरोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम् । भारद्वाजनृयानवेदनिनदा माङ्गल्यगीताङ्कुशा दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः ॥ नरो निरुप . सितवाससाक्षौवाचप्रशस्तां मधुरां जल्पन् । एवंविधा योषिदपि प्रयाणे प्रवेशकाले कुरुतेऽर्थसिद्धिम् ॥ पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वेश्याकुमारी सुहृदः सुवेशाः । नार्यो नराः श्वेतवृषाऽधिरूढाः शुभाय दृष्टाः सकलोद्यमेषु । श्वेताम्बराः श्वेतविलेपनाढ्याः श्वेतां स्रजं मूर्द्धि निधारयन्तो । हृष्टाः प्रहृष्टा यदि गौरवर्णा नारी नरैः स्यात्तदभीष्टसिद्ध्यै ॥ घृतातपत्र . शुचिशुक्लवा



सा पुष्पार्चितचन्दनचर्चिताङ्ग . । निःश्वासयुक्तः कृतभोजनो वा विप्रः पठन् यच्छति सर्वसिद्धिम् अभ्युपगच्छति यस्य यियासोः स्त्री पुरुषोऽप्यथवा फलहस्त । सर्वं समीहितसिद्धिरवश्यं तस्य नरस्य भवत्यचिरेण ॥ आदाय रिक्तकलशं जलार्थी यदि व्रजेत् कोऽपि सहाध्वगेन । पूर्णं समादाय निवर्त्तते सौ यथा कृतार्थः पथिकस्तथैव ॥ गोधाजाहकसूकराहिशशकानां कीर्त्तनं शोभनं नो शब्दो न विलोकनं च कपिऋक्षाणां शुभो व्यत्यय । नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे व्यस्ता . शकुनान्तरेषु विधीयाश्चोदित . शोभनाः ॥ वामाङ्गे कोकिला पल्ली पोतकी शूकरी रला । पिङ्गला छुच्छुका श्रेष्ठा शिवा पुरुषसञ्ज्ञिता छिक्कर . पिप्पिका भास श्रीकण्ठो वानरो रुरु . । स्त्रीसंज्ञका . काकऋक्षश्वान स्युर्दक्षिणे शुभा ॥ प्रदक्षिणगता श्रेष्ठा यात्रायां मृगपक्षिण . । ओजा मृगा व्रजन्तोऽतिधन्या वामे खरस्वन . ॥ श्यामा शिवा पिङ्गलिकान्यपुष्टा पल्लीवलाशूकरिका तथैव । छुच्छुन्दरी चापि शुभाय वामे पुन्नामधेया . शकुनाश्च सर्वे । श्रीकण्ठछिक्कारकरुक्षवक्रा श्रीकण्ठभासी भरद्वाजमयूर । श्ये

न सम : पिप्पकथाप्रशस्ता : श्री
नामधेयाक्षपिद्धिर्येन ॥ दुष्टेश
कुनेजातीयत्कर्त्तव्यं तदाह । प्रा
चायामांस्तपस्वस्नरन्नायायाद्दाम्
शाकुनेवेविरुद्धे । तिग्मानुक्तत्वे
बहितीयेह्तीयेचसप्रस्थान्नेचतुर्थे-
गम . स्यात् ॥ चसप्रस्थान्हिस्त
तुल्यान्निग्मानृतीच्चान्प्राप्येत्य
र्थं · शक्नोति । शक् · शकिरुनोन्तो
न्त्युनयरुत्युनप्रत्यय · ॥

शकुनज्ञः । वि॰ शकुनज्ञातरि ॥

शकुनज्ञा । स्त्री॰ ज्येष्ठ्याम् । प
ल्ल्याम् ॥

शकुनाहृत : । पुं॰ शालिविशेषे ॥

शकुनि : । पुं॰ विहगे । पक्षिणि ॥
सौबले । दुर्योधनस्यमातुले ॥ क
रणान्तरे ॥ तत्रजातस्यफल यथा ।
परजनधनहर्त्ताविसक : क्रूरचेष्ट :
करधृतकरवालोव्याहत : स्वामिप
क्ष . । अतिशयपरदारासक्तचित्त
सरोषोभवतिशकुनिजन्मामानव ·
शोप्रकर्मा ॥ शक्नोतीत्यर्थे । शकेरु
नोन्तोन्त्युनयरुत्युनि · ॥

शकुनिक : । वि॰ शकुनीकुशले ॥
आकर्षादित्वात्कन् ॥

शकुनिप्रपा । स्त्री॰ पक्षिपानीय
शालायाम् । श्रीयरे ॥

शकुनी । स्त्री॰ श्यामाख्यविहगे ॥

शकुनीश्वर · । पुं॰ गरुडे ॥

शकुन्त : । पुं॰ कीटविशेषे । भा
सपक्षिणि ॥ विहङ्गमात्रे ॥ श
क्नोति । शकेरुनोन्तोन्त्युनयरुति॰
उन्त ॥

शकुन्तला । स्त्री॰ दुष्यन्तपत्न्या
भरतमातरि ॥ निर्जनेतुवनेयस्मा
त्॰ शकुन्तै : परिरक्षिता । शकु
न्तलेतिनामाऽस्या' कृतञ्चापिततो
मया ॥ कालिदासविरचितेना-
टके ॥

शकुन्तलात्मज · । पुं॰ भरते ॥ य
न्नाम्नाभारतीवर्षं, सुप्रसिद्धेधरा
तले ॥

शकुन्ति · । पुं॰ पक्षिमात्रे ॥ शक्नो
ति । शकेरुनोन्तोन्त्युनयरुतिशके
रुन्ति . ॥

शकुन्द · । पु॰ करवीरे ॥

शकुल : । पु॰ मत्स्यविशेषे । कल
के । शउल्॰ हू॰ गौ॰ दे॰ भा॰
प्र॰ ॥ शक्नोतिगन्तु वेगेन । बाहु
लकादुरच्कुलच् ॥

शकुलगण्ड : । पु॰ शालमत्स्ये ॥

शकुलाक्षक : । पुं॰ श्वेतदूर्वायाम् ।
गोलोम्याम् ॥ शकुलस्यमत्स्यस्येवा
क्षियस्या . । बच्चाऽदर्शनादित्यच्
। स्वार्थेकन् ॥

शकुलाक्षी । स्त्री॰ गण्डदूर्वायाम् ॥

शकुलादनी । स्त्री॰ कृष्णभेद्याम् । क
टुक्याम् ॥ कत्रटयाखे । जलपिप्प

श्याम् । काचडाद्राम॰इति॰गौ॰भा॰प्र॰ ॥ माशाम् ॥ किष्कुलिकायाम् ॥ शकुलैरदनैः अद॰ । कर्मणि ल्युट् ॥ ङीप् ॥ गौषणायाम् ॥ कट्फले ॥

शकुलार्भक: । पु॰ गडकमत्स्ये ॥ शकुलस्य मत्स्यविशेषस्य अर्भकः ॥

शकुली । स्त्री॰ मत्स्यविशेषे । सौरी॰ इ॰दे॰भा॰प्र॰ । सृगाल् इ॰ गौड॰दे॰भा॰ ॥ शकुलीयाहिणी बृद्यामधुरा तुवरास्मृतेति भावप्रकाश: ॥ शकुलीरोहिताकाराभूमौ प्रायश्चरसौ ॥ गुर्व्वीपाकेचमधुराभेदिका दि पर्वोपर्वतिराजवल्लभः ॥

शकृत् । न॰ विष्ठायाम ॥ शक्नोति॰ शक्यतेवा निःसर्तुं वा निःसारयितुं वा । शकेऋन्तिन् ॥

शकृत्करि । पु॰ वत्से ॥ शकृत्करोति । स्तम्बशकृतोरिन् ॥

शकृद्द्वारम् । न॰ गुदे । पायौ ॥ शकृतोद्वारम् ॥

शक्कर । पु॰ वृषे ॥ इ॰ हे॰चन्द्र ॥

शक्करि । पुं॰ इ॰ जि॰ शेष ॥

शक्करी । स्त्री॰ चतुर्दशाक्षरायांछन्दसि । शर्कर्याम् ॥ नदीप्रभेदे ॥ मेखलायाम् ॥

शक्त । त्रि॰ शक्तिविशिष्टे । समर्थे ॥ शक् । कर्मणि क्त ॥ शक्तानां भूषण क्षमा ॥

शक्ति । स्त्री॰ अस्त्रविशेषे । सेल इ॰ भा॰प्र॰ ॥ गौर्य्याम् । दुर्गायाम ॥ या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ॥ चैतन्यरूपायाम । विष्णवी । निर्विषयकसंविदि ॥ सा चसर्व्वैकरूपा ॥ यथा । एकैव शक्ति: परमेश्वरस्य भिन्नाचतुर्धा व्यवहारकाले । भोगेभवानीपुरुषेषु विष्णु: कोपेषु कालीसमरेषु दुर्गा ॥ अपिच । एकमूर्त्तिरपि भिन्नरूपिणीया जगज्जननपालनक्षये । काच्युतेश्वरतया विवर्त्तते ब्रह्मशक्तिमहमानतोस्मितामिति ॥ तथाहि देवीभागवते । निर्गुणा या सदा नित्या व्यापिकाऽविकृता शिवा । योगगम्याखिलाधारा तुरीया या च संस्थिता ॥ तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा । महालक्ष्मी सरस्वती महाकालीति ता स्त्रिय ॥ तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षण । सृष्ट्यर्थं समाख्यात सर्ग: शास्त्रविशारदैरिति ॥ साचसच्चिदानन्दब्रह्मरूपिणी । तस्याः सात्त्विकी शक्तिस्तथा राजसी-तथा तामसी च या शक्ति तत्तच्छक्ति विशिष्टं यत्परब्रह्म तस्यार्थ: । तन्महालक्ष्म्यादयो या प्रसिद्धा स्त्रियस्ता स्त्रियो भवन्ति । साम्यावस्था

ऽनेकब्रह्मरूपिणीमूलदेवता तद्दे
वैकगुणविशिष्टब्रह्मरूपिण्योमहाल
क्ष्म्यादयोदेवताइतिभावः अतए
व श्रुत्यागमपुराणादिष्वासाञ्चिदा
नन्दरूपत्वमुक्तं नतुकेवलजडशक्ति-
रूपत्वं सृष्ट्यर्थंजगत्सर्वंमाययास्वा-
सातिस्वयाशक्तीनांदेहाङ्गीकारादे
हधारणतञ्चणीयः सर्गः सोऽ
ध्यायास्तुविशारदैः परिगृहीते सर्ग
शब्देनसमाख्यातङ्कत्यर्थः ॥ अपि
च । पौराणैर्बहुप्रमाणानिपठिता
निसुपरिगृह्णते । प्रत्यक्षानुमा
नशब्दश्चैवतृतीयकम् । चत्वा
र्यवेतरेप्राहुरुपमानयुतानिच ॥ द्व
तरेनैयायिकैकदेशिनः । अर्थाप-
त्तियुतान्यन्येपञ्चप्राहुर्महाधियः
॥ सप्तपौराणिकाश्चैवप्रवदन्तिमनी
षिणः । पूर्वोक्तानिपञ्चसाचिरूप
षष्ठम् । ऐतिह्यं सप्तममितिसप्तप्रमा
णानि । एतैः प्रमाणैर्दुर्ज्ञेयय
द्ब्रह्मपरमञ्चतत् ॥ एतैरनेकधा
भेदभिन्नैः प्रमाणैर्दुर्ज्ञेयंयत्परब्रह्म
तदेवपरममुख्यं जगत्कारणमस्ती-
तिवेदान्ताआहुरितिशेषः । एव
मेतानिसर्वमतानिवेदे । एवसन्ति ।
तत्रकिमतमुख्यमितिविमर्शोदुर्घट
एव । तथापियच्छ्रुतिवाक्यानामपर
स्परविरोधस्तत्रोपक्रमोपसंहारादि
लिङ्गैः श्रुतितात्पर्यंनिर्णीयतात्पर्य

वतोश्रुतिः प्रबलेतिसिद्धान्तउत्तर
मीमांसायामुक्तः । ननुतेनसिद्धा
न्तेनब्रह्मैवजगत्कारणमितिसिद्धाती
तिचेत्तत्रानुमानेनागमेनश्रुतिवा
क्येनच । यद्ब्रह्मकिं सशक्तिकं जगत्का
रणमुतशक्तिरहितमितिविचारः ।
कार्यंव्यवहृत्याश्चवितर्क इति । वित
र्कश्चावकार्योबुद्ध्याचैवागमेनच ।
निश्चयात्मिकयायुक्त्याविचार्यश्चपु
नः पुनः ॥ वितर्कोऽनुमानमित्य
र्थः । बुद्ध्येत्यस्यार्थोनिश्चयात्मि
कयायुक्त्येति । प्रत्यक्षतस्तुविज्ञान
चिन्त्यंमतिमतांसदा । दृष्टान्तेना
पिसततं शिष्टमार्गानुसारिणा ॥
किञ्चमतिमतांप्रत्यक्षतोयद्विज्ञानं ।
तदपिचिन्त्यं यथाक्रमं प्रमाणत्वेने
त्यर्थः । शिष्टमार्गः शिष्टाचारस्त
दनुसारिणादृष्टान्तेन । व्याप्तिग्राहके
णापिसततमनुमेयमितिशेषः ॥ तमे
वदृष्टान्तमाह । शिवासोपीति । शि
वासोपिवदन्त्येवं पुराणे परिगीयते ।
दुर्घटंहिशक्तिश्चहरेःपालनशक्ति
ता ॥ हरेस्संहारशक्तिश्च सूर्ये शक्ति
प्रकाशिका । धराधरणशक्तिश्चशेषे
कूर्मे तथैवच ॥ सांख्याशक्तिः परि
णतासर्वस्मिन्याप्रतिष्ठिता । दाह
शक्तिस्तथावह्नौसमीरेप्रेरणात्मिका ॥
साद्येति । यासर्वस्मिन् । आद्याश
क्तिरस्तिसाशक्तिः परिणता । तत्र

पूर्व्वकम् । अजानन्तिजनामूढास्तां
सदामाययावृता ' । जानन्तोपिन
रा किञ्चिन्मोहयन्तिपरानपि ॥ प
ण्डिता स्वोदरार्थंवापाखण्डानि
पृथक् पृथक् । प्रवर्त्तयन्तिकलिना
प्रेरितामन्दचेतस ॥ कलावस्मिन्
महाभागानानाभेदसमुत्थिता ' ।
नान्येयुगेतथाधर्मावेदवादकथस्तथा
॥ विष्णुस्सर्वसाकृतपोवर्षाण्यने
कश : । ब्रह्माहरस्तथैवापि ध्यायन्त:
कामपि ध्रुवम् ॥ कामयाना ' सदा
काम देवय: सर्वदैवहि । यजन्ति
यज्ञान् विविधान् ब्रह्मविष्णुमहेश्व
रा ' ॥ यदिब्रह्मादयोमुख्यास्तर्हिते
ऽन्यं किमितिभजेयु' • भजन्तिच•
तस्मान्नतेमुख्या • किन्तुपराशक्ति
रेवेतिभाव ' ॥ तेवैशक्तिपरांदेवीं
ब्रह्माख्यापरमात्मिकाम् । ध्याय
न्तिमनसानित्यंनित्यामत्वासनात
नीम् ॥ परब्रह्मैवतस्यारूपनान्य
मस्तीत्यभिप्रायेण• ब्रह्मात्मिकामि
त्युक्तम् । स्वीकृतश्चैतदस्माभिरु
पोद्घाते ॥ तस्माच्छक्ति ' सदासे
व्याविद्वद्भि ' कृतनिश्चयै । निश्च
य : सर्वशास्त्राणांज्ञातव्योमुनिस
त्तमा • कृष्णाच्छ्रुतमयाचैतत्ते
नज्ञातन्तुनारदात् । पितु सका
शात्तेनापिब्रह्मणाविष्णुवाक्यत ॥
नश्रोतव्यनमन्तव्यनध्येयमनन्त-



यै ' । शक्तिरेवसदासेव्याविद्वद्भि :
कृतनिश्चयै ॥ यथागजशरीरेप्र-
विष्टस्यचैतन्यस्यगजइतिव्यवहार •
तथाप्रथमतोमायाशरीरेप्रविष्टस्यचै
तन्यस्यमायाशक्तिरितिव्यवहारस्त
दनन्तरगुणोत्पादादिकाहगुणवि
शिष्टमायाशवलब्रह्मणएवब्रह्मावि-
ष्णुरुद्रइत्यादिव्यवहार । तथाच
सर्वकारणब्रह्ममायाशक्तिसहितमेव
भवतीतिमायाशक्तिर्देवीभगवतीत्या
दिमुख्यशब्दैर्वेदोपास्यत्वाच्च । श
क्तिरेवेति ॥ प्रत्यक्षमपिदृष्टान्तमत्र
शास्त्रविवेचितम् । अत ' सर्वेषुभू
तेषुज्ञातव्याशक्तिरेवहि ॥ इति
श्रीदेवीभागवतेप्रथमस्कन्धे अष्टमो-
ऽध्याय : ॥ साशक्ति . परमात्मा
सोयोसौसापरमात्मता ॥ अन्तरंनै
तयो किंपिसूक्ष्मवेदवनारदेति
तृतीयस्कन्धे ७ऽध्याय : ॥ इति ॥
उत्साहादौ । नीतिवेदिनाप्रभावो
त्साहमन्त्रजासुतिसृषु ॥ तत्रप्रभु
त्वं साधकत्वात्कोशदण्डौप्रभुशक्
ति ' । विक्रमेवास्त्रशक्ताविस्फुर-
णमुत्साहशक्ति । सन्ध्यादीनांसा
मादीनाञ्चयथावस्थानमन्त्रशक्ति '
॥ बले । सहसि । शौर्ये । परा
क्रमे ॥ वुद्धिसामर्थ्ये ॥ स्त्रिया
म् । योनिरिति । नारीम् ॥ प्रकृ
तौ ॥ रम्भाम् ॥ अस्त्रविपदा

यमर्थोबोद्धव्यइतीश्वरसङ्केते ॥
शक्यतर्जितुमनयावा । शक्ष् शक्तौ
। क्तिन्नांक्तिन् । वाक्षाम् । शर्व
लाव्ये ॥ पु० वशिष्ठमुनेर्ज्येष्ठपुत्रे ॥
शक्तिग्रह । पुं० शिवे । कार्त्तिके
ये ॥ शब्दशक्तिज्ञाने ॥ अस्मात्प
दादयमर्थोबोद्धव्यइतीश्वरेच्छाशक्
तिरितितज्ज्ञानं । तज्ज्ञानन्तु
व्याकरणादिभ्यः । अतएव । शक्ति
ग्रहं व्याकरणोपमानकोशाप्तवाक्या
द्व्यवहारतश्च । वाक्यस्यशेषाद्विवृते
र्वदन्तिसान्निध्यतः सिद्धपदस्यवृद्धा
॥ इतिप्राञ्चः ॥
शक्तिग्राहक । पुं० व्याकरणोपमा
नादौ ॥ त्रि० शक्तिग्रहीतरि ॥
शक्तित्रयम् । न० ज्ञानेच्छाक्रियाख्य
शक्तित्रये ॥ यथा । इच्छाक्रियात
थाज्ञानंगौरीब्राह्मीतुवैष्णवी । त्रि
धाशक्तिः स्थितायत्रतत्परंज्यो
तिरोमिति ॥ राज्ञाप्रभुमन्त्रोत्साहा
ख्यासु । अत्रविजयार्थंराज्ञाशक्ति
त्रयसादरमादरणीयनतुहापनीयम्
॥ त्रिशक्तयोयथा । एषात्रिशक्ति
रुद्दिष्टानयसिद्धान्तगामिति । एषा
श्वेतापराशक्तिः सात्त्विकीब्रह्मस
स्थिता ॥ एषैवरक्तारजसिवैष्णवी
परिकीर्त्तिता । एषैवकृष्णातमसि
रौद्रीदेवीतुकीर्त्तिता ॥ परमात्माय
थादेवएकएवत्रिधास्थितः । प्रयोज

नवशाच्छक्तिरेकैवत्रिविधागवेद्रि
तिवाराहपुराणम् ॥ शक्तीनांत्रय
म् ॥
शक्तिधरः । पुं० कार्त्तिकेये । स्क
न्दे । त्रि० शक्तिभृति । शक्तेर्ध
र ॥
शक्तिपर्ण । पुं० सप्तपर्णवृक्षे ॥
शक्तिपाणि । पु० कार्त्तिकेये ॥ त्रि०
शक्तिधारिणि । शक्तिः पाणौयस्य
स ॥
शक्तिबन्धनम् । न० प्रजननसामर्थ्ये ॥
शक्तिसम्बन्धे ॥
शक्तिभृत् । पु० कार्त्तिकेये ॥ त्रि०
शक्तिधारके ॥
शक्तिमान् । त्रि० शक्ते ॥
शक्तिहेति । त्रि० शक्तिधरे ॥
शक्तिहेतिक । त्रि० शस्त्रअधारिणि
। शाक्तीके ॥
शक्ती । स्त्री० शस्त्रान्तरे । शक्तौ ॥ ब
ह्वादिषुशक्ति शब्दइतिपाठात्प
क्षेङीष् ॥
शक्तयर्द्ध । पुं० अमहाराकुचिललाट
ग्रीवासूत्पन्नघर्मे० दीर्घनि श्वासे
च । यथा । कुचौललाटग्रीवायाय
दाघर्मःप्रवर्त्तते । शक्त्यर्द्धंतद्वि
जानीयाद्दावशीच्छ्वासमेवच ॥
शक्य । त्रि० शक्तिविषये । शक्ष्या
श्ये । वाच्ये । यथा । शक्योऽर्थोऽ
भिधयाज्ञेय लक्ष्योलक्षणयामतः

। व्याद्रीऽज्ञनयाऽर्थंयस्मिन अव्दस्यत
चायङ्गरि ॥ ईश्वरसङ्केत . शक्तिस्त
याऽर्थं वेधकपदत्वाच्यम् । यथागौ
स्वादिशक्तिष्वेधकगवादिपदत्व
ह्रोध्येयोगवादर्थाच्य सएवमुख्या
र्थं इत्युच्यते । समर्थे ॥ शक्र् • । अ
क्तिसङ्गिति यत् सध्ये । शक्नोये॥
अवयतावच्छेदकम् । न• शक्या
भिासमानार्थे ।

शक्र । पु • इन्द्रे । देवराजे ॥ कुटजवृक्षे
॥ अर्जुनपादपे ॥ शक्नोतिदैत्यान्
नाशितुम् । शक्र् • । स्फायितञ्ची
तिरक् ॥ ज्येष्ठानक्षत्रे ॥

शक्रक्रीडाचल । पु • सुमेरुपर्वते ॥

शक्रगोप . । पुं • इन्द्रगोपकीटे ॥

शक्रज । पुं • काके । अश्वके । गूढ
मैथुने ॥ इन्द्रपुत्रे ॥ शक्राज्जात
। जनी • । ड . ॥

शक्रजित् । पु • इन्द्रजिति । रावणपु
त्रे । शक्रमजैषीत् । जि • । सत्सू
द्विषेत्यादिनाक्किप् ॥

शक्रधनु. । न• शक्रायुधे शक्रस्यधनु ॥

शक्रध्वज । पु • इन्द्रध्वजे उत्सवव
शेषे ॥ चतुरस्रध्वजाकारराजद्वारेप्र
तिष्ठितम् । आहु, शक्रध्वजनाम
पौरलोकसुखावहम् ॥ विशेषोदेवी
पुराणे •वाराहीसंहितादिषुद्रष्ट
व्य . ॥ शक्रस्यध्वजइव ॥

शक्रनन्दन : । पु • जयन्ते । अर्जुने

वालिनि । काके ॥ शक्रस्यनन्दन

शक्रपर्याय । पु • कुटजवृक्षे ॥ शक्र.
पर्यायोस्य

शक्रपादप । पु • देवदारुवृक्षे शक्र
स्यपादप ॥ कुटजे ॥

शक्रपुष्पिका । स्त्री• शक्रपुष्प्याम ॥

शक्रपुष्पी । स्त्री• अग्निशिखावृक्षे ॥
शक्रोऽर्जुनतरु पुष्पमस्या । शक्र
शब्दस्तत्पुष्पेलाक्षणिक : । पाक
कर्णेतिङीष् ॥

शक्रभवनम् । न• स्वर्गे ॥

शक्रभित •द् । पु • इन्द्रजिति । रा
वणौ ॥ शक्रमभैत्सीत् । भिदर •
। क्विप् ॥

शक्रभुवनम । न• नाके । सुरलोके ॥
शक्रस्यभुवनम् ॥

शक्रभूभवा । स्त्री• इन्द्रवारुण्याम् ॥

शक्रमाता । स्त्री• भार्ग्याम ॥ इन्द्र
जनन्याम ॥

शक्रमातृका । स्त्री• इन्द्रध्वजाङ्गयष्टिवि
शेषे ॥

शक्रमूर्धा । पु • वल्मीके ॥ इ• त्रि•
शेष ॥

शक्रवल्ली । स्त्री• इन्द्रवारुण्याम् ॥

शक्रवारुणी । स्त्री• इन्द्रवारुण्याम् ॥

शक्रवाहन . । पु • मेघे ॥

शक्रबीजम् । न• इन्द्रयवे ॥ शक्रस्
यकबीजम् ॥

शक्रशरासनम् । न• इन्द्रधनुषि ॥

शक्रशाखी । पुं॰ कुटजवृक्षे ॥ शक्रस्य शाखी ॥

शक्रशाला । ) स्त्री॰ प्रतिश्रये । स
शक्रशालिका । ) भायाम् ॥

शक्रशिर । न॰ वल्मीके ॥ इन्द्रमस्तके ॥

शक्रसारथिः । पुं॰ मातली ॥

शक्रसुत । पुं॰ जयन्ते ॥ वालिवानरे ॥ अर्जुने ॥ काके ॥ शक्रस्य सुत ॥

शक्रसुधा । स्त्री॰ कुन्दुरी ॥

शक्रसृष्टा । स्त्री॰ हरीतक्याम् ॥

शक्राख्य । पुं॰ पेचके ॥ त्रि॰ इन्द्रनामके ॥

शक्राणी । स्त्री॰ इन्द्राण्याम् ॥ शक्रमपातिकौत्संयति । अपशब्दे । व मंग्यथ । टिड्ढेतिङीप् ॥

शक्रायुधम् । न॰ इन्द्रायुधे ॥ अथास क्रमवादिकयथावाराह्याम् । सूर्यस्य विविधवर्णा . । पवनेनविघट्टिताकरा । साभ्रे । वियतिधनुस्संस्थानायेदृश्यतेतदिन्द्रधनु . ॥ केचिदनन्तकुलोरगनिः श्वासोद्भूतमाहुराचार्या । तद्यायिनान्नृपाणामभिमुखमजयावहम्भवति ॥ अच्छिन्नमवनिगाढद्युतिमत्स्निग्धघनाविविधवर्णम् । द्विरुचितमनुलोमञ्चप्रशस्तमम्भः प्रयच्छतिच ॥ विदिगुद्भूतदिक्पतिनाशचव्यभजमरककाभि । पाटलपीतकनीलै । शस्त्राग्निचुत्क्ता दोषा ॥ जलमध्येऽनावृष्टिभुंविसस्यवधस्तरौस्थितेव्याधि । वल्मीकेशस्त्रभयनिशिसचिववधायधनुरैन्द्रम् ॥ वृष्टि करोत्यवृष्ट्यावृष्ट्यावृष्टि निवारयत्यैन्द्र्याम् । पश्चात्सदैववृष्टि कुलिशभृतश्चापमाचष्ट ॥ चापमथोन . कुरुतेनिशायामाखण्डलायादिशि भूपपीडाम् । याम्यापरोदकप्रभवंनिहन्यात्सेनापतिनायकमन्त्रिणोच ॥ निशिसुरचापसितवर्णाद्य जनयतिपीडाद्विजपूर्वाणाम् । भवतिचयस्यादिशितद्दिश्यनरपतिमुख्य नचिराद्धन्यात् ॥ इति ॥

शक्राशन । पुं॰ कुटजवृक्षे ॥ न॰ भङ्गायाम् । विजयायाम् । संविदि ॥ अस्यगुणोयथा । शक्राशनन्तुतीक्ष्णोष्णमोहकृत्कुष्ठनाशनम् । बलमेधाग्निकृत्श्लेष्मदोषहारिरसायनम् ॥

शक्राह्व : । पुं॰ इन्द्रयवे ॥

शक्रोत्थानम् । न॰ शक्रध्वजोत्सवे ॥

शक्रोत्सव . । पुं॰ ध्वजोत्थाने । इन्द्रस्योत्सवे ॥

शक्ल • । त्रि॰ प्रियवदे ॥ शक्नोति । शक्॰ । मूषक्यस्विभ्य । क्ल ॥

शक्वा । पुं॰ हस्तिनि ॥ शक्तौ ॥ शक्नोति । शक्॰ । आमदिपद्यर्त्तिपृशकिभ्योवनिप् ॥

शक्कर: । पु॰ वृषे ।

शक्करी । स्त्री॰ चतुर्द्दशाक्षरायाश्छन्दो जातौ ॥ नदीविशेषे ॥ मेखलायाम् ॥ सामविशेषे॰ नित्य बहुवचनान्तोयम्॰ शक्कर्य्य इति॰ महानाम्नीषु ऋक्षु शक्करीयोगोयम् ॥ शक्करी॰ अङ्गुलिरितिमल्लव्याख्यानम् ॥ समीर चेतिकौमी ॥

शङ्क । पुं॰ शकटवाहकवृषे । स्कन्धवाहे । अवधूर्त्तिसे ॥ इ॰ हा॰ को ॥

शङ्कनक । पुं॰ क्षुद्रशङ्खे ॥ शङ्कते । शङ्कि शङ्कायाम् । कर्त्तरि॰ अनुदात्ततश्चहलादेरितियुच् । संज्ञायांकन् ॥

शङ्कर । पु॰ सदाशिवे ॥ एकादशरुद्राणांमध्येभगवद्विभूतौ ॥ शङ्कल्याणंकरोति । अभिधाने॰ संज्ञायामिति॰ अच् ॥ यथा । शङ्करोभिसदाध्यानात् परमशङ्करामलम् । भूतानामसकृद्यस्मात्तेनायंशङ्कर: स्मृत: ॥ इतिस्कान्दे ॥ त्रि॰ कल्याणकरे ।

शङ्कराचार्य्य । पुं॰ स्वनामप्रसिद्धे॰ अद्वैतवादिनि॰ वेदान्तभाष्यकर्त्तरि॰ नरावतारेविश्वेश्वरे ॥ यथाहु: । सत्सम्प्रदायप्रथनायतिष्य्शिष्यैश्चतुर्भि:, सहयोवतीर्ण: । ततोहतसक्तमतम्बराशेर्शङ्कराचार्यगुरुतमो हि ॥

शङ्करावास । पुं॰ कर्पूरप्रभेदे ॥ कैलाशे ॥

शङ्करावाससत्त्व: । पु॰ कर्पूरे ॥

शङ्करी । स्त्री॰ मञ्जिष्ठायाम् ॥ पार्वत्याम् ॥ श्रीगिरौशङ्करीस्मृतेतिदेवीगीता ॥ जप्येश्वराधिवासिन्याम्बायाम् ॥ शम्याम् ॥

शङ्कव्यम् । न॰ शङ्कुपयोगिदारुणि ॥ शङ्कवेहितम् । उगवादिभ्योयत् ॥

शङ्का । स्त्री॰ त्रासे ॥ वितर्के ॥ इति शब्दार्णव: ॥

शङ्कित: । त्रि॰ भीते ॥ वितर्किते । सशययुक्ते ॥ अविश्वस्ते ॥ शङ्कासञ्जाताऽस्य । तारकादित्वादितच् ॥ पुं॰ चोरकनामगन्धद्रव्ये । दुष्यवे ॥

शङ्कितवर्ण । )
शङ्कितवर्णक: । ) पुं॰ चौरे ॥

शङ्कु । पुं॰ सङ्ख्याविशेषे ॥ मवथा १ . . . . . . . . . . . . . ॥ मत्स्यप्रभेदे । दीर्घायुषे । कुन्ते । शल्ये ॥ यादोभेदे । अङ्गोचमत्स्ये ॥ कीले ॥ दीपसूर्ययोश्छायापरिमाणार्थंकाष्ठादिनिर्म्मितेक्रमेणसूर्य्यार्थं द्वादशाङ्गुलपरिमितेकीलके ॥ ईशे । शम्भौ ॥ मेढ्रे ॥ कलुषे ॥ राक्षसे ॥ नखीनामगन्धद्रव्ये ॥ द्वादशाङ्गुलपरिमाणे ॥ स्थाणौ । शा

शाम्यत्यनेनवा ॥ असुरविशेषे ॥

शङ्खकः । पुं॰ शिरोरोगविशेषे । तल्लक्षणादिर्यथा । पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः । तीव्ररुग्दाहरोगं हि शोथं कुर्व्वन्ति दारुणम् ॥ स शिरो विषवद्वेगान्निरुध्याशु गलं तथा । त्रिरात्राज्जीवितं हन्ति शङ्खको नामनामतः । त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् । पित्तरक्तानिलाः॰ अत्र कफोऽपि ग्राह्यः । कृतानुताप कफपित्तरक्तैरिति सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः । त्रिरात्रात् त्रिरात्रमध्ये मारयति । अस्य चिकित्सा शिरोरोगे भावप्रकाशे द्रष्टव्या । न॰ वलये ॥ पुं॰ न॰ वाश्वौ ॥

शङ्खकार । पुं॰ शूद्रागर्भे विश्वकर्म्मौरसजाते॰ वर्णसङ्करजातौ । शाङ्खिके । शाखारी॰ इति भा॰ । शङ्खं करोति । कृञ्॰ कर्म्मण्यण् ॥

शङ्खचरी । स्त्री॰ ललाटिकायाम ॥ शङ्खे चरति । चर॰ । पचादौ चरट् टित्त्वात् ङीप् ॥

शङ्खचर्च्ची । स्त्री॰ ललाटिकायाम् ॥

शङ्खचिल्लः । पुं॰ कम्बातायिनि ॥

शङ्खचूड । पुं॰ दैत्यविशेषे ॥

शङ्खचूर्णम् । न॰ शङ्खजातचूर्णे ॥ शङ्खचूर्णं कटुक्षारमुष्णं कृमिहरं परम् ॥

शङ्खज । पुं॰ कपोतडिम्बवद्बृहन्मुक्तायाम ॥ त्रि॰ शङ्खजातवस्तुनि ॥

शङ्खद्रावी । पुं॰ अम्लवेतसे ॥

शङ्खधरा । स्त्री॰ हिलमोचिकायाम् ॥

शङ्खधारी । पुं॰ छन्दोविशेषे ॥ अजानन्दकर्णा षडेवात्र वर्णाः । बुधानन्दकारी भवेच्छङ्खधारी ॥ यथा । स्फुरद्रङ्गोपनारीपरीरम्भकारी । हरिः पातु वृन्दावनाभ्यर्णचारी ॥

शङ्खध्म । पुं॰ शङ्खवादके । शाङ्खिके ॥

शङ्खध्मा । पुं॰ शाङ्खिके ॥

शङ्खनख । पुं॰ क्षुद्रशङ्खे ॥ शङ्खस्य नख इव ॥ शङ्खनखिका । बहुलमन्यत्रापीति युच्लयुटौ वा । स्वार्थे कः । पृषोदरादि । नखीनाम गन्धद्रव्ये । हनुनख्याम् ॥

शङ्खनखा । स्त्री॰ शङ्खनख्याम् ॥ द्विधा शङ्खनखाख्याऽन्या शुक्त्याख्या बदरीच्छदः ॥ इति रत्नमाला ॥

शङ्खपुष्पी । स्त्री॰ मङ्गल्यकुसुमायाम् ॥ शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्यकुसुमापि च । शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत् । रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा ॥ दोषापस्मारभूतास्त्रकुष्ठकृमिविषप्रणुत् । इति भावप्रकाशः ॥ पाककर्णेति ङीष् ॥

अङ्खप्रस्थ । पुं॰ चन्द्रस्यचिह्ने ॥

अङ्खभृत् । पुं॰ विष्णौ ॥ भूता
　यहङ्कारात्मकं पाञ्चजन्याख्य शङ्ख
　बिभर्त्ति । शुभृञ्॰ ॥ क्विप् ।
　तुक् ।

अङ्खमुखः । पुं॰ कुम्भीरे ॥

अङ्खमूलम् । न॰ मूलके ॥

अङ्खसञ्ज्ञा । स्त्री॰ याज्ञायेगान्त
　रे । यथा । श्वासस्त्वेबुधैलग्ने
　शुक्रेवादेवपूजिते । अङ्खसञ्ज्ञा
　ह्वयेयोगेयातु कीर्त्तिप्रदः
　सदा ॥

अङ्खसेनः । पुं॰ चित्रगुप्तात्मजेका
　यस्थविशेषे ॥

अङ्खाख्य । पुं॰ शङ्खम्याम् ॥

अङ्खालुकम् । न॰ श्वेततायुक्तेक
　न्दविशेषे

अङ्खाह्वा । स्त्री॰ शङ्खपुष्प्याम् ॥

अङ्खिका । स्त्री॰ तृणविशेषे । चो
　रायाम् । चोरवङ्क्ली॰ इ॰गौ॰
　भा॰ ॥

अङ्खी । पुं॰ हरौ ॥ समुद्रे ॥
　चि॰ शङ्खवति ॥

अङ्खिनी । स्त्री॰ चोरपुष्प्याम् ।
　क्षिमिन्याम् । शाखाङ्क्ली॰ इ॰
　भाषा ॥ श्वेतबुह्म्याम् । वधूभे
　दे । वचलाप्रभेदे ॥ तीर्थविशेषे
　॥ बुद्धशक्तिविशेषे ॥ श्वेतपुन्नागे ॥
　यवतिक्तायाम् ॥ श्वेतचन्द्रायाम् ॥

अङ्खवत्याम ॥ चतुर्विधस्त्रीमध्ये
　स्त्रीविशेषे ॥ तल्लक्षणं यथा । दी
　र्घासुदीर्घनयनावरसुन्दरीयाकामो
　पभोगरसिकागुणशीलयुक्ता । रे
　खाचयेणचविभूषितकण्ठदेशासम्भो
　गकेलिरसिकाकिलशङ्खिनीसा ॥
　अपरञ्च पद्मिनीतुष्टाचित्रिणीरमतेम्न
　गम् । वृषभं शङ्खिनीतुष्टाहस्ति
　नीरमतेहयम् ॥ पद्मिनीपद्मगन्धा
　चमीनगन्धाचचित्रिणी । शङ्खिनी
　क्षारगन्धास्यान्मदगन्धाचहस्तिनी ॥
　नाडीविशेषे ॥ गान्धार्याश्चसरस्व
　त्या स्थितामध्येचशङ्खिनी ॥ श
　शङ्खा . सन्त्यस्या शङ्खाका
　रपुष्पत्वात् । अतइनि . ॥

अङ्खिनीफल । पुं॰ शिरीषवृक्षे ॥

अङ्खिनीवास । पुं॰ शाखोट-
　वृक्षे ॥

शचि । स्त्री॰ शच्याम् । इन्द्राण्याम्
　॥ शचति । शचव्यक्तायांवाचि । स
　र्वधातुभ्यइन् ॥ स्त्रीकरणाकारे ॥

शची । स्त्री॰ पुलोमजायाम् । पौलो
　म्याम् । इन्द्राण्याम् । शचति॰
　व्यक्तंवदति । शच॰ । इन्नन्तात्॰
　कृदिकारादक्तिनडीष् ॥ शतावर्या
　म् ॥

शचीपति । पुं॰ इन्द्रे ॥ शच्याः
　पतिः ॥

शचीश । पुं॰ इन्द्रे ॥

शट पुं॰ देशान्तरे ॥ शटेरच्
।म॰ चर्म्ने ॥

शटा । स्त्री॰ जटायाम् ॥ शटति । श
टरुजाविशरणगत्यवसादनेषु । अ
च् । टाप ॥

शटि ।पुं॰ शव्याम् । गन्धपला
श्याम् । शट॰ । इन् ॥

शटिका । स्त्री॰ शटीप्रभेदे । गन्ध
पत्रायाम् ॥

शटी । स्त्री॰ गन्धशव्याम् । गन्धमू
ल्याम् । षड्ग्रन्थिकायाम् । कर्बू
रे । पलाशे । गन्धपलाश्याम् ।
कचूर॰इ॰दे॰भा॰ । वनआदा॰इ
॰गौ॰दे॰भा॰ ॥ गन्धपत्राशीसुगन्ध
द्रव्य काश्मीरप्रसिद्धम् । शटति ।
शट॰ । अच् । गौरादि . ॥

शट्ट ।पु॰ शट्टके ॥

शट्टकम् । न॰ शट्टे । साटा॰इ॰भा॰
प्र॰ ॥ शालिचूर्णघृततोयमिश्रित
शट्टकवदेत् ॥

शठ ।पु॰ मध्यस्थपुरुषे ॥ धूस्तूरे
॥ धूर्ते । परवञ्चनार्थं॰मन्यथाजा
नन्नप्यन्यथावादिनि । गूढविप्रियक्र
ति ॥ यथोक्त विष्णुपुराणे । प्रियव
क्तिपुरोऽन्यत्रविप्रियंकुरुतेभृशम् ।
युक्तापराधचेष्टश्च शठोऽयकथितोबु
धैरिति ॥ अपिच । परकार्यविमुखे
। यथा ॥ मनसावचसायश्चदृश्यते
कार्यतत्पर. । कर्मणाविपरीतश्च

सशठः सद्भिरुच्यते ॥ चतुर्विधप
त्यन्तर्गतपतिविशेषे ॥ तल्लक्षण यथा
। कामिनीविषयकपटपटुरिति ॥
शठति॰वञ्चयति । शठके तवे । प
चाद्यच् ॥ न॰ तगरे । कुङ्कुमे ॥
तीक्ष्णायसी ।

शठता । स्त्री॰ कुसृतौ । निकृतौ ।
मायायाम् । शाठ्य ॥ भावकर्म
णोस्तल् ॥

शठाम्बा । स्त्री॰ अम्बष्ठायाम् । छिन्न
पल्याम् ॥

शण ।पु॰ स्वनामख्यप्रसिद्धेक्षुपे ।
माल्यपुष्पे । कटुतिक्तके । त्वकसा
रे । दीर्घपल्लवे ॥ न॰ भङ्गायाम् ।
मातुलान्याम् ॥

शणघण्टिका । स्त्री॰ शणपुष्प्याम् ॥

शणपत्रम् । न॰ शणवल्कलनिर्मितेप
र्णे । कागद॰इ॰प्र॰ ॥

शणपर्णी स्त्री॰ शणपर्ण्याम ॥ श
ण पर्णमस्याः । शणशब्द शण
पर्णसदृशैलाक्षणिक । पाककर्ण
तिङ्गोष् ॥

शणपुष्पम् । न॰ शणके ॥

शणपुष्पिका । स्त्री॰ घण्टारवायामो
षधौ ॥ शणा. पुष्पं यस्या. । स्वा
र्थे कन ॥

शणपुष्पी । स्त्री॰ घण्टारवायाम् ।
घण्टेतिख्यातौषधौ ॥ शणाः पुष्प
यस्याः । शणशब्दस्तत्पुष्पसदृ शेलाः

त्पित्त '। पाककार्यं तिल्लोष ॥

शणागुणी '। शणपुष्पीकटुस्तिक्ता

वामिनीकफपित्तजित् ॥ आढक्या

म् ।

शणसूत्रम् । न० शणद्रुमांशुसूत्रे ।

पवित्रकी ॥ शणोति । शणगती ।

पचाद्यच् । शणस्यसूत्रम् ।

शणालु । शणालुकः । ) पु० आरेवते । आरग्व

धे ॥ द्र०श०र०ली० ॥

शणिका । स्त्री० शणपुष्प्याम ॥

शणीरम । न० शोणमध्यस्थपुलिने

॥ दर्दरीतटे ॥ द्र०मेदिनिकर '।

शण्डम् । न० षण्डे । पद्मादिसमूहे

॥ पु०असुरपुरोहिते ॥ शण्डते ।

शण्डिजायासङ्घातेच । असात्

पचाद्यच् ॥

शण्डिक । पुं० देशविशेषे ॥

शण्डिल । पु० मुनिविशेषे ॥ शण्ड

ते 'शण्डि० । सलिकल्यनिमण्डिभ

ण्डिभण्डशण्डपिण्डतुण्डकुकिभू

भ्यइलच् ॥

शण्ढ । पुं० गोपती । सांड०द्र०

भा० ॥ आक्रष्टाण्डे ॥ वर्षवरे ।

वन्ध्यमंज्ञकी । अभ्यन्तरस्त्रीरक्ष

की ॥ तृतीयप्रकृतौ । क्लीबे ॥

आम्यतिशिष्याभावात् । शमउप

शमे । शमेढं : ॥ वन्ध्यापुरुषे ।

उन्मत्ते

शतम । न० दशगुणितदशसङ्ख्या

याम। दशती । १०० दशदशत

परिमाणमस्य । पङ्क्तिविंशतीतिनि

पातनात्० प्रकृती शभाव० त

प्रत्ययः ॥ सङ्ख्येये ॥

शतक । त्रि० शतसङ्ख्याविशि

ष्टे सङ्घे ॥ शतपरिमाणमस्य । स

ङ्ख्यायाअतिशदन्तायाः कन् ॥

शतेनक्रीतोवा ॥

शतकीर्त्ति । पु० भाव्यर्हद्विशेषे ॥

शतकुन्द '। पु० करवीरे ॥

शतकुम्भ । पु० पर्वतविशेषे ॥ श्वेत

करवीरे ॥

शतकोटि । पुं० वज्रे ॥ शतको

टयोधाराः 'कोणलक्षणा' यस्य स

॥ दशार्बुदे । चले । पद्म ॥ -

शतक्रतु '। पुं० इन्द्रे ॥ शतक्रत

वोयस्य सः ॥

शतखण्डम् । न० सुवर्णे ॥ त्रि०श

तभागे ॥

शतग्रन्थि । स्त्री० दूर्वायाम् ॥

शतघ्नी । स्त्री० शिल्पविद्याप्रसिद्धे

शस्त्रविशेषे ॥ प्राकाररक्षार्थं नि-

र्मितयन्त्रविशेषे ॥ शतहन्ति ।

हन० । अमनुष्यकर्तृकेचेतिटक् ॥

ङीप् ॥ लोहकण्टकसञ्छन्नाशतघ्नी

महतीशिलेति० विजयरक्षित ॥

वृश्चिकाल्याम् ॥ करञ्जकी ॥ गल

रोगविशेषे ॥

शतच्छन्दः । पुं० काष्ठकुट्टखगे । दार्वाघाटे ॥ शतच्छदाख्य ॥

शततम । त्रि० शतस्य पूरणे । नित्यं शतादिमासार्द्धमाससंवत्सराच्चेति डट्तमडागम. ॥

शततारा । स्त्री० शतभिषायाम् ॥

शतदन्तिका स्त्री० नागदन्त्याम् ॥

शतद्रु . । स्त्री० सरिद्विशेषे । शतुद्री ॥ अस्याजलगुणायथा । शतद्रोर्विपाशायुक्तः सिन्धुनद्याः सु शीतलघुस्वादुसर्वशमथम । अतिनिर्मलदीपनपाचनञ्चप्रदत्तेबलबुद्धिमेधायुषश्च । शतधाद्रवति । द्रुगतौ । हरिमितयोर्द्रुव शती चेतिकु । मितद्र्वादित्वाड्डुर्वा ॥

शतधा । ) शतधा । ) स्त्री० शतप्रकारे ॥ दूर्वायाम् ॥

शतधामा । पुं० विष्णौ ॥ शतमनन्तानिधामान्यस्य ॥

शतधारम् । न० पवौ । वज्रे ॥ शतधारा कोपालञ्चायस्य स त्रि० शतधाराविशिष्टे ॥

शतधृति. । पुं० इन्द्रे । शक्रे ॥ परमेष्ठिनि । स्रष्टरि ॥ दिवि । स्वर्गे ॥

शतपत्र . । पुं० मयूरे ॥ दार्वाघाटे ॥ सारसे ॥ राजकीरे ॥ नूरीतोता० इ० भा० न० कमले शतपत्राण्यस्य ॥

शतपत्रक ' । पु० दार्वाघाटे । काष्ठकुट्टखगे ॥ शतंपत्राण्यस्य ॥

शतपत्रनिवास । पुं० ब्रह्मणि ॥ त्रि० पद्मस्थो ॥

शतपत्रिका । स्त्री० शतपत्र्याम् । सेवन्त्याम् ॥

शतपत्री । स्त्री० सेवन्त्याम् । सेवती० इ०भा० ॥ पाटलवर्णासो०गुलाब इ०प्रसिद्धास्त्री०उभयोः पर्यायाः यथा । शतपत्रीतरुण्युक्ताकर्णिका चारुकेशरा । सहाकुमारीगन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥ शतपत्रीहिमाहृद्याग्राहिणीशुक्रलालघुः दोषत्रयास्रजिद्वर्ण्यातिक्ताकट्वीचपाचनी ॥

शतपथ . । पु वेदैकदेशे ।

शतपथिक . । त्रि० शतपथाध्येतरि ॥ शतपथमधीतेवेदवा । इकन् पदोत्तरपदात्० शतपष्टे . षिकन् पथ इतिषिकन् ॥ षित्वात्० स्त्री० शतपथिकी ॥

शतपदचक्रम । न० नाम्नानक्षत्राद्यर्थचक्रे ॥ तद्यथा । चक्रं शतपदचक्रे० कटाघा॰स्वरसम्भवम् । नामादिवर्णतोज्ञेयाक्षराद्यं प्रकाशयाः ॥ तिर्यगूर्द्ध्वगतारेखा रुद्रसङ्ख्यालिखेद्बुधः ॥ जायते कोष्ठकानाञ्चशतैकमोक्षसप्त . ॥ च० व० क० इ० डापिमाग्नी०

## शतपदचक्रम्

म० ट० प० र० ता० हरिति० श्चाग्नेय्याम् । न० य० भ० ज० खा० नैरृत्या० ग० स० द० च० ला० वायव्याम् ॥ पञ्चपञ्चक्रमेणैवमि श्रवर्णान्प्रयोजयेत् । पञ्चस्वरसमायोगेएकैकपञ्चधाकुरु ॥ अवर्णाद्यास्त्रयोभूवा . सन्ध्यक्षरयुतास्तथा । सजातीयैक्यमाश्रित्यपञ्चस्वरविनिर्णय '॥ अटहलतोरष्यकारेष० श्रेम सक्षपरिग्रह । कुर्यात्कुपु० भु० दु० श्चाग्नेयीचिन्तीयस्वराविच ॥ कु० घ० ङ० छा० भवेत्तत्क्षेरौद्रेस्त्रीशानगोचरे । पु० ष० ण० ठा० भवेत्तत्क्षे हस्ते चाग्नेयसङ्कके ॥ भु० ध० फ० ढाभवेत्तत्क्षे पूर्वाषाढे चनैरृते । दु० थ० झ० ञ० भवेत्तत्तेवायव्ये भाद्रउत्तरे एवत्तत्क्षचतुष्कञ्चज्ञातव्य स्वरवेदिभि.। धिष्ण्योनिक्राल्तकादीनिप्रत्येकचतुरक्षरे .। साभिजित्य शका स्तत्रशतैकंद्वादशाधिकम् । यद्वर्ण शकधोष्ठस्य क्रूर सौम्योपिवा यत्र :४ तत्रस्थोवेधयेत्सम्यक्पुंसीनामादिमाक्षरम् । सौम्ये विद्ध शुभञ्चयमशुभपापखेचरे . ॥ मिश्रै मिश्रफलतत्र निर्वेधेनशुभाशुभम । सद्यात्य सर्वतोभद्रे यथोपपदमेदत :। शुभोशुभफलसर्वंतद्दिशापि विचिन्तयेत् ॥ पञ्चस्वरा.० प०

## शतपदचक्रम्

कू० उ० ए० ओकारास्त्रयोंऽधिष्ण्यानिनवचाधि । अवचतुर्भिर्वर्णैरेकनक्षत्र यथा । च० चू० चे० ल० कृत्तिका । चो० व० वि० वु० रोहिणी । वे० वो० क० कि० मृगशिर. । कु० घ० ङ० छ० आर्द्रा । के० को० ह० हि० पुनर्वसू । हु० हे० हो० ड० पुष्य । डि० डु० डे० डो० अश्लेषा । म० मि० मु० मे० मघा । मो० टा० टि० टु० पूर्वाफाल्गुनी । टे० टो० प० पि० उत्तराफाल्गुनी । पु० ष० ण० ठ० हस्त । पे० पो० र० रि० चित्रा । रु० रे० रो० त० स्वाति । ति० तु० ते० तो० विशाखा । न० नि० नु० ने० अनुराधा । नो० य० यि० यु० ज्येष्ठा । ये० यो० भ० भि० मूलम । भु० ध० फ० ढ० पूर्वाषाढा । भे० भो० ज० जि० उत्तराषाढा । जु० जे० जो० ख अभिजित् । खि० खू० खे० खो० श्रवण । ग० गि० गु० गे० धनिष्ठा । गो० स० सि० सु० शतभिषा । से० सो० द० दि० पूर्वभाद्रपदा । दु० थ० झ० ञ० उत्तरभाद्रपदा । दे० दो० च० चि० रेवती । चु० चे० चो० ल० अश्विनी । लि० लु० ले० लो० भरणी । कचयुक्ता अकारयुक्तानर्क्ष

थः । ऋक्सैन्दीर्घोच्चेय ः । ताल व्यशकारेणदन्त्यसकारोच्चेय ॥ इ तिशतपदचक्रम् ॥

शतपदी । स्त्री॰ कर्णजलौकायाम् ॥ शतपादस्यस्याः । कुम्भपदीषुचे तिसाधु ॥ शतावर्याम् ॥

शतपत्रम् । न॰ श्वेतकमले । पुण्ड रीके ॥

शतपर्वा । पुं॰ वंशे । त्वक्सारे । शतपर्व्वाख्यस्य ॥ वृक्षविशेषे । शत पोरके ॥ यथा । शतपर्वाभवेत् किञ्चित्कोषकारगुणान्वितः । वि शेषात्किञ्चिदुष्णश्चसचार पवना पहः ॥

शतपर्व्वी । स्त्री॰ दूर्वायाम् ॥ वचा याम् ॥ भार्गवभार्यायाम् ॥ कोजा गरपूर्णिमायाम् ॥ कटुकायाम् ॥ शतपर्व्वाण्यस्याः । पाक्षिकः कप भावः ॥

शतपर्विका । स्त्री॰ दूर्वायाम् ॥ वचा याम् ॥ शतपर्वाण्यस्याः । शेषा दितिकप् ॥ यद्वा । शतपर्वैति । पर्वपूरणे । ण्वुल् । यवे ॥

शतपर्वेश ः । पुं॰ शुक्रग्रहे ॥ शत पर्वायाईश ः ॥

शतपात्‌॰द् । स्त्री॰ शतपद्याम् ॥ श त पादाअस्याः । सङ्ख्यासुपूर्व स्येतिसाधुः ॥

शतपादिका । स्त्री॰ शतपद्याम् ॥ का कोल्याम् ॥

शतपादी । स्त्री॰ शतपादिकायाम् ॥

शतपुष्पा । स्त्री॰ सितच्छत्रायाम् । अतिच्छत्रायाम् । मधुरायाम् । सौंफ । धानसोया॰इ॰भा॰प्र॰ ॥ अस्यागुणायथा । शतपुष्पाकटुस्तीक्ष्णा पित्तकृद्दीपनीकटुः । उष्णाज्वरानि लश्लेष्मव्रणशूलाक्षिरोगहृत् ॥ मिश्रे यातद्गुणाप्रोक्ताविशेषाद्योनिशूलनु त् । अग्निमान्द्यहरीहृद्याबद्धविट्कृ मिशुक्रहृत् ॥ रूक्षोष्णापाचनीकास वमिश्लेष्मानिलान्हरेत् ॥ अपि च । एकैवाह वहुरसास्ववासिनैव वासिता।शतपुष्पावदत्येव छत्र दृष्ट्वा जिगीषया ॥ शत पुष्पाण्यस्याः । सहच्छकाण्डेतिटाप् ॥

शतपुष्पिका । स्त्री॰ शतपुष्पायाम् ॥

शतपोरक ः । पुं॰ शतपर्वाख्यवृक्ष विशेषे ॥

शतप्रसूना । स्त्री॰ शतपुष्पायाम् ॥

शतप्रास ः । पुं॰ करवीरवृक्षे ॥ श त प्रासइवपत्राण्यस्य ॥ शत पुष्पा णिप्रास्यतिवा । असुक्षेपणे । कर्म ण्यण् ॥

शतबलि ः । पु॰ कपोनांयूपतेर्वि शेषे ॥

शतभिषक् । स्त्री॰ शतभिषानक्षत्रे ॥ त्रि॰ शतभिषजिजाते॰ शतम्भिषा जोतिजाताथस्याबालुक् । पञ्चशा

तभिषज ः। शतभिषेषि ॥

शतभिषा । स्त्री० अश्विन्यादिषु चतु विंशिभे ॥ तत्रजातस्य फल यथा । शीतभीतिरतिसाहसीसदानिष्ठुरो ह्विचतुरोनरोभवेत् । वैरिणामति शयोह्विदारणोवारुणोडुयदियस्य सम्भवे ॥

शतभीरु । स्त्री० मल्लिकायाम् । बेला० बेली० रायबेल० इ० च० भा० प्र० पुष्पे ॥ शत बहवोवियोगिनो भीरवोऽस्या ।

शतमख । पुं० इन्द्रे । शचीपतौ ॥ शत मखाश्चस्य ॥

शतमन्यु । पु दिवस्पतौ ॥ इन्द्रे ॥ शत मन्यवोयागाश्चस्य । शतेषुदु त्येषुमन्यु क्रोधोऽस्येतिवा ॥ शत मन्यवोदैत्यान्यस्यवा । दैत्यैः प राजितत्वात् ॥

शतमान पु० दशक्रृष्णधरणेषु । वि शत्यधिकरक्तिकाशतत्रयपरिमाणे स्वर्थ । ॥ धरणानिदशज्ञेय श तमानस्तुराजतकृतिमनु ॥

शतमार्ग । पु० चलकारके ॥ इ० कपित् ।

शतमूला । स्त्री० दूर्वायाम् ॥ वचा याम् ॥

शतमूलिका स्त्री० द्रवन्त्याम् । मूषि कपर्ण्याम् ॥

शतमूली । स्त्री० बहुसुतायाम् । शतावर्याम् ॥ शत मूलान्यस्या । पाककर्णेतिङीष् ॥

शतयष्टिक । पु० शतलतिकाहारे । देवच्छन्दे ॥

शतरुद्रियम् । न० हविरादौ ॥ श त रुद्रादेवताचस्य । शतरुद्राद्घ श्चेतिघ ॥

शतरुद्रीयम् । न० शतरुद्रिये ॥ श तरुद्राद्घश्चेतिचकाराच्छः शत शब्दोऽनन्तवचन ॥

शतरूपा । स्त्री० स्वायम्भुवमनो पत्न्याम् ॥ ब्रह्मण कन्यायाम् ० पत्न्याश्चेतिमात्स्ये तृतीयोध्याय ॥

शतलुम्प । ) पु० किरातार्जुनीय
शतलुम्पक । )
काव्यकर्त्तरिभारविकवौ ॥

शतवीर्य्या । स्त्री० श्वेतदूर्वायाम् ॥ शत वीर्याण्यस्या ॥ कपिलद्राक्षा याम् । शतावर्याम् ॥

शतवेधी । पु० अम्लवेतसे ॥ शत वेद्धुंशीलमस्य । विधविधाने । सुपीतिणिनि ॥

शतवेधिनी । स्त्री० चुक्रिकायाम् । चूकाख्यशाके ॥

शतव्रज । पुं० अनन्तगतौ । अप रिमितगतौ ॥

शतसहस्रम् । न० शतगुणितसहस्रे । लक्षे ॥

शतसहस्रकम् । न० तीर्थविशेषे ॥

शतङ्कुटा । स्त्री॰ वर्ज्ये ॥ विद्युति । सौदामिन्याम् ॥ शतं ङ्कुदा॰ ॰ प र्वो यि॰ अगाधजलाशयावासम्यस्या । अच् ॥ शतं ङ्कुदाद्यवस्था बूतिरा । पृषोदरादित्वात् स॰ ॥

शताग्र । त्रि॰ शततमेभागे । स ङ्ख्याशब्दस्यवृत्तिविषयेपूरणार्थत्व म । यथा । तस्याश्शिरोशतांशेनया गङ्गासुरपूजिता । शतांशेनवतुल सीतेनविष्णोः प्रियासदेतिमत्युक्त यतत्वम् । तस्याः सुरायाऽ ङ्गतस स्यत्व . ॥

शताक्षी स्त्री॰ पार्वत्याम् ॥ शत पुष्पायाम् ॥ रात्र्याम् ॥ शतम क्षीण्यस्याः । बहुव्रीहौ॰ अच् । ङीष ॥

शताङ्गः । पुं॰ युद्धार्थरथे । स्यन्दने ॥ शतमङ्गान्यवयवायस्य स. । तिं निशद्रुमे ॥

शतानकम् । न॰ रुद्राक्रीडे । श्म शाने ॥

शतानन्द । पुं॰ मुनिविशेषे । गौतमस्यसुतेदेवकीनन्दने ॥ गौत मसुनौ ॥ जनकपुरोहिते ॥ ब्र ह्मणि ॥ विष्णुरथे । शतमानन्दा यस्य एकएवपरानन्दउपाधिभेदा च्छतधाभिद्यते ॥ शतमनेके॰ अन्तः करणवृत्तिविशेषोपाधिभिर्व्यज्य मानाआनन्दा यस्यपरमानन्दसिन्धो

र्ब्रह्मणइतिवा ॥

शतानीक । पुं॰ व्यासशिष्ये॰ मुनि विशेषे ॥ वृद्धे ॥ नृपविशेषे । जन मेजयपुत्रे ॥

शतायु । त्रि॰ शतवर्षवयसि ॥ श तवर्षाणामायुर्यस्य . ॥

शतारम् । न॰ वज्रे ॥

शतारुषी । )स्त्री॰ कुष्ठभेदे ॥ रक्तंश्यावं
शतारु । )न॰

सदाहान्ति शतारु स्यादनेकव्रणम् ॥

शतावरी । स्त्री॰ शतमूल्याम् । इन्दी वर्याम् ॥ अस्यागुणा . । शतावरी गुरु . शीतातिक्तास्वाद्वीरसायनी । मेधाग्निपुष्टिदास्निग्धानेत्र्यागुल्मा तिसारजित् । शुक्रस्तन्यकरीबल्या वातपित्तास्रशोथजिद्दिति ॥ अस्या घार्त्तायथा । शतावरीमूलकल्क कल्का त्क्षीरचतुर्गुणम् । क्षीरतुर्यंघृतग व्यंसितयाकल्कतुल्यया ॥ घृतशे षंपचेत्तत्तुपलार्द्धं लेहयेत्सदा । र क्तपित्ताम्लपित्तक्षयश्वासघ्नान्यपि तदूतिलघुशतावरीपाक॰ ॥ शच्या म् । इन्द्राण्याम् ॥ शतेनाप्नोति । इन् ॰ । पचाद्यच् । गौरादिः ॥

शतावर्त्त । पु॰ विष्णौ ॥ शतमाव र्त्ताः प्रादुर्भावा यस्य ॥

शतावर्त्ती . । पु॰ विष्णौ ॥

शताक्षि । पुं॰ शतकोटौ ॥ वज्रे ॥

शताह्वा । स्त्री॰ शतपुष्पायाम् ।

शतपुष्पा° इ° गौ° भा° ॥ मधुरिकायाम् । अतिच्छत्रायाम ॥

शतिक । त्रि° शत्ये ॥ शतेनक्रीत° शतस्यविकारोऽवयवोवा । शतस्यनिमित्तसंयोगउत्पातोवा ॥ क्रीतवत्परिमाणादित्यतिदेशात्° शतान्चठन्यतावशतइतिठन् ॥

शतेर । पु° शत्रौ ॥ हिंसायाम् ॥ शीयते । शद्लशातने । शदेस्तथेरन् ॥

शत्य । त्रि° शतिके ॥ शतिकवदतिदेशाद्यत् ॥

शत्रि । पु° कुञ्जरे । हस्तिनि ॥ शीयते । शदल । राशदिभ्यांत्रिप् ॥

शत्रु । पु° । स्वविषयान्तरावनिमे ॥ विषयानन्तरोराजाशत्रुः ॥ निपातकारिणि । रिपौ । वैरिणि । सपत्ने । अरौ । अभिघातिनि ॥ शत्रुर्द्विधा । आभ्यन्तरोबाह्यश्च । आभ्यन्तरः कामक्रोधादिरूपः । बाह्यश्चइष्टविघातादिकर्त्ता । यथाहु । एकः शत्रुर्नद्वितीयोस्ति शत्रुरज्ञानतुल्यः पुरुषस्यराजन् । येनावृतः कुरुतेकार्यं तेचघोराणि कर्माणिसुदारुणानीति ॥ लग्नात् षष्ठस्थाने ॥ शातयति । शद्ल° । चान्त । रुशातिभ्यांक्रुन् । बहुलमन्यत्रापीतिचिलुक । प्रज्ञादिपाठात्स्वार्थेऽण् ॥ शातयितरि । हन्तरि ॥ यथा । इन्द्रशत्रु । इन्द्रस्यशत्रुर्हन्ता । इन्द्र° शत्रुर्हन्तायस्येतिबहुव्रीहिर्वा ॥

शत्रुघ्न । पु° सुमित्रातनये । शत्रुमर्द्दने । श्रीरामभ्रातरि ॥ शत्रून्हतवान् । हन° । मूलविभुजादित्वात्क ॥ यद्वा । शत्रून्हन्ति । अमनुष्यकर्त्तृकेपिचेत्यपि शब्दात्° कृतघ्नशत्रुघ्नादयः सिद्धा इतिदुर्गसिंहः । पाणिनीयेपि° बहुलग्रहणाद्यथेष्टसिद्धिः । कृत्यल्युटोबहुलम् ॥ त्रि° अरिघ्ने ॥

शत्रुघ्नजननी । स्त्री° सुमित्रायाम ॥

शत्रुजित । पु° भूपविशेषे । कुवलयाश्वपितरि ॥ त्रि° वैरिजयकारिणि ॥ शत्रून्जयतिअभिभवति । जि° । क्विप्° तुक् ॥

शत्रुञ्जय । पु° विमलाद्रौ ॥ हस्तिनि । शत्रुंजयति जि° । सञ्ज्ञायां भृतॄवृजीतिखच् ॥ शत्रुजेतरि ॥

शत्रुता । स्त्री° शत्रुत्वे । वैरिभावे । तल् ॥

शत्रुतप । त्रि° वैरितापकृति ॥

शत्रुमर्द्दन । पु° शत्रुघ्ने ॥ त्रि° वैरिघ्ने ॥

शत्रुवल । त्रि° शत्रुमति । शत्रुरस्त्यस्य । अन्येभ्योपिदृश्यतइति वलच् । असञ्ज्ञात्वाद्वलइतिनदीर्घः ॥

शत्रुहा । पु° क्रूरकर्मणिपक्षी ॥

शत्वरी । स्त्री॰ निशायाम् ॥

शद । पु॰ फलमूलादौ ॥ शदेरच्॥

शद्रि । पु॰ अम्भोधरे । मेघे ॥ जिष्णौ ॥ हस्तिनि ॥ खण्डे ॥ स्त्री॰ तडिति ॥ शीयतेऽस्यतेवा। शद्लृ॰ । अदिशदीतिक्रिन् ॥

शनकायनि । स्त्री॰ शकपिप्पल्याम्॥

शनकैः । अ॰ अत्वरायाम् ॥ शनैरेव । अव्ययसर्वनाम्नामकच्प्राक्टेरित्यकच् ॥ सम्भ्रमेपेत्यर्थे ॥

शनपर्णी । स्त्री॰ असनपर्ण्याम् ॥ कटम्भ्याम् ॥

शनिः । पुं॰ सप्तमग्रहे । सौरौ । शनैश्चरे । नीलवाससि । मन्दे । छायात्मजे ॥ कुकुरे ॥

शनिगृहम् । न॰ मकरराशौ ॥ कुम्भराशौ ॥ शनेर्गृहम् ॥

शनिप्रसू । स्त्री॰ छायायाम् । सूर्यपत्न्याम् ॥

शनिप्रियम् । न॰ नीलमणौ ॥

शनिवार । पु॰ शनिभोग्यसावनदिने ॥ तत्पु॰ उदयकालादोदयकालः ॥

शनैश्चर । पुं॰ शनिग्रहे ॥ शनैश्चरति॰ पङ्गुत्वात् । चर॰ । अच् ॥ त्रि॰ मन्दगामिनि ॥

शनैः । अ॰ क्रियामान्द्ये । स्वैरे ॥ अत्वरायाम् । बहुले । शनैश्चरे । शणति॰ । शानयतिवा । बाहुलकात् ने॰ शानतेजनेवा। ऐसुप्रत्यय । पृषोदरादित्वात्॰ णस्यन त्वम्॥

शन्तनुः । पु॰ प्रतीपभूपतनये । महाभिषे ॥

शप । पुं॰ शपथे । निर्भर्त्सने ॥

शपथ । पुं॰ कारे ॥ आक्रोशे ॥ दिव्ये । सत्ये । सुतादिभि. शपने ॥ शपन्ति शपथाक्रोशे । शीङ्शपिरुगमीत्यादिनाऽथप्रत्ययः ॥

शपनम । न॰ शपथे ॥ शप॰ । ल्युट् ॥

शपमान । त्रि॰ क्रोशति ॥ स्वरितेत्वादात्मनेपदम् ॥

शप्त । त्रि॰ शापयुक्ते ॥ शप्यतेस्म । शप॰ । क्तः । पुं॰ उल॰ दू॰ गौ॰ भा॰ प्र॰ तृणविशेषे ॥

शफ । पुं॰ सुगन्धिद्रव्यविशेषे । नखे । कोलदले ॥ न॰ तरूणां मूले ॥ गवादीनांखुरे ॥ शफति । फणगतौ । अन्येभ्योपीति डः । पृषोदरादिः ॥

शफर । पुं॰ मत्स्यविशेषे । प्रोष्ठ्याम् । पूंठी॰ दू॰ गौ॰ दे॰ भा॰ प्र॰ शफराति । रा॰ । आतोऽनुपेतिकः ॥

शफराधिप । पुं॰ इल्लिशे॰ मत्स्ये । वारिकपूरे ॥ शफराणामधिपः॥

शफरी स्त्री॰ शफरे । प्रोष्ठ्याम ॥ जातेरितिङीष् ॥

शबल । पु॰ एते । कर्बुरे । चित्रे । किर्मीरे । शपति॰ च क्रोशति वर्णान् । शप॰ शपेर्वं क्तितिकलप्रत्ययो बत्वञ्च । चि॰ त्र्यभ्य. । त्रि॰ तद्वति ।

शब्द । पु॰ चमरे । यशसि । गीतौ । वाक्ये । खे । श्रवणे । ध्वनौ । इति हेमचन्द्र । श्रोत्रग्राह्ये गुणपदार्थविशेषे । अस्य पर्यायाः यथा । शब्द॰ निनादनिनदध्वनिध्वानरवस्वना । स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः । आरवारावसंरावविरावाः । इत्यमरः । प्रयोगेणाभिज्वलितयाकाशदेश शब्दः । स द्विविधः ध्वन्यात्मको॰ वर्णात्मकश्चेति भेदात् । तथाहि । शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः । कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ॥ सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते । वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते । उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ॥ सोऽयं ककार इति बुद्धिस्तु साजात्यमवलम्बते । तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् । इ॰ भा॰ प॰ शब्द निरूपणे । शब्द इति । नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याऽग्रहणादाह । श्रोत्रोत्पन्न इति । ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे॰ श्रोत्रे कथमुत्पत्तिरत आह । वीचीतरङ्गन्यायेनेति । आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते॰ तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति कदम्बगोलकन्यायादिति । आद्यशब्दाद्दशदिक्षु॰ दश शब्दा उत्पद्यन्ते । ततश्चान्ये दश शब्दा उत्पद्यन्ते॰ इति भावः । अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मत इति । ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह । उत्पन्नः क इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः । ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् । इत्यत उत्पादविनाशबुद्धिर्भ्रमरूपा चेत्यत आह । सोऽयं ककार इति बुद्धिस्तु साजात्यमवलम्बत इत्यादि । तत्प्रत्यभिज्ञानं तत्सजातीयत्वविषयः । ननु तद्व्यक्तभेदो विषय॰ उक्तप्रतीतिविरोधात् । इत्यत्र द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति । ननु सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भासते॰ इति कुत्र दृष्टमित्यत आह । तदेवेति । यदौषधं मया कृतं तदेवान्येनापि कृतमित्या

दिदर्शनादिति भाव इति मुक्तावली ॥ अस्य वाक्य । आप्तश्रुतिराप्तवचनन्त्विति साङ्ख्या । अथाप्तवचनमिति लक्ष्यनिर्देशः । इष्टलक्षणम् । आप्ताप्राप्ता युक्तिरिति यावत् । आप्ताचासौ श्रुतिश्च । आप्तश्रुतिः । श्रुतिः वाक्यजनितं वाक्यार्थविज्ञानम् । तच्च स्वतः प्रमाणम् । अपौरुषेयवेदजनितत्वेन सकलदोषाशङ्काविनिर्मुक्ता युक्ता भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति । आदिविद्वत्कपिलादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः । सुप्तप्रतिबुद्धस्येव पूर्वेद्युरवगतानामर्थानामन्येद्युः । तथाचावट्यजैगीषव्ययोः संवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मस्मरणमात्मन उवाच । दशसु महाकल्पेषु परिवर्त्तमानेन मयेत्यादिना ग्रन्थसन्दर्भेण । आप्तग्रहणेन च अयुक्ताः शाक्यभिक्षुकनिर्ग्रन्थिकसंसारमोचकादीनामागमाभासाः पराकृता भवन्ति । अयुक्तत्वञ्चैतेषां विगानाद्विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानात् कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम् । तु शब्देनानुमानाद्व्यवच्छिनत्ति । वाक्यार्थो हि प्रमेयः न च तद्धर्मो वा-



क्यो येन तल्लिङ्गं भवेत् । न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्ष्यते । अभिनवकविविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वादिति । अध्ययनकार्यं शब्द इति शब्दजनितमर्थस्वरूपज्ञानमुपलक्षयति कार्ये कारणोपचारात् । सा द्वितीया सिद्धिः सुतारमुच्यते । तदिदं द्विधा श्रवणम् । अन्ये व्याचक्षते । यस्य साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः । शब्दपाठानन्तरभावात् । इति साङ्ख्या ॥ आप्तोपदेशः शब्द इति गौतमसूत्रम् । अस्यार्थः । शब्द इति लक्ष्यकथनं तदर्थं । प्रमाणशब्द इति । आप्तोपदेश इति लक्षणम् । आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् । तस्योपदेश इत्यर्थः । प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः । अथवा । आप्तो यथार्थ उपदेशः शब्दबोधो यस्मात् तत् । शाब्दत्वञ्च जातिविशेषः । तथाच यथार्थशाब्दज्ञानकरणत्वमर्थः । अत्र च विशेष्यावृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकत्वादि प्रमालक्षणानामेकम् । लक्षणपरस्य लक्ष्यतावच्छेदकनिवेशनीयमतो नाभेद ॥ ७ ॥ विभजते । स द्विविधो दृष्टा

दृष्टार्थत्वात्। सप्रमाणशब्द श ब्दतदुपजीविप्रमाणातिरिक्तप्रमाण गम्यार्थोदृष्टार्थः। शब्दतदुपजी विप्रमाणमात्रगम्यार्थोऽदृष्टार्थः • तथाचदृष्टार्थत्वादृष्टार्थत्व भेदात् प्रमाणशब्दस्यद्वैविध्यमित्य र्थः'॥ ८॥ शप्यते। शपआक्रोशे। भावपिश्याद्दनाविति दन॥ शा स्त्रेशब्दस्तुवाचकइति। शास्त्रे• व्याकरणादिशास्त्रे• योवाचक' साधुशब्दः• सएवनिरूपपदेनशब्दश ब्देनव्यवह्रियतेनध्वनिर्वापभ्रंश'। सद्विविधोलौकिकवैदिकभेदात्। तत्रगौरश्वः पुरुषोहस्तीशकुनि र्मृगोब्राह्मणइतिलौकिका'। शन्नो देवीरभीष्टये• इषेत्वोर्जेत्वा। अग्नि मीलेपुरोहितम्• अग्नआयाहिवीत यइतिवैदिकाइत्यर्थः'॥ वाक्यसन्द र्भे॥ अस्यप्रयोगविषयोयथा। म हान्हिशब्दस्यप्रयोगविषयः। सप्त द्वीपावसुमतीत्रयोलोकाश्चत्वारोवे दाःसाङ्गाःसरहस्याबहुधाभिन्नाः। एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। एकविंशतिधाबाह्वृच्य म्। नवधाथर्वणोवेदः। वाकोवा क्यम्। इतिहासः। पुराणम्। वै द्यकमित्येतावाञ्छब्दस्यप्रयोगविषयः। एतावन्तंशब्दस्यप्रयोगविषयमन नुनिशम्यसन्त्यप्रयुक्ताइतिवचनकेव

लंसाहसमेव। एतस्मिन्नतिमहति शब्दस्यप्रयोगविषयेतेतेशब्दास्तत्रत त्रनियतविषयादृश्यन्ते। तद्यथा। शवतिर्गतिकर्माकम्बोजेष्वेवभाषि तोभवति। विकारएवैनमार्याभाष न्तेशवइति। हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्यमेषु। गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु• दात्रमुदीच्येषु। इतिमहा भाष्यम्। जीवतोमृतावस्थाविका रस्तशवइत्यर्थः॥ इतिकोषटः॥ श ब्दश्चतुर्विधः। जातिगुणक्रियायदृ च्छाशब्दभेदात्। तत्रजातिशब्दोय थागौरश्वः पुरुषोहस्तीशकुनिर्ब्राह्म णइत्यादि। गुणशब्दोनीलोहरित इत्यादि। क्रियाशब्दः' पचतिप ठतिगच्छतीत्यादि। यदृच्छाशब्दो डित्थोडवित्थआखण्डलोपाखण्ड इत्यादिः॥

शब्दकोषः। पुं• शब्दसमूहे॥ शब्दा नांकोषोऽर्थसमूहः शब्दकोषः॥

शब्दग्रहः। पुं• कर्णे॥ शब्दोगृह्यते ऽनेन। ग्रहवृदृनिश्चिगमश्चेत्यप्॥

शब्दनः। त्रि• शब्दकारके। रवणे॥ शब्दयतितच्छीलः। शब्दशब्दक्रि यायाम्। चलनशब्दार्थादितियुच्॥

शब्दब्रह्म। न• वेदे॥

शब्दभावना। स्त्री• शाब्दीभावनायां म्॥ शब्दस्यभावना॥ प्रेरणाधर्मक

शशब्दव्यापार' स्वज्ञानकरणक' स्तु त्यादिज्ञानेतिकर्तव्यताक , परुष-प्रयत्नभाव्यमिष्ट शब्दभावनोच्यते ॥

शब्दभेदी । पु॰ अर्जुने । तृतीयेपाण्डवे ॥भेदनभेद् । सोऽस्याऽस्ति॰ भेदी । शब्दस्य भेदी ॥ बाणविशेषे । इ॰ रामायणम् ॥

शब्दयन् । त्रि॰ व्याहरति ॥ शब्दंशब्दो न्॰ तत्करोतीतिण्यन्ताल्लट शतृ प्रत्यय । स्त्री॰ ङीप् ।

शब्दयोनि । पु॰ भूवधस्पर्शादिधातुषु ॥ शब्दस्यनाम्नोयोनि ॥

शब्दवृत्ति । स्त्री॰ शब्दप्रवृत्तौ ॥ सा चचतुर्विधा यथा । तत्स्यतद्धर्मता भ्यांस्तुतत्समीपतयापिच । तस्माच्चपर्यायशब्दानांवृत्तिरस्याश्चतुर्विधा ॥ साच॰ मुख्यलक्षणागुणभेदेन॰ त्रिधा । मुख्यापि रूढियोगभेदेनद्विधारूढिश्चस्वरूपेणजात्यागुणेनवा-निर्देशार्हैर्वस्तुभि॰ सम्बन्धस्सङ्केतेन॰प्रवर्तते । यथा॰ डित्थ डवित्थ '॰गौ शुक्लइति । लक्षणाच तेनैवसङ्केतेनाभिहितार्थसम्बन्धिनि । यथागङ्गायांघोषइति । गौणीच॰ अभिहितार्थलक्षितगुणयुक्ते तत्सदृशे । यथा॰ सिंहोदेवदत्तइति । योगवृत्तिस्तु॰ एतत्त्रिविधवृत्ति प्रतिपादितपदार्थयो प्रकृतिप्रत्यार्थयोर्योगेन । यथा॰ पङ्कजम्॰ औपगव :॰पाचकइत्यादि ॰ ॥

शब्दवेधी । पुं॰ अर्जुने ॥ दशरथे ॥

शब्दस्मृति ' । स्त्री॰ व्याकरणे ॥

शब्दहेतु ' । पु॰ षष्ट्यादिषु ॥ यथा । षष्टोगुणक्रियाजातिरूढय शब्दहेतव । गोमान्नीलोत्पलश्चैवपाचकोघटएवच ॥ आकाशङ्कतिशब्दाना तत्तदर्थप्रवर्तका ' ॥

शब्दाधिष्ठानम् । न॰ कर्णे ॥

शब्दानुशासनम् । न॰ प्रकृत्यादिविभागेनशब्दव्युत्पादने ॥ उक्तञ्च यथा । विविक्ता ' साधव ' शब्दा : प्रकृत्यादिविभागत । व्याप्यन्तेयेनतच्छास्त्रमत्रशब्दानुशासनमिति ॥ व्याकरणमेतदन्वर्थनामशब्दानुशासनमिति॥

शब्दार्थ । पु॰ शब्दजन्यज्ञानविषये । वस्त्वाकृतौ ॥ शब्दस्यअर्थ ॥ यत् पर , शब्द सशब्दार्थ इतिमीमांसका ॥ संयोगोविप्रयोगश्चसाहचर्यंविरोधिता । अर्थ प्रकरणलिङ्ग शब्दस्यान्यस्यसन्निधि : । सामर्थ्यमौचितीदेश : कालोव्यक्ति ' स्वरादय : । शब्दार्थस्यानवच्छेदेविशेषस्मृतिहेतव ॥

शब्दितम् । त्रि॰ भाषिते ॥ गोते ॥ प्रतिपादिते ॥ शब्दसशब्दनेषौरादिक । कर्मणिक्त ॥

शम् । अ॰ कल्याणे ॥ सुखे ॥ शान्ते

शम ' । पुं॰ शान्तौ । विषयेभ्यइन्द्रियोपरतौ ॥ मोक्षे ॥ अन्तरिन्द्रियनिग

ते । अन्त . करणोपरमे ॥ मनीने सल्ये ॥ मन ' प्रसादे । अन्त क रणस्य विषयेभ्यो निवृत्तौ ॥ अथवा दिव्यतिरिक्तविषयेभ्यो मनसो निव र्तने ॥ उपशान्तौ ॥ सर्वकर्मसन्या से ॥ सदैववासनात्याग शमोयमि तिशब्दित ॥ शमनम् । शम उपशमे । भावेघञ् ॥ नोदात्तोप देशेतिवृद्ध्यभाव ॥ शान्तिरसे ॥ शाम्यतेऽनेनेतिव्याख्यानात् ॥ पा णौ । शये । हस्ते ॥ शाम्यतिकण्डू मंलोवानेन । हलश्चेतिघञ् ॥ उप चारे । चिकित्सायाम् ॥

शमक ' । त्रि॰ शान्तिकारके ॥

शमथ । त्रि॰ शान्तौ ॥ मन्त्रिणि ॥ शमनम् ' शम॰ । शमादिभ्योथच् ॥ शाम्यतिवा ' बाहुलकादथप्रत्य य ' ॥

शमन ' । पु॰ यमराजि । यमे । श्रा द्धदेवे । अन्तके । पितृपतौ ॥ मृग विशेषे ॥ कालापि ॥ न॰ शान्तौ ॥ वधे । हिंसायाम् ॥ परम्पराके । प्रोक्षणे । यज्ञार्थपशुहनने ॥ चर्व णे ॥ शमयति । शम॰ । णिजन्ता ल्ल्यु । भावेल्युड्वा ॥

शमनस्वसा । स्त्री॰ कालिन्द्याम् । य मुनायाम् ॥ शमनस्वस्वसा ॥

शमनी । स्त्री॰ उन्मूलिन्याम् ॥

शमनीषद् ' । पु॰ निशाचरे । राक्ष से ॥

शमपरा । स्त्री॰ तीर्थप्रभेदे ॥

शमयिता । त्रि॰ विनाशके ॥

शमल , । पु॰ अपराधे ॥ न॰ विष्टा याम् ॥ शम्यते । शाम्यतिवा । शम॰ । शकिशम्यानिंदितिकल : ॥

शमसुखम् । न॰ शान्त्यानन्दे ॥

शमादिषट्कम् । न॰ शमदमोपरति तितिक्षासमाधानश्रद्धासु ॥ शमा दीनाषट्कम् ॥

शमान्तक ' । पु॰ कामदेवे ॥ दू॰ त्रि॰ शेष : ॥

शमि । स्त्री॰ शिम्बायाम् ॥ शाम्य ति । शम॰ । सर्वधातुभ्यइन् ॥

शमित । त्रि॰ शान्ते । शीतोष्णास ह्ने ॥ शम्यतेस्म । शम॰ । क्त । वादान्तशान्तेत्यत्रेसाधु : ॥ वि नाशिते ॥ निर्वापिते ॥

शमी । त्रि॰ शान्ते ॥

शमिर . । पु॰ शमीवृक्षे ॥

शमी । स्त्री॰ सक्तुफलायाम् । शिम्बा याम् । छोंकरा॰जांटी॰इ॰भा॰प्र॰ वृक्षे ॥ अस्या ' गुणायथा । शमी तिक्ताकटु शीताकषायारेचनीलघु । कम्पकासज्वरश्वासकुष्ठार्श क्रिमिजित्स्मृता ॥ शिम्बिकाया म् ॥ वल्गुल्याम् ॥ शाम्यति । शम॰ । अच् । गौरादि : ॥ यद्वा । शमयतिरोगान् । शमेरजन्तान्ङीष्

ष ॥

अमीक । पुं॰ मुनिविशेषे ॥ आम्यति । अम॰ । अलीकादित्वादीकन ॥

अमीगर्भ । पुं॰ ब्राह्मणे ॥ अग्नौ ॥

अमीज । पुं॰ अमीधान्ये ॥

अमीधान्यम् । न॰ वैदले । माषादौ । यथा । मुद्गमसूराजमाष । कुलत्थ अयकस्तिलः । काकाण्डाचौवरढ़ तिअमीधान्यगण । स्मृत ॥ अम्याधान्यम् ॥

अमीपचा । स्त्री॰ खदिरिकायाम् । लज्जालौ । अमीपत्रसदृशानिपत्राण्यस्याः सा ॥

अमीफलम् । न॰ अम्याः फले । सागर॰ सेगर॰ इ॰ भा॰ प्र॰ । यथा । अमीफलकोमलबीजसस्मितलमोदकैः खेदितमिवकेवलम् । प्रलिप्तयोगेविधिनाविपाचितसराजिकयादधिसेश्रवान्वितम् ॥ अमीफलवघस्वादु कुष्ठार्थः कफहृत्सरम् । सुरूक्ष्यपि त्तलरूक्षमेध्यपापविनाशनम् ॥

अमीर । पुं॰ अल्पायामस्याम् ॥ ह्रस्वा अमीत्यर्थे ॰ कुटीअमीशुण्डाभ्योर ॥

अम्या । स्त्री॰ अतद्रुदायाम् । विद्युति ॥ भयङ्करत्वात् ॰ असुखमिवति । पा॰ । आतोऽनुपसर्गे क । टाप् ॥

अम्याक । पु॰ आरग्वधे । चतुरङ्गुले ॥ अङ्कस्याण पाकीरश ॥ विपाके ॥ पावके ॥

अम्यात । पुं॰ आरग्वधे ॥

अम्ब । पु॰ अवे । मुसलाग्रस्थलोहमण्डलके ॥ लोहकाञ्च्याम् । पत्नौ ॥ अम्बसम्बस्नमे॰ चुरादि । अम्बयतिसम्बध्नातिअच् न इतिविग्रहे पवर्गतृतीय । अच् ॥ प्रतिलोमे । द्वितीयकर्मणे ॥ यथा । अम्बाकरोति॰ अनुलोमंकृष्टक्षेत्रंप्रतिलोमंकर्षतीत्यर्थः ॥ कृञोद्वितीयेतिडाच् ॥ त्रि॰ शुभान्विते ॥ अमस्यास्ति । कशकृभ्यामिविध ॥ यद्वा । आम्यति । अम॰ । अमेर्वन् ॥ दन्त्योष्ठ्य ओष्ठ्यवानपि ॥

अम्बर । पुं॰ अवयाम्नहतिमृगविशेषे । सायर॰ इ॰ भा॰ प्र॰ ॥ अस्यमागुणा । अम्बरस्तपलाद्धग्रधीत लघुकथस्मृतम् । रसेपाकेचमधुरकफहरम्भिपत्तहृत् दैत्यविशेषे ॥ मत्स्यप्रभेदे ॥ गिरिविशेषे ॥ अवयोति । कृञ ॰ । पचाद्यच् ॥ अवसवरणरातिवा । कः ॥ अवयति । बाहुलकादरन्निति वा । अमिधातोः सज्ञायामिलज्वा ॥ न॰ सलिले । जले ॥ चित्रे ॥ वौद्धजलविशेषे ॥

अम्बरकन्द । पुं॰ वाराहीकन्दे ॥

अम्बरचन्दनम् । न॰ चन्दनविशेषे । वौरातेवहुलगन्धे ॥

अम्बरविद्या । स्त्री॰ मायायाम् । अ

स्वरस्य दैत्यविशेषस्य विद्या ॥
शम्बरसूदन । पुं० मदने । कामदेवे ॥ शम्बरदैत्यविशेष० सूदितवान्० सूदयतिवा । सूद० । नन्द्यादित्वा ल्यु ः ॥
शम्बरारि । पु० मनसिजे । कामे ॥ शम्बरस्य दैत्यविशेषस्य० व्रतविशेषस्य वा० अरि । अच् ॥
शम्बरी । स्त्री० आखुपर्ण्याम् ॥ मायायाम् ॥ शब्दयोति । इञ्० । शमि धातोरिल्यच् । गौरादि ॥
शम्बल । पुं० न० कूले । तटे ॥ पाथेये ॥ मत्सरे ॥ शम्बयति । शम्ब० । बाहुलकात कल ॥
शम्बली । स्त्री० कुट्टन्याम् ॥ शसुख० बलते० बलतिवा । बलसंवर्णे० बलप्राणनेवा । पचाद्यच् । गौरादि ।
शम्बाकृतम् । त्रि० द्विवारकृष्टक्षेत्रे । द्वितीयाकृते ॥ शमस्यास्ति । वा शम्बामितिव । शंबशब्दो द्वितीयकर्षणे वर्त्तते । शड्वकृतम । कृञोद्वितीयतृतीयशम्बबीजात कृषाविति डाच् ॥ यद्वा । शंब शब्द प्रतिलोमे । अनुलोमेनकृष्टं च पुन । प्रतिलोमेनकृष्टमित्यर्थं ॥
शम्बु पु० शम्बूके ॥ यथा । शम्बूकाः शम्बुकोष्णेय । पूर्वं कामस्तुसर्वदा । ककारेणविनाशेषा दृश्यतेग्रन्थविस्तरे ॥ इतिशब्दचन्द्र ।
शम्बुक । पु० शम्बूके ॥ शमेर्बाहुलकादुकप्रत्ययोबुगागमश्च ॥ शम्बूकमपिशम्बुकमितिद्विरूपकोश ॥
शम्बुक पु० जलशुक्तौ ॥
शम्बूक । पु० गजकुम्भान्ते । जलशुक्तिकायाम् ॥ शूद्रतापसे ॥ जलजन्तुविशेषे ॥ दैत्यविशेषे ॥ शङ्खे ॥ शाम्यति । शम० । उलूकादयश्चेत्यूकोबुकाच ॥ क्षुद्रशङ्खे ॥
शम्बूकपुष्पी । स्त्री० शङ्खपुष्प्याम् ॥
शम्बूका । स्त्री० जलशुक्तौ ॥
शम्भल । पु० ग्रामविशेषे ॥ तत्रच्छिततीर्थानिसन्ति० कल्कौचाविर्भूयसहस्रसमा स्थास्यति ॥
शम्भली । स्त्री० कुट्टन्याम् ॥ शसुखभलते । भलपरिभाषणे । पचाद्यच् । गौरादि ॥
शम्भु । पुं० महादेवे । ईशे । शिवे ॥ परमेष्ठिन । ब्रह्मणि ॥ विष्णौ ॥ सिद्धे ॥ अर्हति ॥ श्वेतार्कपादपे ॥ शसुखभवति० भावयति भू० । मितद्र्वादित्वा डु ॥ यद्वा । शभवत्यस्मात् । भूसत्तायाम् । भूप्राप्तौवा । बाहुलकाद्पादानेपि० मितद्र्वादि ।

त्वाङ्गः । वर्णवृत्तविशेषे ॥ यथा । कुरुपाणिकङ्कणयुग्मालङ्कृतमये रत्नहारत्वम् । चरण सन्नूपुरस युक्तकुरुकर्णे राजत्ताटङ्कम् । रसनामाशोजयमञ्जीरद्वयमेव शम्भुसद्वृत्तम् । भुविकान्त गौरि चिरं सम्भावयतन्नागाधीशेनोक्तम् ॥ यथा । जयमायामानवमूर्त्तिर्दानवध्वंस सव्यापारी । बलमायोद्रावणाद्भुत्याकारबलङ्कालक्ष्मीसंहारी । कृतवासव्य सनधर्मीश सनगोगोपीगोपानन्दी । बलिलक्ष्मीशासनलीलावामनदैत्यश्रेणीनिष्कन्दी ॥

शम्भुतनयः । पुं० कार्त्तिकेये ॥ गणेशे ॥

शम्भुतिथिः । स्त्री० चतुर्द्दश्याम् ॥

शम्भुनन्दनः । पुं० कार्त्तिकेये ॥ गणेशे ॥ शम्भोर्नन्दनः ॥

शम्भुप्रिया । स्त्री० गौर्याम् ॥ आमलक्याम् । शम्भोः प्रिया ॥

शम्भुवल्लभम् । न० श्वेतकमले ॥ त्रि० शिवप्रिये ॥

शम्या । स्त्री० युगकीलके ॥ शम्यतेऽनया । शम० । अघ्न्यादि ॥ यज्ञाङ्गभूतशूलाकारकाष्ठविशेषे ॥ दक्षिणहस्तगृहीततालविशेषे ॥ यष्ट्याम् ॥ यथा । धनुः शतपरीहारो ग्रामस्य स्यात्समन्ततः । शम्यापातास्त्रयो वापि त्रिगुणो नगरस्तु ॥ अत्र शम्यायष्टिरिति कुल्लूकभट्टः ॥

शम्याक्षेपः । पुं० भ्रमितक्षिप्तयष्टिप्राप्तयावत्भूप्रदेशे । शम्यापाते ॥

शम्यापात । पुं० शम्याक्षेपे ॥ यथा । भ्रामयित्वा बहुगुणयष्टिं क्षिप्तासम्प्राप्नुयात् । भुव प्रदेश यावन्त शम्यापातः स उच्यते ॥

शम्याप्राश । पुं० व्यासाश्रमे ॥ यथा । ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे । शम्याप्राश इति प्रोक्त ऋषीणां सत्रवर्द्धन इति ॥

शय । पुं० शय्यायाम् ॥ पञ्चशाखे । पाणौ । शेतेऽस्मिन् सर्वम् । शीङ् स्वप्ने । पुंसीति घ ॥ अच् ॥ निद्रायाम् ॥ पणे ॥

शयण्डः । पुं० निद्रालौ । शयालौ ॥

शयथ । पुं० अजगरे ॥ निद्रालौ ॥ मरणे ॥ शेते । शीङ् शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः । मत्स्ये ॥ वराहे ॥

शयनम् । न० शय्यायाम् ॥ निद्रायाम् । करणानाम् पञ्चमे ॥ सुरते । मैथुने ॥ शीङो भावेल्युट् ॥ शय्यतेऽत्र । अधिकरणेल्युट् ॥ शयने विशेषो यथा । श्वासानष्टौसमुत्तानस्तान्द्वि १६ पार्श्वे च दक्षिणे । ततस्तु द्विगुणान् ३२ वामे० पश्चात्स्वप्याद्यथासुखम् ॥

र्दिशायामनलीनोमेरूर्द्धं स्थितजन्तु नाम् । तस्मात्तु वामपार्श्वे शयो तभुक्तप्रपाकार्थम् ॥

शयनासनम् । न० शयनगृहे । आस्य तेऽस्मिन । आस० । करणाधिक रणयोरितिल्युट् । शयनस्यआस नम ॥

शयनीयम् । न० शय्यायाम् ॥ शीङ० शय्यतेऽनया । कृत्यल्युटबहुलम्धिक रणे शीङोऽनीयर् ॥ त्रि० शयनयो ग्ये ॥

शयनीयकम् । न० शय्यायाम् ॥

शयान । त्रि० शय्यानिहिताङ्गे । शय्यायांसुप्ते । शयाना भुञ्जतेयव ना । भुजिक्रियाया शयनलक्ष णम । लक्षणहेत्वो क्रियायाइति लट : शानच । निद्राकृते ॥ शया ननप्रबोधयेत् ॥ विश्रान्ते ॥

शयानक । पुं० अजगरे ॥ कृकलासे ॥ शीते । आनक । शीङ्भिय ॥

शयालु । पुं० वाहसे । अजगरे ॥ कुक्कुरे । शुनि ॥ मृतकाम्लके । शृगाले । सियाल०सयाल०हू०भा०प्र० त्रि०निद्रालौ । सुप्रजि । निद्रा लु०हू०भा०प्र० ॥ शयनशील. । शीङोवाच्यश्चयालुच् ॥

शयित : । पुं० शीलौ । श्लेष्मात्मके । वसन्तकुसुमे ॥ त्रि० निद्रिते । नि द्राणे ॥ शीतेस्म । शीङ० । अकर्म कत्वात्कर्त्तरिक्त । निष्ठाशीङि स्विदमिदिस्विदिधृषइतिन कित्त्वम् । स्थिते ॥

शयितवान । त्रि० निद्रिते ॥ शीतेस्म । शीङोकर्मकर्त्तरिक्तवतु । निष्ठा शीङ स्विदिमिदिक्ष्विदिधृषइतिन कित्त्वम् ॥

शयिता । त्रि० शयनकर्त्तरि ॥

शयु । पुं० वाहसे । अजगरे ॥ शेते । भृ०मृ०शी०तृ०चरि०तनि०धनि० मि० मस्जिभ्यउ ॥

शयुन । पुं० अजगरे ॥ शेतेऽत्यर्थं म् । अजि०यमि०शीङ्भ्यश्चे तिशी ङउनम् ॥

शय्या । स्त्री० शयनीये । तूलिकाद्या स्तरणविशेषे ॥ शय्यतेऽत्र०शेतेऽस्या वा । सञ्ज्ञायांसमजेतिशीङ : क्य प् । अयङ्यिक्ङितीतिशीङोयङादे श । खट्वादौ । गुम्फने । शब्दगुम्फे ।

शय्याजन्तु । पुं० मत्कुणे ॥

शर । पुं० तेजनके । गुन्द्रे ॥ बाणे । काण्डे ॥ दध्यग्रे । दधिसा रे ॥ न० सलिले । नीरे । जले ॥ शृणाति० अनेनवा । शृस्विसा याम् । अच्० ऋदोरपवा ॥

शरजम् । न० हैयङ्गवीने ॥

शरजन्मा । पु० षडानने । स्कन्दे ॥ शरेषुजन्मास्य ॥

शरट : । पुं० सरटे ॥ शृणाति । शकादित्वादटन् ॥ कुसुम्भशाके ॥

शरणम् । न० गृहे । रक्षितरि । बधे ॥ रक्षणे ॥ शीर्यतेदुःखमस्मिन्निति व्युत्पत्त्या प्रपन्नानामार्त्तिहृति । यथा । शरणमपि समजननीनपितानसुतानसोदरानान्ये । परमशरणमिदमेवचरणममम्मूर्द्धनि देविकन्यस्तमिति ॥ आश्रये ॥ घातके ॥ शृणाति । शृ हिंसायाम् । ल्युट् । भावे वा ॥

शरणद । पुं० सन्तानदातरि० ईश्वरे ॥ त्रि० शरणदातरि ॥

शरणा । स्त्री० प्रसारण्याम् ॥

शरणागत । त्रि० आश्रिते ॥ शरणापन्ने । शरणार्थिनि ॥ शरणे आगतः ॥ शास्त्रेषुनिष्कृतिर्दृष्टा महापातकिनामपि । शरणागतहातुस्तुनदृष्टानिष्कृतिः क्वचित् ॥ शरणागतमार्त्तञ्चयोजहातिनराधमः । सएवनरकंयातियावदाभूतसम्प्लवम् ॥

शरणागतिः । स्त्री० शरणागमने ॥ साषड्विधायथा । आनुकूल्यस्यसङ्कल्पः प्रातिकूल्यस्यवर्ज्जनम् । रक्षिष्यतीतिविश्वासोगोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधाशरणागतिः ॥

शरणार्थी । त्रि० शरणागते । अनुगते ॥

शरणार्पक । पुं० शरणापन्ने । सञ्चारजीविनि ॥

शरणिः । स्त्री० पथि ॥ शृ० । बाहुलकादनि ॥ आवली ॥ शरणिश्रिमामितिवेदभाष्यम् ॥ पृथ्व्याम् ॥

शरणी । स्त्री० पथि ॥ प्रसारण्याम् ॥ जयन्त्याम् । जयावृक्षे ॥

शरण्ड । पुं० धूर्त्ते ॥ शरटे ॥ भूषणान्तरे ॥ पक्षिणि ॥ कामुके ॥ चतुष्पदे ॥

शरण्य । त्रि० आर्त्तस्यरक्षितरि । त्रातरि ॥ शरणेरक्षणेसाधुः । तत्रसाधुरितियत् ॥ शृणातिभयंवा । शृ० । शृरम्योश्चेत्यन्यः ॥ शरणमिववा । शाखादिभ्योयः ॥

शरण्या । स्त्री० शरणार्हायाम् । दुर्गायाम् ॥ यथा । विषाग्निभयघोरेषुशरण्यास्मरणाद्यतः । शरण्येतिनसादेवीमुनिभिः परिकीर्त्तिता ॥

शरण्युः । पुं० वारिदे ॥ वाते ॥

शरत्थम् । न० वृक्षप्रभेदे ॥

शरत्कामी । पुं० कुक्कुरे ॥

शरत्पद्मम् । न० सिताम्बुजे ॥

शरत्पर्व । न० दुर्गोत्सवे । कोजागरे ॥

शरत्पुष्पम् । न० आहुल्यं० क्षुपे । हलराख्ये । तगरे । शिम्बीफले । सुपुष्पे । पीतपुष्पे । काश्मीरेतरवटनाम्नाप्रसिद्धे ॥ शारदपुष्पमात्रे ॥

शरत्०द् स्त्री० हायने । सम्वत्सरे । वर्षे ॥ शृणातिभावान् । शृ हि साधाम् । शृद्भसोऽदि ॥ ऋतु विशेषे । आश्विनकार्त्तिकयोः । वर्षावसाने ॥ शीर्य्यतेऽस्यांपापानीति अधय । पूर्ववद्दिः ॥ तत्रजात स्यफलंयथा । नरः शरत्सञ्जकाले अजन्माभवेत्सुकर्मामनुजस्तरस्वी । शुचिः सुशीलोगुणवान सुमानीधनान्वितोराजकुलप्रपन्नः ॥

शरद . । त्रि० शरवर्षिणि ॥ शरं ददाति । डुदाञ० । आतङ्कतिकः ॥

शरदन्त । पुं० हेमन्ते ॥ शरदोन्तोऽस्मिन् ॥

शरदा । स्त्री० सम्वत्सरे ॥ शरदतो ॥ शरदोभागुरिमतेटाप् ॥

शरदिज . । त्रि० शरत्कालजाते ॥

शरदुदाशयम् । न० शरत्कालिकेम रोवरे ॥

शरधि । पु० तूणे । तूणीरे ॥ शरा धीयन्तेऽस्मिन् । डुधाञ्० । उपसर्गेघोः किः । कित्वाद्दाकार लोपः ॥

शरपर्णी । स्त्री० ओषधिविशेषे ॥

शरपुङ्ख । पुं० ओषध्यां । सरफोका० इ०भा०प्र०ओषधी । अस्यगुणायथा । शरपुङ्खोयकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषाय कासास्वज्वरश्वासहरोलघुः ॥

शरभ । पु० मृगेन्द्रविशेषे । महामृगे । अष्टापदे । महासिंहे । पर्वताश्रये ॥ अस्यलक्षणं यथामहाभारते । अष्टपादूर्द्धनयनऊर्द्धपादचतुष्टयः । सिंहहन्तु समायातिशरभोवनगोचरइति ॥ शृणाति । शृ० । कृशृभ्यांकलिगादिभ्योऽभच् ॥ करभे उष्ट्रे । वानरविशेषे ॥ हरौ । विष्णौ ॥ शीर्य्यन्तइति । शरा शरीराणि० शीर्य्यमाणत्वात्० तेषुप्रत्यगात्मतया भाति । भादीप्तौ । आतङ्कतिक . ॥ पतङ्गे ॥ वर्णवृत्तविशेषे ॥ यथा । हिजवरतिलककलितमिहसगणकलयशरभमिदमतिसुखकरणम् । कविवरसकलहृदयकृतहरणं फणिवरनरपतिवदनविहरणम् ॥ अत्रहि अवरशब्दस्तुष्कलगणपञ्चमरूपवाचकस्तद्रूपम्चतुर्लघुतेषा तत्रकेन चितयेनकलित द्वादशलघुभिरिति यावत् ॥ यथा । सकलकमलदलरुचिधरनयन अखिलजलनिधिफणिपतिफणशयन । दनुजविजयसुरपतिनतिमुदितोहरिरपहरतुदुरिततततिमुदितः ॥

शरभङ्ग । पु० गोतमवंशजे । रामायणप्रसिद्धे । मुनिविशेषे ॥

शरभङ्गाश्रम । पु० तीर्थविशेषे ॥

शरभू । पु० पार्वतीनन्दने । स्कन्दे ॥

शरभूमिज । पु० गन्धके ॥

शरमय । त्रि॰ शरनिर्मिते ॥
शरमल्ल । पु॰ खगविशेषे । गूथ लक्षे ॥
शरलकम् । न॰ जले ॥
शरवणोद्भव । पुं॰ स्कन्दे ॥
शरवाणि । पु॰ शरमुखे । शरक्षेपिणि । पदातौ ॥
शरबीजम् । न॰ धातुके । कौतुका र्थे ॥
शरव्यम् । न॰ लक्ष्ये । शरविध्यतिस्मा र्हत्वम् । उगवादिभ्योयत् । य द्वा । शरान्व्ययति । व्येञ्सवर णे । सम्प्रसारणिविश्वोड ॥
शराघात । पुं॰ प्रचलाके । वाणा घाते ॥
शराटि । ) शराडि । ) स्त्री॰ शरारिविहगे ॥
शराति : । स्त्री॰ शरारी । आडि विहगे । शरमीरमतीति । अत॰ अत्यतिभ्याञ्चेतीण् ॥
शराभ्यास । पुं॰ उपासने । शर भिक्षायाम् ॥ शरस्य शरमोक्षस्य अ भ्यास : ॥
शरारि । स्त्री॰ सुरगार्ड॰ द्र॰ भा॰ प्र॰ ॥ पक्षिविशेषे । आटी । शर मीरमृच्छति । ऋगतौ अचक्र ॥
शरारु : । त्रि॰ हिंस्रे । शॄ घाते । शॄ॰ । शॄवन्द्योरारु : ॥
शरालि : । स्त्री॰ शरारिपक्षिणि ॥

शरमीरमृच्छति । ऋ॰ । अचक्र । कपिलकादित्वाल्लत्वम् ॥
शरालिका । ) शराली ) स्त्री॰ शरालिविहगे ॥
शराव । पुं॰ कुडवद्वयपरिमाणे चतु षष्टितोलके । सेर॰ द्र॰ भा॰ प्र॰ । माणिकायाम् ॥ मृत्पा त्रविशेषे । वर्द्धमानके । सराबा॰ द्र॰ भा॰ प्र॰ शरावम् । शॄ॰ । म्हटोरप् ॥ शृणातिवा । अच् ॥ शरशरादृवा॰ अवति । अवरक्षणा दौ । वण॰ अञ्वा ॥
शरावती । स्त्री॰ रामात्मजलवस्य राजधान्याम् ॥ नदीविशेषे ॥ इय श्चोत्तरपूर्वाभिमुखी॰ अस्मादक्षि णपूर्वस्यांव्यवस्थितोदेश . प्राग्दे- श उत्तरापरस्यांव्यवस्थितउदग्दे श । तथाचोक्तम् । प्रागुदञ्चौ विभजतेहस . क्षीरोदकंयथा । वि दुषांशब्दसिद्धार्थंसान : पातुशराव तीतिः ॥ शरा : सन्त्यस्याम् । मतु प् । शरादीनाञ्चेतिदीर्घ : ॥
शरावर । पुं॰ कवचे ॥ तूणीरे ॥ यथा । शरावरौशरै : पूर्णौ विध्वस्तौपश्यलक्ष्मणेतिरामायणम् ।
शरावाप . । पु॰ धनुषि ॥
शरावार्द्दम् । न॰ कुडवपरिमाणे । द्वात्रिंशत्तोलके । आधसेरद्र॰ भा॰ प्र॰ परिमाणे ॥

तच्छास्त्रं त्रिविधं प्रोक्तं सात्त्विकादिविभेदतः । यथोक्तं देवीभागवते । सात्त्विकं तत्र वेदान्तमीमांसाद्यं समं मतम् । तामसं न्यायशास्त्रं च हेतुवादाभियन्त्रितमिति ॥ तत्राध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा यथा कुलार्णवे । षड्दर्शनमहाकूपे पतिताः पशवः प्रिये । परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ वेदशास्त्रार्णवे घोरे ऊह्यमाना इतस्ततः । षडूर्मिनिग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किकाः ॥ वेदागमपुराणज्ञः परमार्थं न वेत्ति यः । विडम्बकस्य तस्यैतत् सर्वं काकभाषितम् ॥ इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः । पठन्त्यहर्निशं देवि परतत्त्वपराङ्मुखाः ॥ वाक्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिताः । चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ अन्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा । अन्यथा शास्त्रसद्भावो व्याख्यां कुर्वन्ति चान्यथा ॥ कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति च । अहङ्कारहताः केचिदुपदेशादिवर्जिताः ॥ पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् । न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥ शिरो वहति पुष्पाणि गन्धं जानाति नासिका । पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति । गोपः कक्षगते छागे कूपे पश्यति दुर्मतिः ॥ संसारमोहनाशाय शब्दबोधो न हि क्षमः । न निवर्तेत तिमिरं कदाचिद्दीपवार्तया ॥ प्रज्ञाहीनस्य पठनं यथान्धस्य दर्पणम् । देवि प्रज्ञावतः शास्त्रं तत्त्वज्ञानस्य साधनम् ॥ अग्रतः पृष्ठतः केचित् पार्श्वयोरिति केचन । तत्त्वमीदृक्तादृगिति विवदन्ति परस्परम् ॥ सद्विद्यादानशौर्यादिगुणैर्विख्यातमानवः । ईदृशस्तादृशश्चेति दूरस्थः कथ्यते जनः ॥ प्रत्यक्षदर्शनात्तेषां यायद्वत्प्रिये । एवं वै शास्त्रसम्मूढास्ते दूरस्था न संशयः ॥ इदं ज्ञानमिदं ज्ञेयं सर्वं तच्छ्रोतुमिच्छति । दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव गच्छति ॥ वेदान्यनेकशास्त्राणि स्वल्पायुर्विघ्नकोटयः । तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसः ॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वा तु बुद्धिमान् । पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥ यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजनम् । तत्त्वज्ञस्य तथा देवि न शास्त्रेण प्रयोजनम् । न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि । ज्ञानादेव

छिन्नमुक्तिः स्यान्नान्यथा वीरवन्दिते ॥ आगमाः कारणं मुक्तेर्दर्शनानि न कारणम् । तथैव सर्वकर्माणि ज्ञानमेव हि कारणम् ॥ मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बनाः । काष्ठभारसहस्रेषु एकं सञ्जीवनं परम् ॥ अद्वैतं हि शिवप्रोक्तं क्रियायासविवर्जितम् । गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते । शब्दब्रह्मागममयं परब्रह्म विवेकजम् ॥ अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे । मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥ द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च । ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥ तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तिदा । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ यावत्कर्माणि दीप्यन्ते यावत्संसारवासना । यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ यावत् प्रयत्नवेगोऽस्ति यावत्सङ्कल्पकल्पना । यावन्न मनसः स्थैर्यं तावत्तत्त्वकथा कुतः ॥ यावद्देहाभिमानश्च ममता यावदेव हि । यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ तावत्तपो व्रतं तीर्थं जपहोमार्चनादिकम् ।



वेदशास्त्रागमकथा यावत्तत्त्वं न विन्दति ॥ तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा । तत्त्वनिष्ठो भवेद्देवि यदीच्छेन्मोक्षमात्मनः ॥ धर्मज्ञानसुपुष्पस्य स्वर्गभोगफलस्य च । तापत्रयार्तिसन्तप्तश्छायां मोक्षतरोः श्रयेत् ॥ इति ॥ वह्निपुराणेऽपि । पुराणं भारतं वेदा धर्मशास्त्राणि यानि च । आयुषः क्षपणायैव धर्मं तत्सेवनाचरेत् ॥ पुत्रदारादिसंसारः पुंसां सम्मूढचेतसाम् । विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत् ॥ इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति । अपि वर्षसहस्रायुः शास्त्रान्तं नाधिगच्छति ॥ विज्ञायाक्षरतन्मात्रं जीवितं चापि चञ्चलम् । विहाय शास्त्रजालानि पारलौकिकमाचरेत् । पण्डितोऽपि हि मूर्खोऽसौ शक्तियुक्तोऽप्यशक्तिकः । यः संसारान्न चात्मानं समुत्तारयितुं क्षमः ॥ इति ॥ शैवपाशुपतादिशास्त्रोत्पत्तिर्यथा गन्धर्वतन्त्रे ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम् ॥ कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं साङ्ख्यं तु कपिलेन हि ॥ धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णु